मू।

म्। हिन्दी भाषा
तीय संस्करण) ।=)
कम्।
संस्करण)। ।=)
ाञ्जि व्याख्या)
रा-सारार्थ-
।=)
र्णम्। १)
१ से ६ सर्ग। ।)
करण-समास-
रीक्षोपयोगि
१ से ४ सर्गः १।)
१ से ६ सर्गः १॥)
६ से १० सर्गः १॥)

८ पञ्चतन्त्रम्। परीक्षोपयोगि टीप्पणी सहितम्। सम्पूर्णम्। ॥)

९ पञ्चतन्त्रम्। पञ्चमतन्त्रम् (अपरीक्षित कारकम्) परीक्षोपयोगि टीप्पणी सहितम्=)

१० पञ्चतन्त्रम्। पञ्चमतन्त्रम् (अपरीक्षितकारकम्।)
भाषाटीकया, परीक्षोपयोगिटिप्पण्या, श्लोकानां संस्कृतव्याख्या, संस्कृत हिन्दी-भाषाबद्धेन संक्षिप्तकथासारांशेन, कथालभ्योपदेशेन, प्रश्नपत्रेण, तथा बृहद्भूमिकया च सहितम्। ।-)

*११ पञ्चतन्त्रम्। परीक्षोपयोगि संस्कृत टीका टीप्पणी सहितम्। ...

*१२ पञ्चतन्त्रम्। परीक्षोपयोगि हिन्दी भाषा टीका सहितम्। ...

१३ किरातार्जुनीयम्। (सुधानाञ्जि व्याख्या) परीक्षोपयोगि अन्वय-व्याख्या-समास-व्याकरण-वाच्यपरिवर्तन-कोश-सारार्थ-भावार्थ-मल्लिनाथ कृत टीका तथा प्रश्नपत्र सहितम्। १ से ३ सर्गः ॥।)

१४ किरातार्जुनीयम्। मल्लिनाथी-भावार्थदीपिनीव्याख्याद्वयोपेतम्। सर्गाः १ से ३ ।=)

१५ तर्कसंग्रहः। न्यायबोधिनी-पदकृत्य-विरला टीका त्रयोपेतः। सटीप्पण। ।=)

*१६ मेघदूतम्। मल्लिनाथकृत सञ्जीविनी, चारित्रवर्द्धिनी तथा परीक्षोपयोगि भावप्रबोधिनी टीकात्रयोपेतम्। ...

१७ चन्द्रालोकः। परीक्षोपयोगि "शरदागम" व्याख्या टिप्पणी सहितः। ॥=)

१८ शिशुपालवधम्। मल्लिनाथी टीका तथा वल्लभदेव कृत संदेहविषौषधिपरीक्षोपयोगि व्याख्या सहितम्। १से२ सर्गः ॥) १ से ३ सर्गः। ॥।)

१९ वृत्तरत्नाकरः। नारायणभट्टकृत नारायणी टीका तथा वामनाथशास्त्री बरकले कृत परीक्षोपयोगि टिप्पणी उदाहरण तथा श्रुतबोध-छन्दोमंजरी-सुवृत्तितिलक सहितः। १॥)

---

* इस संकेत के ग्रन्थ प्रायः तैयार ही हैं जो अत्यन्त शीघ्र विक्रयार्थ प्रस्तुत होंगे।

THE
KASHI-SANSKRIT-SERIES
( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )
NO. 84
( Kavya Section, No. 12 )

THE

# RAGHUVANS'A MAHAKAVYAM

( CANTOS VI-X )

*of*

## KALIDAS

*Edited With*

THE COMMENTARY ( SANJIVINI ) OF MALLINATHA
and
THE SUDHA COMMENTARY

By

*Pandit S'ri Sudama Mishra.*

PRINTED, PUBLISHED & SOLD BY
JAI KRISHNADÂS-HARIDÂS GUPTA,
*The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,*
*North of Gopalmandir, Benares City.*

1931.

* श्रीः *

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

# ८४

काव्यविभागे (१२) द्वादशं पुष्पम् ।

महाकविश्रीकालिदासप्रणीतम्

# रघुवंशमहाकाव्यम् ।

( षष्ठसर्गाद्दशमसर्गपर्यन्तम् )

महामहोपाध्यायश्रीमल्लिनाथसूरिकृतया सञ्जीविनीव्याख्यया
तथा
श्रीयुतपण्डितहाराणचन्द्रभट्टाचार्यचरणानामन्तेवासिना मुजफ्फरपुरमण्डलान्तर्गतलाल-
गंजनिवासिना मिश्रोपाह्वपण्डितश्रीसुदामाशर्म्मव्याकरणशास्त्रिणा
विरचितया सुधाऽऽख्यव्याख्यया समुल्लसितम् ।

प्रकाशक—
जयकृष्णदास हरिदास गुप्त—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिरके उत्तर फाटक,
बनारस सिटी ।

१९८७

नमो मङ्गलमूर्तये ।

# प्रस्तावना ।

अयि सहृदयाश्छात्राः !

विदितमेव तत्र श्रीमतां यदिह जगति यावन्ति सन्ति निरवद्यपद्यमयानि महाकाव्यानि तेषु कविकुलशिरोमणेः श्रीमत्कालिदासस्य पीयूषवर्षिलेखिनीप्रसूतं लघुत्रयीति नाम्ना प्रसिद्धं कुमारसम्भवमेघदूतरघुवंशाख्यं काव्यं कीदृशं रमणीयमिति । तत्रापि रघुवंशकाव्यं तु परमरमणीयमिति मनीषिणामखण्डनीयो वादः ।

मृदुलपदललितस्यास्य काव्यस्य प्रणेता महाकविरद्यापि स्वासाधारणकवित्वशक्तिप्रभावेण कविकुलेषु नायकायते । किन्तु दुःखं ! यत् महाकविः कदा, कुत्र, कतमत्कुलं जन्मना अलमकरोदिति एतत्कविविषयकमतभेदरहितो वृत्तान्तो नितान्तदुर्लभः प्रतिभाति । अतो मतभेदविषये ताटस्थ्येन मया न किमप्यधुना निरूपयितुं प्रयत्यते ।

सरलपदगुम्फितेऽस्मिन् महाकाव्ये-गोसेवा, देवभक्तिः, गुरुभक्तिः, पितृभक्तिरित्यादिशिक्षणीयविषयाणां विद्यते प्रचुरतरः सन्निवेशः । अत एव शिक्षार्थिनां कृतेऽस्य काव्यस्योपयोगितामवेक्ष्य तत्तद्देशीयसंस्कृतपरीक्षासमितिभिः काव्यमिदं परीक्षायां पाठ्यत्वेन निर्धारितम् । काशिकराजकीयसंस्कृतप्रधानपाठशालाप्रवर्तितमध्यमपरीक्षायाः प्रथमखण्डे षष्ठसर्गादारभ्य दशमसर्गान्तं काव्यमिदं पठनीयत्वेन निवेशितम् । अत्र यद्यपिम होपाध्यायविरुदाङ्कितकोलाचलश्रीमल्लिनाथसूरिविरचिता सञ्जीविनीसमाख्या व्याख्या विद्वन्मनोग्राहितया विख्याताऽस्ति, तथाऽपि तस्याः स्थले स्थले प्रकृष्टतया न सा सुकुमारमतीनां परीक्षार्थिनां विद्यार्थिनां सम्यक् लाभाय कल्पते इति तेषामुपकाराय दत्तमनःश्रीयुतबाबूजयकृष्णदासगुप्तमहाशयानुरोधेन मया परीक्षोपयोगिन्या नव्या सुधाख्यव्याख्यया तथा श्रीमल्लिनाथकृतसञ्जीविन्या समलङ्कृतं निरुक्तपरीक्षापाठ्यांशभूतमिदं रघुवंशमहाकाव्यं भवत्पुरत उपस्थाप्यते । अस्मिन् प्रतिश्लोकं क्रमशः—अवतरणम् , सञ्जीविनी, अन्वयः, सुधा, कोशः, समासादि, व्याकरणम् , वाच्यपरिवर्तनम् , तात्पर्यार्थः, भाषाऽर्थः, तथा टिप्पणीरूपेण यत्र तत्र पौराणिकीकथेत्येवमादयो बहवो विषया निवेशिता विद्यन्ते ।

अत्र काशिकराजकीयसंस्कृतपाठशालायां व्याकरणवेदान्तधर्मशास्त्राध्यापकाः 'नेने' इत्युपनामकाः पूज्यवराः श्रीमन्तो गोपालशास्त्रिणः, तथा काशिकमारवाडिसंस्कृतकालिजसाहित्यप्रधानाध्यापकाः श्रीमन्तो रघुनाथशर्म्ममहोदयाः, लब्धसंदेहस्थले यथाऽवसरं स्ववचनामृतेन सिञ्चन्तो ममोत्साहमवर्द्धयन्निति मान्यास्ते महानुभावाः सन्ति सदा धन्यवादार्हाः । संशोधनादिकार्ये मम मित्रवरो व्याकरणशास्त्री 'थत्ते' इत्युपनामकः श्रीयुतनरहरिशर्म्मा विशेषसाहाय्यं प्रदत्तवानिति तस्मै शतशो धन्यवादा दीयन्ते ।

अस्य संस्करणस्य सर्वं कार्यं मासचतुष्टयेनैव सुसम्पन्नम् । तत्र मुद्रणकार्यालयाध्यक्षश्रीयुतबाबूव्रजजीवनदासगुप्तमहाशयस्य विपुलप्रयासेनास्य मुद्रणं प्रायो मासद्वयेनैव सम्पूर्णतामगमदिति तस्मै शुभाशीर्वादमन्तरा किं प्रदेयमिति स अनेकैः शुभाशीर्वचनैः संयोज्यते ।

इत्थं शीघ्रं प्रकाश्यमानेऽस्मिन् ग्रन्थे मनश्चाञ्चल्यतो लेखने संशोधने वा यानि यानि स्खलितानि जातानि तानि सर्वाणि स्वानीव मत्वा गुणैकपक्षपातिभिर्विद्वद्भिः क्षन्तव्यानि । अनया व्याख्यया यदि परीक्षार्थिनां तदितरेषाञ्च अन्तेवासिनां कोऽपि लाभो भवेत्तर्हि स्वपरिश्रमं सफलं मन्यमानोऽत्यन्तं मुदितमना भवेयमिति प्रार्थयते—

| वसन्तपञ्चमी ।<br>संवत् १९८७<br>मारवाड़ी संस्कृतकालेज,<br>काशी । | विद्वज्जनसेवकः—<br>**श्रीसुदामा मिश्रः ।** |
|---|---|

# संक्षिप्तकथानकम् ।

## षष्ठः सर्गः ।

### इन्दुमतीस्वयंवरः ।

अथ अजः स्वयंवरसदसि देशान्तरादागत्य सिंहासनेषु समुपविष्टान् राज्ञो ददर्श। विविधवर्णास्तरणयुक्ते भोजप्रदर्शितसिंहासने अजोऽप्युपविष्टवान् । अजस्य सर्वातिशयसौन्दर्यमवलोक्य तत्रत्याः सर्वे एव राजान इन्दुमतीलाभे नैराश्यमापुः । अत्रावसरे शिबिकामारूढा परिजनसहिता इन्दुमती समागतवती । तां वीक्ष्य राजानोऽभिप्रायविशिष्टाभिर्विविधशृङ्गारचेष्टाभिः स्वमनोरथसिद्धयर्थमुद्योगं कृतवन्तः । ततो द्वाररक्षिका सुनन्दा 'अयमीदृग्वीर्यवान्, अयममुकदेशीयः, अस्यैतादृशो गुणः, 'इमं वरय' इत्यादि कथयन्ती इन्दुमतीं मगधेश्वराधिपतिपरंतपादिनृपतीन् दर्शयामास, परन्तु तस्याः कुत्राप्यनुरागो न जातः । एवमिन्दुमती सर्वान् राज्ञस्तिरस्कृतवती सुनन्दया सह अजस्याग्रे समाजगाम । सुनन्दया पूर्ववदेव राज्ञोऽजस्य परिचये कारिते अजस्य सौन्दर्येण मुग्धा सती इन्दुमती महताऽनुरागेण स्वयंवरमालां तस्य कण्ठे सानन्दं समर्पितवती । इत्थमिन्दुमत्या योग्यवरे लब्धे समुदाः पुरवासिनो जनास्तां दम्पती प्रशंसयामासुरिति ।

## सप्तमः सर्गः ।

### अजस्य विवाहः ।

अथ भोजोऽजेन साकमिन्दुमतीमादाय स्वनगरं कुण्डिनपुरं जगाम । इन्दुमत्या अलाभेन हतोत्साहा अन्ये राजकुमारा अपि स्वाकृतिषु वेषेषु च वृथेति निन्दन्तः सन्तः स्वशिबिराणि जग्मुः । सर्वतोऽलङ्कृते राजमार्गे इन्दुमत्या सह गच्छन्तमजमवलोक्य पुरवासिन्यः स्त्रियः कार्यान्तराणि संत्यज्य झटिति गवाक्षपथं प्रापुः । तत्रागत्य 'अयि सखि! इन्दुमती धन्या, या एतादृशं मनोहरं पतिं प्राप्ता, अद्य ब्रह्मणो रूपरचनायाः प्रयत्नः सफलो जातः' इत्यादीनि वाक्यानि मिथः कथयन्तीनां तासां श्रवणसुखकराणि वाक्यानि शृण्वन् सोऽजः कन्यादातुर्भोजस्य गृहं समाजगाम । अनन्तरमजः कामरूपेश्वरस्य हस्तं परिगृह्य हस्तिन्याः सकाशादवतीर्य अवरोधाङ्गणं प्राविशत् । तत्र विवाहमण्डपे भोजपुरोहितेन यथाशास्त्रं विवाहविधौ सम्पादिते अजस्तस्याः पाणिं गृहीतवान् । भोजो भगिन्या विवाहविधेः समाप्त्यनन्तरं समागतानां राज्ञामपि सत्कारार्थं सेवकानाज्ञापितवान् । ते राजानो भोजकृतां पूजां स्वीकृत्य तामुपदामिषेण प्रत्यर्प्य च ययुः । भोजः इन्दुमत्यै धनादीनि यौतकत्वेन दत्वा तया सह अजं प्रस्थाप्य स्वयमपि अनुजगाम, मार्गे तेन सह रात्रित्रयमुषित्वा स्वराजधान्यां प्रत्यावृत्तः ।

### अयोध्याप्रत्यावर्तने नृपतिभिः सह अजस्य युद्धं, तत्र तद्विजयश्च ।

पूर्वतः किञ्चिद्दूरं गत्वा अजस्य मार्गमवरुध्य स्थिताः सामर्षा राजानः एकाकिनमजमवरुन्धन् । अजः सहसाऽन्तरायमवाप्य इन्दुमत्या रक्षाऽर्थं बहुसैन्यं मन्त्रिणं नियुक्तवान् । अथ पादचारः पादचारं, रथारोही रथारोहिणम्, अश्वारोही अश्वारोहिणं, हस्त्यारोही हस्त्यारोहिणमित्थम् अजस्य राज्ञां च मध्ये तुमुलं युद्धं बभूव । सर्वे राजानो मिलित्वा बाणैरजमाच्छादयामासुः । ततः अजोऽपि प्रियंवदनाम्ना गन्धर्वेण लब्धं निद्रोत्पादकं शस्त्रं प्रयुक्तवान् । प्रयुक्तेन तेन शस्त्रेण सर्व एव राजानो निद्राऽधीना अभवन् । अथ अजो धृतधनुष्को-

टिरिव इन्दुमत्याः समीपे आगत्य सर्वं वृत्तान्तमकथयत् । सा पत्युः सुखदवृत्तान्तमाकर्ण्य प्रजहर्ष । एवमजः सर्वान् नृपतीन् विजित्य अयोध्यायां प्रत्यावृत्तः । प्रथमत एव श्रुताजविजयवृत्तान्तः रघुरेनं बहु प्रशस्य मोक्षमार्गोत्कण्ठितोऽभूदिति ।

## अष्टमः सर्गः ।

### अजस्य सिंहासनाधिष्ठानम् ।

अथ रघुर्विवाहहस्तसूत्रधारिणमजमभ्यषिञ्चत् । यस्य राज्यस्य कारणात् अन्ये राजकुमाराः 'राजपुत्रा मदोद्वृत्ता गजा इव निरङ्कुशाः । भ्रातरं पितरं वाऽपि निघ्नन्त्येवाभिमानिनः ॥' इति वचनं चरितार्थयन्ति । तदेव राज्यम् अजः पितुराज्ञया कथञ्चिदङ्गीकृतवान् । ततः सिंहासनाधिष्ठितस्य अजस्य प्रजापालनप्रणालीमवलोक्य सर्वाः प्रजा अतिसंतुष्टा बभूवुः । राज्यासनस्थोऽजः स्वल्पेनैव कालेन सर्वान् शत्रुभूतान् भूपान् आत्मसात् कृतवान् । रघुरीदृशं राज्यकार्यसम्पादनकुशलं तं पुत्रमजं वीक्ष्य स्वर्गीयेष्वपि वस्तुषु निःस्पृहोऽभूत् ।

### रघोर्मोक्षार्थम्, अजस्य चाभ्युदयार्थं प्रयत्नः । रघोः स्वर्गारोहणञ्च ।

हे पितः ! 'मां परित्यज्य न गम्यताम्' इति पुत्रेण बहुशः प्रार्थितो वनं जिगमिषुः स रघुः राज्यलक्ष्मीमनङ्गीकुर्वन् तस्य तां प्रार्थनां स्वीकृत्य नगरोपकण्ठे निवसितवान् । इत्थं रघोः संन्यस्तत्वात् अजस्य च नवराज्याधिपतित्वात् दिलीपकुलमत्यन्तं शुशोभ । रघुर्मोक्षार्थम् आप्तैर्योगिभिः सङ्गतो बभूव, अजश्चाभ्युदयार्थं नीतिविशारदैर्मन्त्रिभिः सङ्गतो बभूव । किञ्च रघुश्चित्तैकाग्र्यतामभ्यसितुं विजने कुशासनमाददे, अजश्च कार्यार्थिनीः प्रजाः अवेक्षितुं व्यवहारासने स्थितः । अपि च रघुः समाध्यभ्यासेन देहाश्रयान् प्राणादीन् पञ्चवायून् वशमनयत्, अजश्च कोशदण्डमहिम्ना स्वभूम्यनन्तरान् यातव्यपार्ष्णिग्राहादीन् राज्ञो वशीचकार । किञ्च रघुस्तत्वज्ञानप्रचुरेण भवबीजभूतानामात्मकर्मणां दग्धुं प्रवृत्तः, अजश्च शत्रूणां कर्माणि कार्त्स्न्येन भस्मीकृतवान् । अपि च रघुः सत्वादिगुणत्रयमजयत्, अजश्च सन्ध्यादिगुणषट्कं प्रयुक्तवान् । इत्थं द्वावपि स्वेष्टसिद्ध्यर्थं सावधानतया प्रयतितवन्तौ । अथ सर्वप्राणिषु समदर्शी स रघुः कियन्ति वर्षाणि संयाप्य योगसमाधिना शरीरं जहौ । श्रुतपितृमरणः सोऽजः बहु विलप्य पितृभक्त्या अग्निसंस्काररहितमन्त्येष्टिकर्म कृतवान् ।

### इन्दुमत्या सह अजस्य उपवनविहारः ।

किञ्चित्काले व्यतीते अजस्य दशरथाख्यः पुत्रो बभूव । ततः कदाचित् अजः इन्दुमत्या सह उपवनं विहर्तुं गतः । तदा ब्रह्मपुत्रो नारदः आकाशमार्गेण गोकर्णाख्यस्थानस्य शिवं वीणया गानं श्रावयितुं जगाम । तस्य नारदस्य वीणाया अग्रभागे स्थिता दिव्यपुष्पमाला पवनेन प्रेरिता उपवने विद्यमानाया इन्दुमत्याः स्तनोपरि अपतत् । इन्दुमती मूर्च्छां प्राप्य पतिमजं पातयद् भूमौ पतिता मृता च । मूर्च्छां प्रापितोऽजः सेवकैर्व्यजनादिभिः सेवितश्चैतन्यं प्राप्तवान् । सा तु तथैव संस्थिता बभूव । सहसा इन्दुमत्याः ईदृशीं दशामवेक्ष्य स बहु विललाप । यज्ञदीक्षायुक्तो वसिष्ठश्चित्तैकाग्र्यात् अजं दुःखिनमवजानन् तं सान्त्वयितुं शिष्यं प्रेषितवान् ।

वसिष्ठशिष्य आह—हे राजन् ! मे गुरुर्भवतस्तापकारणं जानन्नपि क्रतौ दीक्षितत्वात् भवन्तमाश्वासयितुं स्वयं नोपस्थितः । हे राजन् ! अल्पवाचिका वसिष्ठस्य वाणी मयि विद्यते तां, शृणु श्रुत्वा च मनसि धर्तुमर्हसि । गुरुर्वसिष्ठो लोकत्रये कालत्रयस्य वार्तां जानाति । अतस्तदुक्तिषु न संशयितव्यम् । पुरा किल तपश्चरतस्तृणबिन्दुनाम्नो राजर्षेस्तपोविघाताय इन्द्रो हरिणीनाम्नीं देवाङ्गनां तस्य समीपे प्रेषयामास । स राजर्षिः हरिणीं तपोविघातिनीं ज्ञात्वा 'त्वं मानुषी भव' इति तां शशाप । शापं श्रुत्वा हे भगवन् ! पराधीनाया

ममापराधं क्षन्तुमर्हसीत्यवं प्रकारेण शरणागतां तां 'स्वर्गीयदिव्यकुसुमदर्शनपर्यन्तं मानुषी भूत्वा पुनस्त्वं स्वधाम प्राप्स्यसि' इत्यनुगृहीतवान्। अथ क्रथकैशिकवंशसंभवा सा भवतो महिषी भूत्वा अद्य शापनिवृत्तिकारणदिव्यपुष्पं प्राप्य मृता। हे राजन्! जन्मवतां मरणं ध्रुवम्, अतस्तस्या मरणं न चिन्त्यम्। पृथिवी पाल्यतां, यतो राजानः पृथिव्यैव कलत्रवन्तो भवन्ति। रुदन् म्रियमाणोऽपि भवान् तां न लब्धुं शक्नोति। स्वस्वकर्मानुसारेण फलभोगाय भिन्नशरीरगमनात् तामनुम्रियमाणोऽपि भवान् न तां लभते। हे राजन्! अविच्छिन्नं बन्धूनामश्रु मृतं दुःखिनं करोतीति मन्वादयः कथयन्ति, अतस्त्वं दुःखरहितमनाः सन् स्वभार्यां पिण्डोदकादिदानैस्तर्पयेत्यादीनि शिष्यमुखेरितानि गुरोर्वचनानि अजस्तथेति स्वीकृत्य तं शिष्यं प्रत्यावर्तितवान्। अथ अजः कथञ्चित् वर्षाष्टकं गमयित्वा गङ्गासरयूसङ्गमे स्वशरीरं संत्यज्य देवत्वं प्राप्तवानिति।

## अथ नवमः सर्गः।

### दशरथस्य प्रजापालनम्, तमसातटे मुनिपुत्रवधश्च।

अथ पितरि स्वर्गं गते राजाधिराजो दशरथो यतो नगरजनसहितं जानपदमण्डलं यथाशास्त्रमपालयत्ततो तस्य प्रकृतिमण्डलं तस्मिन् अतीवानुरक्तमभूत्। दशरथे पृथिवीश्वरे सति देशे रोगः शत्रुश्च पदं न निहितवान्। कौसल्याकैकेयीसुमित्राभ्य अस्य दशरथस्य विवाहो बभूव। अथ वसन्तर्तोः प्रादुर्भावे मन्त्रिभिरनुमोदितः स मृगयाऽर्थं वनं गतः। तत्र मृगाणां यूथमवेक्ष्य स पृष्ठतोऽनुययौ। दशरथेन अभियाते तन्मृगयूथमश्रुसिक्तैर्भयचकितदृष्टिपातैर्वनं श्यामीचकार। कुत्रचित् स दशरथो मृगे बाणं त्यक्तुमुद्यतो वेद्धुमिष्टं स्वप्रेयसं मृगमनुरागादन्तर्धाय स्थितां सहचरीं मृगीं विलोक्य सद्यः प्रियानयनकटाक्षान् स्मरन् करुणार्द्रपूर्णचित्तः सन् कर्णपर्यन्तमाकृष्टमपि बाणं न मुमोच। एवंप्रकारेण मृगयां कुर्वन् एकदा स तमसानाम्नीं नदीं प्राप। तत्र जलेन घटं पूरयन्तं कञ्चिन्मुनिपुत्रं प्रति हस्तिगर्जनशङ्कया शब्दपातिनं बाणं विससर्ज। तेन विद्धः स मुनिपुत्रः 'हा तात!' इति क्रन्दनं कुर्वन् भूमौ पपात। ततो दशरथस्तस्य तत्क्रन्दनमाकर्ण्य शीघ्रं तत्सकाशं जगाम। तत्र तस्य मुनिपुत्रस्य एतादृशीमवस्थां वीक्ष्य स्वयमपि शरविद्ध इवाभवत्। दशरथेन पृष्टः स मुनिपुत्रः अशक्तिवशाद्धोच्चारितैरक्षरप्रायैः पदैरात्मानं करणसंज्ञं तपस्विसुतं कथयाम्बभूव। 'मां पितृसमीपे प्रापय' इति तस्य प्रेरणया स दशरथस्तदवस्थमेव तमन्धयोः पित्रोः समीपं नीत्वा करिभ्रान्त्या आत्मना कृतं कर्म ताभ्यां श्रावयामास। मातापितृभ्यां प्रेरणया दशरथस्तद्वक्षसि विद्धं बाणं निष्कासितवान्। निष्कासिते बाणे स मुनिपुत्रो मृतः। पुत्रस्य मरणं श्रुत्वा अन्धः पिता दशरथं शशाप—'हे राजन्! यथाऽहं वृद्धावस्थायां पुत्रशोकात् प्राणांस्त्यजामि तथा भवानपि अन्त्ये वयसि मृत्युं प्राप्स्यति' इति। शापं श्रुत्वा दशरथो जगाद—'हे मुने! अपुत्रस्य मम भवच्छापवशात् पुत्रावाप्तेः भवता मयि पातितोऽयं शाप उपकारक एव' इति। अथ सपत्नीको मुनिः पुत्रमनुगन्तुमनाश्रितायां स्वशरीरं जहौ। दशरथश्च स्वमरणकारणभूतं तच्छापं दधद् वनात् स्वराजधानीमयोध्यां प्रत्यावृत्तः।

## अथ दशमः सर्गः।

### रामभरतलक्ष्मणशत्रुघ्नानां जन्म।

अथ प्रजाः पालयतो दशरथस्य किञ्चिदूनं षष्टिसहस्रवर्षाणि व्यतीयुः। किन्तु स पितॄणामृणविमुक्तिकारणमेकमपि पुत्रं न प्राप। पुत्रार्थिनस्तस्य दशरथस्यानुरोधेन जितेन्द्रियाः ऋष्यशृङ्गादयो महर्षयः पुत्रकामेष्टियागमारेभिरे। एतस्मिन्नवसरे देवाः रावणेन पीडिताः सन्तः स्वरक्षाऽर्थं विष्णोः समीपं गत्वा स्तुतिं चक्रुः। स्तुत्या संतुष्टो भगवान् विष्णुरिन्द्रादि-

देवान् प्रति जगाद-हे देवाः ! भवतां महिमपुरुषार्थौ दुष्टात्मना रावणेनाक्रान्तौ जाने । किञ्च रावणेन तप्यमानं भुवनत्रयं मया ज्ञायते । ब्रह्मणो वरदानादेव एतावत्कालपर्यन्तं तस्य दुरात्मनोऽतिवृद्धिः सह्यते स्म । मा भयं कुरुत अल्पेनैव कालेन दाशरथिर्भूत्वा तस्य वधं करिष्ये इत्युक्त्वा स विष्णुरन्तर्दधे । अथ दशरथस्य पुत्रकामेष्टियागे अग्नेः सकाशात् कश्चिद् दिव्यस्वरूपः पुरुषो हस्ताभ्यां हेमपात्रगतं पायसान्नमादधानः ऋत्विजां विस्मयेन सह प्रादुर्बभूव । दशरथस्तेन दिव्याकृतिकपुरुषेणोपनीतं पायसान्नं गृहीत्वा कौसल्याकैकेयीभ्यां ददौ, सुमित्रायै तु तत्पायसान्नस्य चतुर्थभागं ताभ्यामेव दापयामास । अथ पायसान्नप्रभावात् कौसल्यादयो राजपत्न्यो गर्भं धारयामासुः । तदनन्तरं ताः-शङ्खचक्रगदाखड्गधनुश्चिह्नितमूर्तिभिर्वामनैः पुरुषैरात्मानो रक्ष्यन्ते-इत्यादिशुभस्वप्नान् ददृशुः । एकरूपोऽपि विष्णुस्तासां गर्भेषु आत्मानमनेकधा विभज्य तस्थौ । कौसल्या दशमे मासि तमोगुणनाशकमुत्तमं पुत्रं जनयामास । दशरथस्तस्य राम इति नामकरणं कृतवान् । कैकेयी भरताख्यं पुत्रं सुषुवे । सुमित्रा च लक्ष्मणशत्रुघ्ननामानौ द्वौ सुतौ जज्ञे । एतेषां जन्मना सर्वं जगत् दुर्भिक्षादिदोषरहितमभूत् । अग्निसूर्यौ निरस्तदुःखाविव बभूवतुः । रामजन्मनि तद्वध्यस्य दशाननस्य मुकुटगतमणिपतनं दुर्निमित्तमभूत् । देवा दशरथादप्यधिकं सन्तुष्टा दिवि दुन्दुभिं वादयामासुः । सर्वेषां कुमाराणां सौभ्रात्रे समानेऽपि पायसांशानुसारेण रामलक्ष्मणयोः भरतशत्रुघ्नयोश्च प्रीतिर्बभूव । ते विनयादिभिः पितुरानन्दं वर्धयन्तो ववृधिरे । राजाधिराजो दशरथो वैष्णवांशसम्भूतैस्तैः पुत्रैः सह अधिकं शुशुभे इति ।

# संक्षिप्तविषयानुक्रमणिका ।

# विषयानुक्रमणिका ।

## षष्ठे सर्गे--

अत्र षष्ठसर्गसमाप्तिः ।

## सप्तमे सर्गे—

अत्र सप्तमसर्गसमाप्तिः।

## अष्टमे सर्गे—

अत्राष्टमसर्गसमाप्तिः ।

## नवमे सर्गे—



अत्र नवमसर्गसमाप्तिः ।

## दशमः सर्गः—



अत्र दशमसर्गसमाप्तिः ।

## (१) इक्ष्वाकुवंशीयानां राज्ञां वंशावलिः।

केशिनी = सगरः = सुमतिः

षष्टिसहस्रपुत्राः | असमंजसः

अंशुमान्

दिलीपः (प्रथमः)

भगीरथः

श्रुतः

नाभः (नाभागः)

अंबरीषः

सिंधुद्वीपः

अयुताश्वः (अयुतायुः, अयुताजितः)

ऋतुपर्णः

सर्वकामः (आर्तपर्णी)

सुदासः

(कल्माषपादः) मित्रसहः = मदयंती

अश्मकः

मूलकः (नारीकवचः)

शतरथः

एलविलः

विश्वसहः

दिलीपः (द्वितीयः)

(२) रघुः (दीर्घबाहुः)

(३) अजः

---

(१) संक्षेपतो वंशावलिरियं विष्णुपुराणनाम्नः सगरमारभ्य प्रदर्श्यते।

(२) पद्मपुराणादौ—दिलीपस्य पुत्रः दीर्घबाहुः, तस्य रघुरिति क्रमो विद्यते।

हरिवंशे तु—'दीर्घबाहुर्दिलीपस्य रघुर्नाम्नाऽभवत्सुतः' इत्युक्तम्। तट्टीकायां 'दीर्घबाहू रघुरेव' इति स्पष्टीकृतम्।

(३) इतोऽग्रे द्वितीयपृष्ठे विलोकयम्।

(१) इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति। यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ॥

श्री हरिः शरणम्

# मुक्तावली ।

विदांकुर्वन्तु विद्वांसो यन्मुक्तावलीमयूखनामकं न्यायसिद्धान्तमुक्तावल्या व्याख्यानं न्यायव्याकरणाचार्यसाहित्योपाध्यायपदवीभृता काशीस्थ जी.म. गोयनकासंस्कृतमहाविद्यालयव्याकरणाध्यापकेन मीमांसकशिरोमणिना श्रीसूर्यनारायणशर्मशुक्लेन विरचय्य प्रत्यक्षखण्डान्तं भागं परीक्षार्थिनां छात्राणामनुरोधेन झटिति प्रकाशितवानस्मि । इदं व्याख्यानं दिनकरीमपहाय सर्वाण्यपि व्याख्यानानि अतिशय्य वर्तत इति कथनं नासम्भवदुक्तिकम्, तथापि—

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदति शिक्षितानामात्मन्यप्रत्ययं चेतः ।

इति कालिदासोक्तिमनुसन्धाय विरमामि ग्रन्थगौरवप्रदर्शनात् । अवशिष्टमपि मुक्तावलीमयूखं झटिति परीक्षकाणां मनोविनोदाय प्रकटीकृत्य भवतां सेवां विधास्ये इति ।

प्रत्यक्षखण्डान्तभागस्य मूल्यम् ।।≈) दश आणकाः
अनुमानशब्दखण्डाद्यात्मकः द्वितीयोभागः ।।≈) दश आणकाः

श्रीः ।

# किरातार्जुनीयम् ।

## आदितः सर्गत्रयं यावत्

अस्य यद्यपि बह्व्यो व्याख्याः समुपलभ्यन्ते तथापि न तादृगुपकारो दृश्यते ताभिः कोमलमतीनामन्तेवासिनां यादृगस्मिच्चिकीर्षया "श्रीगङ्गाधरमिश्र" कृतया सुधाऽभिधयाऽभिनवव्याख्यया । कृतमतिप्रशंसनेन, अत्र भवन्त एव सुधाऽवगाहिनः सहृदयपाठकाः प्रमाणं भविष्यन्ति । अत्र च परीक्षाऽर्थिनां विद्यार्थिनामेकान्तस्वान्तसुखाय प्रथमं तावत् कविजन्मकालादिनिर्णायकेनैतिह्येनोपनिबद्धा भूमिका, तदनु विशदं पात्रपरिचयः, सङ्क्षिप्तकथानकञ्च, तथा महामहोपाध्याय "मल्लिनाथ" सूरिविरचितया घण्टापथाख्यव्याख्ययाऽनुबद्धं प्रतिश्लोकम्—अन्वयो, व्याख्या, समासादि, व्याकरणं, वाच्यान्तरं, सारार्थो, भाषाऽर्थश्चेति क्रमेण सन्निवेशितानि सन्ति । अन्ते च शिक्षाऽभ्यासार्हपद्यपद्यांशयोः प्रश्नविशेषस्य च सङ्ग्रहस्तथा च १९१० शततमेशवीयवत्सरादारभ्य १९३१ शततमेशवीयवत्सरे यावत् काशीस्थराजकीयसंस्कृतपाठशालीयपरीक्षायाः प्रश्नपत्राण्यपि यत्नतः सङ्गृह्य संस्थापितानि सन्ति । किञ्च—ईदृगुत्तमस्य चित्ताकर्षिगुणजुषोऽस्य सर्वजनसौलभ्यमेवालभ्यलाभं स्वं स्वीकुर्वाणेन मया केवलं १२ आणकमितमेव निर्मञ्छनं निर्दिष्टम् ।

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत पुस्तकालय,**
बनारस सिटी ।

महाकविश्रीकालिदासविरचितम्

# रघुवंशमहाकाव्यम्

## सञ्जीविनीसुधाभ्यामुल्लसितम् ।

### अथ षष्ठः सर्गः ।

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे ॥

अथ अजः स्वयम्वरस्थान्भूपानपश्यदित्याह—

**स तत्र मञ्चेषु मनोज्ञवेषान्सिंहासनस्थानुपचारवत्सु ।**
**वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥ १ ॥**

सञ्जीविनी—स इति । सोऽजस्तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु पर्यङ्केषु सिंहासनस्थान्मनोज्ञवेषान्मनोहरनेपथ्यान्वैमानिकानां विमानैश्चरताम्, 'चरति' इति ठक्प्रत्ययः । मरुताममराणाम्, 'मरुतौ पवनामरौ' इत्यमरः । आकृष्टलीलान्गृहीतसौभाग्यान्, आकृष्टमरुल्लीलानित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । नरलोकं पालयन्तीति नरलोकपालाः, कर्मण्यण्प्रत्ययः । तान्भूपालानपश्यत् । सर्गेऽस्मिन्नुपजातिश्छन्दः ॥ १ ॥

मूको ऽपि वावदूको भवति यदीयां दयामुपादाय ।
वीणामण्डितपाणिः सा वाणी सद्गुणा जयति ॥ १ ॥
प्रणम्य मनसा पादं गुरोः सज्ज्ञानदायकम् ।
सुदामा-शर्म्मणा नव्या 'सुधा' व्याख्या विरच्यते ॥ २ ॥

अन्वयः—सः, तत्र, उपचारवत्सु, मञ्चेषु, सिंहासनस्थान्, मनोज्ञवेषान्, वैमानिकानां, मरुताम्, आकृष्टलीलान्, नरलोकपालान्, अपश्यत ॥ १ ॥

सुधा—सः = पूर्वोक्तः, अज इति यावत् । तत्र = स्वयम्वरे, उपचारवत्सु = राजोपकरणच्छत्रचामरादिमत्सु, मञ्चेषु = पल्यङ्केषु, सिंहासनस्थान् = सिंहासनारूढान्, सुवर्णकृतराजासनोपविष्टानिति यावत् । मनोज्ञवेषान् = मनोरमनेपथ्यान्, स्वयम्वरोचितशोभनवेषानित्यर्थः । वैमानिकानां = व्योमयानिकानां, विमानैर्विहरणशीलानामित्यर्थः । मरुतां = देवानाम्, आकृष्टलीलान् = गृहीतसौभाग्यान्, परिगृहीतदेवविलासानिति यावत् । नरलोकपालान् = मृत्युलोकरक्षकान्, राज्ञ इति यावत । अपश्यत्—दृष्टवान् । सर्गेऽस्मिन्नुपजातिश्छन्दः, तल्लक्षणं च वृत्तरत्नाकरे-'अनन्तरोदीरित लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥१॥

कोशः—'मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इति, 'कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्' इति, 'आकल्पवेषौ नेपथ्यं प्रतिकर्मप्रसाधनम्' इति, 'व्योमयाने विमानोऽस्त्री' इति चामरः। 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी । 'लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु' इति विश्वः ॥ १ ॥

समासादि—मनसा जानन्तीति मनोज्ञाः, मनोज्ञा वेषा येषां ते मनोज्ञवेषास्तान् मनोज्ञवेषान् ( ब० व्री० ) । सिंहासने तिष्ठन्तीति सिंहासनस्थास्तान् सिंहासनस्थान् । उपचा-

राः सन्ति येषु ते उपचारवन्तस्तेषूपचारवत्सु ( ब० ब्री० )। विमानैश्चरन्तीति वैमानिकास्तेषां वैमानिकानाम्। आकृष्टा लीला यैस्ते आकृष्टलीलास्तान् आकृष्टलीलान् ( ब०ब्री० )। नराणां लोक इति नरलोकस्तं पालयन्तीति नरलोकपालास्तान नरलोकपालान् ॥ १ ॥

व्याकरणम्—मनोज्ञाः = मनस् + ज्ञा-( अवबोधने ) 'इगुपधज्ञाप्रीकिरः कः' इति कः। सिंहासनस्थान् = सिंहासन + ष्ठा-(गतिनिवृत्तौ) 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। उपचारवत्सु = उपचार + मतुप् + वत्वम्। वैमानिकानाम् = विमान + 'चरति' इति ठक्। अपश्यत् = अ + दृशिर् ( प्रेक्षणे-इरित् ) लङ्, तिप्, 'पाघ्राध्मा' इत्यादिना पश्यादेशः ॥ १ ॥

वाच्यपरिवर्तनम्—तेन, तत्र, उपचारवत्सु, मञ्चेषु, सिंहासनस्थाः, मनोज्ञवेषाः, वैमानिकानां, मरुताम्, आकृष्टलीलाः, नरलोकपालाः, अदृश्यन्त ॥ १ ॥

तात्पर्यार्थः—स अजः नृपसभायामागत्य छत्रचामराद्युपकरणयुक्तेषु मञ्चेषु स्थितान् भूपान् दृष्टवान्, ये विमानैश्चरतां देवानां शोभां गृहीत्वा तत्र स्थिताः आसन् ॥ १ ॥

भाषाऽर्थः—उस अजने, स्वयम्वरके सजे हुए मचानोंमें सिंहासनों पर बैठे सुन्दर वेष वाले और विमानसे घूमनेवाले देवताओंकी शोभाको ग्रहण किये हुए राजाओंको देखा ॥ १ ॥

अथ अजं दृष्ट्वा राज्ञां मनसो नैराश्यमाह—

**रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।**
**काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥**

सञ्जीविनी—रतेरिति। 'रतिः स्मरप्रियायां च रागे च सुरते स्मृता' इति विश्वः। रतेः कामप्रियाया गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। ईश्वरेण हरेण प्रत्यर्पितस्वाङ्गं काममिव स्थितं काकुत्स्थमजमालोकयतां नृपाणां मन इन्दुमतीनिराशं वैदर्भीनिःस्पृहं बभूव। इन्दुमती सत्पतिमेनं विहाय नास्मान्वरिष्यतीति निश्चिक्युरित्यर्थः। सर्वातिशयसौन्दर्यमस्येति भावः ॥ २ ॥

अन्वयः-रतेः, गृहीतानुनयेन, ईश्वरेण, प्रत्यर्पितस्वाङ्गं, कामम्, इव, 'स्थितं' काकुत्स्थम्, आलोकयतां, नृपाणां, मनः, इन्दुमतीनिराशं, बभूव ॥ २ ॥

सुधा—रतेः = स्मरस्त्रियाः, गृहीतानुनयेन = स्वीकृतयाचनेन, स्वीकृतरतिप्रार्थनेनेति यावत्। ईश्वरेण = शङ्करेण, प्रत्यर्पितस्वाङ्गं = (१)प्रदत्तस्वशरीरं, कामं = मदनम्, इव, स्थितमिति शेषः। काकुत्स्थम् = अजम्, आलोकयताम् = आपश्यतां, नृपाणां = भूपानां, मनः = चित्तम्, इन्दुमतीनिराशम् = इन्दुमतीनिःस्पृहं, बभूव = अभूत्। अस्माकमपेक्षया अजस्यातिशयसौन्दर्यमतः इन्दुमत्येनं त्यक्त्वा नास्मान्वरिष्यतीति तत्राऽऽस्थिता राजानो निश्चयं कृतवन्त इति भावः ॥ २ ॥

कोशः—'रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः' इति मेदिनी। 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः। कन्दर्पो दर्पकोऽनङ्गः कामः' इति, 'ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति चामरः ॥ २ ॥

समासादि—गृहीतोऽनुनयो येन स गृहीतानुनयस्तेन गृहीतानुनयेन (ब० ब्री०)। प्रत्यर्पितं स्वाङ्गं येन सः प्रत्यर्पितस्वाङ्गस्तं प्रत्यर्पितस्वाङ्गम् (ब० ब्री०)। आलोकयन्तीत्यालोकयन्तस्तेषाम् आलोकयताम्। इन्दुमत्या निराशा यस्य तदिन्दुमतीनिराशम् ( ब० ब्री० )।

---

(१) पौराणिकी कथा—पुरा किल हिमालयपर्वते उग्रं तपसि स्थितस्य भगवतः शङ्करस्य समाधिविनाशाय इन्द्रेण कामः प्रेषितः, स च रत्या वसन्तेन च अनुगम्यमानस्तत्र गत्वा उमासमक्षं हरवक्षुलक्ष्यः सन् अङ्गुलि सम्मोहनं नाम सायकं समधत्त। ततस्तपोभङ्गसञ्जातकोपस्य शिवस्य तृतीयनयनात् सहसा निःसृतेन अग्निना स भस्मीभूतः। अथ कदाचित् शङ्करः रतिप्रार्थनया पुनरनङ्गमाङ्गिनं कृतवानिति ॥

ककुदि तिष्ठतीति ककुत्स्थस्तस्यापत्यं पुमान् काकुत्स्थस्तं काकुत्स्थम् ॥ २ ॥

व्याकरणम्—काकुत्स्थम् = ककुद् + ष्ठा-(गतिनिवृत्तौ) कप्रत्यये ककुत्स्थः, तस्मादण् । बभूव = भू ( सत्तायाम् ) लिट्, तिप, णलादेशः, द्वित्वम् , अभ्यासकार्यञ्च ॥ २ ॥

वाच्यपरिवर्तनम्—रतेः, गृहीतानुनयेन, ईश्वरेण, प्रत्यर्पितस्वाङ्गं, कामम्, इव, 'स्थितं' काकुत्स्थम् , आलोकयतां, नृपाणां, मनसा, इन्दुमतीनिराशेन, बभूवे ॥ २ ॥

तात्पर्यार्थः—रतिप्रार्थनास्वीकारात् शङ्करेण प्रत्यर्पितस्वदेहं मदनमिव स्थितम् अजमालोकयतां राज्ञां मनांसि इन्दुमतीनिराशानि अभूवन् ॥ २ ॥

भाषाऽर्थः—रती की प्रार्थना-स्वीकार करने वाले शंकर से पुनः अपने-शरीर को प्राप्त-किये कामदेव के तुल्य अज को देखकर राजाओं के मन इन्दुमती से निराश हुए ॥ २ ॥

अथ अजस्य मञ्चेऽवरोहणमाह—

**वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।**
**शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥**

सञ्जीविनी—वैदर्भेति । असौ कुमारो वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्यङ्कं क्लृप्तेन सुविहितेन सोपानपथेन मृगराजशावः सिंहपोतः, 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः। शिलानां विभङ्गैर्भङ्गीभिस्तुङ्गमुन्नतं नगोत्सङ्गं शैलाग्रमिव आरुरोह॥३॥

अन्वयः—असौ, कुमारः, वैदर्भनिर्दिष्टं, मञ्चं, क्लृप्तेन, सोपानपथेन, मृगराजशावः, शिलाविभङ्गैः, तुङ्गं, नगोत्सङ्गम् , इव, आरुरोह ॥ ३ ॥

सुधा—असौ = एषः, कुमारः = युवराजः, अज इति यावत् । वैदर्भनिर्दिष्टं = भोजप्रदर्शितं, मञ्चं = पर्यङ्कं, क्लृप्तेन = कल्पितेन, सुरचितेनेति यावत् । सोपानपथेन = आरोहणमार्गेण, मृगराजशावः = सिंहशिशुः , शिलाविभङ्गैः = पाषाणभङ्गीभिः, तुङ्गम् = उच्चं, नगोत्सङ्गं = पर्वताग्रम् , इव, आरुरोह = आरूढवान् । अजः, सिंहार्भकः पर्वताग्रमिव मञ्चमारुरोहेत्यर्थः ॥३॥

कोशः—'कुमारः स्यात् शुके स्कन्दे युवराजेऽश्वचारके' इति मेदिनी। 'आरोहणं स्यात्सोपानम्' इति, 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत' इति, 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इति, 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इति, 'यथा तथा तथैवैवम्' इति चामरः ॥ ३ ॥

समासादि—वैदर्भेन निर्दिष्ट इति वैदर्भनिर्दिष्टस्तं वैदर्भनिर्दिष्टम् ( त० पु० ) कुमारयतीति कुमारः । सोपानस्य पन्था इति सोपानपथस्तेन सोपानपथेन ( त० पु० ) । मृगाणां राजेति मृगराजस्तस्य शाव इति मृगराजशावः ( त० पु० ) । भज्यत इति भङ्गः, विशेषेण भङ्गो विभङ्गः, शिलानां विभङ्ग इति शिलाविभङ्गस्तैः शिलाविभङ्गैः ( त० पु० ) । नगस्योत्सङ्ग इति नगोत्सङ्गस्तं नगोत्सङ्गम् ( त० पु० ) ॥ ३ ॥

व्याकरणम्—निर्दिष्टम् = निर् + दृशिर् ( प्रेक्षणे—इरित् ) क्तः । आरुरोह = आ + रुह ( बीजजन्मनि प्रादुर्भावे च ( लिट् , तिप् , णल् , द्वित्वम् , अभ्यासकार्यं च ॥ ३ ॥

वाच्यपरिवर्तनम्—अमुना, कुमारेण, वैदर्भनिर्दिष्टः, मञ्चः, क्लृप्तेन, सोपानपथेन, मृगराजशावेन, शिलाविभङ्गैः, तुङ्गः, नगोत्सङ्गः, इव, आरुरुहे ॥ ३ ॥

तात्पर्यार्थः—यथा सिंहशिशुः शिलानां विभङ्गैरुच्छ्रितं शिखराग्रमारोहति, तथा असौ कुमारः अजः भोजेन प्रदिष्टं पर्यङ्कं सुन्दरेण सोपानमार्गेण आरुरोह ॥ ३ ॥

भाषाऽर्थः—वह कुमार (अज) भोज राजासे दिखाये गये मञ्च पर सुन्दर सीढियोंके मार्ग से, पत्थरोंकी चट्टानोंसे पहाड़के ऊंचे भाग पर सिंहके बच्चेकी समान चढ़ा ॥ ३ ॥

अथ सिंहासनमासीनस्याजस्य कीदृशी शोभाऽऽसीत्तामेवाह—

**परार्ध्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः ।**

भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

सञ्जीविनी—पराध्र्येति । पराध्र्याः श्रेष्ठा वर्णा नीलपीतादयो यस्य तेनास्तरणेन कम्बलादिनोपपन्नं सङ्गतं रत्नवद्रत्नखचितमासनं सिंहासनमासेदिवानधिष्ठितवान्सोऽजः मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह,'सेनानीरग्निभूर्गुहः' इत्यमरः । भूयिष्ठमत्यर्थमुपमेयकान्तिरासीत् । मयूरस्य विचित्ररूपत्वात्तत्साम्यं रत्नासनस्य तद्द्वारा च तदारूढयोरपीति भावः ॥४॥

अन्वयः—पराध्र्यवर्णास्तरणोपपन्नं, रत्नवद्, आसनम्, आसेदिवान्, सः, मयूरपृष्ठाश्रयिणा, गुहेन, भूयिष्ठम, उपमेयकान्तिः, आसीत् ॥ ४ ॥

सुधा—पराध्र्यवर्णास्तरणोपपन्नम् = उत्तमनीलपीतादिवर्णकुथोल्लसितं, विविधवर्णास्तरणयुक्तमिति यावत् । रत्नवद् = मणिमत्, रत्नखचितमित्यर्थः । आसनं = पीठं, सिंहासनमिति यावत् । आसेदिवान् = उपविष्टवान्, सः = अजः, मयूरपृष्ठाश्रयिणा = बर्हिपृष्ठारूढेन, गुहेन = पार्वतीनन्दनेन, कार्तिकेयेनेति यावत् । भूयिष्ठं = प्रचुरम्, उपमेयकान्तिः = तुल्यद्युतिः, आसीत् = अभूत । अनेकवर्णास्तरणसंगतम् उत्तममासनमुपविष्टोऽजः कार्तिकेय इव अशुभदित्यर्थः ॥४॥

कोशः—'पराध्र्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' इत्यमरः। 'वर्णो द्विजादिशुक्लादियशोगुणकथासु च' इति मेदिनी । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः । रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च' इति, 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इति, 'पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः' इति चामरः ॥ ४ ॥

समासादि—पराध्र्या वर्णाः यस्य तत् पराध्र्यवर्णं (ब०व्री०), पराध्र्यवर्णञ्च तदास्तरणमिति पराध्र्यवर्णास्तरणं (क०धा०), तेनोपपन्नमिति पराध्र्यवर्णास्तरणोपपन्नम् (त० पु०) । रत्नं विद्यते यत्र तद् रत्नवत् । अतिशयेन भूमेति भूयिष्ठम् । उपमातुं योग्या उपमेया, उपमेया कान्ति र्यस्य स उपमेयकान्तिः (ब०व्री०) । मयूरस्य पृष्ठमिति मयूरपृष्ठम्, मयूरपृष्ठम् आश्रयो विद्यतेऽस्येति मयूरपृष्ठाश्रयी तेन मयूरपृष्ठाश्रयिणा ॥ ४ ॥

व्याकरणम्—आसेदिवान् = आ + षद्लृ ( विशरणगत्यवसादनेषु-लृदित् ) लिट्, तस्य 'भाषायां सदवसश्रुवः' इति लिटः क्वस्वादेशः, । भूयिष्ठम्—भूमा + इष्ठन् ॥ ४ ॥

वाच्यपरिवर्तनम्—पराध्र्यवर्णास्तरणोपपन्नं, रत्नवद्, आसनम्, आसेदुषा, तेन, मयूरपृष्ठाश्रयिणा, गुहेन, भूयिष्ठम, उपमेयकान्तिना, अभूयत ॥ ४ ॥

तात्पर्यार्थः—यदाऽसौ कुमारः अजः नीलपीतादिवर्णयुतं बहुमूल्यं श्रेष्ठं रत्नखचितमासनम् (सिंहासनम्) उपविष्टः, तदा तस्याजस्य तादृशी शोभा बभूव, यथा मयूरपृष्ठोपविष्टस्य कार्तिकेयस्य भवति ॥ ४ ॥

भाषार्थः—वह अज अच्छे नीले पीले—आदि रंगो के बिछौने से बिछे हुये और रत्नों से जड़ित आसन पर बैठ, मोर के पीठ पर चढ़नेवाले कार्तिकेय के समान उपमा के योग्य अधिक शोभायमान हुआ ॥ ४ ॥

अथ राजपङ्क्तिषु सहस्रधा संक्रामितं लक्ष्म्याः स्वरूपमशुभदित्याह—

तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥

सञ्जीविनी—तास्विति । तासु राजपरम्परासु श्रिया लक्ष्म्या कर्त्र्या पयोमुचां मेघानां पङ्क्तिषु विद्युतेव सहस्रधा विभक्तः, तरङ्गेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः । प्रभाविशेषस्योदयेनाविर्भावेन दुर्निरीक्ष्यो दुर्दर्शन आत्मा श्रियः स्वरूपं व्यरुचद्द्योतिष्ट, "द्युद्भ्यो लुङि" इति परस्मैपदम् । द्युतादित्वादङ्प्रत्ययः । तस्मिन्समये प्रत्येकं संक्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः ॥ ५ ॥

अन्वयः—पयोमुचां, पङ्क्तिषु, विद्युता, सहस्रधा, विभक्तः, आत्मा, इव, तासु, राजपरम्परासु, श्रिया, 'सहस्रधा विभक्तः' प्रभाविशेषोदयदुर्निरीक्ष्यः, 'आत्मा' व्यरुचत् ॥ ५ ॥

सुधा—पयोमुचां = जलदानां, मेघानामिति यावत्। पङ्क्तिषु = श्रेणीषु, विद्युता = सौदामिन्या, सहस्रधा = सहस्रप्रकारेण, विभक्तः = संक्रामितः, 'विद्युतः' आत्मा = स्वरूपम् , इव, तासु = पूर्वोक्तासु, राजपरम्परासु = नृपपरिपाटीषु, राजश्रेणीष्विति यावत्। श्रिया = लक्ष्म्या, सहस्रधा विभक्त इति शेषः । प्रभाविशेषोदयदुर्निरीक्ष्यः = द्युतिविशेषाविर्भावाद्दुरवलोकयः, श्रिय आत्मेति शेषः । व्यरुचत् = अशोभिष्ट ( गङ्गादिनद्या ऊर्म्मिषु सूर्य इव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः ) ॥ ५ ॥

कोशः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ' इति, 'परम्परा परिपाट्यां हिंसासन्तानयोरपि' इति च मेदिनी । 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः । 'तडित्सौदामिनी विद्युच्चञ्चला चपला अपि' इत्यमरः ॥ ५ ॥

समासादि—राज्ञां परम्परा इति राजपरम्परास्तासु राजपरम्परासु ( त० पु० ) । प्रभाया विशेष इति प्रभाविशेषस्तस्योदय इति प्रभाविशेषोदयस्तेन दुर्निरीक्ष्य इति प्रभाविशेषोदयदुर्निरीक्ष्यः (त० पु०) । पयांसि मुञ्चन्तीति पयोमुचस्तेषां पयोमुचाम् ॥ ५ ॥

व्याकरणम्—दुर्निरीक्ष्यः = दुर् + निर् + ईक्ष ( दर्शने ) + यत् । व्यरुचत् = वि + अ + रुच् ( दीप्तौ ) लुङ्, 'द्युद्भ्यो लुङि' इति परस्मैपदम् , द्युतादित्वात्-'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यङ् । विभक्तः = वि + भज् ( सेवायाम् ) क्तः ॥ ५ ॥

वाच्यपरिवर्तनम्—पयोमुचां, पङ्क्तिषु, विद्युता, सहस्रधा, विभक्तेन, आत्मना, इव, तासु, राजपरम्परासु, श्रिया, 'सहस्रधा विभक्तेन' प्रभाविशेषोदयदुर्निरीक्ष्येण, आत्मना, व्यरोचि ॥५॥

तात्पर्यार्थः—यथा मेघानां पङ्क्तिषु बहुधा भिन्नं तडित्स्वरूपं शोभते, तथा तासु नृपपङ्क्तिषूर्मिषु सूर्य इव सहस्रधा भिन्नम् अतिशयेन तेजसा दुर्निरीक्ष्यं लक्ष्म्याः स्वरूपं शुशुभे ॥५॥

भाषाऽर्थः—जैसे मेघों की पंक्तियों में बिजली से हजारों भाग से चमकाया हुआ बिजली का स्वरूप शोभित होता है, वैसे उन राजाओं की पंक्तियों में लक्ष्मी से हजारों भाग से प्रकाशित हुआ, कान्ति की विशेषता के कारण कष्ट से देखने योग्य लक्ष्मीका स्वरूप शोभित हुआ ॥ ५ ॥

अथ सर्वेषां राज्ञां मध्ये, एक अज एव निजतेजसाऽत्यन्तं शुशुभ इत्याह—

**तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।**
**रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥**

सञ्जीविनी—तेषामिति । महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् उदारनेपथ्यभृतामुज्ज्वलवेषधारिणां तेषां राज्ञां मध्ये कल्पद्रुमाणां मध्ये पारिजात इव सुरद्रुमविशेष इव, 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः । स रघुसूनुरेव धाम्ना तेजसा रराज, 'भूम्ना' इति पाठेऽतिशयेनेत्यर्थः । अत्र कल्पद्रुमशब्दः पञ्चान्यतमविशेषवचनः, उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसंधेयम् । कल्पा इति द्रुमा कल्पद्रुमा इति विग्रहः ॥ ६ ॥

अन्वयः—महार्हासनसंस्थितानाम्, उदारनेपथ्यभृतां, तेषां, मध्ये, कल्पद्रुमाणां, 'मध्ये' पारिजातः, इव, सः, रघुसूनुः, एव, धाम्ना, रराज, ॥ ६ ॥

सुधा—महार्हासनसंस्थितानां = श्रेष्ठपीठारूढानाम् , उदारनेपथ्यभृताम् = उज्ज्वलवेषधारिणां, तेषां = पूर्वोक्तानां, राज्ञामित्यर्थः । मध्ये = अन्तरे, कल्पद्रुमाणां = कल्पद्रुमसंज्ञकानां, सुरद्रुमाणामिति यावत्। 'मध्ये' इति शेषः । पारिजातः = सुरद्रुमविशेषः,

इव, सः = पूर्वोक्तः, रघुसूनुः = रघुसुतः, अज इति यावत् । एव, धाम्ना = त्विषा, तेजसेत्यर्थः । रराज = शुशुभे । 'धाम्ना' इत्यत्र 'भूम्ना' इति पाठे 'अतिशयेन' इत्यर्थो बोध्यः । सुरतरुमध्ये पारिजात इव राज्ञां मध्ये एकाकी अज एव तेजसा रराजेति भावः ॥ ६ ॥

कोशः--'पीठमासनम्' इत्यमरः । 'मध्यं वलग्ने न स्त्री स्यान्न्याय्येऽन्तरेऽधमेऽन्यवत्' इति मेदिनी । 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः । 'धाम शक्तौ प्रभावे च तेजोरश्मिगृहजन्मसु' इति विश्वः । 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति, 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इति चामरः ॥६॥

समासादि--महार्हाणि च तान्यासनानि इति महार्हासनानि (क० धा०), तेषु संस्थितास्तेषां महार्हासनसंस्थितानाम् (त० पु०) । उदारं च तन्नेपथ्यमित्युदारनेपथ्यं(क० धा०), तं बिभ्रतीत्युदारनेपथ्यभृतस्तेषामुदारनेपथ्यभृताम् । रघोः सूनुरिति रघुसूनुः ( त० पु० ) । कल्पः ( संकल्पितोऽर्थः ) तस्य द्रुमा इति कल्पद्रुमास्तेषां कल्पद्रुमाणाम् (त० पु०) ॥ ६ ॥

व्याकरणम्--नेपथ्यभृताम् = नेपथ्य + डुभृञ् ( धारणपोषणयोः--डुभिञ् ) क्विप् । संस्थितानाम् = सम् + स्था--( गतिनिवृत्तौ ) क्तः + इत्वम् । रराज = राज् ( दीप्तौ--ऋदित ) लिट्, तिप्, णल्, द्वित्वम्, अभ्यासकार्यञ्च ॥ ६ ॥

वाच्यपरिवर्तनम्--महार्हासनसंस्थितानाम्, उदारनेपथ्यभृतां, तेषां, मध्ये, कल्पद्रुमाणां, 'मध्ये' पारिजातेन, इव, तेन, रघुसूनुना, एव, धाम्ना, रेजे ॥ ६ ॥

तात्पर्यार्थः--यथा कल्पवृक्षाणां मध्ये पारिजातः शोभते, तथा श्रेष्ठसिंहासनस्थानां निर्मलवेषधारिणां नृपाणां मध्ये अज एव तेजसा शुशुभे ॥ ६ ॥

भाषार्थः--बहुमूल्य--सिंहासनों पर बैठे, ( और ) सुन्दरवेषधारण--किये उन राजाओं के बीच में, कल्पवृक्षों के बीच पारिजात की नाईं रघुपुत्र (अज) ही तेज से शोभित हुआ ॥ ६ ॥

अथ पौरजना अन्यान् राज्ञो विहाय अजमेव दृष्टवन्त इत्याह--

**नेत्रव्रजाः पौरजनस्य तस्मिन्विहाय सर्वान्नृपतीन्निपेतुः ।**
**मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥**

सञ्जीविनी--नेत्रेति । पौरजनस्य नेत्रव्रजाः सर्वान्नृपतीन्विहाय तस्मिन्नजे निपेतुः, स एव सर्वोत्कर्षेण ददृश इत्यर्थः । कथमिव मदोत्कटे मदेनोद्भिन्नगण्डे निर्भरमदे वा, वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे, रेचिता रिक्तीकृताः पुष्पाणां वृक्षा यैस्ते, त्यक्तपुष्पवृक्षा इत्यर्थः । द्विरेफा भृङ्गा इव । द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसंभावनार्थं कृतम् ॥ ७ ॥

अन्वयः--पौरजनस्य, नेत्रव्रजाः, सर्वान्, नृपतीन्, विहाय, रेचितपुष्पवृक्षाः, द्विरेफाः, मदोत्कटे, वन्ये, गन्धद्विपे, इव, तस्मिन्, निपेतुः, ॥ ७ ॥

सुधा--पौरजनस्य = नागरिकनरस्य, नगरनिवासिनो जनस्येत्यर्थः । नेत्रव्रजाः = नयनवृन्दानि, चक्षुःसमूहा इति यावत् । सर्वान् = निखिलान्, नृपतीन् = नरस्वामिनः, राज्ञ इति यावत् । विहाय = त्यक्त्वा, रेचितपुष्पवृक्षाः = त्यक्तप्रसूनतरवः, द्विरेफाः = भ्रमराः, मदोत्कटे = दानतीव्रे, मदस्रावेण तीव्र इत्यर्थः । वन्ये = आरण्यके, गन्धद्विपे = गन्धप्रधाने गजे, इव, तस्मिन् = पूर्वोक्ते, अज इत्यर्थः । निपेतुः = पतिताः ॥ ७ ॥

कोशः--'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः । 'व्रजो गोष्ठाध्ववृन्देषु' इति, 'उत्कटस्तीव्रमत्तयोः' इति च मेदिनी । 'गण्डः कटो मदो दानम्' इति, 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इति, 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इति, 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इति, 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इति, 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः'

इति चामरः ॥ ७ ॥

समासादि--नेत्राणां व्रजाः इति नेत्रव्रजाः ( त० पु० ) । पुरे भवः पौरः, पौरश्चासौ जनश्चेति पौरजनस्तस्य पौरजनस्य ( क० धा० ) । पान्तीति पतयः, नृणां पतय इति नृपतयस्तान् नृपतीन् (त०पु०) । मदेनोत्कट इति मदोत्कटस्तस्मिन् मदोत्कटे ( त० पु० ) । पुष्पाणां वृक्षा इति पुष्पवृक्षाः (त०पु०), रेचिताः पुष्पवृक्षा यस्ते रेचितपुष्पवृक्षाः (ब०व्री०) द्वाभ्यां ( मुखपुच्छाभ्यां ) पिबतीति द्विपः, गन्धः प्रधानो द्विप इति गन्धद्विपस्तस्मिन् गन्धद्विपे ( शाकपार्थिवादिः ) । वने भवो वन्यस्तस्मिन् वन्ये । द्वौ रेफौ ( नाम्नि ) येषां ते द्विरेफाः ( ब० व्री० ) ॥ ७ ॥

व्याकरणम्--विहाय = वि + ओ हाक ( त्यागे--ओ किन ) क्त्वा, ल्यबादेशः । निपेतुः = नि + पत ( गतौ वा ) लिट्, झिः, उसादेशः । वन्ये = वन + यत् ॥ ७ ॥

वाच्यपरिवर्तनम्--पौरजनस्य, नेत्रव्रजैः, सर्वान्, नृपतीन्, विहाय, रेचितपुष्पवृक्षैः, द्विरेफैः, मदोत्कटे, वन्ये, गन्धद्विपे, इव, तस्मिन्, निपेते ॥ ७ ॥

तात्पर्यार्थः--यथा भृङ्गाः पुष्पवृक्षान् विहाय आरण्यके गन्धप्रधाने गजे निपतन्ति, तथैव नगरनिवासिनो नरस्य नयनपङ्क्तिः निखिलान्नृपतीन् विहाय अजे निपेतुः ॥ ७ ॥

भाषार्थः--नगर में रहनेवाले मनुष्योंका नेत्र-समूह सब राजाओंको छोड़, जैसे भौंरे फूलके वृक्षों को छोड़कर मद से तीव्र गन्धवाले जंगली-हाथी पर पड़ते हैं, वैसे उस अज पर पड़ा ॥ ७ ॥

अथेन्दुमत्याः प्रवेशनं (१)विशेषकेनाह--

अथ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।
सञ्चारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८ ॥

सञ्जीविनी--अथेति । अथान्वयज्ञै राजवंशाभिज्ञैर्बन्दिभिः स्तुतिपाठकैः, 'बन्दिनः स्तुतिपाठकाः' इत्यमरः । सोमार्कवंश्ये सोमसूर्यवंशभवे नरदेवलोके राजसमूहे स्तुते सति विवेशेत्युत्तरेण सम्बन्धः । एवमुत्तरत्रापि योज्यम् । सञ्चारिते समन्तात्प्रचारिते अगुरुसारो योनिः कारणं यस्य तस्मिन्धूपे च वैजयन्तीः पताकाः समुत्सर्पति सति अतिक्रम्य गच्छति सति ॥ ८ ॥

अन्वयः--अथ, अन्वयज्ञैः, बन्दिभिः, सोमार्कवंश्ये, नरदेवलोके, स्तुते, 'सति' सञ्चारिते, अगुरुसारयोनौ, धूपे, च, वैजयन्तीः, समुत्सर्पति, 'सति, कन्या, विवेश' ॥ ८ ॥

सुधा--अथ = अनन्तरं, अजदर्शनानन्तरमिति यावत् । अन्वयज्ञैः = कुलज्ञैः, राजवंशाभिज्ञैरिति यावत् । बन्दिभिः = स्तुतिपाठकैः, सोमार्कवंश्ये = चन्द्रसूर्यकुलोद्भवे, नरदेवलोके = नृपसमूहे, स्तुते = प्रशंसिते, गुणवर्णिते इति यावत् । सतीति शेषः । सञ्चारिते = प्रसारिते, अगुरुसारयोनौ = अगुरुसारकारणे , अगुरुसारोत्पन्न इति यावत् । धूपे, च, वैजयन्तीः = पताकाः, ध्वजानिति यावत् । समुत्सर्पति = अतिक्रम्य गच्छति, सतीति शेषः । 'कन्या विवेश' इति अस्मिन् अग्रिमे च श्लोके उत्तरेण दशमश्लोकेन सम्बन्धो बोध्यः ॥ ८ ॥

कोशः--'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति । 'बन्दिनः स्तुतिपाठकाः' इति, 'संतति र्गोत्रजननकुलान्यभिजनान्वयौ' इति, 'अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः । हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः' इति, 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः । सुरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इति, 'पताका वैजयन्ती स्यात्' इति चामरः ॥ ८ ॥

---

( १ ) द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ।
कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥

समासादि—अन्वयं जानन्तीत्यन्वयज्ञास्तैरन्वयज्ञैः । सोमश्चार्कश्चेति सोमार्कौ (द्वं०), सोमार्कौ वंशौ यस्य स सोमार्कवंशस्तत्र भव इति सोमार्कवंश्यस्तस्मिन् सोमार्कवंश्ये(ब०व्री०)। नराणां देव इति नरदेवस्तस्य लोक इति नरदेवलोकस्तस्मिन् नरदेवलोके ( त० पु० ) । अगुरुसारो योनिः ( कारणं ) यस्य स अगुरुसारयोनिस्तस्मिन्नगुरुसारयोनौ (ब० व्री०) ॥८॥

व्याकरणम्—स्तुते = ष्टुञ् ( स्तुतौ—ञित् ) षस्य सत्वं + क्तप्रत्ययः + अन्वयज्ञैः = अन्वय + ज्ञा ( अवबोधने ) 'आतोऽनुपसर्गे कः' इत्यनेन कः । सञ्चारिते = सम् + चर ( गतिभक्षणयोः ) णिच् + क्तः । समुत्सर्पति = सम् + उत् + सृप् + शतृ ॥८॥

तात्पर्यार्थः—अनन्तरं राजकुलाभिज्ञैर्बन्दिजनैश्चन्द्रसूर्यवंशोत्पन्ने राजसमूहे स्तुते सति, समन्तात् सञ्चारितेऽगुरुसारकारणे धूपे पताकाः अतिक्रम्य प्रसरति सतीन्दुमती विवेश ॥ ८ ॥

भाषार्थः—इसके बाद ( राज ) वंशके जाननेवाले बन्दिजनोंसे-चन्द्र-सूर्य-वंशमें उत्पन्न हुए राजसमूहों की प्रशंसा किये जाने पर, अगर के स्थिर अंश से बने हुए धूप के, पताकाओं के अन्त तक फैलने पर ( इन्दुमती ने प्रवेश किया ) ॥ ८ ॥

अथ तत्र शङ्खादिनादे नदति सति कन्या विवेशेत्याह—

पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्च्छति मङ्गलार्थे ॥ ९ ॥

सञ्जीविनी—पुरेति । किं च पुरस्योपकण्ठे समीप उपवनान्याश्रयो येषां तेषां कलापिनां बर्हिणामुद्धतनृत्यहेतौ मेघध्वनिसादृश्यात्ताण्डवकारणे प्रध्माताः पूरिताः शङ्खा यत्र तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके तूर्यस्वने वाद्यघोषे परितः सर्वतो दिगन्तान्मूर्च्छति व्याप्नुवति सति ॥ ९ ॥

अन्वयः—पुरोपकण्ठोपवनाश्रयाणां, कलापिनाम्, उद्धतनृत्यहेतौ, प्रध्मातशङ्खे, मङ्गलार्थे, तूर्यस्वने, परितः, दिगन्तान्, मूर्च्छति, 'सति, कन्या, विवेश' ॥ ९ ॥

सुधा—पुरोपकण्ठोपवनाश्रयाणां = नगरनिकटारामनिवासिनां, कलापिनां = बर्हिणां, मयूराणामिति यावत् । उद्धतनृत्यहेतौ = प्रचण्डताण्डवकारणे, प्रध्मातशङ्खे = पूरितकम्बौ, मङ्गलार्थे = कल्याणार्थं, इन्दुमत्याः स्वयम्वरे मङ्गलं स्यादितदर्थंशङ्खध्वननमिति भावः । तूर्यस्वने-वाद्यविशेषशब्दे । परितः = समन्ततः, दिगन्तान् = आशापर्यन्तान्, मूर्च्छति = व्याप्नुवति, सतीति शेषः । 'कन्या-विवेश' ॥ ९ ॥

कोशः—'पुरं शरीरं नगरं' इत्यनेकार्थसंग्रहः । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इति, 'आरामः स्यादुपवनम्' इति, 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने' इति चामरः । 'शङ्खः कम्बौ च योषिन्ना मालास्थिनिधिभिन्नखे' इति मेदिनी । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इति, 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति, 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इति चामरः ॥ ९ ॥

समासादि—पुरस्योपकण्ठमिति पुरोपकण्ठं (त०पु०), पुरोपकण्ठे उपवनान्येवाश्रयो येषां ते पुरोपकण्ठोपवनाश्रयास्तेषां पुरोपकण्ठोपनाश्रयाणाम् ( ब०व्री० ) । कलापमेषां सन्तीति कलापिनस्तेषां कलापिनाम् । उद्धतञ्च तन्नृत्यमित्युद्धतनृत्यं (क०धा०), तस्य हेतुरित्युद्धतनृत्यहेतुस्तस्मिन्नुद्धतनृत्यहेतौ (त०पु०) । प्रध्माताः शङ्खा यस्मिन् सः प्रध्मातशङ्खस्तस्मिन् प्रध्मातशङ्खे ( ब० व्री० ) । दिशामन्ता इति दिगन्तास्तान् दिगन्तान् । तूर्यस्य स्वन इति तूर्यस्वनस्तस्मिन्तूर्यस्वने ( त० पु० ) । मङ्गलमेव अर्थो ( प्रयोजनं ) विद्यते यस्य स मङ्गलार्थस्तस्मिन् मङ्गलार्थे ( ब० व्री० ) ॥ ९ ॥

व्याकरणम्—कलापिनाम् = कलाप + इनिः । उद्धत = उत् + हन ( हिंसागत्योः ) क्तः । प्रध्मात = प्र + ध्मा ( शब्दाग्निसंयोगयोः ) क्तः । मूर्च्छति = मुर्च्छा ( मोहसमु-

च्छाययोः ) शत्॥ ९ ॥

तात्पर्यार्थः—पुरस्य निकटे उपवननिवासिनां मयूराणां नृत्यकारणीभूते शङ्खे नदति सति, मङ्गलकारणीभूते वाद्यशब्दे च दिगन्तान् परितो व्याप्नुवति सतीन्दुमती विवेश ॥ ९ ॥

भाषाऽर्थः—नगरके समीप उपवनोंमें रहने वाले-मोरोंके उद्धत-नृत्य करानेवाले शंखोंके बजने पर, (और) मंगलके लिये बजनेवाली तुरही बाजेकी ध्वनिको दिशाओंके अन्त तक फैलने पर ( इन्दुमतीने प्रवेश किया ) ॥ ९ ॥

अथेन्दुमती विवाहवेषं सम्पाद्य मञ्चमध्यराजमार्गं विवेशेत्याह—

**मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।**
**विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा ॥ १० ॥**

सञ्जीविनी—मनुष्यवाह्यमिति । पतिं वृणोतीति पतिंवरा स्वयम्वरा, 'अथ स्वयम्वरा । पतिंवरा च वर्याऽथ' इत्यमरः, 'सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः' इत्यनेन खच्प्रत्ययः । क्लृप्तविवाहवेषा कन्येन्दुमती मनुष्यैर्वाह्यं परिवारेण परिजनेन शोभि चतुरस्रयानं चतुरस्रवाहनं शिबिकामध्यास्यारुह्य मञ्चान्तरे मञ्चमध्ये यो राजमार्गस्तं विवेश ॥ १० ॥

अन्वयः—पतिम्वरा, क्लृप्तविवाहवेषा, कन्या, मनुष्यवाह्यं, परिवारशोभि, चतुरस्रयानम्, अध्यास्य, मञ्चान्तरराजमार्गं, विवेश ॥ १० ॥

सुधा—पतिम्वरा = स्वयम्वरा, क्लृप्तविवाहवेषा = कल्पितोद्वाहनेपथ्या, विवाहोचितशोभनवेषेति यावत् । कन्या = कुमारी, इन्दुमतीति यावत् । मनुष्यवाह्यं = जनवहनयोग्यं, परिवारशोभि = परिजनचकासि, परिचारकैर्युक्तमित्यर्थः । चतुरस्रयानं = चतुष्कोणवाहनं, शिबिकामिति यावत् । अध्यास्य = उपविश्य, आरुह्येति यावत् । मञ्चान्तरराजमार्गं = पर्यङ्कमध्यनृपवर्त्म विवेश = जगाम ॥ १० ॥

कोशः—'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि 'शोणिते' इति मेदिनी । 'सर्वं स्याद्वाहनं यानं युग्यं पत्रञ्च धोरणम्' इत्यमरः । 'कन्या कुमारिकानार्य्योरोषधीराशिभेदयोः' इति, 'परिवारः परिजने खड्गकोषे परिच्छदे' इति च मेदिनी । 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इति, 'अथ स्वयम्वरा । पतिम्वरा च वर्या ऽथ' इति चामरः ॥ १० ॥

समासादि—वोढुं योग्यं वाह्यं मनुष्यैर्वाह्यमिति मनुष्यवाह्यम् ( त० पु० ) । चत्वारोऽस्रा यस्मिन् तच्चतुरस्रम् (ब० व्री०), चतुरस्रञ्चतद्यानमिति तं चतुरस्रयानम् ( क० धा० ) । परिवारेण शोभत इति तत् परिवारशोभि । राज्ञां मार्ग इति राजमार्गः, मञ्चानामन्तरमिति मञ्चान्तरं, तस्मिन् राजमार्गस्तं मञ्चान्तरराजमार्गम् (त० पु०) । पतिं वृणोतीति पतिंवरा । विवाहस्य वेष इति विवाहवेषः, ( त० पु० ) । क्लृप्तो विवाहवेषो यया सा क्लृप्तविवाहवेषा ( ब० व्री ) ॥ १० ॥

व्याकरणम्—वाह्यम् = वह-( प्रापणे ) 'ऋहलोर्ण्यत्' इत्यनेन ण्यत् । अध्यास्य = अधि + आ + अस ( गतिदीप्त्यादानेषु ) ल्यप् । शोभि = शुभ ( दीप्तौ ) णिनिः । विवेश = विश-( प्रवेशने ) लिट् । पतिम्वरा = पति + वृ-( वरणे ) 'संज्ञायां भृतॄवृजि' इत्यादिना खच् + मुम् । क्लृप्त-कृपू ( सामर्थ्ये-उकारेत् ) 'कृपो रो लः' इति लत्वं + क्तः ॥ १० ॥

वाच्यपरिवर्तनम्—पतिम्वरया, क्लृप्तविवाहवेषया, कन्यया, मनुष्यवाह्यं, परिवारशोभि, चतुरस्रयानम्, अध्यास्य, मञ्चान्तरराजमार्गः, विविशे ॥ १० ॥

तात्पर्यार्थः—पतिम्वरा कन्या ( इन्दुमती ) विवाहयोग्यं शोभनं वेषं विधाय मनुष्यैर्वाह्यां परिजनैर्युतां शिबिकामारुह्य मञ्चमध्ये राज्ञां मार्गमगच्छत् ॥ १० ॥

भाषाऽर्थः—पतिको वरण करनेवाली कन्या ( इन्दुमती ) ने विवाह के योग्य वस्त्र पहनी हुई परिजनों ( साथ चलने वालों ) से शोभित, ( और ) मनुष्यों से ढोने योग्य तामजाम

पर चढ़कर मंचोंके बीच राजाओं के मार्ग में प्रवेश किया ॥ १० ॥

अथ स्वयम्वरोपविष्टा राजानस्तत्रागतामिन्दुमतीं दृष्टवन्त इत्याह—

तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये ।
निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु ॥ ११ ॥

सञ्जीविनी—तस्मिन्निति । नेत्रशतानामेकलक्ष्ये एकदृश्ये कन्यामये कन्यारूपे तस्मिन्विधातुर्विधानातिशये सृष्टिविशेषे नरेन्द्रा अन्तःकरणैर्निपेतुः, आसनेषु देहैः केवलं देहैरेव स्थिताः, देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुरित्यर्थः । अन्तःकरणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेश आदरातिशयार्थः ॥ ११ ॥

अन्वयः—नरेन्द्राः, नेत्रशतैकलक्ष्ये, कन्यामये, तस्मिन्, विधातुः, विधानातिशये, अन्तः करणैः, निपेतुः, केवलं, देहैः, आसनेषु, स्थिताः 'बभूवुः' ॥ ११ ॥

सुधा—नरेन्द्राः = राजानः, नेत्रशतैकलक्ष्ये = नयनशतैकदृश्ये, कन्यामये = कुमारीरूपे, इन्दुमत्यामिति यावत्। तस्मिन् = पूर्वोक्ते, विधातुः = प्रजापतेः, ब्रह्मण इति यावत्। विधानातिशये = सृष्टिविशेषे । अन्तःकरणैः = आभ्यन्तरेन्द्रियैः, निपेतुः = पतिताः, दत्तचित्ता आसन्निति यावत्। केवलम् = एकं, देहैः = शरीरैः, आसनेषु—पीठेषु, सिंहासनेष्विति यावत् । स्थिताः = उपविष्टाः, । बभूवुरिति शेषः ॥ ११ ॥

कोशः—'कन्या कुमारिकानार्योरोषधीराशिभेदयोः' इति, 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इति च मेदिनी । 'कायो देहः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः । 'केवलः कुहने पुमान् । नपुंसकन्तु निर्णीते वाच्यवाच्यैककृत्स्नयोः' इति मेदिनी ॥ ११ ॥

समासादि—विधानस्यातिशय इति विधानातिशयस्तस्मिन् विधानातिशये (त० पु०) । लक्षे भवं लक्ष्यम् एकञ्च तल्लक्ष्यमित्येकलक्ष्यम् (क० धा०), नेत्राणां शतानीति-नेत्रशतानि, नेत्रशतानामेकलक्ष्यमिति नेत्रशतैकलक्ष्यं तस्मिन् नेत्रशतैकलक्ष्ये (त० पु०) । नराणामिन्द्रा इति नरेन्द्राः (त० पु०) ॥ ११ ॥

व्याकरणम्—विधातु = वि + डुधाञ् (धारणपोषणयोः—डुञित्) तृच् । कन्यामये = कनी (दीप्तिकान्तिगतिषु–ईकारेत्) यत् + टाप् + मयट् । स्थिताः = स्था + क्तः + इत्वम् ॥ ११

वाच्यपरिवर्त्तनम्—नरेन्द्रैः, नेत्रशतैकलक्ष्ये, कन्यामये, तस्मिन्, विधातुः, विधानातिशये, अन्तःकरणैः, निपेते, केवलं, देहैः, आसनेषु, स्थितैः 'बभूवे' ॥ ११ ॥

तात्पर्यार्थः—यदा कन्या (इन्दुमती) राज्ञां निकटे समागता तदा कन्यायाः सौन्दर्यातिशयमवलोक्य सर्वे राजानः अन्तःकरणैस्तस्यां लीना बभूवुः, केवलं शरीरैरासनेषूपविष्टा आसन् ॥ ११ ॥

भावार्थः—राजा लोग सैकड़ों आंखों की निशाना, और ब्रह्माके विधानकी विशेषता स्वरूप उस कन्या (इन्दुमती) में अन्तःकरणों से मग्न हो गये, केवल शरीरों से आसनों पर बैठे रहे ॥ ११ ॥

अथेन्दुमतीविषये राज्ञां शृङ्गारचेष्टा एव प्रेमाग्रदूत्योऽभवन्नित्याह—

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥

सञ्जीविनी—तामिति । तामिन्दुमतीं प्रति अभिव्यक्तमनोरथानां प्ररूढाभिलाषाणां महीपतीनां राज्ञां प्रणयाग्रदूत्यः, प्रणयः प्रार्थना प्रेम वा, 'प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः । प्रणयेष्वग्रदूत्यः प्रथमदूतिकाः, प्रणयप्रकाशकत्वसाम्याद्दूतीत्वव्यपदेशः। विविधाः शृङ्गारचेष्टाः शृङ्गारविकाराः पादपानां प्रवालशोभाः पल्लवसंपद इव बभूवुरुत्पन्नाः । अत्र शृङ्गारलक्षणं रससुधाकरे—'विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीता सदस्य-

रस्यत्वं रतिः शृङ्गार उच्यते' ॥ रतिरिच्छाविशेषः, तच्चोक्तं तत्रैव--'यूनोरन्योन्यविषयस्था-यिनीच्छा रतिः स्मृता' इति । चेष्टाशब्देन तदनुभावविशेषा उच्यन्ते, तेऽपि तत्रैवोक्ताः--'भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः । ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसम्भवाः' इति । तत्र गात्रारम्भसम्भवांश्चेष्टाशब्दोक्ताननु-भावान् 'कश्चित्--' इत्यादिभिः श्लोकैर्वक्ष्यति । शृङ्गाराभासश्चायम् , एकत्रैव प्रतिपादनात् । तदुक्तम्--'एकत्रैवानुरागश्चेत्तिर्यक्शब्दगतोऽपि वा । योषितां बहुशक्तिश्चेद्रसाभासस्त्रिधा मतः' इति ॥ १२ ॥

अन्वयः--तां, प्रति, अभिव्यक्तमनोरथानां, महीपतीनां, पादपानां, प्रवालशोभाः, इव, प्रणयाग्रदूत्यः, विविधाः, शृङ्गारचेष्टाः, बभूवुः ॥ १२ ॥

सुधा--तां = पूर्वोक्ताम्, इन्दुमतीमिति यावत्। प्रति = इन्दुमत्या अभिमुखमित्यर्थः।अभिव्य-क्तमनोरथानां = स्फुटितस्पृहाणां, महीपतीनां = पृथ्वीश्वराणां, राज्ञामिति यावत् । पादपानां = वृक्षाणां, प्रवालशोभाः = पल्लवसुषमाः, इव, प्रणयाग्रदूत्यः = प्रेमप्रथमसञ्चारिकाः, प्रथमदूतिका इति यावत् । विविधा = बहुविधाः, शृङ्गारचेष्टाः = सुरतचेष्टाः, शृङ्गारविकारा इति यावत् । बभूवुः = उत्पन्नाः । शृङ्गारश्च--'उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते' 'उत्तमप्रकृतिनिष्ठमन्मथागमहेतुकः' इति । चेष्टा च--'साक्षा-दिव अर्थाकारादिप्रदर्शिका हस्तादिक्रिया' इति ॥ १२ ॥

कोशः--'प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः' 'प्रति प्रतिनिधावित्थम्भूताख्यानाभिमुख्ययोः' इति मेदिनी । 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः । 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' इति 'शोभा कान्तावच्छायामता' इति च मेदिनी । 'प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः । अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंस-कम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति, 'विविधः स्यात् बहुविधो नाना-रूपः पृथग्विधः' इति, 'शृङ्गारः सुरते नाट्यरसे च गजमण्डने' इति च मेदिनी ॥ १२ ॥

समासादि--अभिव्यक्ताः मनोरथा येषां तेऽभिव्यक्तमनोरथास्तेषामभिव्यक्तमनोरथा-नाम् ( ब० व्री० ) । मह्याः पतय इति महीपतयस्तेषां महीपतीनाम् ( त० पु० ) । अग्राश्च ता दूत्य इत्यग्रदूत्यः (क० धा०), प्रणयस्याग्रदूत्य इति प्रणयाग्रदूत्यः ( त० पु० ) । प्रवालस्य शोभा इति प्रवालशोभाः ( त० पु० ) । पादैः पिबन्तीति पादपास्तेषां पादपानाम् । शृङ्गा-रस्य चेष्टा इति शृङ्गारचेष्टाः॥ १२ ॥

व्याकरणम्--अभिव्यक्त = अभि + वि + अञ्जू ( व्यक्तिम्रक्षणकान्तिगतिषु-ऊकारेत् ) क्तः । चेष्टा = चेष्ट ( चेष्टायाम् ) पचाद्यच् + टाप् ॥ १२ ॥

वाच्यपरिवर्तनम्--तां, प्रति, अभिव्यक्तमनोरथानां, महीपतीनां, पादपानां, प्रवाल-शोभाभिः, इव, प्रणयाग्रदूतीभिः, विविधाभिः, शृङ्गारचेष्टाभिः, बभूवे ॥ १२ ॥

तात्पर्यार्थः--इन्दुमतीम्प्रति स्फुटितमनोरथानां राज्ञां वृक्षाणां पल्लवसम्पद इव प्रणयेषु प्रथमदूत्यो बहुविधाः शृङ्गारचेष्टा बभूवुः ॥ १२ ॥

भावार्थः--उस ( इन्दुमती ) के प्रति प्रगट अभिलाषा वाले राजाओंकी, वृक्षों के पल्लवों की सुन्दरता के तुल्य प्रेम की प्रथमदूती रूप अनेक प्रकार की शृंगार चेष्टा हुई ॥ १२ ॥

अथेन्दुमतीं दृष्ट्वा कश्चिद्राजा सनालं कमलं गृहीत्वा भ्रमयति स्मेत्याह--

कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥ १३ ॥

सञ्जीविनी--कश्चिदिति । कश्चिद्राजा कराभ्यां पाणिभ्यामुपगूढनालं गृहीतनालम् आ-लोलैश्चञ्चलैः पत्रैरभिहतास्ताडिता द्विरेफा भ्रमरा येन तत्तथोक्तं रजोभिः परागैरन्तः परिवेषं मण्डलं बध्नातीत्यन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार । करस्थलीलारविन्दवत्त्वयाऽहं

भ्रमयितव्य इति नृपाभिप्रायः। हस्तघूर्णकोऽयमपलक्षणक इतीन्दुमत्यभिप्रायः॥ १३॥

अन्वयः—कश्चित्, कराभ्याम्, उपगूढनालम्, आलोलपत्राभिहतद्विरेफं, रजोभिः, अन्तःपरिवेषबन्धि, लीलाऽरविन्दं, भ्रमयाञ्चकार॥ १३॥

सुधा—कश्चित्=भूपः, कराभ्यां=पाणिभ्यां, हस्ताभ्यामिति यावत्। उपगूढनालं=गृहीतपद्मदण्डम्, आलोलपत्राभिहतद्विरेफं=चञ्चलदलैस्ताडितभृङ्गं, रजोभिः—परागैः, अन्तःपरिवेषबन्धि=मध्यमण्डलकारि, लीलाऽरविन्दं=केलिकमलं, भ्रमयाञ्चकार=भ्रामयामास। हस्तस्थितकेलिकमलवत् त्वं मां भ्रामयेत्यस्य राज्ञोऽभिप्रायः। इन्दुमत्यास्तु हस्तघूर्णकोऽयं दुश्चिह्नयुक्त इत्यभिप्रायः॥ १३॥

कोशः—'करो वर्षांपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति, 'नालं ना पद्मदण्डे' इति च मेदिनी। 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः। 'रजः क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी। 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्। सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इत्यमरः॥ १३॥

समासादि—उपगूढं नालं येन तदुपगूढनालम् (ब०व्री०)। आलोलानि च तानि पत्राणीत्यालोलपत्राणि (क० धा०), आलोलपत्रैरभिहताः द्विरेफा येन तदालोलपत्राभिहतद्विरेफम् (ब० व्री०)। अन्तः परिवेषं बध्नातीति तदन्तःपरिवेषबन्धि। लीलाया अरविन्दमिति तल्लीलारविन्दम् (त० पु०)॥ १३॥

व्याकरणम्—उपगूढ=उप+गुह्+क्तः। परिवेष=परि+विष्+घञ्। भ्रमयाञ्चकार=भ्रमु (अनवस्थाने—उकारेत) णिच्, लिट्॥ १३॥

वाच्यपरिवर्तनम्—केनचित्, कराभ्याम्, उपगूढनालम्, आलोलपत्राभिहतद्विरेफं, रजोभिः, अन्तःपरिवेषबन्धि, लीलाऽरविन्दं, भ्रमयाञ्चक्रे॥ १३॥

तात्पर्यार्थः—कश्चिन्नृपः पाणिभ्यां गृहीतपद्मदण्डं चञ्चलपत्रैस्ताडितभृङ्गं परागैर्मध्यमण्डलकारि एवम्भूतं लीलाकमलं भ्रामयामास॥ १३॥

भावार्थः—किसी राजाने, हाथों से कमल दण्ड को पकड़कर पत्तोंके हिलनेसे भौरोंको दूर करने और मध्य में पराग का मण्डल बांधने वाले ऐसे लीला कमल को घुमाया॥ १३॥

अथ कश्चिन्नृपः स्कंधात्स्खलितं पुष्पमाल्यं यथास्थानं प्रापयदित्याह—

**विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम्।**
**प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः॥ १४॥**

सञ्जीविनी—विस्रस्तमिति। विलसनशीलो विलासी "वौ कषलसकत्थस्रम्भः" इति घिनुण्प्रत्ययः। अपरो राजांसाद्विस्रस्तं रत्नानुविद्धं रत्नखचितं यदङ्गदं केयूरं तस्य कोटिलग्नं प्रालम्बमृजुलम्बिनीं स्रजम्, 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इत्यमरः। प्रावारम् इति पाठे तूत्तरीयं वस्त्रम् उत्कृष्योद्धृत्य साचीकृतं तिर्यक्कृतं चारु वक्त्रं यस्य स तथोक्तः सन् यथावकाशं स्वस्थानं निनाय। प्रावारोत्क्षेपणच्छलेनाहं त्वामिमं परिरप्स्ये इति नृपाभिप्रायः। गोपनीयं किञ्चिदङ्गेऽस्ति तेनाऽयं प्रावृणुत इतीन्दुमत्यभिप्रायः॥ १४॥

अन्वयः—साचीकृतचारुवक्त्रः, अपरः, विलासी, अंसात्, विस्रस्तं, रत्नानुविद्धाङ्गदकोटिलग्नं, प्रालम्बम्, उत्कृष्य, यथाऽवकाशं, निनाय॥ १४॥

सुधा—साचीकृतचारुवक्त्रः=तिर्यक्कृतसुन्दरमुखः, अपरः—अन्यः, विलासी=विलसनशीलः, स्त्रीणां विलासादिपटुः शृङ्गारजन्यहावादिभावज्ञातेति यावत्। अंसात्=स्कन्धात्, विस्रस्तं=स्खलितम्। रत्नानुविद्धाङ्गदकोटिलग्नं=मणिजटितकेयूराग्रसङ्गतं प्रालम्बं—ऋजुलम्बिनीं स्रजम्। 'प्रालम्बम्' अस्य स्थाने 'प्रावारम्' इति पाठे प्रावारम् उत्तरासङ्गमित्यर्थो बोध्यः। उत्कृष्य=उद्धृत्य, यथाऽवकाशं=यथास्थानं, स्वस्थान-

मिति यावत् । निनाय = प्रापयत् ॥ प्रालम्बोत्क्षेपणच्छलेनाहं त्वामेवं परिरप्स्ये इत्यस्य नृपस्याशयः । अस्याङ्गे किञ्चिद्दोष्यमस्ति तस्मादयं गोपयतीतीन्दुमत्याशयः ॥ १४ ॥

कोशः—'अंसः स्कन्धे विभागे स्यात्' इति हैमः । 'स्त्रीणां विलास विव्वोक विभ्रमा-ललितं तथा । हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः' इत्यमरः । 'रत्नं स्वजाति-श्रेष्ठे स्यान्मणौ' इति हैमः । 'अङ्गदः कपिभेदे ना केयूरे तु नपुंसकम्' इति, 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' इति च मेदिनी । 'प्रालम्बमृजुलम्बि स्यात्' इति, 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' इति चामरः ॥ १४ ॥

समासादि—विलसनशीला विलासी । रत्नैरनुविद्धमिति रत्नानुविद्धं,रत्नानुविद्धञ्च तद-ङ्गदमिति रत्नानुविद्धाङ्गदं ( क० धा० ), तस्य कोटौ लग्नमिति रत्नानुविद्धाङ्गदकोटिलग्नम् (त० पु०) । अवकाशमनतिक्रम्य यथाऽवकाशम् (अ० भा०) । साची कृतं चारुवक्त्रं येन स साचीकृतचारुवक्त्रः ( ब० व्री० ) ॥ १४ ॥

व्याकरणम्—विस्रस्तम् = वि + स्रंसु ( गतौ—उकारेत ) क्तः । विलासी = वि + लस ( श्लेषणक्रीडनयोः ) 'वौ कषलसकत्थस्रम्भ्यः' इत्यनेन घिनुण् । प्रालम्बम् = प्र + आ + लम्ब + अच् । निनाय = णीञ् ( प्रापणे-ञित ) लिट् ॥ १४ ॥

वाच्यपरिवर्तनम्—साचीकृतचारुवक्त्रेण, अपरेण, विल सिना, अंसात्, विस्रस्तं, रत्ना-नुविद्धाङ्गदकोटिलग्नं, प्रालम्बम्, उत्कृष्य, यथाऽवकाशं, निन्ये ॥ १४ ॥

तात्पर्यार्थः—अन्यो विलासी स्कन्धात् स्खलितं ऋजुलम्बिनीं स्रजं रत्नजटितकेयूरा-ग्रलग्नमुद्धृत्य सुन्दरमुखं तिर्यक्कृत्वा स्वस्थानं निवेशयामास ॥ १४ ॥

भाषाऽर्थः—टेढ़ेमुख किये किसी अन्य विलासी राजाने कन्धेसे खसकी हुई मणियों से जड़ित केयूरके अग्रभागमें लगी हुई मालाको लेकर अपने उचित स्थानमें रक्खा ॥ १४ ॥

अथ कश्चिद्भूपः पादेन पादतलस्थितं पीठं लिखितवानित्याह—

**आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किञ्चित्समावर्जितनेत्रशोभः ।**
**तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥ १५ ॥**

सञ्जीविनी—आकुञ्चितेति । ततः पूर्वोक्तादन्योऽपरो राजा किञ्चित्समावर्जितनेत्रशोभ ईषदर्वाक्पातितनेत्रशोभः सन् आकुञ्चिता आभुग्ना अग्राङ्गुलयो यस्य तेन तिर्यग्विसंसर्पिण्यो नखप्रभा यस्य तेन च पादेन हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । पादाङ्गु-लीनामाकुञ्चनेन त्वं मत्समीपमागच्छेति नृपाभिप्रायः । भूमिविलेखकोऽयमपलक्षणक इतीन्दुमत्याशयः । भूमिविलेखनं तु लक्ष्मीविनाशहेतुः ॥ १५ ॥

अन्वयः—ततः, अन्यः, किञ्चित्समावर्जितनेत्रशोभः, 'सन्' आकुञ्चिताग्राङ्गुलिना, तिर्यग्विसंसर्पिनखप्रभेण, पादेन, हैमं, पीठं, विलिलेख ॥ १५ ॥

सुधा—ततः = तस्मात्, पूर्वोक्तादिति यावत् । अन्यः = अपरः, नृप इति यावत् । किञ्चि-त्समावर्जितनेत्रशोभः = ईषदर्वाक्पातितनयनकान्तिः, सन्निति शेषः । आकुञ्चिताग्रा-ङ्गुलिना = आभुग्नोपरिकरशाखेन, तिर्यग्विसंसर्पिनखप्रभेण = तिर्यक्पातिकररुहत्विषा, पादे-न = चरणेन, हैमं = सुवर्णमयं, पीठम् = आसनं, सिंहासनमित्यर्थः । विलिलेख, लिखितवान् । पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमागच्छेत्यस्य नृपस्याशयः । भूमिविलेखकोऽयन्नृपो-ऽपलक्षणक इतीन्दुमत्याशयः । भूमिविलेखनं लक्ष्मीविनाशकरकारणं प्राहुः ॥ १५ ॥

कोशः—'अग्रं पुरस्तादुपरि परिमाणे पलस्य च' इति मेदिनी । 'अङ्गुलिः करशाखायां कर्णिकायां गजस्य च' इति हैमः । 'पुनर्भवः कररुहो नखो ऽस्त्री नखरो ऽस्त्रियाम्' इति, 'पादः पदङ्घ्रिश्चरणो ऽस्त्रियाम्' इति, 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इति चामरः ॥ १५ ॥

समासादि—आकुञ्चिता अग्राङ्गुलयो यस्य स आकुञ्चिताग्राङ्गुलिस्तेनाकुञ्चिताग्राङ्गु-

ल्लिना ( ब० व्री० )। नेत्राणां शोभेति नेत्रशोभा ( त० पु० ), किञ्चित्समावर्जिता नेत्रशोभा येन स किञ्चित्समावर्जितनेत्रशोभः ( ब० व्री० )। नखानां प्रभेति नखप्रभा ( त० पु० ), तिर्यग्विसंसर्पितुं शीलमस्या सा तिर्यग्विसंसर्पिणी, तिर्यग्विसंसर्पिणी नखप्रभा यस्य स तिर्यग्विसंसर्पिनखप्रभस्तेन तिर्यग्विसंसर्पिनखप्रभेण ( ब० व्री० )॥ १९ ॥

व्याकरणम्—आकुञ्चित = आ + कुञ्च ( कौटिल्याल्पीभावयोः—अकारेत् ) क्तः + इट्। समावर्जित = सम् + आ + वृजी ( वर्जने—ईदित् ) क्तः + इट्। हैमं = हेम + अण्। विलिलेख = वि + लिख ( अक्षरविन्यासे ) लिट्, तिप्, णलादेशः, द्वित्वम्, अभ्यासकार्यञ्च ॥१९॥

वाच्यपरिवर्तनम्—ततः, अन्येन, किञ्चित्समावर्जितनेत्रशोभेन, 'सता' आकुञ्चिताग्राङ्गुलिना, तिर्यग्विसंसर्पिनखप्रभेण, पादेन, हैमः, पीठः, विलिलिखे ॥ १९ ॥

भाषाऽर्थः—दूसरा राजा, कुछ नेत्रोंका कटाक्ष दिखाकर सिकुड़े हुये अंगुलियोंके अग्रभाग वाले और टेढ़े फैलने वाली नखोंकी शोभा वाले चरणोंसे सुवर्णके ( पैर रखने वाले ) आसन पर कुछ लिखने लगा ॥ १९ ॥

अथ कश्चिन्नृपो वामं भुजमासनार्धे निवेश्य सुहृदा सह सम्भाषितुं प्रवृत्त इत्याह—

निवेश्य वामं भुजमासनार्धे तत्संनिवेशादधिकोन्नतांसः।
कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत् ॥ १६ ॥

सञ्जीविनी—निवेश्येति। कश्चिद्राजा वामं भुजमासनार्धे सिंहासनैकदेशे निवेश्य संस्थाप्य तत्संनिवेशात्तस्य वामभुजस्य संनिवेशात्संस्थापनादधिकोन्नतोऽसो वामांस एव यस्य स तथोक्तः सन् विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे भिन्नहारो लुण्ठितहारः सन्, 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः। सुहृत्समाभाषणतत्परोऽभूत् वामपार्श्ववर्तिनैव मित्रेण सम्भाषितुं प्रवृत्त इत्यर्थः। अत एव विवृत्तत्रिकत्वं घटते। त्वया वामाङ्के निवेशितया सहैवं वार्तां करिष्य इति नृपाभिप्रायः। परं दृष्ट्वा पराङ्मुखोऽयं न कार्यकर्तेतीन्दुमत्यभिप्रायः ॥ १६ ॥

अन्वयः—कश्चिद्, आसनार्धे, वामं, भुजं, निवेश्य, तत्सन्निवेशात्, अधिकोन्नतांसः, विवृत्तत्रिकभिन्नहारः, 'सन्' सुहृत्समाभाषणतत्परः, अभूत् ॥ १६ ॥

सुधा—कश्चित् = राजा, आसनार्धे = सिंहासनैकदेशे, वामं = सव्यं, भुजं = बाहुं, निवेश्य = स्थापयित्वा, तत्सन्निवेशात् = वामभुजसंस्थापनात, अधिकोन्नतांसः = अधिकोन्नतस्कन्धः, विवृत्तत्रिकभिन्नहारः = परावृत्तपृष्ठवंशाधोलुण्ठितमुक्तावलिः, सन्निति शेषः। सुहृत्समाभाषणतत्परः = मित्रसंलापासक्तः, अभूत् = बभूव। वामपार्श्ववर्तिना सुहृदा सह सम्भाषितुं प्रवृत्त इत्यर्थः। त्वां वामाङ्के निवेश्य एवं वार्तां करिष्ये इति नृपाशयः। अयं भूपोऽन्यमवलोक्य पराङ्मुखो भवति न कार्यकर्तेतीन्दुमत्याशयः ॥ १६ ॥

कोशः—'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे'। पयोधरे हरे कामे विद्यात्' इति विश्वः। 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इति, 'पृष्ठवंशाधरे त्रिकम्' इति, 'हारो मुक्तावली' इति, 'अथ मित्रं सखा सुहृद्' इति, 'स्यादाभाषणमालापः' इति, 'तत्परे प्रसितासक्तौ' इति चामरः ॥ १६ ॥

समासादि—आसनस्यार्धमित्यासनार्धं तस्मिन् आसनार्धे ( त० पु० )। तस्य सन्निवेश इति तत्सन्निवेशस्तस्मात्तत्सन्निवेशात् ( त० पु० )। अधिकश्चासावुन्नतश्चेत्यधिकोन्नतः ( क० धा० ), अधिकोन्नतोऽसो यस्य स अधिकोन्नतांसः (ब० व्री० )। त्रयाणां संघ इति त्रिकं, विवृत्तञ्च तत्त्रिकमिति विवृत्तत्रिकं, विवृत्तत्रिके भिन्नो हारो यस्य स विवृत्तत्रिकभिन्नहारः (ब० व्री०)। सम्यगाभाषणमिति समाभाषणं, सुहृदां समाभाषणमिति सुहृत्समाभाषणं, तस्मिन् तत्पर इति सुहृत्समाभाषणतत्परः ( त० पु० )॥ १६ ॥

व्याकरणम्—निवेश्य = नि + विश ( प्रवेशने—अकारेत ) क्त्वा, ल्यबादेशः। उन्नत =

उत्+णम ( प्रह्वत्वे शब्दे ) 'णोनः' इति णस्य नकारः+क्तः, 'अनुदात्तोपदेशवनति' इत्यादिना मकारस्य लोपः । विवृत्त=वि+वृत्+क्तः । त्रिक=त्रि 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इत्यनेन कन् ॥ १६ ॥

वाच्यपरिवर्तनम्—केनचित्, आसनार्धं, वामं, भुजं, निवेश्य, तत्सन्निवेशात्, अधिकोन्नतांसेन, विवृत्तत्रिकभिन्नहारेण, 'सता' सुहृत्समाभाषणतत्परेण, अभावि ॥ १६ ॥

तात्पर्यार्थः—कश्चिन्नृपः सिंहासनैकदेशे सव्यं बाहुमुपन्यस्य तत्संस्थापनादधिकोन्नतस्कन्धः परावृत्ते पृष्ठवंशाधरे लुण्ठितहारः सन् मित्रेण सह संलापितुं प्रवृत्तः ॥ १६ ॥

भाषाऽर्थः—कोई राजा सिंहासनके एकदेशमें बायें हाथको रखकर बाहुको रखनेसे अधिक ऊंचे कंधे वाला ( और ) पीठ पर पड़े हुये हार वाला, मित्रसे बात करनेमें तत्पर हुआ ॥ १६ ॥

अथ कश्चिन्नृपः केतकपत्रं नखाग्रैर्विददारेत्याह—

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसंनिवेशैर्विपाटयामास युवा नखाग्रैः ॥ १७ ॥

सञ्जीविनी—विलासिनीति । अन्यो युवा विलासिन्याः प्रियाया विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतमापाण्डुरं केतकबर्हं केतकदलम्, 'दलेऽपि बर्हम्'इत्यमरः । प्रियानितम्ब उचितसंनिवेशैरभ्यस्तनिक्षेपणैर्नखाग्रैर्विपाटयामास । अहं तव नितम्ब एवं नखव्रणादीन्दास्यामीति नृपाशयः । तृणच्छेदकवत्पत्रपाटकोऽयमपलक्षणक इतीन्दुमत्याशयः ॥ १७ ॥

अन्वयः—अन्यः, युवा, प्रियानितम्बोचितसन्निवेशैः, नखाग्रैः, विलासिनीविभ्रमदन्तपत्रम्, आपाण्डुरं, केतकबर्हं, विपाटयामास ॥ १७ ॥

सुधा—अन्यः—अपरः, युवा=तरुणः, नृप इति यावत् । प्रियानितम्बोचितसंनिवेशैः=भार्यानितम्बयोरभ्यस्तनिक्षेपणैः, नखाग्रैः=कररुहाग्रभागैः, विलासिनीविभ्रमदन्तपत्रं=भार्याविलासार्थकर्णभूषणभूतम्, आपाण्डुरम्=ईषत्पाण्डु, केतकबर्हं=केतकीदलं, विपाटयामास=विदारयामास । अहं तव नितम्बे एवं नखव्रणादीन्करिष्यामीति नृपाशयः । तृणच्छेदकवत्पत्रविदारकोऽयमपलक्षणयुक्त इतीन्दुमत्याशयः ॥ १७ ॥

कोशः—'वयस्थस्तरुणो युवा' इत्यमरः, 'अथ विभ्रमः । शोभायां संशये हावे' इति हैमः । 'दन्तोऽद्रि करके कुञ्जे दशनेऽथौषधौ स्त्रियाम्' इति मेदिनी। 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इति, 'हरिणः पाण्डुरः पाण्डुः' इति, 'दलेऽपि बर्हम्' इति चामरः ॥ १७ ॥

समासादि—विलासिन्या विभ्रम इति विलासिनीविभ्रमः, विलासिनीविभ्रमार्थं दन्त इव पत्रमिति विलासिनीविभ्रमदन्तपत्रम् (त० पु०) । ईषत्पाण्डुरमित्यापाण्डुरम् । केतकस्य बर्हमिति केतकबर्हम् (त०पु०) । प्रियाया नितम्ब इति प्रियानितम्बः (त०पु०), प्रियानितम्बे उचिताश्च ते संनिवेशा इति प्रियानितम्बोचितसंनिवेशास्तैः प्रियानितम्बोचितसंनिवेशैः ( क० धा० ) । नखानामग्राणीति नखाग्राणि तैर्नखाग्रैः (त० पु०) ॥ १७ ॥

व्याकरणम्—उचित=वच्=क्तः+सम्प्रसारणम् । विपाटयामास=वि+पट+णिच्+लिट् ॥ १७ ॥

वाच्यपरिवर्तनम्—अन्येन, यूना, प्रियानितम्बोचितसंनिवेशैः, नखाग्रैः, आपाण्डुरः, विलासिनीविभ्रमदन्तपत्रः, केतकबर्हः, विपाटयाञ्चक्रे ॥ १७ ॥

तात्पर्यार्थः—अपरः कश्चिद्युवा प्रियाया विलासार्थं कर्णभूषणभूतम्-आपाण्डुरं केतकीदलं प्रियानितम्बयोरभ्यस्तनिक्षेपणैर्नखाग्रभागैर्विदारयामास ॥ १७ ॥

भाषाऽर्थः—दूसरे युवाने प्रिया के नितम्बों पर लगने वाले नखों से स्त्रियों के विलास के लिये बने हुये दन्तपत्र (कर्णभूषण) रूप पीतवर्ण वाले केतकी के पत्रों को विदारण किया॥१७॥

अथ कश्चिद्राजा करेण अक्षपाशान् विक्षेपेत्याह—

**कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।**
**रत्नाङ्गुलीयप्रभयाऽनुविद्धानुदीरयामास सलीलमक्षान् ॥ १८ ॥**

सञ्जीविनी—कुशेशयेति । कश्चिद्राजा कुशेशयं शतपत्रमिवाताम्रं तलं यस्य तेन, 'शतपत्रं कुशेशयम्' इत्यमरः । रेखारूपो ध्वजो लाञ्छनं यस्य तेन करेण अङ्गुलीषु भवान्यङ्गुलीयान्यूर्मिकाः, 'अङ्गुलीयकमूर्मिका' इत्यमरः, "जिह्वामूलाङ्गुलेश्छः" इति छप्रत्ययः । रत्नानामङ्गुलीयानि तेषां प्रभयाऽनुविद्धान्व्याप्तानक्षान्पाशान्, 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः । सलीलमुदीरयामासोच्चिक्षेप । अहं त्वया सहैवं रंस्य इति नृपाभिप्रायः । अक्षचातुर्येण कापुरुषोऽयमितीन्दुमत्यभिप्रायः, "अक्षैर्मा दीव्येत" इति श्रुतिनिषेधात् ॥ १८ ॥

अन्वयः—कश्चित्, कुशेशयाताम्रतलेन, रेखाध्वजलाञ्छनेन, करेण, रत्नाङ्गुलीयप्रभया, अनुविद्धान्, अक्षान्, सलीलं, उदीरयामास ॥ १८ ॥

सुधा—कश्चित् = राजा, कुशेशयाताम्रतलेन = कमलारक्तचपेटेन, रेखाध्वजलाञ्छनेन = रेखारूपपताकाचिह्नेन, करेण—हस्तेन, रत्नाङ्गुलीयप्रभया = मण्यूर्मिकादीप्त्या, अनुविद्धान् = व्याप्तान्, अक्षान् = पाशान्, सलीलं = सविलासम्, उदीरयामास = उच्चिक्षेप ॥ अहं त्वया सहैवं पाशक्रीडां करिष्यामीत्यस्य नृपस्याशयः । 'अक्षैर्मा दीव्येत' इति श्रुतिनिषेधात् अक्षचातुर्येण हेतुना कुत्सितपुरुषोऽयमितीन्दुमत्याशयः ॥ १८ ॥

कोशः—'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इत्यमरः । 'तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे । कानने कार्यबीजे च पुंसि तालमहीरुहे । चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना' इति मेदिनी । 'बलीहस्तांशवः कराः' इत्यमरः । 'ध्वजः पूर्वदिशो गृहे । शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च' इति हेमः । 'अङ्गुलीयकमूर्मिका' इति, 'अक्षास्तुदेवनाः पाशकाश्च ते' इति चामरः ॥ १८ ॥

समासादि—ईषत्ताम्रमित्याताम्रं, कुशेशयमिवाताम्रं तलं यस्य स कुशेशयाताम्रतलस्तेन कुशेशयाताम्रतलेन ( ब० व्री० ) । रेखैव ध्वजः लाञ्छनं यस्य स रेखाध्वजलाञ्छनस्तेन रेखाध्वजलाञ्छनेन (ब० व्री०) । अङ्गुलीषु भवान्यङ्गुलीयानि, रत्नानामङ्गुलीयानीति रत्नाङ्गुलीयानि तेषां प्रभेति रत्नाङ्गुलीयप्रभा तया रत्नाङ्गुलीयप्रभया (त० पु० ) । लीलया सह वर्तमानमिति सलीलम् ॥ १८ ॥

व्याकरणम्—अनुविद्धान् = अनु + विद् + क्तः । उदीरयामास = उत् + ईर + णिच् + लिट् । अक्षान् = अक्ष + घञ् ॥ १८॥

वाच्यपरिवर्तनम्—केनचित्, कुशेशयाताम्रतलेन, रेखाध्वजलाञ्छेन, करेण, रत्नाङ्गुलीयप्रभया, अनुविद्धाः, अक्षाः, सलीलम्, उदीरयामासिरे ॥ १८ ॥

तात्पर्यार्थः—कश्चिन्भूपः कमलमिव आताम्रतलेन रेखाध्वजचिह्नयुतेन करेण मणिनिर्मिताङ्गुलीयप्रभया व्याप्तान् पाशान् सविलासमुच्चिक्षेप ॥ १८ ॥

भाषाऽर्थः—किसी राजाने, कमल के तुल्य थोड़े ताम्रवर्णके हथेली वाले और रेखारूप पताका से चिह्नित हाथों से, रत्न जडित अंगूठियों की कांति से युत पाशों को फेका ॥ १८ ॥

अथ कश्चिद्भूपः मुकुटं पस्पर्शेत्याह—

**कश्चिद्यथाभागमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव ।**
**वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे ॥ १९ ॥**

सञ्जीविनी—कश्चिदिति । कश्चिद्यथाभागं यथास्थानमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव स्वस्थानाच्चलित इव किरीटे वज्राणां किरीटगतानामंशवो गर्भे येषां तान्यङ्गुलिरन्ध्राणि

यस्य तमेकं करं व्यापारयामास । किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्य इति नृपाभिप्रायः । शिरसि न्यस्तहस्तोऽयमपलक्षणक इतीन्दुमत्यभिप्रायः ॥ १९ ॥

अन्वयः—कश्चित्, यथाभागम्, अवस्थिते, अपि, स्वसन्निवेशात्, व्यतिलङ्घिनि, इव, किरीटे, वज्रांशुगर्भाङ्गुलिरन्ध्रं एकं, करं व्यापारयामास ॥ १९ ॥

सुधा—कश्चित्=नृपः, यथाभागं=यथैकदेशं, यथास्थानमिति यावत् । अवस्थिते=संस्थिते, अपि, स्वसन्निवेशात्=स्वस्थानात्, व्यतिलङ्घिनि=विचलिते, इव, किरीटे=मुकुटे, वज्रांशुगर्भाङ्गुलिरंध्रं =हीरकप्रभाकुल्यङ्गुलिच्छिद्रम्, एकं, करं=हस्तं, व्यापारयामास=पस्पर्श ॥ मुकुटवन्मम शिरसि स्थिताऽपि त्वं न भारो भविष्यसीति नृपस्याशयः । शिरसि न्यस्तहस्तोऽयमपलक्षणयुक्त इतीन्दुमत्याशयः ॥ १९ ॥

कोशः—'भागो रूपार्द्धके भाग्यैकदेशयोः' इति मेदिनी । 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः । 'अंशुरर्कप्रभोस्त्रेषु नाशातृष्णादिशोः पुमान्' इति, 'गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके' इति च मेदिनी । 'छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः' इत्यमरः । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति मेदिनी । 'अथ मुकुटं किरीटं पुन्नपुंसकम्' इत्यमरः ॥१९॥

समासादि—स्वस्य सन्निवेश इति स्वसन्निवेशस्तस्मात् स्वसन्निवेशात् ( त० पु० ) । विशेषेणातिलङ्घितुं शीलमस्यासौ व्यतिलङ्घी तस्मिन् व्यतिलङ्घिनि । अङ्गुलीनां रन्ध्राणीत्यङ्गुलिरन्ध्राणि ( त० पु० ) । वज्राणामंशव इति वज्रांशवः ( त० पु० ), वज्रांशवो गर्भे येषां तानि वज्रांशुगर्भाणि, वज्रांशुगर्भाण्यङ्गुलिरन्ध्राणि यस्य स तं वज्रांशुगर्भाङ्गुलिरन्ध्रम् ॥१९॥

व्याकरणम्—अवस्थिते=अव+स्था+क्तः+इत्वम् । सन्निवेशात्=सम्+नि+विश+घञ् । व्यतिलङ्घिनि=वि+अति+लघि+इन् । व्यापारयामास=वि+आ+पृ+णिच्+लिट् ॥ १९ ॥

वाच्यपरिवर्तनम्—केनचित्, यथाभागम्, अवस्थिते, अपि, स्वसन्निवेशात्, व्यतिलङ्घिनि, इव, किरीटे, वज्रांशुगर्भाङ्गुलिरन्ध्रः, एकः, करः, व्यापारयामासे ॥ १९ ॥

तात्पर्यार्थः—कश्चिद् विलसनशीलो भूपः यथास्थाने स्थितेऽपि स्वस्थानाच्चलिते इव मुकुटे किरीटगतरत्नप्रभागर्भाङ्गुलिरन्ध्रमेकं हस्तं स्थापयामास ॥ १९ ॥

भाषाऽर्थः—किसी राजा ने अपने स्थान पर स्थित भी मानो अपनी जगह से खिसक गया हो ऐसे मुकुट में, हीरेकी कान्तिसे पूर्ण अंगुलियोंके विवर वाला एक हाथ रक्खा ॥१९॥

अथ सुनन्दा मगधेश्वरसमीपं इन्दुमतीमवददित्याह—

**ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।**
**प्राक्संनिकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥ २० ॥**

सञ्जीविनी—तत इति । ततोऽनन्तरं नृपाणां श्रुतवृत्तवंशा श्रुतनृपवृत्तवंशेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या प्रतिहारं रक्षतीति प्रतिहाररक्षी द्वारपालिका, कर्मण्यण्प्रत्ययः "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयपठक्ठञ्कञ्क्वरपः" इत्यनेन ङीप् । प्राक्प्रथमं कुमारीमिन्दुमतीं मगधेश्वरस्य संनिकर्षं समीपं नीत्वा पुंवत्पुंसा तुल्यं, "तेन तुल्यं क्रियाचेद्वतिः" इति वतिप्रत्ययः । अवदत् ॥ २० ॥

अन्वयः—ततः, नृपाणां, श्रुतवृत्तवंशा, प्रगल्भा, प्रतिहाररक्षी, सुनन्दा, प्राक्, कुमारीं, मगधेश्वरस्य, सन्निकर्षं, नीत्वा, पुंवत्, अवदत् ॥ २० ॥

सुधा—ततः=तदनन्तरं, स्वयम्वरस्थनृपाणां शृङ्गारचेष्टाज्ञानानन्तरमिति यावत् । नृपाणां=भूपानां, स्वयम्वरोपविष्टराज्ञामिति यावत् । श्रुतवृत्तवंशा=आकर्णितचरित्रान्वया, प्रगल्भा=प्रतिभान्विता, वाग्मिनीति यावत् । प्रतिहाररक्षी=द्वारपालिका, सुनन्दा=सुनन्दानाम्नी, प्राक्=प्रथमं, कुमारीं=कन्याम्, इन्दुमतीमिति यावत् । मगधेश्वरस्य=

मगधपतेः, सन्निकर्षं = समीपं, नीत्वा = आनीय, पुंवत् = पुंसा तुल्यम्, अवदत् = अब्रवीत्॥२०॥

कोशः--'श्रुतमाकर्णिते शास्त्रे' इति मेदिनी। 'वृत्तं दृढे मृते। चरित्रे वर्तुले छन्दः स्वतीताधीतयोर्वृते' इति हैमः। 'प्रगल्भः प्रतिभान्विते' इति, 'प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः' इति, 'समीपे निकटासन्नसन्निकृष्टसनीडवत्' इति चामरः॥ २० ॥

समासादि--नॄन् पान्तीति नृपास्तेषां नृपाणाम्। वृत्तश्च वंशश्चेति वृत्तवंशौ (द्व०), श्रुतौ वृत्तवंशौ यया सा श्रुतवृत्तवंशा (ब०व्री०)। प्रकर्षेण गल्भते इति प्रगल्भा। प्रतिहारं रक्षतीति प्रतिहाररक्षी। मगधानामीश्वर इति मगधेश्वरस्तस्य मगधेश्वरस्य(त० पु०)। कुमारयति या सा कुमारी॥ २० ॥

व्याकरणम्--श्रुत = श्रु + क्तः। वृत्त--वृत् + क्तः। प्रगल्भा = प्र + गल्भ + अच् + टाप्। नीत्वा = णीञ् + क्त्वा। अवदत् = अ = वद् ( व्यक्तायां वाचि ) लङ्॥ २० ॥

वाच्यपरिवर्तनम्--ततः, नृपाणां, श्रुतवृत्तवंशया, प्रगल्भया, प्रतिहाररक्ष्या, सुनन्दया, प्राक्, कुमारीं, मगधेश्वरस्य, सन्निकर्षं, नीत्वा, पुंवत्, औद्यत॥ २० ॥

तात्पर्यार्थः--अथ राज्ञां चरित्रवंशज्ञा वाग्मिनी द्वारपालिनी सुनन्दा कन्यामिन्दुमतीं मगधराजस्य समीपं नीत्वा पुरुषसदृशम् उवाच॥ २० ॥

भाषाऽर्थः--इसके बाद राजाओं के चरित्र और वंश को जानने वाली और बोलने में चतुर, द्वारपालिनी-सुनन्दा, पहले इन्दुमती को मगधराजा के निकट लेजाकर बोली॥ २० ॥

अथ मगधेश्वरस्य 'परंतप' इत्यन्वर्थसंज्ञामाह--

**असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः।**
**राजा प्रजारञ्जनलब्धवर्णः परंतपो नाम यथार्थनामा॥ २१ ॥**

सञ्जीविनी--असाविति। असौ राजा, असाविति पुरोवर्तिनो निर्देशः। एवमुत्तरत्रापि द्रष्टव्यम्। शरणोन्मुखानां शरणार्थिनां शरण्यः शरणे रक्षणे साधुः, "तत्र साधुः" इति यत्प्रत्ययः। 'शरणं भवितुमर्हः शरण्यः' इति नाथनिरुक्तिर्निर्मूलैव। अगाधसत्त्वो गम्भीरस्वभावः, 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः। मगधा जनपदास्तेषु प्रतिष्ठास्पदं यस्य स मगधप्रतिष्ठः, 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः। प्रजारञ्जने लब्धवर्णो विचक्षणः यद्वा प्रजारञ्जनेन लब्धोत्कर्षः पराञ्छत्रून्स्तापयतीति परंतपः परंतपाख्यः, "द्विषत्परयोस्तापेः" इति खच्प्रत्ययः, "खचि ह्रस्वः" इति ह्रस्वः, "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः। नामेति प्रसिद्धौ यथार्थनामा, शत्रुसंतापनादिति भावः॥ २१ ॥

अन्वयः--असौ, शरणोन्मुखानां, शरण्यः, अगाधसत्वः, प्रजारञ्जनलब्धवर्णः, मगधप्रतिष्ठः, यथार्थनामा, परंतपः, नाम, राजा, 'अस्ति'॥ २१ ॥

सुधा--असौ = अयं, पुरोवर्त्तीति यावत्। शरणोन्मुखानां = शरणार्थिनां, शरणागतानां जनानामिति यावत्। शरण्यः = परित्राणार्हः, शरणदातेति यावत्। अगाधसत्वः = गम्भीरस्वभावः, प्रजारञ्जनलब्धवर्णः = जनपालनविचक्षणः, जनपालनप्राप्तकीर्तिरित्यर्थः। मगधप्रतिष्ठः = मगधास्पदः, यथार्थनामा = अन्वर्थनामा, परन्तपः, नामेति प्रसिद्धौ। राजा = नृपः, परंतपो राजेत्यर्थः। अस्तीति शेषः। अयं मगधेश्वरः रिपुतापकरत्वात् 'परंतप' इत्यन्वर्थसंज्ञां बिभर्तीति भावः॥ २१ ॥

कोशः--'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी। 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः। 'प्रजाः स्यात् सन्ततौ जने' इति, 'प्रतिष्ठा कृत्यमास्पदम्' इति चामरः॥ २१ ॥

समासादि--शरणे साधुः शरण्यः। शरणे उन्मुखा इति शरणोन्मुखास्तेषां शरणोन्मुखानाम् ( त० पु० )। अगाधं सत्त्वं यस्य स अगाधसत्वः ( ब० व्री० )। मगधेषु प्रष्ठिता

( आस्पदं ) यस्य सः मगधप्रतिष्ठः (ब० व्री०) । प्रजाया रञ्जनमिति प्रजारञ्जनं (त० पु०), प्रजारञ्जने, प्रजारञ्जनेन वा लब्धवर्ण इति प्रजारञ्जनलब्धवर्णः ( त० पु० ) । परान् तापयतीति परन्तपः । अर्थमनतिक्रम्येति यथाऽर्थम् ( अ० भा० ), यथाऽर्थं नाम यस्य स यथाऽर्थनामा ( ब० व्री० ) ॥ २१ ॥

व्याकरणम्—शरण्यः—शरण + यत् । परन्तपः = पर + तप् + णिच् + 'द्विषत्परयोस्तापेः' इत्यनेन खच्, 'खचि ह्रस्वः' इति ह्रस्वः, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः ॥ २१ ॥

वाच्यपरिवर्तनम्—अनेन, शरणोन्मुखानां, शरण्येन, अगाधसत्त्वेन, प्रजारञ्जनलब्धवर्णेन, मगधप्रतिष्ठेन, यथार्थनाम्ना, परंतपेन, नाम, राज्ञा, 'भूयते' ॥ २१ ॥

तात्पर्यार्थः—अयं शरणागतानां मनुष्याणां शरणदाता गम्भीरस्वभावः प्रजापालनप्राप्तकीर्तिर्मगधाधिपतिर्यथार्थनामा परंतपो नाम राजा अस्ति ( त्वमवलोकय ) ॥ २१ ॥

भाषाऽर्थः—यह शरण में आये मनुष्यों को शरण देने वाला, गम्भीर—स्वभाव और प्रजापालनसे प्राप्त यश वाला मगधदेशमें प्रतिष्ठित 'परंतप' इस यथार्थनामका राजा है ॥२१॥

अथ नृपान्तराधिष्ठिताऽपि पृथिवी मगधेश्वरेणैव राजन्वतीत्याह—

**कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।**
**नक्षत्रताराग्रहसंकुलाऽपि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२ ॥**

सञ्जीविनी—काममिति । अन्ये नृपाः कामं सहस्रशः सन्तु, भूमिमनेन राजन्वतीं शोभनराजवतीमाहुः, नैतादृक्कश्चिदस्तीत्यर्थः । 'सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान्' इत्यमरः । "राजन्वान्सौराज्ये" इति निपातनात्साधुः । तथा हि नक्षत्रैरश्विन्यादिभिस्ताराभिः साधारणज्योतिर्भिर्ग्रहैर्भौमादिभिश्च संकुलाऽपि रात्रिश्चन्द्रमसैव ज्योतिरस्या अस्तीति ज्योतिष्मती, नान्येन ज्योतिषेत्यर्थः ॥ २२ ॥

अन्वयः—अन्ये, सहस्रशः, नृपाः, कामं, सन्तु, 'जनाः' अनेन, भूमिं, राजन्वतीम्, आहुः, नक्षत्रताराग्रहसङ्कुला, अपि, रात्रिः, ज्योतिष्मती, चन्द्रमसा, एव, 'भवति' ॥ २२ ॥

सुधा—अन्ये = इतरे, सहस्रशः = अनेकशः, नृपाः = महीपतयः, कामं = पर्याप्तं, यथेप्सितमिति यावत् । सन्तु = भवन्तु, अनेन = अमुना, मगधेश्वरेणेति यावत् । भूमिं = पृथिवीं, राजन्वतीं = शोभनराजवतीम्, आहुः = ब्रुवन्ति, जना इति शेषः । नक्षत्रताराग्रहसङ्कुला = नक्षत्रताराग्रहव्याप्ता, अश्विन्यादिसप्तविंशतिनक्षत्रैः साधारणज्योतिर्भिर्मङ्गलादिग्रहैश्च युक्तेत्यर्थः । अपि, रात्रिः = निशा, ज्योतिष्मती = प्रकाशवती, चन्द्रमसा = इन्दुना, एव, भवतीति शेषः । नान्येन ज्योतिषेत्यर्थः ॥ २२ ॥

कोशः—'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' इति, 'सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान्' इति चामरः । 'सङ्कुलं त्रिषु विस्पष्टवाचि व्याप्ते' इति, 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसके दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति च मेदिनी । 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः' इत्यमरः ॥ २२ ॥

समासादि—नक्षत्राणि च ताराश्च ग्रहाश्चेति नक्षत्रताराग्रहाः ( द्व० ), तैः संकुलेति नक्षत्रताराग्रहसङ्कुला ( त० पु० ) । ज्योतिरस्त्यस्या इति ज्योतिष्मती ॥ २२ ॥

व्याकरणम्—राजन्वती = राजन् + मतुप् + ङीप्, 'राजान्वान्सौराज्ये' इति निपातनात् साधुः । ज्योतिष्मती = ज्योतिस् + मतुप् + ङीप् ॥ २२ ॥

वाच्यपरिवर्तनम्—अन्यैः, सहस्रशः, नृपैः, कामं, भूयताम्, 'जनैः' अनेन, भूमिः, राजन्वती, उच्यते, नक्षत्रताराग्रहसङ्कुलया, अपि, रात्र्या, ज्योतिष्मत्या, चन्द्रमसा, एव, 'भूयते' ॥ २२ ॥

तात्पर्यार्थः—यथाऽश्विन्यादिनक्षत्रैस्तथा साधारणज्योतिर्भिर्मङ्गलादिग्रहैश्च व्याप्ता-

ऽपि रात्रिश्चन्द्रेणैव ज्योतिष्मती भवति, । तथाऽनेकेषु नृपेषु पर्याप्तेषु सत्स्वपि जनास्त्वनेन मगधेश्वरेणैव भूमिं शोभनराजवतीमाहुः ॥ २२ ॥

भाषाऽर्थः—दूसरे राजा चाहे हजारों हों परन्तु पृथ्वी इसी मगधेश्वर राजा से राजा वाली है । अश्विनी आदि नक्षत्रों तथा साधारण ताराओं और मंगलादि ग्रहों के रहते हुए भी रात्रि प्रकाश वाली चन्द्रमा से ही होती है ॥ २२ ॥

अथाऽयं मगधेश्वर इन्द्राणीं प्रोपितभर्तृकाञ्चकारेत्याह—

क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकांश्चकार ॥ २३ ॥

सञ्जीविनी—क्रियेति । अयं परंतपोऽध्वराणां क्रतूनां क्रियाप्रबन्धादनुष्ठानसातत्यात्, अविच्छिन्नादनुष्ठानादित्यर्थः । अजस्रं नित्यमाहूतसहस्रनेत्रः सन्, चिरं शच्या अलकान्पाण्डुकपोलयोर्लम्बान्स्रस्तान्, पचाद्यच् । मन्दारैः कल्पद्रुमकुसुमैः शून्यांश्चकार । प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति 'प्रोषिते मलिना कृशा' इति, 'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥' इति च स्मरणात् ॥ २३ ॥

अन्वयः—अयम्, अध्वराणां, क्रियाप्रबन्धात्, अजस्रम्, आहूतसहस्रनेत्रः, चिरं, पाण्डुकपोललम्बान्, शच्याः, अलकान्, मन्दारशून्यान्, चकार ॥ २३ ॥

सुधा-अयम् = एषः, परन्तप इति यावत् । अध्वराणां = यज्ञानां, क्रियाप्रबन्धात् = अनुष्ठानसातत्यात्, निरन्तरमनुष्ठानादिति यावत् । अजस्रं = नित्यम्, आहूतसहस्रनेत्रः = आवाहितेन्द्रः, चिरं = बहुकालं, पाण्डुकपोललम्बान् = पाण्डुरगण्डस्थललुठितान्, पाण्डुकपोलस्थलस्रस्तानिति यावत् । शच्याः = इन्द्राण्याः । अलकान् = चूर्णकुन्तलान्, कुटिलकेशानिति यावत् । मन्दारशून्यान् = देवतरुपुष्परहितान्, । चकार = कृतवान् । मगधेश्वरानुष्ठितयज्ञे प्रत्यहमिन्द्रस्य गमनाद् शच्याः प्रोषितभर्तृकात्वमुपपन्नम् । सा केशसंस्कारादीन् न करोति । कुतः ?—'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥' इति निषेधात् ॥ २३ ॥

कोशः—'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इति, 'नित्यानवरताजस्रमपि' इति, 'पुलोमजा शचीन्द्राणी' इति, 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इति, 'हरिणः पाण्डुरः पाण्डुः' इति चामरः । 'अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' इति मेदिनी॥२३॥

समासादि—क्रियायाः प्रबन्ध इति क्रिया प्रबन्धस्तस्मात् क्रियाप्रबन्धात् ( त० पु० ) । सहस्रं नेत्राणि यस्य स सहस्रनेत्रः, आहूतः सहस्रनेत्रो येन स आहूतसहस्रनेत्रः ( ब० व्री० ) । लम्बन्त इति लम्बाः, पाण्डू च तौ कपोलाविति पाण्डुकपोलौ (क० धा०), तयोर्लम्बा इति पाण्डुकपोललम्बास्तान् पाण्डुकपोललम्बान् ( त० पु० ) । मन्दारैः शून्या इति मन्दारशून्यास्तान् मन्दारशून्यान् ( त० पु० ) ॥ २३ ॥

व्याकरणम्—अजस्रं = न + जसु ( मोक्षणे-उकारेत् ) 'नमिकम्पि' इति रः । लम्बान् = लबि + अच् ॥ २३ ॥

वाच्यपरिवर्तनम्—अनेन, अध्वराणां, क्रियाप्रबन्धात, अजस्रम्, आहूतसहस्रनेत्रेण, चिरं, पाण्डुकपोललम्बाः, शच्याः, अलकाः, मन्दारशून्याः, चक्रिरे ॥ २३ ॥

तात्पर्यार्थः—यज्ञानां सततमनुष्ठानादनेन मगधेश्वरेण इन्द्रो निरन्तरमावाहितः, अतोऽयं पाण्डुकपोलस्रस्तान् शच्या अलकांश्चिरं कल्पवृक्षपुष्पैः शून्यांश्चकार ॥ २३ ॥

भाषाऽर्थः—इस ( परंतप ) ने, यज्ञोंके निरंतर करनेसे सदा इन्द्रको बुलाते हुए बहुत समय तक इन्द्राणीके पीले गाल पर लटके बालों को मन्दारके फूलोंसे रहित कर दिया ॥२३॥

अथानेन सहोद्वाहं विधाय पाटलिपुत्राङ्गनानां नयनानन्दं विधेहीत्याह--

**अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे ।**

**प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ २४ ॥**

सञ्जीविनी--अनेनेति । वरेण्येन वरणीयेन, वृणोतेरौणादिक एण्यप्रत्ययः । अनेन राज्ञा गृह्यमाणं पाणिमिच्छसि चेत्, पाणिग्रहणमिच्छसि चेदित्यर्थः । प्रवेशे प्रवेशकाले प्रासादवातायनसंश्रितानां राजभवनगवाक्षस्थितानां पुष्पपुराङ्गनानां पाटलिपुराङ्गनानां नेत्रोत्सवं कुरु, सर्वोत्तमानां तासामपि दर्शनीया भविष्यसीति भावः ॥ २४ ॥

अन्वयः--वरेण्येन, अनेन, गृह्यमाणं, पाणिम्, इच्छसि, चेत्, 'तदा' प्रवेशे, प्रासादवातायनसंश्रितानां, पुष्पपुराङ्गनानां, नेत्रोत्सवं, 'त्वं' कुरु ॥ २४ ॥

सुधा--वरेण्येन = वरणीयेन, अनेन = अमुना, परंतपेनेति यावत् । गृह्यमाणं = स्वीक्रीयमाणं, पाणिं = हस्तं, चेत = यदि, इच्छसि = वाञ्छसि, पाणिग्रहणमिच्छसीत्यर्थः । तदेत्यादौ । प्रवेशे = प्रवेशसमये, प्रासादवातायनसंश्रितानां = राजभवनगवाक्षस्थितानां, पुष्पपुराङ्गनानां = पाटलिपुत्रनितम्बिनीनां, नेत्रोत्सवं = नयनानन्दं, कुरु = विधेहि त्वमितिशेषः । सर्वोत्तमानां तासामपि त्वं दर्शनीया भविष्यसीति भावः ॥ २४ ॥

कोशः--'पक्षान्तरे चेद्यदि च' इत्यमरः । 'पाणिः शमः शयो हस्तः' इत्यमरमाला । 'प्रासादो देवभूभुजाम्' इति, 'वातायनं गवाक्षोऽथ' इति, 'अङ्गना भीरुः कामिनी वामलोचना । प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इति चामरः ॥ २४ ॥

समासादि--गृह्यतेऽसौ गृह्यमाणस्तं गृह्यमाणम् । प्रसीदति मनोऽत्रेति प्रासादः, ईयत अनेनेत्ययनं, वातस्यायनमिति वातायनं, प्रासादस्य वातायनमिति प्रासादवातायनं तस्मिन् संश्रितास्तासां प्रासादवातायनसंश्रितानाम् ( त० पु० ) । नेत्राणामुत्सव इति नेत्रोत्सवस्तं नेत्रोत्सवम् (त०पु०) । पुष्पपुरस्याङ्गना इति पुष्पपुराङ्गनास्तासां पुष्पपुराङ्गनानाम् ( त० पु० ) ॥ २४ ॥

व्याकरणम्-इच्छसि = इषु + (इच्छायाम्--उकारेत्) लट्, सिबादेशः 'इषुगमियमां छः' इति छत्वम् । वरेण्येन = वृञ् + एण्यः (उणादिः) । प्रासाद = प्र + सद + घञ् । संश्रितानां = सम् + श्रि + क्तः ॥ २४ ॥

वाच्यपरिवर्तनम्--वरेण्येन, अनेन, गृह्यमाणः, पाणिः, इष्यते, चेत्, 'तदा' प्रवेशे, प्रासादवातायनसंश्रितानां, पुष्पपुराङ्गनानां, नेत्रोत्सवः, 'त्वया' क्रियताम् ॥ २४ ॥

तात्पर्यार्थः--यद्यनेन परन्तपेन सार्कं पाणिग्रहणमिच्छसि तदाऽस्य नगरप्रवेशसमये राजभवनगवाक्षस्थितानां पाटलिपुत्राङ्गनानां नेत्रानन्दं विधेहि ॥ २४ ॥

भाषार्थः--बरने योग्य इस परंतप के साथ यदि तू पाणिग्रहण-करना चाहती है तो 'इसके' नगर प्रवेश के समय राज महलों के झरोखे में बैठी हुई पाटलिपुत्र की स्त्रियों के आँखों को आनन्दित करो ॥ २४ ॥

अथेन्दुमती मगधेश्वरं तत्याजेत्याह--

**एवं तयोक्ते तमवेक्ष्य किंचिद्विस्रंसिदूर्वाङ्कमधूकमाला ।**

**ऋजुप्रणामक्रियैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥ २५ ॥**

सञ्जीविनी--एवमिति । एवं तया सुनन्दयोक्ते सति तं परंतपमवेक्ष्य किंचिद्विस्रंसिनी दूर्वाङ्का दूर्वाचिह्ना मधूकमाला गुडपुष्पमाला यस्याः सा, 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः । वरणे शिथिलप्रयत्नेति भावः । तन्वीन्दुमत्येनं नृपमभाषमाणा ऋज्वा भावशून्यया प्रणामक्रियैव प्रत्यादिदेश परिजहार ॥ २५ ॥

अन्वयः--तया, एवम्, उक्ते, 'सति' किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला, तन्वी, तम्, अवे-

क्ष्य, एनम्, अभाषमाणा, ऋजुप्रणामक्रियया, एव, प्रत्यादिदेश, ॥ २५ ॥

सुधा—तया = पूर्वोक्तया, सुनन्दयेति यावत्। एवम् = इत्थम्, उक्ते = कथिते, प्रशंसित इति यावत। सति इति शेषः । किंचिद्विस्रंसिदूर्वाङ्कमधूकमाला = किञ्चिदधोऽवलम्बिभार्गवीचिह्नमधुष्ठीलमाल्या, तन्वी = कोमलाङ्गी, इन्दुमतीति यावत्। तं = पूर्वोक्तं, मगधेश्वरमिति यावत्। अवेक्ष्य = अवलोक्य, एनं = नृपं, अभाषमाणा = अब्रुवती, ऋजुप्रणामक्रिययैव = अजिह्मप्रणतिकर्मणैव, भावशून्यप्रणामक्रिययैवेति यावत्। प्रत्यादिदेश, तत्याज ॥ २५ ॥

कोशः—'दूर्वा तु शतपर्विका। सहस्रवीर्या भार्गव्यौ रुहानन्ता' इत्यमरः। 'अङ्को रूपकभेदागश्चिह्ने रेखाजिभूषणे' इति मेदिनी। 'मधूके तु गुडपुष्पमधुद्रुमौ। वानप्रस्थमधुष्ठीलौ' इति, 'माल्यं मालास्रजौ मूर्ध्नि' इति, 'ऋजावजिह्मप्रगुणौ' इति चामरः। 'क्रिया कर्मणि चेष्टायां करणे सम्प्रधारणे । आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि' इति विश्वः। 'तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे' इति मेदिनी ॥ २५ ॥

समासादि—मधूकस्य मालेति मधूकमाला (त० पु०), दूर्वाया अङ्को यस्यां सा दूर्वाङ्का किञ्चिद्विस्रंसिनी दूर्वाङ्का मधूकमाला यस्याः सा किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला ( ब० व्रो० ) । प्रणामस्य क्रियेति प्रणामक्रिया ( त० पु० ), ऋज्वी प्रणामक्रिया यस्याः सा ऋजुप्रणामक्रिया तया ऋजुप्रणामक्रियया ( ब० व्रो० )। अभाषतेऽसावभाषमाणा ॥ २५ ॥

व्याकरणम्—उक्ते = वच् + क्तः + सम्प्रसारणम्। अवेक्ष्य = अव + ईक्ष ( दर्शने ) ल्यप्। विस्रंसि ( नी ) = वि + स्रंस् + इनिः । तन्वी = तनु + इनिः + दीर्घः। प्रत्यादिदेश = प्रति + आ + दिश + लिट् ॥ २५ ॥

वाच्यपरिवर्तनम्—तया, एवम्, उक्ते, 'सति' किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमालया, तन्व्या, तम्, अवेक्ष्य, अयम्, अभाषमाणया, ऋजुप्रणामक्रियया, एव, प्रत्यादिदिशे ॥ २५ ॥

तात्पर्यार्थः—सुनन्दयैवं कथिते सति किञ्चिद्विस्रंसिदूर्वाचिह्नमधूकमाला सा तन्वीन्दुमती, एनं मगधेश्वरमभाषमाणा सती भावशून्यया क्रिययैव तत्याज ॥ २५ ॥

भाषाऽर्थः—सुनन्दाके ऐसा कहने पर दूब युत महुए की माला को कुछ नीची करने वाली कोमल उस इन्दुमतीने मगधेश्वर को देखकर बिना बोले उसे भावसे रहित प्रणाम क्रिया द्वारा ही छोड़ दिया ॥ २५ ॥

अथ सुनन्दा इन्दुमतीं राजान्तरसमीपं प्रापयाञ्चकारेत्याह—

**तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय ।**
**समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥**

सञ्जीविनी—तामिति। सैव नान्या, चित्तज्ञत्वादिति भावः। वेत्रग्रहणे नियुक्ता दौवारिकी सुनन्दा तां राजसुतां राजान्तरमन्यराजानं निनाय। नयतिर्द्विकर्मकः। कथमिव समीरणोत्था वातोत्पन्ना तरङ्गलेखोर्मिपङ्क्तिर्मानसे सरसि या राजहंसी तां पद्मान्तरमिव ॥ २६ ॥

अन्वयः—वेत्रग्रहणे, नियुक्ता, सा, एव, तां, राजसुतां, राजान्तरं, समीरणोत्था, तरङ्गलेखा, मानसराजहंसीं, पद्मान्तरम्, इव, निनाय, ॥ २६ ॥

सुधा—वेत्रग्रहणे = वेत्रधारणे, नियुक्ता = संलग्ना, सैव = पूर्वोक्तैव, सुनन्दैवेति यावत्। तां = पूर्वोक्तां, राजसुतां = इन्दुमतीमिति यावत् । राजान्तरं = नृपान्तरं, समीरणोत्था = पवनोत्पन्ना, वायुजन्येति यावत्। तरङ्गलेखा = ऊर्मिश्रेणिः, मानसराजहंसी = मानससरोवरकलहंसी, पद्मान्तरं = कमलान्तरम्, इव, निनाय = प्रापयाञ्चकार ॥ २६ ॥

कोशः—'द्वाः स्थितो वेत्रधारकः' इति त्रिकाण्डशेषः । 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इति, 'भङ्गस्तरङ्ग ऊर्मिर्वा' इति चामरः। 'मानसं स्वान्तसरसोः' इत्यनेकार्थसंग्रहः, । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे'

इति विश्वमेदिन्यावपि ॥ २६ ॥

समासादि—वेत्रस्य ग्रहणमिति वेत्रग्रहणं तस्मिन्वेत्रग्रहणे ( त० पु० ) । अन्यो राजा राजान्तरम् । राज्ञः सुतेति राजसुता तां राजसुताम् ( त० पु० ) । समीरणेनोत्थेति समीरणोत्था ( त० पु० )। तरङ्गस्य लेखेति तरङ्गलेखा (त०पु०) । अन्यत्पद्ममिति पद्मान्तरम् । मानसस्य राजहंसीति मानसराजहंसी तां मानसराजहंसीम् ( त० पु० ) ॥ २६ ॥

व्याकरणम्—नियुक्ता = नि + युजिर् (योगे—इरित्) क्तः + टाप् । निनाय = णीञ् (प्रापणे-ञित्) लिट् ॥ २६ ॥

वाच्यपरिवर्तनम्—वेत्रग्रहणे, नियुक्तया, तया, एव, सा, राजसुता, राजान्तरं, समीरणोत्थया, तरङ्गलेखया, मानसराजहंसी, पद्मान्तरम्, इव, निन्ये ॥ २६ ॥

तात्पर्यार्थः--यथा पवनोत्था तरङ्गराजिर्मानससरोवरराजहंसीं कमलान्तरं प्रापयति, तथा द्वारपालिनी सा सुनन्दा तामिन्दुमतीं राजान्तरं निनाय ॥ २६ ॥

भाषाऽर्थः--द्वारपालिनी वह सुनन्दा उस राज सुता ( इन्दुमती ) को दूसरे राजा के समीप, हवा से उठी हुई तरंगरेखा मानससरोवर की राजहंसी को अन्य कमल के निकट ले जाने की भांति ले गयी ॥ २६ ॥

अथाङ्गनाथः भूर्लोकस्थोऽपि स्वर्गसुखमनुभवतीत्याह—

**जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।**
**विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७ ॥**

सञ्जीविनी--जगादेति । एनामिन्दुमतीं जगाद । किमिति अयमङ्गनाथोऽङ्गदेशाधीश्वरः सुराङ्गनाभिः प्रार्थिता कामिता यौवनश्रीर्यस्य स तथोक्तः, पुरा किलैनमिन्द्रपुरगामिनमकामयन्ताप्सरस इति प्रसिद्धिः । किञ्च सूत्रकारैर्गजशास्त्रकृद्भिः पालकादिभिर्महर्षिभिर्विनीतनागः शिक्षितगजः । किलेत्यैतिह्ये । अत एव भूमिगतोऽप्यैन्द्रं परमैश्वर्यं भुङ्क्ते, भूर्लोक एव स्वर्गसुखमनुभवतीत्यर्थः । गजाप्सरोदेवर्षिसेव्यत्वमैन्द्रपदशब्दार्थः । पुरा किल कुतश्चिच्छापकारणाद्भुवमवतीर्णं दिग्गजवर्गमालोक्य स्वयमशक्तैरिन्द्राभ्यनुज्ञयाऽऽनीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान्वशीकृत्य भुवि संप्रदायं प्रावर्तयदिति कथा गीयते ॥ २७ ॥

अन्वयः--'सुनन्दा' एनां, जगाद, 'किम् ?' सुराङ्गनाप्रार्थितयौवनश्रीः, सूत्रकारैः, विनीतनागः, च, अयम्, अङ्गनाथः, भूमिगतः, अपि, किल, ऐन्द्रं, पदं, भुङ्क्ते ॥ २७ ॥

सुधा—एनां = पूर्वोक्तां, इन्दुमतीमिति यावत् । जगाद = उवाच, सुनन्देति शेषः । किम् ? तदाह--सुराङ्गनाप्रार्थितयौवनश्रीः = (१)देवसुन्दरीकामिततारुण्यलक्ष्मीः, सूत्रकारैः = गजशास्त्रकृद्भिः, पालकादिमहर्षिभिरिति यावत् । विनीतनागः = (२)शिक्षितगजः, च, अयम् = एषः, पुरोवर्त्ती नृप इति यावत । अङ्गनाथः = अङ्गाख्यदेशाधिपः, भूमिगतः = भूस्थितः अपि, किल, ऐन्द्रं = पौरन्दरं, पदं = वस्तु, ऐश्वर्यमिति यावत् । भुङ्क्ते = अनुभवति, मृत्युलोक एव स्वर्गानन्दमनुभवतीति यावत् ॥ २७ ॥

कोशः—'अमरा निर्जरादेवास्त्रिदशाविबुधाः सुराः' इति, 'अङ्गना भीरुः कामिनी वामलोचना । प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इति, 'तारुण्यं यौवनं समे' इति चामरः । 'लक्ष्मीसरस्वतीधात्रिवर्गसम्पद्विभूतिशोभासु । उपकरणवेशरचनाविधानेषु च श्रीरिति प्रथिता' इति व्याडिः । 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः ।

---

(१) पौराणिकी कथा—पुरा किल अयमङ्गनाथः इन्द्रसाहाय्यार्थम् इन्द्रपुरं गतवान्, तदा तत्पुरगामिनमेन देवसुन्दर्योऽकामयन्त इति ॥

(२) पौराणिकी कथा—पुरा किल कुतश्चिच्छापकारणात् भूर्लोकमवतीर्णं गजवर्गमवलोक्य स्वयमशक्तैरिन्द्राभ्यनुज्ञयाऽऽनीतदेवर्षिभिः निर्मितेन गजशास्त्रेण गजान् वशीकृत्य भुवि सम्प्रदायं प्रावर्त्तयदिति ॥

'सूत्रं तु सूचनाकारि ग्रन्थे तन्तुव्यवस्थयोः' इत्यनेकार्थसंग्रहः। 'किलशब्दस्तु वार्तायां सम्भाव्यानुनयार्थयोः' इति विश्वः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः॥२७॥

समासादि--अङ्गानां नाथ इत्यङ्गनाथः (त० पु०)। यौवनस्य श्रीरिति यौवनश्रीः (त० पु०), सुराणामङ्गना इति सुराङ्गनाः (त० पु०), ताभिः प्रार्थिता यौवनश्रीर्यस्य स सुराङ्गनाप्रार्थितयौवनश्रीः (ब०व्री०)। विनीता नागा यस्य स विनीतनागः (ब०व्री०)। सूत्रं कुर्वन्तीति सूत्रकारास्तैः सूत्रकारैः। इन्द्रस्येदमैन्द्रम् ॥ २७ ॥

व्याकरणम्--जगाद=गद्+लिट्, णलादेशः, द्वित्वादिकार्यम्। प्रार्थित=प्र+अर्थ (उपयाच्ञायाम्)क्तः+इट्। यौवन=युवन्+अण्। विनीत=वि+णीञ्(प्रापणे-ञित्)+क्तः। ऐन्द्रम्=इन्द्र+अण्। सूत्रकार=सूत्र+कृ+अण्। गतः=गम्+क्तः। भुङ्क्ते=भुज+लट्, तादेशः ॥ २७ ॥

वाच्यपरिवर्तनम्--'सुनन्दया' एषा, जगदे, 'किम्?' सुराङ्गनाप्रार्थितयौवनश्रिया, सूत्रकारैः, विनीतनागेन, च, अनेन, अङ्गनाथेन, भूमिगतेन, अपि, किल, ऐन्द्रं, पदं, भुज्यते ॥२७॥

तात्पर्यार्थः-- सुनन्दा इन्दुमतीं जगाद किं? तदाह--सुराङ्गनाभिः कामिततारुण्यश्रीः गजशास्त्रकारैः पालकादिमहर्षिभिश्च शिक्षितगजोऽयमङ्गाधिपतिः पृथिवीगतोऽपि स्वर्गसुखमनुभवति ॥ २७ ॥

भाषार्थः--सुनन्दा इन्दुमती से बोली कि--देवताओंकी स्त्रियों से कामना की गई युवावस्था की लक्ष्मी-और गजशास्त्रके बनाने वालों ( पालक आदि महर्षियों ) से सिखाये गये गज वाला यह अंगनाथ भूमि ( मृत्युलोक ) में स्थित भी इन्द्रपद ( स्वर्गसुख ) को भोगता है ॥ २७ ॥

अथाङ्गनाथेन शत्रुस्त्रीणामश्रुबिन्दून् प्रस्तारयता हाराः कृता इत्याह--

**अनेन पर्यासयताऽश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु।**
**प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः ॥ २८ ॥**

सञ्जीविनी--अनेनेति। शत्रुविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमानश्रुबिन्दून्, 'अस्रमश्रुणि शोणिते' इति विश्वः। पर्यासयता प्रस्तारयता, भर्तृवधादिति भावः। अनेनाङ्गनाथेनोन्मुच्याक्षिप्य सूत्रेण विना हारा एव प्रत्यर्पिताः। अविच्छिन्नाश्रुबिन्दुप्रवर्तनादुत्सूत्रहारार्पणमेव कृतमित्युत्प्रेक्षा गम्यते ॥ २८ ॥

अन्वयः--शत्रुविलासिनीनां, स्तनेषु, मुक्ताफलस्थूलतमान्, अश्रुबिन्दून्, पर्यासयता, अनेन, उन्मुच्य, सूत्रेण, विना, हाराः, एव, प्रत्यर्पिताः, ॥ २८ ॥

सुधा--शत्रुविलासिनीनां=रिपुस्त्रीणां, स्तनेषु=कुचेषु, मुक्ताफलस्थूलतमान्=मौक्तिकसदृशातिशयस्थूलान्, अश्रुबिन्दून्=नेत्राम्बुपृषतान्, पर्यासयता=प्रसारयता, भर्तृवधादिति भावः। अनेन=पूर्वोक्तेन, अङ्गनाथेनेति यावत्। उन्मुच्य=आक्षिप्य, सूत्रेण=तन्तुना, विना, हाराः=मुक्तास्रजः, एव, प्रत्यर्पिताः=प्रदत्ताः ॥ २८ ॥

समासादि--अश्रूणां बिन्दव इत्यश्रुबिन्दवस्तानश्रुबिन्दून् ( त० पु० )। अतिशयेन स्थूला इति स्थूलतमाः, मुक्ताफलवत् स्थूलतमा इति मुक्ताफलस्थूलतमास्तान् मुक्ताफलस्थूलतमान्। विलसनशीला विलासिन्यः, शत्रूणां विलासिन्य इति शत्रुविलासिन्यस्तासां शत्रुविलासिनीनाम् ( त० पु० ) ॥ २८ ॥

व्याकरणम्--स्थूलतमान्=स्थूल 'अतिशायने तमबिष्ठनौ' इत्यनेन तमप्। प्रत्यर्पिताः=प्रति+ऋ ( गतिप्रापणयोः) णिच्, 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' इति पुकि गुणे, यणि च, प्रत्यर्पि इत्यस्मात् क्तप्रत्ययः। उन्मुच्य=उत्+मुच्लृ (मोचने-लृदित्) क्त्वा, ल्यप् ॥ २८ ॥

कोशः—'अस्रु नेत्राम्बु रोदनं चास्रमश्रु च' इति, 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः' इति चामरः । 'मुक्ताफलं घनसारे मौक्तिके लवलीफले' इति, 'सूत्रं तु सूचनाकारि ग्रन्थे तन्तुव्यवस्थयोः' इति चानेकार्थसंग्रहः ॥ २८ ॥

वाच्यपरिवर्तनम्—शत्रुविलासिनीनां, स्तनेषु, मुक्ताफलस्थूलतमान्, अश्रुबिन्दून्, पर्यासयता, अनेन, उन्मुच्य, सूत्रेण, विना, हारैः, एव, प्रत्यर्पितैः, 'भूयते' ॥ २८ ॥

तात्पर्यार्थः—अनेनाङ्गनाथेन शत्रुस्त्रीणां भर्तृवधात् तासां कुचेभ्यो मुक्ताहारानुन्मुच्य मुक्ताफलसदृशपीनतमानश्रुबिन्दून् प्रस्तारयता सता तासां स्तनेषु तन्तुना विनैव हाराः प्रदत्ताः ॥ २८ ॥

भाषाऽर्थः—शत्रुओं की स्त्रियों के स्तनों में स्थित हारों को हटवाकर इस राजा अंगनाथ ने मोतियों के सदृश बड़े आंसुके बिन्दुओं को मानों डोर के विना ही हार पहना दिया ॥२८॥

अथ अङ्गनाथे श्रीः सरस्वती चेति द्वयं निवसति, तयोर्मध्ये त्वमेव तृतीयार्हेत्याह—

**निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।**
**कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि तयोस्तृतीया ॥ २९ ॥**

सञ्जीविनी—निसर्गेति । निसर्गतः स्वभावतो भिन्नास्पदं भिन्नाश्रयं सहावस्थानविरोधीत्यर्थः । श्रीश्च सरस्वती चेति द्वयमस्मिन्नङ्गनाथ एकत्र संस्था स्थितिर्यस्य तदेकसंस्थम् उभयमिह संगतमित्यर्थः । हे कल्याणि !, "बह्वादिभ्यश्च" इति ङीप् । कान्त्यासूनृतया सत्यप्रियया गिरा च योग्या संसर्गार्हा त्वमेव तयोः श्रीसरस्वत्योस्तृतीया, समानगुणयोर्युवयोर्दाम्पत्यं युज्यत एवेति भावः । दक्षिणनायकत्वं चास्य ध्वन्यते । तदुक्तम्–"तुल्योऽनेकत्र दक्षिणः" इति ॥ २९ ॥

अन्वयः—श्रीः, च, सरस्वती, च, 'इति' द्वयं, निसर्गभिन्नास्पदम्, अस्मिन्, एकसंस्थम्, 'अस्ति' हे कल्याणि!, कान्त्या, सूनृतया, गिरा, च, योग्या, त्वम्, एव, तयोः, तृतीया, 'भव'॥२९॥

सुधा—श्रीः = लक्ष्मीः, च, सरस्वती = वाणी, च, द्वयम् = उभयम्, इतीति शेषः । निसर्गभिन्नास्पदं = स्वभावभेदिताश्रयं, सहनिवासविरोधीत्यर्थः । अस्मिन् = पूर्वोक्ते, अङ्गनाथे इति यावत् । एकसंस्थम् = एकस्थिति, एकमर्यादमिति यावत् । अस्तीति शेषः । हे कल्याणि ! = हे मङ्गले !, कान्त्या = शोभया, सूनृतया = प्रियसत्यया, मधुरयेति यावत् । गिरा = वाचा, च, योग्या = संयोगार्हा, त्वम्, एव, तयोः = पूर्वोक्तयोः, लक्ष्मीसरस्वत्योरिति यावत् । तृतीया = त्रित्वसंख्यापूरणी, भवेति शेषः ॥ २९ ॥

कोशः—'स्वरूपं च स्वभावश्च निसर्गश्च' इति, 'दारिते भिन्नभेदितौ' इति चामरः । 'आस्पदं कृत्यपदयोः' इत्यनेकार्थसंग्रहः । 'ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती' इत्यमरः । 'संस्था स्पशे स्थितौ मृत्यौ' इत्यनेकार्थसंग्रहः । 'सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि' इति, 'योग्यः प्रवीणयोगार्होपायिशक्तेषु वाच्यवत्' इति, 'कल्याणं हेम्नि मङ्गले' इति च मेदिनी ॥ २९ ॥

समासादि—निसर्गतः भिन्नमास्पदं यस्य तन्निसर्गभिन्नास्पदम् ( ब० व्रीο ) । एकस्मिन् संस्था यस्य तदेकसंस्थम् ( ब० व्री० ) ॥ २९ ॥

व्याकरणम्—भिन्नं = भिदिर् ( विदारणे—इरित् ), क्तप्रत्ययः, 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति नकारः । आस्पदम् = आ + पद 'आस्पदं प्रतिष्ठायाम्' इति निपातनात्सुट् । संस्थं = सम् + स्था + कः ॥ २९ ॥

वाच्यपरिवर्तनम्—श्रीः, च, सरस्वती, च, 'इति' द्वयेन, निसर्गभिन्नास्पदेन, अस्मिन्, एकसंस्थेन, 'भूयते' । हे कल्याणि !, कान्त्या, सूनृतया, गिरा, च, योग्यया, त्वया, एव, तयोः, तृतीयया, 'भूयते'॥ २९ ॥

तात्पर्यार्थः--श्रीः सरस्वती चैतद् द्वयं स्वभावतः भिन्नाश्रयमपि अस्मिन्नङ्गाधिपे एकसंस्थमस्ति "अर्थात् यत्र श्रीस्तिष्ठति तत्र सरस्वती न, यत्र सरस्वती तत्र श्रीर्न, अस्मिन् राज्ञि मिलित्वा ते निवसतः" हे कल्याणि ! कान्त्या सत्यप्रियया वाचा संसर्गार्हा त्वमेव, अतः लक्ष्मीसरस्वत्योर्मध्ये त्वमेव तृतीया भव, "अर्थात् सदृशगुणतया तयोः सदृशी भव" ॥ २९ ॥

भाषाऽर्थः--स्वभाव ही से अलग बसने वाली लक्ष्मी और सरस्वती, इस अङ्गदेशाधिप राजा के पास दोनों इकट्ठी बसती हैं, हे कल्याणि ! कान्ति और मधुरबाणी से संसर्ग के लायक उन दोनों के मध्य में तू ही तीसरी हो ॥ २९ ॥

अथ लोकस्य रुचिभिन्ना भवतीत्याह--

**अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।**
**नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ ३० ॥**

सञ्जीविनी--अथेति । अथ कुमार्यङ्गराजाच्चक्षुरवतार्य अपनीयेत्यर्थः । जन्यां मातृसखीम्, 'जन्या मातृसखीमुदोः' इति विश्वः । सुनन्दां याहि गच्छेत्यवदत् । 'यातेति जन्यानवदत्'इति पाठे जनीं वधूं वहन्तीति जन्या वधूबन्धवस्तानित्यान गच्छतेत्यवदत्, 'जन्यो वरवधूज्ञातिप्रियतुल्यहितेऽपि च' इति विश्वः । अथवा जन्या वधूभृत्याः, 'भृत्याश्चापि नवोढायाः' इति केशवः। संज्ञायां 'जन्या' इति यत्प्रत्ययान्तो निपातः । यदत्राह वृत्तिकारः-'जनीं वधूं वहन्तीति जन्या जामातुर्वयस्याः' इति । यच्चामरः-'जन्याः स्निग्धा वरस्य ये' इति, तत्सर्वमुपलक्षणार्थमित्यविरोधः । न चायमङ्गराजनिषेधो दृश्यदोषान्नापि द्रष्टृदोषादित्याह-नेत्यादिना । असावङ्गराजः काम्यः कमनीयो नेति न, किन्तु काम्य एवेत्यर्थः सा कुमारी च सम्यग्द्रष्टुं विवेक्तुं न वेदेति न, वेदैवेत्यर्थः । किन्तु लोको जनो भिन्नरुचिर्हि, रुचिरमपि किञ्चित्कस्मैचिन्न रोचते । किं कुर्मो न हीच्छा नियन्तुं शक्यत इति भावः ॥ ३० ॥

अन्वयः--अथ, कुमारी, अङ्गराजात्, चक्षुः, अवतार्य, 'त्वम्' याहि, इति, जन्याम्, अवदत्, असौ, काम्यः, न, 'आसीत्-इति' न, सा, सम्यक्, द्रष्टुं, न, वेद, 'इति' न, हि, लोकः, भिन्नरुचिः, 'भवति' ॥ ३० ॥

सुधा--अथ = अनन्तरं, सुनन्दावाक्यश्रवणानन्तरमिति यावत् । कुमारी = कन्या, इन्दुमतीति यावत् । अङ्गराजात् = अङ्गदेशाधिपात्, चक्षुः = नयनम्, अवतार्य = अपनीय, याहि = गच्छ, त्वमिति शेषः । इति = एवं, जन्यां = मातृसखीं, सुनन्दामिति यावत् । अवदत् = अब्रवीत् । असौ = एषः, अङ्गनाथ इति यावत् । काम्यः = कमनीयः, सर्वगुणसम्पन्न इति यावत् । न, 'आसीत्-इति' इति शेषः । न, किन्तु काम्य एवेत्यर्थः। सा = पूर्वोक्ता, इन्दुमतीति यावत् । सम्यक् = समीचीनं, द्रष्टुम् = अवलोकितुं, सम्यग् विवेक्तुमिति यावत् । न, वेद, 'इति' न, किन्तु वेदैवेत्यर्थः । हि = यतः, लोकः = जनः, भिन्नरुचिः = भिन्नस्पृहः, भवतीति शेषः । ( 'याहीति जन्यामवदत्' इत्यत्र 'यातेति जन्यानवदत्' इति पाठो दृश्यते, तत्र व्याख्या--यात = गच्छत, यूयमिति शेषः । इति = एवं, जन्यान् = वधूबन्धून्, अवदत् = अब्रवीत् ) ॥ ३० ॥

कोशः--'जन्या मातृसखीमुदोः । जन्यो वरवधूज्ञातिप्रियभृत्यहितेऽपि च' इति, 'कुमारी रामतरणीनवमाल्योर्नदीभिदि । कन्याऽपराजिता गौरी जम्बूद्वीपेषु च स्मृता' इति च विश्वः । 'अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियाम्' इति, 'लोकस्तु भुवने जने' इति चामरः ॥ ३० ॥

समासादि--अङ्गानां राजेत्यङ्गराजस्तस्माद् अङ्गराजात् ( त० पु० ) । जायतेऽस्यां गर्भ इति जनीस्तां वहति ( प्रापयति ) इति जन्या तां जन्याम् । ( पाठान्तरे--जनीं

( वधूं ) वहन्तीति जन्याः ( वधूबन्धवः ) तान् जन्यान् । ) काम्यत इति काम्यः । भिन्ना रुचिर्यस्य स भिन्नरुचिः ( ब० व्री० ) ॥ ३० ॥

व्याकरणम्--अङ्गराजात्='राजाहः सखिभ्यष्टच्' इति टच् । याहि=या ( प्रापणे ), अस्माल्लोटि, सिपि, सेर्हिः । जन्या='संज्ञायां जन्या' इति यत्प्रत्ययान्तो निपातितः । द्रष्टुम्=दृशिर् ( प्रेक्षणे--इरित् ), तुमुन् । काम्यः=कमु ( कान्तौ--उकारेत् ), 'ऋहलो-र्ण्यत्' इति ण्यत् ॥ ३० ॥

वाच्यपरिवर्तनम्--अथ, कुमारी, अङ्गराजात्, चक्षुः, अवतार्य, 'त्वया' यायताम्, इति, जन्या, औच्यत, अनेन, काम्येन, न, 'अभूयत-इति' न, तया, सम्यक्, द्रष्टुं, न, विद्यते, 'इति' न, हि, लोकेन, भिन्नरुचिना, 'भूयते' ॥ ३० ॥

तात्पर्यार्थः--अथेन्दुमती अङ्गनाथान्नयनमपनीय 'गच्छ' इति सुनन्दामब्रवीत्, अस्मा-वङ्गनाथः सर्वगुणसम्पन्नो नासीदिति न किन्त्वासीदेव, सा इन्दुमती सम्यग् द्रष्टुं न वेदेति न किन्तु वेदैव । यस्मात् जनस्य रुचिर्भिन्ना भवति, अत एव सुन्दरमपि किञ्चिद्वस्तु कस्मै-चिद्रोचते, कस्मैचिन्न ॥ ३० ॥

भाषाऽर्थः--इसके बाद इन्दुमती अङ्गराज की तरफ से आंखों को हटाकर 'चलो' ऐसा सुनन्दा से बोली, यह राजा सर्वगुणसंपन्न नहीं था यह बात नहीं, और उसे इन्दुमती देखना नहीं चाही यह बात नहीं, किन्तु जनों की रुचि भिन्न हुआ करती है ॥ ३० ॥

अथ सुनन्दा इन्दुमतीं नृपान्तरं दर्शयामासेत्याह--

> ततः परं दुष्प्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ ।
> निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै ॥ ३१ ॥

सञ्जीविनी--तत इति । ततोऽनन्तरं प्रतिहारभूमौ द्वारदेशे नियुक्ता दौवारिकी, 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । द्विषद्भिः शत्रुभिर्दुष्प्रसहं दुःसहं शूरमित्यर्थः । विशेषेण दृश्यं दर्शनीयं रूपवन्तमित्यर्थः। परमन्यं नृपं नवोत्थानं नवोदयमिन्दुमिव इन्दुमत्यै निदर्शयामास॥३१॥

अन्वयः—ततः, प्रतिहारभूमौ, नियुक्ता, द्विषद्भिः, दुष्प्रसहं, परं, नृपं, विशेषदृश्यं, नवो-त्थानम्, इन्दुम्, इव, इन्दुमत्यै, निदर्शयामास ॥ ३१ ॥

सुधा—ततः=तदनन्तरं, अङ्गनाथानङ्गीकरणानन्तरमिति यावत् । प्रतिहारभूमौ=द्वार देशे, नियुक्ता=आयुक्ता, द्वारपालिनीति यावत् । सुनन्देत्यर्थः । द्विषद्भिः=शत्रुभिः, दुष्प्र-सहं=दुस्सहं, शूरमिति यावत् । परम्=अन्यं, नृपं=राजानं, विशेषदृश्यम्=अधिकदर्शनीयं, सुन्दरमिति यावत् । नवोत्थानं=नवीनोदयम्, इन्दुं=चन्द्रम्, इव=यथा, इन्दुमत्यै=भो-जसुतायै, निदर्शयामास=अदर्शयत् ॥ ३१ ॥

कोशः—'द्वाःस्थद्वारोः प्रतीहारः सायकः शरखड्गयोः' इति शाश्वतः । 'हिमांशुश्चन्द्रमा-श्चन्द्र इन्दुः कुमुदबान्धवः' इति, 'नवीनो नूतनो नवः' इति, 'व वा यथा तथैवैवम्' इति चामरः । 'उत्थानं सैन्ये पौरुषे युधि पुस्तके । उद्यमोद्गमहर्षेषु वास्तवन्तेऽङ्गनचैत्ययोः' इत्य-नेकार्थसंग्रहः ॥ ३१ ॥

समासादि—द्विषन्तीति द्विषन्तस्तैर्द्विषद्भिः । प्रतिहरणं प्रतिहारः, प्रतिहारस्य भूमिरिति प्रतिहारभूमिस्तस्यां प्रतिहारभूमौ ( त० पु० ) द्रष्टुं योग्यं दृश्यं, विशेषेण दृश्यमिति तद् विशेषदृश्यम् । नवमुत्थानं यस्य स नवोत्थानस्तं नवोत्थानम् ॥ ३१ ॥

व्याकरणम्--द्विषद्भिः=द्विष् ( अप्रीतौ ), क्विप्, प्रतिहार=प्रति+हृञ् ( हरणे--ञकारेत् ), घञ्+'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति वा दीर्घः । निदर्शयामास=नि+दृश्+णिच्+लिट् ॥ ३१ ॥

वाच्यपरिवर्तनम्--ततः, प्रतिहारभूमौ, नियुक्तया, द्विषद्भिः, दुष्प्रसहः, परः, नृपः, विशे-

षट्श्यः, नवोत्थानः, इन्दुः, इव, इन्दुमत्यै, निदर्शयाञ्चक्रे ॥ ३१ ॥

तात्पर्यार्थः—ततः द्वारपालिनी सुनन्दा शत्रुभिः दुस्सहं रूपवन्तमन्यं राजानं नवोदयमिन्दुमिवेन्दुमत्यै दर्शयामास ॥ ३१ ॥

भाषाऽर्थः—उसके बाद द्वारदेश में नियुक्त सुनन्दाने शत्रुओं से असह्य और रूपवान अन्य राजा को, नये उदय लिये हुये चन्द्र के तुल्य इन्दुमती को दिखलाया ॥ ३१ ॥

अथअयं सूर्य इव शोभत इत्याह—

**अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।**
**आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ ३२ ॥**

सञ्जीविनी—अवन्तीति। उदग्रबाहुर्दीर्घबाहुर्विशालवक्षास्तनुवृत्तमध्यः कृशवर्तुलमध्योऽयं राजाऽवन्तिनाथोऽवन्तिदेशाधीश्वरः त्वष्ट्रा विश्वकर्मणा, भर्तुस्तेजोवेगमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेनेति शेषः । चक्रभ्रमं चक्राकारं शस्त्रोत्तेजनयन्त्रम्, 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुण्डाख्ये शिल्पियन्त्रके' इति विश्वः । आरोप्य यत्नेनोल्लिखित उष्णतेजाः सूर्य इव विभाति । अत्र मार्कण्डेयः—'विश्वकर्मा त्वनुज्ञातः शाकद्वीपे विवस्वता । भ्रममारोप्य तत्तेजः शातनायोपचक्रमे ॥' इति ॥ ३२ ॥

अन्वयः—उदग्रबाहुः, विशालवक्षाः, तनुवृत्तमध्यः, अयम् , अवन्तिनाथः, त्वष्ट्रा, चक्रभ्रमम् , आरोप्य, यत्नोल्लिखितः, उष्णतेजाः, इव, विभाति ॥ ३२ ॥

सुधा—उदग्रबाहुः = उच्चभुजः, दीर्घबाहुरिति यावत् । विशालवक्षाः = महोरः, तनुवृत्तमध्यः = कृशवर्तुलोऽन्तः, अयम् = एषः, नृप इति यावत् । अवन्तिनाथः = अवन्तिदेशेशः, त्वष्ट्रा = शिल्पिना, विश्वकर्मणेति यावत् । सूर्यस्य तेजोबलमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेनेति शेषः । चक्रभ्रमं = चक्राकारशिल्पियन्त्रं, चक्राकारशस्त्रोत्तेजनयन्त्रमिति यावत् । आरोप्य = (१)स्थापयित्वा, यत्नोल्लिखितः = व्यापारितः, उष्णतेजाः = उष्णधामा, सूर्य इति यावत् । इव, विभाति = शोभते । अत्र मार्कण्डेयः—'विश्वकर्मा त्वनुज्ञातः शाकद्वीपे विवस्वता । भ्रममारोप्य तत्तेजः शातनायोपचक्रमे' इति ॥ ३२ ॥

कोशः—'उच्च प्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इति, 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् । वड्रोरु विपुलम्' इति, 'उरो वत्सं च वक्षश्च' इति चामरः । 'तनुर्वपुस्त्वचोः । विरलेऽल्पे कृश' इति, 'वृत्तं वृत्तौ दृढे मृते । चरित्रे वर्तुले छन्दस्यतीताधीतयोर्वृते' इति, 'मध्यं न्याय्यऽवलग्नेऽन्तः' इति च हैमः । 'चक्रः कोक पुमान् क्लीबे व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तर कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि' इति मेदिनी । 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुण्डाख्ये शिल्पियन्त्रके' इति, 'तेजो धाम्नि पराक्रमे' इति च विश्वः । 'त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी ॥ ३२ ॥

समासादि—अवन्तेर्नाथ इत्यवन्तिनाथः ( त० पु० ) । उदग्रौ बाहू यस्य स उदग्रबाहुः । ( ब० व्री० ) । विशालं वक्षो यस्य स विशालवक्षाः ( ब० व्री० ) । तनुश्च वृत्तश्चेति तनुवृत्तौ ( द्व० ), तनुवृत्तो मध्यं यस्य स तनुवृत्तमध्यः ( ब० व्री० ) । चक्राकारं भ्रममिति चक्रभ्रमम् ( शाकपार्थिवादिः ) । उष्णं तेजो यस्यासावुष्णतेजाः ( ब० व्री० ) । यत्नेनोल्लिखित इति यत्नोल्लिखितः ( त० पु० ) ॥ ३२ ॥

व्याकरणम्—आरोप्य = आ + रुप् + ( विमोहने ), क्त्वा, ल्यप् । त्वष्ट्रा = त्वक्षू ( तनुकरणे—ऊकारेत् ), तृच् । उल्लिखितः = उत् + लिख ( अक्षर विन्यासे ), क्तप्रत्ययः । वि-

(१) पौराणिकी कथा—पुरा किल सूर्यस्य तेजोवेगमसह्यमानया संज्ञानामिकया विश्वकर्मणस्तनयया स्वजनकः प्रार्थितः । प्रार्थितेन तेन सूर्यं शस्त्रोत्तेजनयन्त्रस्योपरि स्थापयित्वा तस्य तेजोवेगः मद्दिष्णुर्विधत्तः, इत्यनुसन्धेया ॥

भाति = वि + भा ( दीप्तौ ), लट्, तिप् ॥ ३२ ॥

वाच्यपरिवर्तनम्--उद्ग्रबाहुना, विशालवक्षसा, तनुवृत्तमध्येन, अनेन, अवन्तिनाथेन, त्वष्ट्रा, चक्रभ्रमम्, आरोप्य, यत्नोल्लिखितेन, उष्णतेजसा, विभाव्यते ॥ ३२ ॥

तात्पर्यार्थः--महाभुजो विशालोरुः कृशवर्तुलमध्योऽयमवन्तिदेशाधिपो विश्वकर्मणा शस्त्रोत्तेजनयन्त्रमारोप्य यत्नोल्लिखितः सूर्य इव शोभते ॥ ३२ ॥

भाषाऽर्थः—बड़े हाथ, तथा चौड़ी छाती और सूक्ष्म तथा गोल कटि वाला यह अवन्तिदेश का राजा, सान पर चढ़ाकर विश्वकर्मा से यत्नपूर्वक उल्लेखित सूर्य की भांति शोभित हो रहा है ॥ ३२ ॥

अथास्याश्वैरुत्थापितानि रजांसि राज्ञां चूडामणीनां तेजोनाशं कुर्वन्तीत्याह--

**अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि ।**
**कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥ ३३ ॥**

सञ्जीविनी-अस्येति । समग्रशक्तेः शक्तित्रयसंपन्नस्यास्यावन्तिनाथस्य प्रयाणेषु जैत्रयात्रास्वग्रेसरैर्वाजिभिरश्वैरुत्थितानि रजांसि सामन्तानां समन्ताद्भवानां राज्ञां ये शिखामणयश्चूडामणयस्तेषां प्रभाप्ररोहास्तमयं तेजोऽङ्कुरनाशं कुर्वन्ति । नाम्नैवास्य शत्रवः पराजीयन्त इति भावः ॥ ३३ ॥

अन्वयः--समग्रशक्तेः, अस्य, प्रयाणेषु, अग्रेसरैः, वाजिभिः, उत्थितानि, रजांसि, सामन्तशिखामणीनां, प्रभाप्ररोहास्तमयं, कुर्वन्ति ॥ ३३ ॥

सुधा—समग्रशक्तेः = प्रभावोत्साहमन्त्रजरूपशक्तित्रयसम्पन्नस्य, अस्य = नृपस्य, अवन्तिनाथस्येति यावत् । प्रयाणेषु = प्रस्थानेषु, जैत्रयात्रास्विति यावत् । अग्रेसरैः = पुरोगामिभिः, वाजिभिः = अश्वैः, उत्थितानि = उत्थापितानि, रजांसि = धूलयः, सामन्तशिखामणीनां = सामन्तचूडारत्नानां, प्रभाप्ररोहास्तमयं = तेजोऽङ्कुरविनाशं, कुर्वन्ति = विदधति॥३३॥

कोशः—'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इति, 'यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः' इति, 'पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः' इति, 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इति चामरः । 'शिखाग्रमात्रे चूडायां केकिचूडाप्रधानयोः' इत्यनेकार्थसंग्रहः । 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः ॥३३॥

समासादि--समग्राः शक्तयो यस्य स समग्रशक्तिस्तस्य समग्रशक्तेः ( ब० व्री० ) । अग्रेसरन्तीत्यग्रेसरास्तैरग्रेसरैः । शिखाया मणय इति शिखामणयः, समन्ताद्भवाः सामन्तास्तेषां शिखामणय इति सामन्तशिखामणयस्तेषां सामन्तशिखामणीनाम् ( त० पु० ) । अयनम् अयः, प्रभायाः प्ररोह इति प्रभाप्ररोहस्तस्य अस्तम् ( अव्ययम् ) अयमिति प्रभाप्ररोहास्तमयम् ( त० पु० ) ॥ ३३ ॥

व्याकरणम्—अग्रेसरैः = अग्रे + सृ ( गतौ ), 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टः । उत्थितानि = उत् + स्था 'गत्यर्थाकर्मक' इत्यादिना क्तः + इत्वम् । कुर्वन्ति = डुकृञ् ( करणे-डु जित् ), लट्, झिः, 'न भकुर्छुराम्' इति न दीर्घः ॥ ३३ ॥

वाच्यपरिवर्तनम्—समग्रशक्तेः, अस्य, प्रयाणेषु, अग्रेसरैः, वाजिभिः, उत्थितैः, रजोभिः, सामन्तशिखामणीनां, प्रभाप्ररोहास्तमयं, क्रियते ॥ ३३ ॥

तात्पर्यार्थः—प्रभावोत्साहमन्त्रजशक्तित्रययुतस्यावन्तिनाथस्य जैत्रयात्रास्वग्रेसरैरश्वैरुत्थापितानि रजांसि सामन्तशिखामणीनां तेजोऽङ्कुरनाशं कुर्वन्ति ॥ ३३ ॥

भाषाऽर्थः—सम्पूर्णशक्तियों से युक्त इस अवन्तिनाथ की यात्रामें आगे चलने वाले अश्वों से उड़ाई गयी धूली, राजाओं की शिखामणियों के तेज के अङ्कुर को नाश करती है ॥ ३३ ॥

अथायमवन्तिनाथः कृष्णपक्षेऽपि चन्द्रिकायुतरात्रीरनुभवतीत्याह—

**असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।**
**तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ ३४ ॥**

सञ्जीविनी—असाविति । असाववन्तिनाथः महाकाले नाम स्थानविशेषः तदेव निकेतनं यस्य तस्य चन्द्रमौलेरीश्वरस्यादूरे समीपे वसन्, अत एव हेतोस्तमिस्रपक्षे कृष्णपक्षेऽपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान्रात्रीर्निर्विशत्यनुभवति किल । नित्यज्योत्स्नाविहारत्वमेतस्यैव नान्यस्येति भावः ॥ ३४ ॥

अन्वयः—असौ, महाकालनिकेतनस्य, चन्द्रमौलेः, अदूरे, वसन्, 'सन्' प्रियाभिः, सह, तमिस्रपक्षे, अपि, ज्योत्स्नावतः, प्रदोषान्, निर्विशति, किल ॥ ३४ ॥

सुधा—असौ = एषः, अवन्तिनाथ इति यावत् । महाकालनिकेतनस्य = महाकालाभिधेयस्थानस्य, महाकालदेशनिवासिन इति यावत् । चन्द्रमौलेः = चन्द्रचूडस्य, शिवस्येति यावत् । अदूरे = समीपे, वसन् = तिष्ठन्, सन्निति शेषः । प्रियाभिः = स्त्रीभिः, सह = समं, तमिस्रपक्षे = तिमिरपक्षे, कृष्णपक्षे इति यावत् । अपि, ज्योत्स्नावतः = चन्द्रिकावतः, प्रदोषान् = रात्रीः, निर्विशति = अनुभवति, किल । नित्यचन्द्रिकाविहारत्वमेतस्यैव नान्यस्येति भावः ॥३४॥

कोशः—'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्द्धसु' इत्यनेकार्थसंग्रहः । 'तमिस्रं तिमिरं कोपे स्त्री तु तमस्ततमौ । कृष्णपक्षनिशायाञ्च' इति विश्वः । 'साकं सत्रा समं सह' इति, 'चन्द्रिका कौमुदी ज्योत्स्ना' इति चामरः ॥ ३४ ॥

समासादि—महाकाले निकेतनं यस्य स महाकालनिकेतनस्तस्य महाकालनिकेतनस्य ( ब० व्री० ) । न दूरमित्यदूरन्तस्मिन्नदूरे । चन्द्रो मौलौ यस्य स चन्द्रमौलिस्तस्य चन्द्रमौलेः ( ब० व्री ) । तमिस्राऽस्त्यस्येति तमिस्रः, तमिस्रश्चासौ पक्ष इति तमिस्रपक्षस्तस्मिन् तमिस्रपक्षे ( क० धा० ) । ज्योतिरस्त्यस्यामिति ज्योत्स्ना, ज्योत्स्नाऽस्त्येषान्ते ज्योत्स्नावन्तस्तान् ज्योत्स्नावतः ॥ ३४ ॥

व्याकरणम्—वसन् = वस ( निवासे ), शतृ । तमिस्र = 'अर्श आदिभ्योऽच्' इत्यच् । ज्योत्स्नावतः = तत्र ज्योत्स्नाशब्दः 'ज्योत्स्नातमिस्रा' इत्यादिना निपातनात् साधुः, निपातनं च-ज्योतिष उपधालोपो नश्च प्रत्ययः, तस्मान्मतुप् + वत्वम् । निर्विशति = निर् + विश ( प्रवेशने ), लट् , तिप् ॥ ३४ ॥

वाच्यपरिवर्तनम्—अनेन, महाकालनिकेतनस्य, चन्द्रमौलेः, अदूरे, वसता, 'सता' प्रियाभिः, सह, तमिस्रपक्षे, अपि, ज्योत्स्नावन्तः, प्रदोषाः, निर्विश्यन्ते, किल ॥ ३४ ॥

तात्पर्यार्थः—एषोऽवन्तिनाथो महाकालाख्यदेशनिवासिनः शङ्करस्य समीपे वसति, अत एव कृष्णपक्षेऽपि प्रियाभिः समं चन्द्रिकावतीः रात्रीरनुभवति ॥ ३४ ॥

भाषाऽर्थः—यह अवंतिनाथ, महाकाल देश में बसने वाले शंकर के समीप स्त्री के साथ बसता हुआ कृष्णपक्ष में भी चांदनी युत रात्रि के सुख को अनुभव करता है ॥ ३४ ॥

अथानेन सह विवाहे उपवनपंक्तिषु विहरिष्यसीत्याह—

**अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।**
**सिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥ ३५ ॥**

सञ्जीविनी—अनेनेति । रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूस्तस्याः सम्बोधने हे रम्भोरु !, "ऊरूत्तरपदादौपम्ये" इत्यूङ्प्रत्ययः । नदीत्वाद्ध्रस्वः, यूनानेन पार्थिवेन सह सिप्रा नाम तत्रत्या नदी तस्यास्तरङ्गाणामनिलेन कम्पितासूद्यानानां परम्परासु पङ्क्तिषु विहर्तुं ते तव मनसो रुचिः कच्चित् ? स्पृहाऽस्ति किमित्यर्थः । 'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः ॥ ३५ ॥

अन्वयः--हे रम्भोरु !, यूना, अनेन, पार्थिवेन, सह, सिप्रातरङ्गानिलकम्पितासु, उद्यानपरम्परासु, विहर्तुं, ते, मनसः, रुचिः, 'अस्ति' कच्चित् ? ॥ ३५ ॥

सुधा--हे रम्भोरु ! = हे कदलीस्तम्भवत्सक्थि !, यूना = तरुणेन, अनेन = अमुना, अवन्तिनाथेनेति यावत्। पार्थिवेन = राज्ञा, सह = साकं, सिप्रातरङ्गानिलकम्पितासु = सिप्राख्यनदीर्मिपवनप्रेरितासु, उद्यानपरम्परासु = आक्रीडपङ्क्तिषु, विहर्तुं = क्रीडितुं, ते = तव, इन्दुमत्या इति यावत्। मनसः = चित्तस्य, रुचिः = स्पृहा, अस्तीति शेषः। कच्चित् ? = किम् ? ॥ ३५ ॥

कोश–'वयस्थस्तरुणो युवा' इत्यमरः। 'रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे' इति मेदिनी। 'कच्चित् कामप्रवेदने' इति, 'पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्' इति, 'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इति चामरः। 'सिप्रा नद्याम्' इत्यनेकार्थसंग्रहः। 'गन्धवाहानिलाशुगाः। समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः ॥ ३५ ॥

समासादि--रम्भे इवोरू यस्याः सा रम्भोरुस्तत्सम्बुद्धौ हे रम्भोरु ! ( ब० व्री० )। सिप्रायास्तरङ्गास्तेषामनिल इति सिप्रातरङ्गानिलस्तेन कम्पितास्तासु सिप्रातरङ्गानिलकम्पितासु ( त० पु० )। उद्यात्यस्मिन्नित्युद्यानम् उद्यानानां परम्परा इत्युद्यानपरम्परास्तासूद्यानपरम्परासु ( त० पु० ) ॥ ३५ ॥

व्याकरणम्-पार्थिवेन = पृथिवी + अण्। कम्पितासु = कपि ( चलने--इकारेत् ), नुम् + क्तः + इट् + टाप्। विहर्तुं = वि + हृञ् ( हरणे-ञकारेत् ), तुमुन्। उद्यान = उत् + या ( प्रापणे ), 'करणाधिकरणयोश्च' इति ल्युट् ॥ ३५ ॥

वाच्यपरिवर्तनम्--हे रम्भोरु !, यूना, अनेन, पार्थिवेन, सह, सिप्रातरङ्गानिलकम्पितासु' उद्यानपरम्परासु, विहर्तुं, ते मनसः, रुच्या, 'भूयते' कच्चित् ? ॥ ३५ ॥

तात्पर्यार्थः--हे रम्भोरु ! यदि त्वमनेन यूना पार्थिवेन सह विवाहं करिष्यसि, तर्हि सिप्रानदीतरङ्गपवनकम्पितासूद्यानपङ्क्तिषु विहरिष्यसि ॥ ३५ ॥

भाषाऽर्थः--हे केले के तुल्य जंघाओं वाली ! इस नवयुवक राजा के साथ सिप्रा नदी की तरङ्गों की हवा से हिलाये गये उद्यान की परम्परा में विहार करने की तेरी मनोऽभिलाषा है क्या ? ॥ ३५ ॥

अथेन्दुमती नाङ्गनाथेऽनुरागं कृतवतीत्याह—

**तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।**
**बबन्ध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव भावम् ॥ ३६ ॥**

सञ्जीविनी--तस्मिन्निति। उत्तमसौकुमार्योत्कृष्टाङ्गमार्दवा सेन्दुमती अभिद्योतितान्युल्लसितानि बन्धव एव पद्मानि येन तस्मिन्, प्रतापेन तेजसा संशोषिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन्नवन्तिनाथे कुमुद्वती, "कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुप्प्रत्ययः। भानुमत्यंशुमतीव भावं चित्तं न बबन्ध, न तत्रानुरागमकरोदित्यर्थः। बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च निरूपणं राज्ञः सूर्यसाम्यार्थम् ॥ ३६ ॥

अन्वयः--उत्तमसौकुमार्या, सा, अभिद्योतितबन्धुपद्मे, प्रतापसंशोषितशत्रुपङ्के, तस्मिन्, कुमुद्वती, भानुमति, इव, भावं, न, बबन्ध ॥ ३६ ॥

सुधा--उत्तमसौकुमार्या = उत्कृष्टाङ्गमार्दवा, अधिकसुकुमाराङ्गीति यावत्। सा = पूर्वोक्ता, इन्दुमतीति यावत्। अभिद्योतितबन्धुपद्मे = उल्लसितबान्धवरूपारविन्दे, प्रतापसंशोषितशत्रुपङ्के = तेजोनीरसीकृतवैरिरूपकर्दमे, तस्मिन् = पूर्वोक्ते, अवन्तिनाथ इति यावत्। कुमुद्वती = कुमुदिनी, इव = यथा, भानुमति = अंशुमति, सूर्ये इति यावत्। भावम् = अभिप्रायं, चित्तमिति यावत्। न बबन्ध = न बध्नात्, अवन्तिनाथे नानुरागं कृतवतीत्यर्थः ॥ ३६ ॥

कोशः--'बन्धुर्भ्रातृबान्धवयोः' इत्यनेकार्थसंग्रहः। 'वा पुंसि पद्मं नलिनमरविन्दं महो-

त्पलम्' इति, 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इति चामरः। 'पङ्कोऽस्त्री कर्दमे पापे' इति मेदिनी। 'अथ कुमुद्वती कुमुदिन्याम्' इत्यमरः। 'भानुरंशौ रवौ दिने' इत्यनेकार्थसंग्रहः। 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु' इति मेदिनी ॥ ३६ ॥

समासादि--सुकुमारस्य भावः सौकुमार्यम्, उत्तमं सौकुमार्यं यस्याः सा उत्तमसौकुमार्या ( ब० व्री० )। बन्धव एव पद्मानीति बन्धुपद्मानि (क० धा०), अभिद्योतितानि बन्धुपद्मानि येन स अभिद्योतितबन्धुपद्मस्तस्मिन्नभिद्योतितबन्धुपद्मे (ब० व्री०)। शत्रव एव पङ्का इति शत्रुपङ्काः ( क० धा०), प्रतापेन संशोषिताः शत्रुपङ्का येन सः प्रतापसंशोषितशत्रुपङ्कस्तस्मिन् प्रतापसंशोषितशत्रुपङ्के ( ब० व्री )॥ ३६ ॥

व्याकरणम्--अभिद्योतित = अभि + द्युत ( दीप्तौ ), क्तः। संशोषित = सम् + शुष (शोषणे), क्तः। बबन्ध = बन्ध (बन्धने), लिट्, तिप्, 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप् + वत्वम् ॥ ३६ ॥

वाच्यपरिवर्तनम्--उत्तमसौकुमार्यया, तया, अभिद्योतितबन्धुपद्मे, प्रतापसंशोषितशत्रुपङ्के, तस्मिन्, कुमुद्वत्या, भानुमति, इव, भावः, न, बबन्धे ॥ ३६ ॥

तात्पर्यार्थः-यथा कुमुद्वती भानुमति ( सूर्ये ) भावं ( चित्तं ) न बध्नाति, तथैव अधिक सुकुमाराङ्गी सा इन्दुमती उल्लसितबन्धुरूपपद्मे तेजःसंशोषितशत्रुरूपकर्दमेऽवन्तिनाथे चित्तं न बबन्ध ॥ ३६ ॥

भाषाऽर्थः--उस उत्तम सुकुमारी ( इंदुमती ) ने, बन्धुरूपी पद्म को खिलाने वाले और प्रताप से शत्रुरूपी कीचड़ को सुखाने वाले इस ( अवंतिनाथ ) राजा में, सूर्य में कुमुदिनी की भांति चित्त को न लगाया ॥ ३६ ॥

अथ सुनन्दाऽनूपराजस्य समीपे इन्दुमतीं विधाय तामुवाचेत्याह—

**तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम्।**
**विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥ ३७ ॥**

सञ्जीविनी--तामिति। सुनन्दा तामरसान्तराभां पद्मोदरतुल्यकान्तिं कनकगौरीमित्यर्थः। गुणैरनूनाम् अधिकामित्यर्थः। शोभना दन्ता यस्याः सा सुदती, "वयसि दन्तस्य दतृ" इति दत्रादेशः, "उगितश्च" इति ङीप्। तां प्रकृतां प्रसिद्धां वा विधातुर्ललितां सृष्टिं मधुरनिर्माणां स्त्रियमित्यर्थः। अनुगता आपो येषु तेऽनूपा नाम देशाः, "ऋक्पूरब्धूःपथामानक्षे" इत्यप्रत्ययः समासान्तः, "ऊदनोर्देशे" इत्यूदादेशः। तेषां राज्ञोऽनूपराजस्याग्रतो विधाय व्यवस्थाप्य भूयः पुनर्जगाद ॥ ३७ ॥

अन्वयः--सुनन्दा, तामरसान्तराभां, गुणैः, अनूनां, विधातुः, ललितां, सृष्टिं, सुदतीं, ताम्, अनूपराजस्य, अग्रतः, विधाय, भूयः, जगाद ॥ ३७ ॥

सुधा--सुनन्दा = द्वारपालिका, इन्दुमतीसहचारिणीति यावत्। तामरसान्तराभां = पद्ममध्यद्युतिं, कमलोदरतुल्यकान्तिमिति यावत्। गुणैः = रूपादिभिः, अनूनाम् = अधिकां, विधातुः = ब्रह्मणः, ललितां = मनोरमां, सृष्टिं = निर्माणां, रचनामिति यावत्। सुदतीं = सुदर्शनां, तां = पूर्वोक्ताम्, इन्दुमतीमिति यावत्। अनूपराजस्य = अनूपाख्यदेशपतेः, अग्रतः = पुरस्तात्, समीप इति यावत्। विधाय = कृत्वा, नीत्वेति यावत्। भूयः = पुनः, जगाद = उवाच ॥ ३७ ॥

कोशः--'अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी। 'पङ्केरुहं तामरसं सारसं सरसीरुहम्' इत्यमरः। 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागे शौर्यादिसन्ध्यादि-

सत्वाद्यावृत्तिरज्जुपु' इति मेदिनी ॥ ३७ ॥

समासादि—तामरसस्य अन्त इति तामरसान्तः ( त० पु० ), तस्य आभा इव आभा यस्याः सा तां, तामरसान्तराभाम् ( ब० व्री० ) । अनुगता आपो येपु तेऽनूपाः, अनूपानां राजेत्यनूपराजस्तस्य अनूपराजस्य (त० पु०) । शोभना दन्ता यस्याः सा सुदती तां सुदतीम् ( ब० व्री ) ॥ ३७ ॥

व्याकरणम्—विधाय = वि + डुधाञ् ( धारणपोषणयोः—डुञित् ), ल्यप् । सृष्टि = सृज् + क्तिन् । विधातुः = वि + धा + तृच । जगाद = गद ( व्यक्तायां वाचि ), लिट्, तिप् । सुदतीं = सु + दन्ता 'वयसि दन्तस्य दतृ' इति दत्रादेशः, 'उगितश्च' इति ङीप् ॥ ३७ ॥

वाच्यपरिवर्तनम्—सुनन्दया, तामरसान्तराभा, गुणैः, अनूना, विधातुः, ललिता, सृष्टिः, सुदती, सा, अनूपराजस्य, अग्रतः, विधाय, भूयः, जगदे ॥ ३७ ॥

तात्पर्यार्थः—सुनन्दा कमलोदरतुल्यकान्तिं गुणैरधिकां ब्रह्मणो रमणीयां निर्माणां सुदतीं तामिन्दुमतीं अनूपराजस्य अग्रतो विधाय पुनरुवाच ॥ ३७ ॥

भाषाऽर्थः—सुनन्दा, कमल के उदर तुल्य कान्ति वाली गुणों में अधिक ( और ) सुन्दर दांतो वाली ब्रह्मा की सुन्दर--रचना रूप उस इन्दुमती को अनूपराजा के आगे ले जाकर ( उससे ) फिर बोली ॥ ३७ ॥

अथ कार्तवीर्यस्य प्रशंसामाह--

**सङ्ग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।**

**अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥ ३८ ॥**

सञ्जीविनी--सङ्ग्रामेति । सङ्ग्रामेषु युद्धेषु निर्विष्टा अनुभूताः सहस्रं बाहवो यस्य स तथोक्तः, युद्धादन्यत्र द्विभुज एव दृश्यत इत्यर्थः । अष्टादशसु द्वीपेषु निखाता स्थापिता यूपा येन स तथोक्तः, सर्वक्रतुयाजी सार्वभौमश्चेति भावः । जरायुजादिसर्वभूतरञ्जनादनन्यसाधारणो राजशब्दो यस्य स तथोक्तः, योगी ब्रह्मविदित्यर्थः । स किल भगवतो दत्तात्रेयाल्लब्धयोग इति प्रसिद्धिः । कृतवीर्यस्यापत्यं पुमान्कार्तवीर्यो नाम राजा बभूव किलेति । अयं चास्य महिमा सर्वोऽपि दत्तात्रेयवरप्रसादलब्ध इति भारते दृश्यते ॥ ३८ ॥

अन्वयः--संग्रामनिर्विष्टसहस्रबाहुः, अष्टादशद्वीपनिखातयूपः, अनन्यसाधारणराजशब्दः, योगी, कार्तवीर्यः, बभूव, किल ॥ ३८ ॥

सुधा--संग्रामनिर्विष्टसहस्रबाहुः = आहवानुभूतसहस्रभुजः, युद्धे प्राप्तसहस्रबाहुरिति यावत् । जनैर्युद्धादन्यत्रायं द्विभुज एवावलोक्यते । अष्टादशद्वीपनिखातयूपः = अष्टादशान्तरीपप्रतिष्ठापितयज्ञस्तम्भः, अनन्यसाधारणराजशब्दः = प्रजादीनां रञ्जनादन्यनृपाप्राप्यराजाक्षरः, योगी = (१)लब्धयोगः, ब्रह्मविदिति यावत् । कार्तवीर्यः = कार्तवीर्यनामको भूपः, बभूव = अभूत्, किल । 'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः' इति श्रीमद्भगवद्गीता ॥ ३८ ॥

कोशः--'अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः' इति, 'द्वीपो स्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' इति चामरः । 'शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ' इति, 'योगो विस्रब्धघातिनि । अलब्धलाभे सङ्गत्यां कार्मणध्यानयुक्तिषु' इति चानेकार्थसंग्रहः ॥ ३८ ॥

समासादि—संग्रामेषु निर्विष्टाः सहस्रं बाहवो येन स संग्रामनिर्विष्टसहस्रबाहुः ( ब० व्री० ) । अष्टादशाश्च ते द्वीपा इत्यष्टादशद्वीपाः ( क० धा० ), अष्टादशद्वीपेषु निखाता यूपा येन स अष्टादशद्वीपनिखातयूपः ( ब० व्री० ) । अन्येषां साधारण इत्यन्यसाधारणः, न अन्यसाधारण इत्यनन्यसाधारणः, अनन्यसाधारणो राजशब्दो यस्य स अनन्यसाधारणराज-

( १ ) पुरा किल कार्तवीर्यो भगवतो दत्तात्रेयवरप्रसादाद् योगो लब्ध इत्यादि भारतेऽनुसन्धेयम् ॥

शब्दः ( ब० व्री० )। कृतवीर्यस्यापत्यं पुमान् कार्तवीर्यः ॥ ३८ ॥

व्याकरणम्—निर्विष्ट = निर् + विश् + क्तः । निखात = नि + खनु ( अवदारणे—उकारेत् ), क्तः + 'जनसनखनां सञ्झलोः' इत्यनेन आत्वम् । योगी = युजिर् ( योगे—इरित् ), घिनुण् । कार्तवीर्यः = कृतवीर्य + अण् ॥ ३८ ॥

वाच्यपरिवर्तनम्—संग्रामनिर्विष्टसहस्रबाहुना, अष्टादशद्वीपनिखातयूपेन, अनन्यसाधारणराजशब्देन, योगिना, कार्तवीर्येण, बभूवे, किल ॥ ३८ ॥

तात्पर्यार्थः—युद्धे प्राप्तसहस्रबाहुरष्टादशद्वीपेषु प्रतिष्ठापितयज्ञस्तम्भः जनादिरजनादन्यत्रप्राप्यराजशब्दो ब्रह्मविद् कार्तवीर्यनामको भूपो बभूव ॥ ३८ ॥

भाषाऽर्थः—युद्ध में हजारों भुजाओं को प्राप्त करने और अठारहों द्वीपों में यज्ञयूप को गाड़ने वाला दूसरों से नहीं पाने योग्य राजशब्द को प्राप्त करने वाला योगी—कार्तवीर्य नाम का राजा हुआ ॥ ३८ ॥

अथायं कार्तवीर्यः प्रजानामन्तःकरणेष्वप्यपराधं निवारयामासेत्याह—

**अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात् ।**
**अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥**

सञ्जीविनी—अकार्येति । विनेता शिक्षको यः कार्तवीर्यः अकार्यस्यासत्कार्यस्य चिन्तायाः अहं चौर्यादिकं करिष्यामीति बुद्ध्या समकालमेककालमेव यथा तथा पुरस्तादग्रे चापधरः प्रादुर्भवन्सन् प्रजानां जनानाम्, 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । अन्तःशरीरेष्वन्तःकरणेषु शरीरशब्देनेन्द्रियं लक्ष्यते, अविनयमपि प्रत्यादिदेश मानसापराधमपि निवारयामासेत्यर्थः । अन्ये तु वाक्कायापराधमात्रप्रतिकर्तार इति भावः ॥ ३९ ॥

अन्वयः—विनेता, यः, अकार्यचिन्तासमकालम्, एव, पुरस्तात्, चापधरः, प्रादुर्भवन्, 'सन्' प्रजानाम्, अन्तःशरीरेषु, अपि, अविनयं, प्रत्यादिदेश ॥ ३९ ॥

सुधा—विनेता = शिक्षकः, शासक इति यावत् । यः = कार्तवीर्यः, अकार्यचिन्तासमकालम् = असत्कार्यस्मृतिक्षणम्, एव, चापधरः = धनुर्धरः, सन्निति शेषः । पुरस्तात् = अग्रे, प्रादुर्भवन् = प्रकटयन्, प्रजानां = जनानाम्, अन्तःशरीरेषु = अन्तःकरणेषु, अपि, अविनयं = मानसापराधं, प्रत्यादिदेश = निवारयामास ॥ ३९ ॥

कोशः—'स्याच्चिन्तास्मृतिराध्यानम्' इति, 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति, 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति, 'प्रजा स्यात्सन्ततौ जने' इति चामरः ॥३९॥

समासादि—अकार्यस्य चिन्तेत्यकार्यचिन्ता, तस्याः समकालमित्यकार्यचिन्तासमकालम् (त० पु०) । प्रादुर्भवतीति प्रादुर्भवन् । धरतीति धरः, चापस्य धर इति चापधरः(त०पु०)॥३९॥

व्याकरणम्—चिन्ता = चिति ( स्मृत्याम्–इदित् ), 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यनेनाङ् + टाप् । प्रादुर्भवन् = प्रादुर् + भू + शतृ । चापधरः = चाप + धृञ् ( धारणे–ञकारेत् ), पचाद्यच् । प्रत्यादिदेश = प्रति + आ + दिश ( अतिसर्जने ), लिट् ॥ ३९ ॥

वाच्यपरिवर्तनम्—विनेत्रा, येन, अकार्यचिन्तासमकालम्, एव, पुरस्तात्, चापधरेण, प्रादुर्भवता, 'सता' प्रजानाम्, अन्तःशरीरेषु, अपि, अविनयः, प्रत्यादिदिशे ॥ ३९ ॥

तात्पर्यार्थः—शासकः स कार्तवीर्यः यदा कश्चित् 'चौर्यादिकमहंकरिष्यामि'इत्याद्यसत्कार्यस्य स्मृतिमकरोत्, तत्क्षणमेव धनुर्धरः सन् अग्रे प्रकटयन् जनानामन्तःकरणेष्वपि अपराधं निवारयामास ॥ ३९ ॥

भाषाऽर्थः—शासक कार्तवीर्य ने असत्कार्य की चिन्ता करते ही धनुष धारण कर आगे प्रगट होते हुये जनों के अन्तःकरण से भी अन्याय को हटा दिया ॥ ३९ ॥

अथ कार्तवीर्यस्य कारागारे रावणोऽपि निवासमकरोदित्याह--

**ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।**
**कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात् ॥ ४० ॥**

सञ्जीविनी-ज्याबन्धेति । ज्याया मौर्व्या बन्धेन बन्धनेन निष्पन्दा निश्चेष्टा भुजा यस्य तेन, विनिःश्वसन्ती ज्याबन्धोपरोधाद्दीर्घं विनिःश्वसन्ती वक्त्रपरम्परा दशमुखी यस्य तेन, निर्जितवासवेनेन्द्रविजयिना, अत्रेन्द्रादयोऽप्यनेन जितप्राया एवेति भावः। लङ्केश्वरेण दशास्येन यस्य कार्तवीर्यस्य कारागृहे बन्धनागारे, 'कारा स्याद्बन्धनालये' इत्यमरः । आ प्रसादादनुग्रहपर्यन्तमुषितं स्थितम्, "नपुंसके भावे क्तः" एतत्प्रसाद एव तस्य मोक्षोपायो न तु क्षात्रमिति भावः ॥ ४० ॥

अन्वयः--ज्याबन्धनिष्पन्दभुजेन, विनिःश्वसद्वक्त्रपरम्परेण, निर्जितवासवेन, लङ्केश्वरेण, यस्य, कारागृहे, आप्रसादात्, उषितम् ॥ ४० ॥

सुधा--ज्याबन्धनिष्पन्दभुजेन = मौर्वीबन्धननिश्चेष्टबाहुना, विनिःश्वसद्वक्त्रपरम्परेण = विनिःश्वसन्मुखपङ्क्तिना, निर्जितवासवेन = पराजितेन्द्रेण, इन्द्रविजयिनेति यावत् । लङ्केश्वरेण = लङ्कास्वामिना, रावणेनेति यावत् । यस्य = कार्तवीर्यस्य, कारागृहे, = (१) बन्धनागारे, आप्रसादात् = आऽनुग्रहात्, प्रसादपर्यन्तमिति यावत् । उषितं = स्थितम् ॥ ४० ॥

कोशः-'मौर्वी ज्या शिञ्जिनी गुणाः' इति, 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति चामरः । 'कारा दूत्यां प्रसेवके । बन्धने बन्धनागारे हेमकारिकयोरपि' इति विश्वः । 'प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु । काव्यगुणे' इत्यनेकार्थसंग्रहः ॥ ४० ॥

समासादि--ज्याया बन्ध इति ज्याबन्धः ( त० पु० ), ज्याबन्धेन निष्पन्दा भुजा यस्य स ज्याबन्धनिष्पन्दभुजस्तेन ज्याबन्धनिष्पन्दभुजेन ( ब० व्री० ) । वक्त्राणाम्परम्परेति वक्त्रपरम्परा (त० पु०), विनिःश्वसन्ती वक्त्रपरम्परा यस्य स विनिःश्वसद्वक्त्रपरम्परस्तेन विनिःश्वसद्वक्त्रपरम्परेण ( ब० व्री० ) । काराया गृहमिति कारागृहन्तस्मिन् कारागृहे ( त० पु० ) । निर्जितो वासवो येन स निर्जितवासवस्तेन निर्जितवासवेन (ब० व्री०) । लङ्काया ईश्वर इति लङ्केश्वरस्तेन लङ्केश्वरेण ( त० पु० ) ॥ ४० ॥

व्याकरणम्--निर्जित = निर् + जि ( जये ), क्तः । उषितं = वस (निवासे), क्तः + सम्प्रसारणं च ॥ ४० ॥

वाच्यपरिवर्तनम्--ज्याबन्धनिष्पन्दभुजः, विनिःश्वसद्वक्त्रपरम्परः, निर्जितवासवः, लङ्केश्वरः, यस्य, कारागृहे, आप्रसादात्, उषितवान् ॥ ४० ॥

तात्पर्यार्थः--यस्य बन्धनागारे ज्याबन्धनिष्पन्दभुजः विनिःश्वसन्मुखपंक्तिरिन्द्रविजयी रावणोऽपि, अनुग्रहपर्यन्तं निवासमकरोत् ॥ ४० ॥

भाषाऽर्थः--प्रत्यञ्चा के बन्धन से रुकी हुई भुजा तथा श्वास लेते हुये मुखों की पंक्ति वाले और इन्द्रके जीतने वाले रावण ने, जिस ( कार्तवीर्य ) के जेल खाने में उसके अनुग्रह-पर्यन्त निवास किया ॥ ४० ॥

अथ कार्तवीर्यस्य वंशे प्रतीपनामा भूपो जात इत्याह--

**तस्यान्वये भूपतिरेष जातः प्रतीप इत्यागमवृद्धसेवी ।**
**येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१ ॥**

---

( १ ) पौराणकी कथा—पुरा किल कीसखः स्वबलावरुद्ध नर्मदा—सूतास जलक्रीडानरतः कार्तवीर्यः दिग्विजयनिर्गतेन रावणेनाभियुक्तः सन् जितेन्द्रं तं जित्वा ज्याबन्धेन बद्ध्वा च बन्धनागारे निचिक्षेप, रावणश्च तस्य आप्रसादात् तत्रोषितवानिति ॥

सञ्जीविनी--तस्येति । आगमवृद्धसेवी श्रुतवृद्धसेवी प्रतीप इति ख्यात इति शेषः । एषः भूपतिस्तस्य कार्तवीर्यस्यान्वये वंशे जातः । येन प्रतीपेन संश्रयस्याश्रयस्य पुंसो दोषैर्व्यसनादिभी रूढमुत्पन्नं श्रियः सम्बन्धि स्वभावलोला प्रकृतिचञ्चलेत्येवंरूपमयशो दुष्कीर्तिः प्रमृष्टं निरस्तम् । दुष्टाश्रयत्यागशीलायाः श्रियः प्रकृतिचापलप्रवादो मूढजनपरिकल्पित इत्यर्थः । अयं तु दोषराहित्यान्न कदाचिदपि श्रिया त्यज्यत इति भावः ॥ ४१ ॥

अन्वयः--आगमवृद्धसेवी, प्रतीपः, इति, एषः, भूपतिः, तस्य, अन्वये, जातः, येन, संश्रयदोषरूढं, श्रियः, स्वभावलोला, इति, अयशः, प्रमृष्टम् ॥ ४१ ॥

सुधा--आगमवृद्धसेवी = शास्त्रस्थविरसेवकः, प्रतीपः = प्रतीपाख्यः, इति, प्रसिद्ध इति शेषः । एषः = अयं, भूपतिः = राजा, तस्य = पूर्वोक्तस्य, कार्तवीर्यस्येति यावत् । अन्वये-वंशे, जातः = उत्पन्नः, अस्तीति शेषः । येन = प्रतीपेन, संश्रयदोषरूढम् = आश्रयव्यसनाद्युत्पन्नं, श्रियः = लक्ष्म्याः, स्वभावलोला = प्रकृतिचञ्चला, इति = इत्थम्, अयशः = अपयशः, प्रमृष्टं = निरस्तं, दूरीकृतमिति यावत् । दोषरहितोऽयं कदाचिदपि लक्ष्म्या न त्यज्यत इत्याशयः ॥ ४१ ॥

कोशः— 'आगमं त्वागतौ शास्त्रे' इति, 'वृद्धः प्राज्ञे स्थविरे च' इति च हैमः । 'संसिद्धिप्रकृती त्विमे । स्वरूपञ्च स्वभावश्च निसर्गश्च' इति, 'चलनं कम्पनं कंप्रं चलं लोलं चलाचलम्' इति चामरः । ॥ ४१ ॥

समासादि— भुवः पतिर्भूपतिः । आगमश्च वृद्धश्चेत्यागमवृद्धौ ( द्व० ), तयोः सेवा विद्यते ऽस्येत्यागमवृद्धसेवी । संश्रयस्य दोषा इति संश्रयदोषास्तैं रूढमिति संश्रयदोषरूढम् ( त० पु० ) । स्वभावेन लोलेति स्वभावलोला ॥ ४१ ॥

व्याकरणम्— जातः = जनी ( प्रादुर्भावे-इकारेत् ), क्तः + आत्वम् । संश्रयं = सम् + श्रिञ् ( सेवायाम्-ञकारेत् ) अच् । रूढं = रुह ( बीजजन्मनि प्रादुर्भावे च ), क्तः । प्रमृष्टं = प्र + मृज ( शुद्धौ-ऊकारेत् ), क्तः + षत्वं + ष्टुत्वम् ॥ ४१ ॥

वाच्यपरिवर्तनम्— आगमवृद्धसेविना, प्रतीपः, इति, अनेन, भूपतिना, जातेन, 'भूयते' यः, संश्रयदोषरूढं, श्रियः, स्वभावलोला, इति, अयशः, प्रमृष्टवान् ॥ ४१ ॥

तात्पर्यार्थः-- तस्य कार्तवीर्यस्य वंशे शास्त्रवृद्धसेवी 'प्रतीपः' इति ख्यातनामा एषो भूप उत्पन्नः, अनेन व्यसनाद्युत्पन्नं लक्ष्म्याः स्वभावचञ्चला इत्यपयशः दूरीकृतम् ॥ ४१ ॥

भाषाऽर्थः--शास्त्र और वृद्धों की सेवा करने वाला प्रतीप नाम का यह राजा, उस कार्तवीर्य के कुल में उत्पन्न हुआ है, जिसने संगों के दोषों से उत्पन्न होने वाले लक्ष्मी के स्वाभाविक चंचलपन रूप अपयश को दूर किया ॥ ४१ ॥

अथायं प्रतीपः परशुरामस्य परशोः धारां कमलदलतुल्यां मन्यत इत्याह--

**आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।**
**धारां शितां रामपरश्वधस्य संभावयत्युत्पलपत्रसाराम् ॥ ४२ ॥**

सञ्जीविनी—आयोधन इति । यः प्रतीप आयोधने युद्धे कृष्णगतिं कृष्णवर्त्मानमग्निं सहायमवाप्य क्षत्रियाणां कालरात्रिं संहाररात्रिमित्यर्थः । रामपरश्वधस्य जामदग्न्यपरशोः, 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः । शितां तीक्ष्णां धारां मुखम्, 'खड्गादीनां च निशितमुखं धारा प्रकीर्तिताः' इति विश्वः । उत्पलपत्रस्य सार इव सारो यस्यास्तां तथाभूतां संभावयति मन्यते । एतन्नगरजिगीषयाऽऽगतान्रिपूंस्स्वयमेव धक्ष्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा, दह्यन्ते च तथागताः शत्रव इति भारते कथाऽनुसंधेया ॥ ४२ ॥

अन्वयः— यः, आयोधने, कृष्णगतिं, सहायम्, अवाप्य, क्षत्रियकालरात्रिं, रामपरश्वधस्य, शितां, धाराम्, उत्पलपत्रसारां, सम्भावयति ॥ ४२ ॥

सुधा—यः = प्रतीपः, आयोधने = युद्धे, कृष्णगतिं = कृष्णवर्त्मानम्, अग्निमिति यावत् । (१)सहायम् = अनुसरम्, अनुकूलमित्यर्थः । अवाप्य = प्राप्य, क्षत्रियकालरात्रिं = बाहुजमरणनिशां, क्षत्रियसंहारकारिणींरात्रिमिति यावत्। रामपरश्वधस्य = जामदग्न्यपरशोः, परशुरामकुठारस्येति यावत् । शितां = तीक्ष्णां, धारां = मुखम्, उत्पलपत्रसारां = कमलदलतुल्यां, सम्भावयति = मन्यते ॥ ४२ ॥

कोशः— 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इति, 'अनुप्लवः सहायश्चानुचरोऽभिचरः समाः' इति, 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इति चामरः । 'कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः । मरणाऽनेहसोः' इत्यनेकार्थसंग्रहः । 'खड्गादीनां च निशितमुखे धारा प्रकीर्तिता' इति विश्वः । 'द्वयोःकुठारः स्वधितिः परशुश्च परश्वधः' इति, 'सारो बले स्थिरांशे च' इति चामरः ॥ ४२ ॥

समासादि—कृष्णः (धूमो) गतिर्यस्य स कृष्णगतिस्तं कृष्णगतिम् (ब०व्री०) । कालस्य रात्रिरिति कालरात्रिः, क्षत्रियाणां कालरात्रिरिति क्षत्रियकालरात्रिस्तां क्षत्रियकालरात्रिम् (त०पु०) । रामस्य परश्वध इति रामपरश्वधस्तस्य रामपरश्वधस्य (त०पु०) । उत्पलस्य पत्रमित्युत्पलपत्रं (त०पु०), उत्पलपत्रस्य सार इव सारो यस्याः सा उत्पलपत्रसारा तामुत्पलपत्रसाराम् (ब०व्री०) ॥ ४२ ॥

व्याकरणम्—गतिं = गम्लृ (गतौ—लृदित्), क्तिन् । अवाप्य = अव + आप्लृ (व्याप्तौ—लृकारेत्), ल्यप् । सम्भावयति = सम् + भू + णिच् + लट्, तिप् । पत्र = पत् + ष्ट्रन्॥४२॥

वाच्यपरिवर्तनम्—येन, आयोधने, कृष्णगतिं, सहायम्, अवाप्य, क्षत्रियकालरात्रिः, रामपरश्वधस्य, शिता, धारा, उत्पलपत्रसारा, सम्भाव्यते ॥ ४२ ॥

तात्पर्यार्थः—यः प्रतीपो युद्धेऽग्निं सहायं प्राप्य क्षत्रियसंहारकारिणीं रात्रिं परशुरामकुठारस्य तीक्ष्णां धारां पद्मपत्रतुल्यां मन्यते ॥ ४२ ॥

भाषाऽर्थः—जो (राजा-प्रतीप) युद्ध में अग्निदेव की सहायता को पाकर क्षत्रियों की कालरात्रि की समान परशुराम के कुठार की तीखी धारको कमलपत्रके सदृश मानता है ॥४२॥

अथ नर्मदां द्रष्टुमाहाचेत्तर्हि प्रतीपं वृणीष्वेत्याह—

**अस्याङ्कलक्ष्मीर्भव दीर्घबाहो माहिष्मतीवप्रनितम्बकाञ्चीम् ।**
**प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥ ४३ ॥**

सञ्जीविनी—अस्येति । दीर्घबाहोरस्य प्रतीपस्याङ्कलक्ष्मीर्भव, एनं वृणीष्वेत्यर्थः । अनेनायं विष्णुतुल्य इति ध्वन्यते । माहिष्मती नामास्य नगरी तस्या वप्रः प्राकार एव नितम्बस्तस्य काञ्चीं रशनाभूतां, जलानां वेण्या प्रवाहेण रम्याम्, 'ओघः प्रवाहो वेणी च' इति हलायुधः । रेवां नर्मदां प्रासादजालैर्गवाक्षैः, 'जालं समूह आनायो गवाक्षक्षारकावपि' इत्यमरः । प्रेक्षितुं काम इच्छाऽस्ति यदि ॥ ४३ ॥

अन्वयः—यदि, माहिष्मतीवप्रनितम्बकाञ्चीं, जलवेणिरम्यां, रेवां, प्रासादजालैः, प्रेक्षितुं, कामः, अस्ति, 'तर्हि—त्वं' दीर्घबाहोः, अस्य, अङ्कलक्ष्मीः, भव ॥ ४३ ॥

सुधा—यदि = चेत्, माहिष्मतीवप्रनितम्बकाञ्चीं = माहिष्मतीप्राकारनितम्बरशनां, जल-

(१) महाभारतीयाकथा—पुरा किल प्रतीपस्योपरि प्रमुदितोऽग्निदेवस्तस्मै वरं दत्तवान् —'एतन्नगरजिगीषयाऽऽगतान् शत्रूनहं स्वयमेव धक्ष्यामि' इति । तदारभ्य प्राप्तवरेणानेन राज्ञा प्रतीपेन माहिष्मतीं जेतुमिच्छयाऽऽगताः शत्रवो दह्यन्ते । 'नीलस्य राज्ञो दुहिता बभूवातीव शोभना । साऽग्निहोत्रमुपातिष्ठद् बोधनाय पितुः सदा ॥' इत्याद्यनुसन्धेयम् ॥

वेणिरम्यां = सलिलप्रवाहरमणीयां, रेवां = नर्मदां, प्रासादजालैः = राजभवनगवाक्षैः, प्रेक्षितुं = द्रष्टुं, कामः = अभिलाषा, अस्ति = विद्यते । तर्हीत्यादौ, दीर्घबाहोः = महाभुजस्य, अस्य = एतस्य, प्रतीपस्येति यावत् । अङ्कलक्ष्मीः = क्रोडश्रीः, भव = भूयाः, त्वमिति शेषः । विष्णुरूपिणमेनं वृणीष्वेति भावः ॥ ४३ ॥

कोशः—'अङ्को भूषारूपकलक्ष्मसु । चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः' इति कोशः। 'वप्रः प्राकाररोधसोः' इत्यनेकार्थसंग्रहः। 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इति, 'जालं समूह आनायो गवाक्षक्षारकावपि' इति चामरः। 'ओघः प्रवाहो वेणी च' इति हलायुधः। 'वेणी सेतुप्रवाहयोः। देवताडे केशबन्धे' इत्यनेकार्थसंग्रहोऽपि। 'रेवा तु नर्मदा सोमोद्भवा' इत्यमरः ॥ ४३ ॥

समासादि—माहिष्मत्या वप्र एव नितम्ब इति माहिष्मतीवप्रनितम्बस्तस्य काञ्ची तां माहिष्मतीवप्रनितम्बकाञ्चीम् ( त० पु० )। जलस्य वेणिरिति जलवेणिस्तेन रम्येति जलवेणिरम्या तां जलवेणिरम्याम् (त०पु०)। प्रासादस्य जालानीति प्रासादजालानि तैः प्रासादजालैः (त०पु०)। अङ्कस्य लक्ष्मीरित्यङ्कलक्ष्मीः ( त०पु०) ॥ ४३ ॥

व्याकरणम्—भव = भू + लोट्। रम्यां = रमु + यत् + टाप्। प्रेक्षितुं = प्र + ईक्ष (दर्शने), तुमुन् ॥ ४३ ॥

वाच्यपरिवर्तनम्—यदि, माहिष्मतीवप्रनितम्बकाञ्चीं, जलवेणिरम्यां, रेवां, प्रासादजालैः, प्रेक्षितुं, कामेन, भूयते, 'तर्हि—त्वया' दीर्घबाहोः, अस्य, अङ्कलक्ष्म्या, भूयताम् ॥ ४३ ॥

तात्पर्यार्थः—यदि माहिष्मत्याः रशनाभूतां जलप्रवाहेण रमणीयां नर्मदां राजभवन गवाक्षैरवलोकितुं ते इच्छाऽस्ति, तर्हि अस्य महाबाहोः प्रतीपस्य क्रोडलक्ष्मीर्भव ॥ ४३ ॥

भाषाऽर्थः—माहिष्मती नगरी के प्राकाररूपी नितंब की करधनीभूत (और) जलप्रवाह से रमणीय ऐसी रेवा नदी को देखने की इच्छा है तो इस दीर्घबाहु (प्रतीप) के अंक की लक्ष्मी हो ॥ ४३ ॥

अथ प्रतीपोऽपि इन्दुमत्याः प्रीतिं नाजीजनदित्याह—

**तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।**
**शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ ४४ ॥**

सञ्जीविनी—तस्या इति । प्रकामं प्रियं प्रीतिकरं दर्शनं यस्य सोऽपि, दर्शनीयोऽपीत्यर्थः । स क्षितीशः शरदा प्रमृष्टाम्बुधरोपरोधो निरस्तमेघावरणः पर्याप्तकलः पूर्णकलः शशी नलिन्या इव तस्या इन्दुमत्या रुचये न बभूव, रुचिं नाजीजनदित्यर्थः। लोको भिन्नरुचिरिति भावः॥४४॥

अन्वयः—प्रकामं, प्रियदर्शनः, अपि, सः, क्षितीशः, शरत्प्रमृष्टाम्बुधरोपरोधः, पर्याप्तकलः, शशी, नलिन्याः, इव, तस्याः, रुचये, न, बभूव ॥ ४४ ॥

सुधा—प्रकामं = पर्याप्तं, यथेच्छमित्यर्थः । प्रियदर्शनः = अभीष्टावलोकनः, प्रीतिकरदर्शन इति यावत । अपि, दर्शनीयोऽपीत्यर्थः । सः = पूर्वोक्तः, प्रतीप इति यावत् । क्षितीशः = पृथ्वीपतिः, राजेति यावत् । शरत्प्रमृष्टाम्बुधरोपरोधः = शरन्निरस्तमेघावरणः पर्याप्तकलः = पूर्णकलः, शशी = इन्दुः, नलिन्याः = पद्मिन्याः, इव = यथा, तस्याः = पूर्वोक्तायाः, इन्दुमत्या इत्यर्थः । रुचये = प्रीतये, न बभूव = नाभूत्, जनस्य भिन्नरुचित्वादिन्दुमत्याः रुचिं नृपो नाजीजनदिति भावः ॥ ४४ ॥

कोशः—'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' इति, 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इति चामरः ॥ ४४ ॥

समासादि—प्रियं दर्शनं यस्य सः प्रियदर्शनः ( ब० व्री० )। क्षितेरीश इति क्षितीशः ( त० पु० )। धरतीति धरः, अम्बुनो धर इत्यम्बुधरः, तस्योपरोध इत्यम्बुधरोपरोधः

( त० पु० ), शरदा प्रमृष्टोऽम्बुधरोपराधो यस्य सः शरत्प्रमृष्टाम्बुधरोपराधः ( ब० व्री० ) । पर्याप्ता कला यस्य सः पर्याप्तकलः ( ब० व्री० ) ॥ ४४ ॥

व्याकरणम्—बभूव = भू ( सत्तायां ), लिट्, तिप्, णलादेशः, द्वित्वम्, अभ्यासादि कार्यम् । प्रमृष्ट = प्र ( मृजू शुद्धौ—ऊदित् ), क्तः । पर्याप्त = परि + आप् + क्तः ॥ ४४ ॥

वाच्यपरिवर्तनम्—प्रकामं, प्रियदर्शनेन, अपि, तेन, क्षितीशेन, शरत्प्रमृष्टाम्बुधरोपरोधेन, पर्याप्तकलेन, शशिना, नलिन्याः, इव, तस्याः, रुचये, न, बभूवे ॥ ४४ ॥

तात्पर्यार्थः—यथा मेघावरणरहिते शरत्काले पूर्णेन्दुः पद्मिन्याः प्रीतये न भवति, तथैव प्रियदर्शनो ऽपि सः प्रतीपो राजा इन्दुमत्याः प्रीतये न बभूव ॥ ४४ ॥

भाषाऽर्थः—अत्यंत सुन्दर ( और ) प्रिय दर्शन वाला वह राजा प्रतीप, शरत्कालके बादलों के आवरण हट जाने से जैसे पूर्णचन्द्रमा कमलिनी की रुचि के लिये नहीं होता, वैसे उस ( इन्दुमती ) की रुचि के लिये नहीं हुआ ॥ ४४ ॥

अथ सुनन्दा सुषेणमुद्दिश्य जगादेत्याह—

सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम् ।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५ ॥

सञ्जीविनी—सेति । लोकान्तरे स्वर्गादावपि गीतकीर्तिमाचारेण शुद्धयोरुभयोर्वंशयो मातापितृकुलयोर्दीपं प्रकाशकम्, उभयवंशेत्यत्रोभयपक्षवन्निर्वाहः । शूरसेनानां देशानामधिपतिं सुषेणं नाम नृपतिमुद्दिश्याभिसंधाय शुद्धान्तरक्ष्यान्तःपुरपालिकया, "कर्मण्यण्" "टिड्ढाणञ्०" इति ङीप् । सा कुमारी जगदे उक्ता ॥ ४५ ॥

अन्वयः—लोकान्तरगीतकीर्तिम्, आचारशुद्धोभयवंशदीपं, शूरसेनाधिपतिं, सुषेणम्, उद्दिश्य, शुद्धान्तरक्ष्या, सा, कुमारी, जगदे ॥ ४५ ॥

सुधा—लोकान्तरगीतकीर्तिं = भुवनान्तरस्तुतयशः, स्वर्गादिस्तुतकीर्तिमिति यावत् । आचारशुद्धोभयवंशदीपं = सदाचारपवित्रकुलद्वयप्रकाशकम्, आचारशुद्धमातापितृकुलप्रकाशकमिति यावत् । शूरसेनाधिपतिं = शूरसेननामकदेशेशं, सुषेणं = सुषेणनामकं भूपतिम्, उद्दिश्य = अभिसंधाय, अवलोकयति यावत् । शुद्धान्तरक्ष्या = अन्तःपुरपालिकया, सुनन्दयेति यावत् । सा = पूर्वोक्ता, कुमारी = कन्या, इन्दुमतीति यावत् । जगदे = बभाषे ॥ ४५ ॥

कोशः—'यशः कीर्तिः समज्ञा च' इति, 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च' इति चामरः । 'कुमारी रामतरुणीनवमाल्योर्नदीभिदि । कन्यापराजिता गौरी जम्बूद्वीपेषु च स्मृता' इति विश्वः ॥ ४५ ॥

समासादि—शूरसेनस्याधिपतिरिति शूरसेनाधिपतिस्तं शूरसेनाधिपतिम् ( त० पु० ) । लोकान्तरे गीता कीर्तिर्यस्य स तं लोकान्तरगीतकीर्तिम् (ब० व्री० ) । उभौ च तौ वंशाविति उभयवंशौ (द्व०), आचारेण शुद्धावुभयवंशौ इत्याचारशुद्धोभयवंशौ, तयोर्दीपमित्याचारशुद्धोभयवंशदीपम् ( त० पु० ) । शुद्धः अन्तोऽस्येति शुद्धान्तस्तं रक्षतीति शुद्धान्तरक्षी तया शुद्धान्तरक्ष्या ॥ ४५ ॥

व्याकरणम्—उद्दिश्य = उत् + दिश् + क्त्वा, ल्यबादेशः । गीत = गै + क्तः + आत्वम् । शुद्धान्तरक्ष्या = शुद्धान्त + रक्ष + अण् + ङीप् । जगदे = गद + कर्मणि लिट् ॥ ४५ ॥

वाच्यपरिवर्तनम्—लोकान्तरगीतकीर्तिम्, आचारशुद्धोभयवंशदीपं, शूरसेनाधिपतिं, सुषेणम्, उद्दिश्य, शुद्धान्तरक्षी, तां, कुमारीम्, जगाद ॥ ४५ ॥

तात्पर्यार्थः—तदनन्तरं सुनन्दा स्वर्गादौ स्तुतकीर्तिम् आचारेण पवित्रमातापितृकुलप्रकाशकं शूरसेनाख्यदेशाधिपतिं सुषेणनृपमुद्दिश्य उवाच ॥ ४५ ॥

भाषाऽर्थः—स्वर्गादि ( लोक ) में स्तुत यश वाले (और) आचार से शुद्ध माता पिता के कुल का दीपक शूरसेन देशका राजा सुषेणको उद्देश्य कर सुनंदा इन्दुमती से बोली ॥ ४५ ॥

अथ नीपवंशोत्पन्नमेनं नृपमाश्रित्य गुणैः स्वाभाविकोऽपि विरोधः परित्यक्त इत्याह—

**नीपान्वयः पार्थिव एष यज्वा गुणैर्यमाश्रित्य परस्परेण ।**
**सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥ ४६ ॥**

सञ्जीविनी—नीपान्वय इति। यज्वा विधिवदिष्टवान्, "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः । एषः पार्थिवो नीपो नामान्वयोऽस्येति नीपान्वयो नीपवंशजः । यं सुषेणमाश्रित्य गुणैर्ज्ञानमौनादिभिः शान्तं प्रसन्नं सिद्धाश्रममृष्याश्रममेत्य प्राप्य सत्त्वैर्गजसिंहादिभिः प्राणिभिरिव नैसर्गिकः स्वाभाविकोऽपि परस्परेण विरोध उत्ससृजे त्यक्तः ॥ ४६ ॥

अन्वयः—यज्वा, एषः, पार्थिवः, नीपान्वयः, 'अस्ति' यम् , आश्रित्य, गुणैः, शान्तं, सिद्धाश्रमम् , एत्य, सत्त्वैः, इव, नैसर्गिकः, अपि, परस्परेण, विरोधः, उत्ससृजे ॥ ४६ ॥

सुधा—यज्वा = विधिवदिष्टवान् , एषः = असौ, पार्थिवः = पृथ्वीपतिः, राजा इति यावत् । नीपान्वयः = नीपकुलजः, अस्तीति शेषः । यं = पार्थिवं, सुषेणमिति यावत् । आश्रित्य = निषेव्य, गुणैः = ज्ञानमौनादिभिः शान्तं = शमयुक्तं, प्रसन्नमिति यावत् । सिद्धाश्रमं = निर्वृत्तमठं, ऋषिनिवासस्थानमिति यावत् । एत्य = प्राप्य, सत्त्वैः = जन्तुभिः, सिंहव्याघ्रादिभिरिति यावत् । इव = यथा, नैसर्गिकः = स्वाभाविकः, अपि, परस्परेण = अन्योन्येन, विरोधः = विद्वेषः, उत्ससृजे = त्यक्तः ॥ ४६ ॥

कोशः—'यज्वा तु विधिनेष्टवान्' इति, 'सिद्धे निर्वृत्तनिष्पन्नौ' इति चामरः । 'आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे' इति, 'शान्तोऽतिमुक्तरसयोः पुंसि त्रिषु शमान्विते' इति च मेदिनी । 'सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु' इत्यनेकार्थसंग्रहः । 'वैरं विरोधो विद्वेषः' इत्यमरः ॥ ४६ ॥

समासादि—नीपो ( नाम ) अन्वयो यस्य स नीपान्वयः ( ब० व्री० ), सिद्धस्याश्रममिति सिद्धाश्रमम् ( त० पु० ) । निसर्गे भवो नैसर्गिकः ॥ ४६ ॥

व्याकरणम्—यज्वा = यज् 'सुयजोर्ङ्वनिप्' इत्यनेन ङ्वनिप् । आश्रित्य = आ + श्रि + क्त्वा, ल्यबादेशः । एत्य = आ + इण् + क्त्वा, ल्यबादेशः । उत्ससृजे = उत् + सृज् + लिट् ॥४६॥

वाच्यपरिवर्तनम्—यज्वना, अनेन, पार्थिवेन, नीपान्वयेन, 'भूयते' यम् , आश्रित्य, गुणाः, शान्तं, सिद्धाश्रमम् , एत्य, सत्त्वाः, इव, नैसर्गिकम् , अपि, परस्परेण, विरोधम् , उत्ससृजुः ॥ ४६ ॥

तात्पर्यार्थः—यथा गजव्याघ्रादयो जीवाः शान्तं ऋष्याश्रमं प्राप्य स्वाभाविकं वैरभावं त्यजन्ति, तथैव विधिवदिष्टवन्तमिमं नीपवंशोत्पन्नं सुषेणं नृपमाश्रित्य ज्ञानमौनादिभिर्गुणैः स्वाभाविकोऽपि परस्परेण विरोधस्त्यक्तः ॥ ४६ ॥

भाषार्थः—विधिपूर्वक यज्ञ करने वाला यह राजा नीप के वंश में उत्पन्न हुआ है, जिसको प्राप्तकर गुणों ने आपस का स्वाभाविक वैर भी शान्त ऋषियों के आश्रम में जाकर गजव्याघ्र आदि जीवों के समान त्याग दिया है ॥ ४६ ॥

अथायं स्वजनाह्लादकः द्विषन्तपश्चेत्याशयेनाह—

**यस्यात्मगेहे नयनाभिरामा कान्तिर्हिमांशोरिव संनिविष्टा ।**
**हर्म्याग्रसंरूढतृणाङ्कुरेषु तेजोऽविषह्यं रिपुमन्दिरेषु ॥ ४७ ॥**

सञ्जीविनी—यस्येति । हिमांशोः कान्तिश्चन्द्रकिरण इव नयनयोरभिरामा यस्य सुषेणस्य कान्तिः शोभा आत्मगेहे स्वभवने संनिविष्टा संक्रान्ता अविषह्यं विषोढुमशक्यं तेजः प्रतापस्तु हर्म्याग्रेषु धनिकमन्दिरप्रान्तेषु, 'हर्म्यादि धनिनां वासः' इत्यमरः । संरूढास्तृणाङ्कुरा येषां तेषु, शून्येष्वित्यर्थः । रिपुमन्दिरेषु शत्रुनगरेषु 'मन्दिरं नगरे गृहे' इति विश्वः । संनिविष्टम् । स्वजनाह्लादको द्विषन्तपश्चेति भावः ॥ ४७ ॥

अन्वयः—यस्य, नयनाभिरामा, कान्तिः, हिमांशोः, 'कान्तिः' इव, आत्मगेहे, संनिविष्टा, 'अस्ति' अविषह्यं, तेजः, 'तु' हर्म्याग्रसंरूढतृणाङ्कुरेषु, रिपुमन्दिरेषु, 'संनिविष्टम्—अस्ति' ॥ ४७ ॥

सुधा—यस्य = सुषेणस्य, नयनाभिरामा = लोचनानन्दप्रदा, कान्तिः = द्युतिः, शोभेति यावत् । हिमांशोः = चन्द्रस्य, कान्तिरिति शेषः । इव = यथा, आत्मगेहे = स्ववेश्मनि, संनिविष्टा = संक्रान्ता, अस्तीति शेषः । अविषह्यं = दुस्सहं, तेजः = प्रतापः, त्विति शेषः । हर्म्याग्रसंरूढतृणाङ्कुरेषु = धनिकगृहप्रान्तोत्पन्नघासप्ररोहेषु, तद्भयेन पलायमाने सति जनाभावाज्जाततृणाङ्कुरेष्वित्यर्थः । रिपुमन्दिरेषु = शत्रुनगरेषु 'संनिविष्टम्–अस्ति' इति शेषः । स्वजनाह्लादकः शत्रुतापकारीति भावः ॥ ४७ ॥

कोशः—'हर्म्यादि धनिनां वासः' इति, 'शष्पं बालतृणं घासः' इति चामरः । 'अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे' इति विश्वः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । 'मन्दिरं नगरे गृहे' इति विश्वः ॥ ४७ ॥

समासादि—आत्मनो गेह इत्यात्मगेहस्तस्मिन्नात्मगेहे ( त० पु० ) । नयनयोरभिरामा इति नयनाभिरामा ( त० पु० ) । तृणानाम् अङ्कुरा इति तृणाङ्कुराः, हर्म्याणाम् अग्राणीति हर्म्याग्राणि ( त० पु० ), तेषु संरूढास्तृणाङ्कुरा येषान्ते तेषु हर्म्याग्रसंरूढतृणाङ्कुरेषु ( ब० व्री० ) । विसोढुं शक्यं विषह्यं न विषह्यमित्यविषह्यम् । रिपूणां मन्दिराणीति रिपुमन्दिराणि तेषु रिपुमन्दिरेषु ( त० पु० ) ॥ ४७ ॥

व्याकरणम्—संनिविष्टा = सम् + नि + विश् + क्तः + टाप् । संरूढ = सम् + रुह + क्तः + 'ढ्रलोपे' इति दीर्घः । हर्म्य = हृ + यत् + मुट् । अविषह्यम् = अ + वि + सह + यत् ॥ ४७ ॥

वाच्यपरिवर्तनम्—यस्य, नयनाभिरामया, कान्त्या, हिमांशोः, 'कान्त्या' इव, आत्मगेहे, संनिविष्टया, 'भूयते' अविषह्येन, तेजसा, हर्म्याग्रसंरूढतृणाङ्कुरेषु, रिपुमन्दिरेषु, 'संनिविष्टेन–भूयते' ॥ ४७ ॥

तात्पर्यार्थः—यस्य लोचनानन्ददायिका शोभा शशिनः शोभेव निजगृहे संक्रान्ता, दुस्सहः प्रतापस्तु धनिकगृहप्रान्तेषूत्पन्नतृणाङ्कुरेषु शत्रुनगरेषु संनिविष्टोऽस्ति ॥ ४७ ॥

भाषाऽर्थः—जिस ( सुषेण ) की चन्द्रमा की नाईं नयनों को आनन्द दायक कान्ति अपने घरमें, और दुःख से सहने योग्य तेज, धनियों के गृह प्रांत में उत्पन्न हुये घास वाले शत्रुओं के नगर में प्रविष्ट है ( याने अपने जन को आह्लाद और शत्रुओं को संताप करने वाला है ) ॥ ४७ ॥

अथ स्त्रीणां कुचचंदनप्रक्षालनादस्य मथुरानाम्नि देशे स्थिताऽपि यमुना गंगायास्तरङ्गैः संयुक्तजलेव शोभत इत्याह—

**यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।**
**कलिन्दकन्या मथुरां गताऽपि गङ्गोर्मिसंसक्तजलेव भाति ॥ ४८ ॥**

सञ्जीविनी—यस्यावरोध इति । यस्य सुषेणस्य वारिविहारकाले जलक्रीडासमयेऽवरोधानामन्तःपुराङ्गनानां स्तनेषु चन्दनानां मलयजानां प्रक्षालनाद्धेतोः कलिन्दो नाम शैलस्तत्कन्या यमुना, 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः । मथुरा नामास्य राज्ञो नगरी तां गताऽपि, गङ्गाया विप्रकृष्टापीत्यर्थः । मथुरायां गङ्गाऽभावं सूचयत्यपिशब्दः । कालिन्दीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्मास्यते इति वक्ष्यति तत्कथमधुना मथुरासम्भव इति चिन्त्यम् । मथुरा मधुरापुरीति शब्दभेदः । गङ्गाया भागीरथ्या ऊर्मिभिः संसक्तजलेव भाति, धवलचन्दनसंसर्गात्प्रयागादन्यत्राप्यत्र गङ्गासंगतेव भातीत्यर्थः । 'सितासिते हि गङ्गायमुने' इति घण्टापथः ॥ ४८ ॥

अन्वयः—यस्य, वारिविहारकाले, अवरोधस्तनचन्दनानां, प्रक्षालनात्, मथुरां, गता, अपि, कलिन्दकन्या, गङ्गोर्मिसंसक्तजला, इव, भाति ॥ ४८ ॥

सुधा—यस्य = सुषेणस्य, वारिविहारकाले = जलक्रीडासमये, अवरोधस्तनचन्दनानाम् = अन्तःपुरस्त्रीकुचमलयजानां, प्रक्षालनात् = धावनात्, मथुरां = मथुराख्यदेशं, गता = स्थिता, अपि, गङ्गाया विप्रकृष्टापीत्यर्थः । कलिन्दकन्या = कलिन्दनामकशैलकुमारी, यमुनेति यावत् । गङ्गोर्मिसंसक्तजला = भागीरथीतरङ्गसंमिलितसलिला, इव = यथा, भाति = शोभते ॥ ४८ ॥

कोशः—'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इत्यमरः । 'विहारस्तु जिनालये । लीलायां भ्रमणे स्कन्धे' इत्यनेकार्थसंग्रहः । 'कालो दिष्टोऽप्यनेहापि समयोऽप्यथ' इति, 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा । भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि' इति चामरः ॥ ४८ ॥

समासादि—अवरुध्यन्तेऽत्रेत्यवरोधाः ( अन्तःपुराङ्गनाः ), तासां स्तना इति अवरोधस्तनास्तेषु चन्दनानि तेषामवरोधस्तनचन्दनानाम् ( त० पु० ) । विहारस्य काल इति विहारकालः, वारिविहारकाल इति वारिविहारकालस्तस्मिन्वारिविहारकाले ( त० पु० ) । कलिन्दस्य कन्येति कलिन्दकन्या ( त०पु० ) । गङ्गाया ऊर्मय इति गङ्गोर्मयस्तेषु संसक्तानि जलानि यस्याः सा गङ्गोर्मिसंसक्तजला ( ब० व्री० ) ॥ ४८ ॥

व्याकरणम्—अवरोधः = अव + रुधिर् ( आवरणे—इरित् ), घञ् । संसक्त = सम् + षच् + क्तः । भाति = भा ( दीप्तौ ), लट्, तिप् ॥ ४८ ॥

वाच्यपरिवर्तनम्—यस्य, वारिविहारकाले, अवरोधस्तनचन्दनानां, प्रक्षालनात्, मथुरां, गतया, अपि, कलिन्दकन्यया, गङ्गोर्मिसंसक्तजलया, इव, भायते ॥ ४८ ॥

तात्पर्यार्थः—यस्य सुषेणस्य जलक्रीडासमयेऽन्तःपुराङ्गनानां कुचेषु लिप्तानां चन्दनानां प्रक्षालनात् मथुरां गताऽपि यमुना गङ्गायास्तरङ्गैः संयुक्तसलिलेव भाति ॥ ४८ ॥

भाषाऽर्थः—जिस ( सुषेण ) के जल विहार के समय अंतःपुर की स्त्रियों के स्तनों का चन्दन ( जल से ) धुल जाने से मथुरा में स्थित भी यमुना, गङ्गा के तरङ्गों से मिले हुये जल के तुल्य शोभित होती है ॥ ४८ ॥

अथाभयदाननिष्क्रयत्वेन दत्तं मणिं दधानः सुषेणः विष्णुं व्रीडयतीत्याशयेनाह—

**त्रस्तेन तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा यः ।**
**वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥ ४९ ॥**

सञ्जीविनी—त्रस्तेनेति । तार्क्ष्याद्गरुडात्त्रस्तेन यमुना ओकः स्थानं यस्य तेन कालियेन नाम नागेन विसृष्टं किलाभयदाननिष्क्रयत्वेन दत्तम्, किलेत्यैतिह्ये । वक्षःस्थलव्यापिरुचं मणिं दधानो यः सुषेणः सकौस्तुभं कृष्णं विष्णुं ह्रेपयतीव व्रीडयतीव, "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इत्यनेन पुगागमः । कौस्तुभमणेरप्युत्कृष्टोऽस्य मणिरिति भावः ॥ ४९ ॥

अन्वयः—तार्क्ष्यात्, त्रस्तेन, यमुनौकसा, कालियेन, विसृष्टं, किल, वक्षःस्थलव्यापिरुचं, मणिं, दधानः, यः, सकौस्तुभं, कृष्णं, ह्रेपयति, इव ॥ ४९ ॥

सुधा—तार्क्ष्यात् = गरुडात्, त्रस्तेन = भीतेन, यमुनौकसा = कालिन्दीस्थानेन, यमुनावासिनेति यावत् । कालियेन = कालियनामकसर्पेण, विसृष्टं = त्यक्तम्, अभयदाननिष्क्रयत्वेन दत्तमिति यावत् । किलेत्यैतिह्ये । वक्षःस्थलव्यापिरुचं = हृदयस्थलव्याप्तप्रभं, मणिं = रत्नं, दधानः = ध्रियमाणः, यः = सुषेणः, सकौस्तुभं = कौस्तुभमणिसहितं, कृष्णं = विष्णुं, ह्रेपयति = व्रीडयति, इव । कौस्तुभमणेरप्युत्तमोऽस्य मणिरिति भावः ॥ ४९ ॥

कोशः—'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः' इति, 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इति, 'ओकः सद्माश्रयः' इति, 'कौस्तुभो मणिः' इति चामरः । 'कृष्णः काके

पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ' इति हैमः ॥ ४९ ॥

समासादि—तार्क्ष्यस्यापत्यं पुमान् तार्क्ष्यस्तस्मात् तार्क्ष्यात् । अथवा तृक्षस्यापत्यं पुमान् तार्क्ष्यस्तस्मात् । यमुना ओको यस्य स तेन यमुनौकसा ( ब० व्री० ) । वक्षःस्थलव्यापिनी रुक् यस्य स तं वक्षस्थलव्यापिरुचम् ( ब० व्री० ) । कौस्तुभेन सह वर्तमानस्तं सकौस्तुभम् ॥ ४९ ॥

व्याकरणम्—त्रस्त = त्रस् + क्तः । तार्क्ष्यात् = तार्क्ष्य 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यनेन अण् । अथवा तृक्ष + 'गर्गादिभ्यो यञ्' इत्यनेन यञ् । विसृष्ट = वि + सृज् + क्तः । दधानः = धा + शानच् । ह्रेपयति = ह्री + णिच् + 'अर्तिह्रीव्लीरीक्नूयी' इत्यादिना पुगागमः + लट् ॥ ४९ ॥

वाच्यपरिवर्तनम्—तार्क्ष्यात्, त्रस्तेन, यमुनौकसा, कालियेन, विसृष्टे, वक्षःस्थलव्यापिरुचि, मणि, दधानेन, येन, सकौस्तुभः, कृष्णः, ह्रेप्यते, इव, ॥ ४९ ॥

तात्पर्यार्थः—गरुडात्भीतेन यमुनावासिना कालियेन नागेन अर्पितं हृदयस्थलव्याप्तप्रभं मणि दधानो यः सुषेणः कौस्तुभयुक्तं विष्णु व्रीडयतीव ॥ ४९ ॥

भाषाऽर्थः—गरुड़ से भयभीत हुए यमुना में रहने वाले कालिय नाग से दिये हुए वक्षः-स्थल में व्याप्त कान्ति वाले मणि को धारण करता हुआ यह राजा सुषेण, मानो (वक्षःस्थल में व्याप्त कान्तिवाले ) कौस्तुभ मणि को धारण किये विष्णु को लज्जित करता है ॥ ४९ ॥

अथ कुबेरोद्यानसदृशेऽस्य सुषेणस्य वृन्दावननामकोद्याने विहरेत्याह—

संभाव्य भर्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः ॥ ५० ॥

सञ्जीविनी-संभाव्येति । युवानममुं सुषेणं भर्तारं संभाव्य मत्वा, पतित्वेनाङ्गीकृत्येत्यर्थः । मृदुप्रवालोत्तरापरिप्रस्तारितकोमलपल्लवा पुष्पशय्या यस्मिंस्तत्तस्मिंश्चैत्ररथात्कुबेरोद्यानादनूने वृन्दावने वृन्दावननामक उद्याने हे सुन्दरि ! यौवनश्रीर्यौवनफलं निर्विश्यतां भुज्यताम्॥५०॥

अन्वयः—युवानम् , अमुं, भर्तारं, सम्भाव्य, मृदुप्रवालोत्तरपुष्पशय्ये, चैत्ररथात्, अनूने, वृन्दावने, हे सुन्दरि !, 'त्वया' यौवनश्रीः, निर्विश्यताम् ॥ ५० ॥

सुधा—युवानं = तरुणम्, अमुम् = इमं, सुषेणमिति यावत् । भर्तारं = पतिं, सम्भाव्य = स्वीकृत्य, मत्वेति यावत् । मृदुप्रवालोत्तरपुष्पशय्ये = कोमलपल्लवोपरिप्रस्तारितप्रसूनतल्पे, चैत्ररथात् = तदाख्यकुबेरोद्यानात्, अनूने = अन्यूने, सदृशे इत्यर्थः। वृन्दावने = वृन्दावननामकोद्याने, हे सुन्दरि ! = हे रमणि !, यौवनश्रीः = तारुण्यसम्पद् , निर्विश्यतां = भुज्यतां, त्वयेति शेषः ॥ ५० ॥

कोशः—'धवः प्रियः पतिर्भर्ता' इति, 'सुकुमारं तु कोमलं मृदुलं मृदु' इति चामरः । 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे' इति, 'शय्या तल्पे शब्दगुम्फे' इति च हैमः । 'अस्योद्यानं चैत्ररथम्' इति, 'सुन्दरी रमणी रामा' इति, 'तारुण्यं यौवनं समे' इति चामरः ॥५०॥

समासादि—मृदुश्चासौ प्रवाल इति मृदु प्रवालः (क०धा०), पुष्पस्य शय्येति पुष्पशय्या ( त० पु० ), मृदुप्रवालस्योत्तरा पुष्पशय्या यस्मिन् तत्तस्मिन् मृदुप्रवालोत्तरपुष्पशय्ये (ब०व्री०) । वृन्दाया वनमिति वृन्दावनं तस्मिन् वृन्दावने ( त०पु० ) । यूनो भावो यौवनं, तस्य श्रीरिति यौवनश्रीः (त०पु०) ॥ ५० ॥

व्याकरणम्—सम्भाव्य = सम् + भू + णिच् = क्त्वा, ल्यबादेशः । शय्ये = शीङ् (स्वप्ने-ङित् ), क्यप् । निर्विश्यताम् = निर् + विश् + यक् + लोट् । यौवन = युवन् + 'हायनान्तयुवादिभ्योऽण्' इत्यनेन अण्, 'अन्' इति प्रकृतिभावः ॥ ५० ॥

वाच्यपरिवर्तनम्—युवानम्, अमुं, भर्तारं, सम्भाव्य, मृदुप्रवालोत्तरपुष्पशय्ये, चैत्ररथात ,

...ने, वृन्दावने, हे सुन्दरि !, 'त्वम्' यौवनश्रियं निर्विश ॥ ५० ॥

तात्पर्यार्थः--हे सुन्दरि ! युवानमम् अमुं पतित्वेनाङ्गीकृत्य कोमलपल्लवोपरिप्रस्तारितपु...शय्ये कुबेरोद्यानात् श्रेष्ठेऽस्य वृन्दावने यौवनफलमुपभुज्यताम् ॥ ५० ॥

भावार्थः--हे सुन्दरि ! युवा इस सुषेण को पति मानकर कोमल पल्लवों के ऊपर (फैलाये गये) फूलों की सेज पर कुबेर के उद्यान की समान (इसके) वृन्दावन (नामक उद्यान) में विहार कर ॥ ५० ॥

अथ गोवर्द्धनकन्दरासु शिलामुपविश्य त्वं मयूराणां नृत्यं पश्येत्याह—

**अध्यास्य चाम्भः पृषतोक्षितानि शैलेयगन्धीनि शिलातलानि ।**
**कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु ॥ ५१ ॥**

सञ्जीविनी—अध्यास्येति । किं च प्रावृषि वर्षासु कान्तासु गोवर्धनस्याद्रेः कन्दरासु दरीषु, 'दरी तु कन्दरो वा स्त्री' इत्यमरः । अम्भसः पृषतैर्बिन्दुभिरुक्षितानि सिक्तानि शिलायां भवं शैलेयम्, 'शिलाजतु च शैलेयम्' इति यादवः। यद्वा शिलापुष्पाख्य ओषधिविशेषः, 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु । शैलेयम्' इत्यमरः । "शिलाया ढः" इत्यत्र शिलाया इति योगविभागादिवार्थे ढप्रत्ययः। तद्गन्धवन्ति शैलेयगन्धीनि शिलातलान्यध्यास्याधिष्ठाय कलापिनां बर्हिणां नृत्यं पश्य ॥ ५१ ॥

अन्वयः—प्रावृषि, कान्तासु, गोवर्धनकन्दरासु, अम्भःपृषतोक्षितानि, शैलेयगन्धीनि, शिलातलानि, अध्यास्य, 'त्वं' कलापिनां, नृत्यं, पश्य ॥ ५१ ॥

सुधा—प्रावृषि = वर्षाकृतौ, कान्तासु = मनोरमासु, शोभनास्विति यावत् । गोवर्धनकन्दरासु = गोवर्धनाद्रिदरीषु, अम्भःपृषतोक्षितानि = जलबिन्दुसिक्तानि, शैलेयगन्धीनि = शिलाजतुगन्धयुक्तानि, शिलातलानि = पाषाणतलानि, अध्यास्य = अधिष्ठाय, कलापिनां = बर्हिणां, मयूराणामिति यावत् । नृत्यं = नर्तनं, पश्य = अवलोकय, त्वमिति शेषः ॥ ५१ ॥

कोशः—'पृषन्ति बिन्दुपृषताः' इत्यमरः । 'शिलाजतु च शैलेयम्' इति यादवः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषत्' इति, 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ' इति, 'लास्यं नृत्यं च नर्तने' इति चामरः । कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना ध्वे' इति मेदिनी । 'दरी तु कन्दरो वा स्त्री' इत्यमरः ॥ ५१ ॥

समासादि—अम्भसः पृषता इत्यम्भःपृषतास्तैरुक्षितानीत्यम्भःपृषतोक्षितानि (त०पु०) । शिलायां भवं शैलेयं तद्वद्गन्धवन्ति तानि शैलेयगन्धीनि । शिलायास्तलानि इति शिलातलानि (त०पु०) । कलापमेषां सन्तीति कलापिनस्तेषां कलापिनाम् । गोवर्धनस्य कन्दरा इति गोवर्धनकन्दरास्तासु गोवर्धनकन्दरासु (त०पु०) ॥ ५१ ॥

व्याकरणम्--अध्यास्य = अधि + आस् (उपवेशने), क्त्वा, ल्यबादेशः । पृषतः = पृष् + अतच् + किच्च । उक्षितानि = उक्ष् (सेचने), क्तः + इट् । शैलेयं = शिला 'शिलाया ढः' इति ढः, एयादेशः । कलापिनां = कलाप + इनिः । पश्य = दृश् + लोट्, सिबादेशः, सेर्ह्यादेशः, 'पाघ्राध्मा' इत्यादिना पश्यादेशः ॥ ५१ ॥

वाच्यपरिवर्तनम्--प्रावृषि, कान्तासु, गोवर्धनकन्दरासु, अम्भःपृषतोक्षितानि, शैलेयगन्धीनि, शिलातलानि, अध्यास्य, 'त्वया' कलापिनां, नृत्यं, दृश्यताम् ॥ ५१ ॥

तात्पर्यार्थः--वर्षासमये मनोरमासु गोवर्धनकन्दरासु जलबिन्दुसिक्तानि शिलाजतुगन्धयुक्तानि पाषाणतलानि अधिष्ठाय मयूराणां नर्तनमवलोकय ॥ ५१ ॥

भाषाऽर्थः--वर्षासमय में मनोहर गोवर्धन पर्वत की कन्दराओं में जल के बिन्दुओं से छिड़की हुई (और) शिलाजीतसे सुगन्धित शिलाओंमें बैठकर (तू) मयूरका नाच देख ॥५१॥

अथेन्दुमती सुषेणं नृपमपि तत्याजेत्याह—

**नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री।**
**महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ५२ ॥**

सञ्जीविनी—नृपमिति। 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः। आवर्तमनोज्ञा नाभिर्यस्याः सा, इदं च नद्याःसाम्यार्थमुक्तम्। अन्यवधूरन्यपत्नी भवित्री भाविनी सा कुमारी तं नृपं सागरगामिनी सागरं गन्त्री स्रोतोवहा नदी मार्गवशादुपेतं प्राप्तं महीधरं पर्वतमिव व्यत्यगादतीत्य गता ॥ ५२ ॥

अन्वयः—आवर्तमनोज्ञनाभिः, अन्यवधूः, भवित्री, सा, सागरगामिनी, स्रोतोवहा, मार्गवशात्, उपेतं, महीधरम्, इव, तं, नृपं, व्यत्यगात् ॥ ५२ ॥

सुधा—आवर्तमनोज्ञनाभिः = जलभ्रमवद्रुचिरनाभिः, अन्यवधूः = परपत्नीः, भवित्री = भाविनी, सा = कुमारी, इन्दुमतीति यावत्। सागरगामिनी = अर्णवगन्त्री, समुद्रगामिनीति यावत्। स्रोतोवहा = अम्बुवहा, गङ्गादिनदीति यावत्। मार्गवशात् = वर्त्मवशात्, उपेतं = प्राप्तं, महीधरं = पर्वतम्, इव = यथा, तं = पूर्वोक्तं, सुषेणमिति यावत्। नृपं = राजानं, व्यत्यगात् = अतीत्यगता, तत्याजेत्यर्थः ॥ ५२ ॥

कोशः—'नाभिः क्षत्रप्रधानयोः। चक्रमध्ये मृगमदे प्राण्यंगे मुख्यराज्ञि च' इति, 'वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि। नवपरिणीतायाञ्च' इति च हैमः। 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः। 'स्रोतोऽम्बुवेग इन्द्रिये' इति मेदिनी। 'सरस्वान्सागरोऽर्णवः' इत्यमरः ॥ ५२ ॥

समासादि—आवर्त इव मनोज्ञा नाभिर्यस्याः सा आवर्तमनोज्ञनाभिः (ब०व्री०)। अन्यस्य वधूरित्यन्यवधूः (त० पु०)। धरतीति धरः, मह्या धर इति महीधरस्तं महीधरम् (त०पु०)। मार्गस्य वश इति मार्गवशस्तस्मान्मार्गवशात् (त०पु०)। वहतीति वहा, स्रोतसो वहति स्रोतोवहा (त०पु०)। सागरं गन्तुं शीलमस्याः सा सागरगामिनी ॥ ५२ ॥

व्याकरणम्—आवर्त = आ + वृतु + घञ्। व्यत्यगात् = वि + अति + अ + इण् (गतौ—णित्), लुङ् 'इणो गा लुङि' इति गादेशः। महीधरं = मही + धृ + अच्। उपेतम् = उप + इण् + क्तः। गामिनी = गम् + णिनिः ॥ ५२ ॥

वाच्यपरिवर्तनम्—आवर्तमनोज्ञनाभ्या, अन्यवध्वा, भवित्र्या, तया, सागरगामिन्या, स्रोतोवहया, उपेतः, महीधरः, इव, सः, नृपः, व्यत्यगायि ॥ ५२ ॥

तात्पर्यार्थः—यथा समुद्रगामिनी नदी मार्गवशात् प्राप्तं पर्वतं त्यजति, तथैव अम्भसां भ्रम इव रुचिरनाभिः अन्यस्य भार्या भाविनी सा इन्दुमती तं सुषेणनामकं नृपं तत्याज ॥ ५२ ॥

भाषाऽर्थः—जल के भँवर की भांति नाभिवाली दूसरे की भार्या होने वाली इन्दुमती ने, जैसे समुद्र के तरफ जाती हुई नदी मार्ग की इच्छा से प्राप्त पर्वत को त्यागती है, वैसे उस राजा (सुषेण) को त्याग दिया ॥ ५२ ॥

अथ सुनन्दा हेमाङ्गदनामकराज्ञो निकटे प्राप्येन्दुमतीं बभाष इत्याह—

**अथाङ्गदाश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम्।**
**आसेदुषीं सादितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे ॥ ५३ ॥**

सञ्जीविनी—अथेति। अथ भुजिष्या किंकरी सुनन्दा, 'भुजिष्या किंकरी मता' इति हलायुधः। अङ्गदाश्लिष्टभुजं केयूरबद्धबाहुं सादितशत्रुपक्षं विनाशितशत्रुवर्गं हेमाङ्गदं नाम कलिङ्गनाथमासेदुषीमासन्नामबालेन्दुमुखीं पूर्णेन्दुमुखीं बालामिन्दुमतीं बभाषे ॥ ५३ ॥

अन्वयः—अथ, भुजिष्या, अङ्गदाश्लिष्टभुजं, सादितशत्रुपक्षं, हेमाङ्गदं, नाम, कलिङ्गना-

थम् , आसेदुषीम् ,अबालेन्दुमुखीं, बालां, बभाषे ॥ ५३ ॥

सुधा—अथ = अनन्तरं, सुषेणनृपतित्यागानन्तरमिति यावत्। भुजिष्या = दासी, सुनन्देति यावत । अङ्गदाश्लिष्टभुजं = केयूरालिङ्गितबाहुं, अङ्गदबद्धबाहुमिति यावत । सादितशत्रुपक्षं = विनाशितारिवर्गं, हेमाङ्गदं = हेमाङ्गदनामकं, कलिङ्गनाथं = कलिङ्गदेशाधिपति, नामेति प्राकाश्ये । आसेदुषीम् = आसन्नाम् , अबालेन्दुमुखीं = पूर्णचन्द्राननां, बालाम् = इन्दुमतीं, बभाषे = उवाच ॥ ५३ ॥

कोशः—'केयूरमङ्गदम्' इत्यमरः । 'भुजिष्या गणिकादास्योः' इत्यनेकार्थसंग्रहः । 'नाम प्राकाश्यसम्भाव्य क्रोधापगमकुत्सने' इत्यमरः । 'पक्षश्च परतो वृन्दे बले सखिसहाययोः' इति विश्वः । बाला तु त्रुटियोषितोः' इत्यनेकार्थसंग्रहः ॥ ५३ ॥

समासादि—अङ्गदेनाश्लिष्टौ भुजौ यस्य स तम् अङ्गदाश्लिष्टभुजम् ( ब० व्री० ) । कलिङ्गस्य नाथ इति कलिङ्गनाथस्तं कलिङ्गनाथम् ( त० पु० ) । आससादेत्यासेदुषी तामासेदुषीम् । शत्रूणां पक्ष इति शत्रुपक्षः ( त० पु० ), सादितः शत्रुपक्षो येन स तं सादितशत्रुपक्षम् ( ब० व्री० ) । न बाल इत्यबालः, स चासौ इन्दुश्चेत्यबालेन्दुः ( क० धा० ), तद्वन्मुखं यस्याः सा ताम् अबालेन्दुमुखीम् ( ब० व्री० ) ५३ ॥

व्याकरणम्—आश्लिष्ट = आ + श्लिष् ( आलिङ्गने ), क्तः । आसेदुषीम् = आ + षद्लृ ( विशरणादौ-लृदित् ), लिट् + 'भाषायां सदवसश्रुवः' इति क्वस्वादेशः, ततो द्वित्वादिकम्, 'उगितश्च' इत्यनेन ङीप् । सादित = षद + णिच् + क्तः । बभाषे = भाष + लिट्॥५३॥

वाच्यपरिवर्तनम्—अथ, भुजिष्यया, अङ्गदाश्लिष्टभुजं, सादितशत्रुपक्षं, हेमाङ्गदं, नाम, कलिंगनाथम् , आसेदुषी, अबालेन्दुमुखी, बाला, बभाषे ॥ ५३ ॥

तात्पर्यार्थः—अथ दासी सुनन्दा केयूरबद्धभुजं विनाशितशत्रुसमूहं हेमाङ्गदं नाम कलिङ्गनाथं प्राप्य पूर्णचन्द्राननाम् इन्दुमतीमुवाच ॥ ५३ ॥

भाषाऽर्थः—इसके बाद दासी ( सुनन्दा ) बिजायठ बंधे हाथ वाले ( और ) शत्रु समूहों के नाश करने वाले 'हेमाङ्गद' नामक कलिंगनाथ के समीप प्राप्त होकर पूर्णचन्द्र के सदृश मुखवाली बाला ( इन्दुमती ) से बोली ॥ ५३ ॥

अथासौ महेन्द्राद्रेः महोदधेश्च पतिरित्याह—

**असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च ।**

**यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेन्द्रः ॥ ५४ ॥**

सञ्जीविनी—असाविति । महेन्द्राद्रेः समानसारस्तुल्यसत्त्वोऽसौ हेमाङ्गदो महेन्द्रस्य नाम कुलपर्वतस्य महोदधेश्च पतिः स्वामी, महेन्द्रमहोदधी एवास्य गिरिजलदुर्गे इति भावः । यस्य यात्रासु क्षरतां मदस्राविणां सैन्यगजानां छलेन महेन्द्रो महेन्द्राद्रिः पुरोऽग्रे यातीव, अद्रिकल्पा अस्य गजा इत्यर्थः ॥ ५४ ॥

अन्वयः—महेन्द्राद्रिसमानसारः असौ, महेन्द्रस्य, महोदधेः, च, पतिः, 'अस्ति' यस्य, यात्रासु, महेन्द्रः, क्षरत्सैन्यगजच्छलेन, पुरः, याति, इव ॥ ५४ ॥

सुधा—महेन्द्राद्रिसमानसारः = महेन्द्रगिरितुल्यबलः, असौ = एषः, हेमाङ्गद इति यावत् । महेन्द्रस्य = महेन्द्राख्यगिरेः, महोदधेः = महासागरस्य, च, पतिः = स्वामी, अस्तीति शेषः । यस्य = हेमाङ्गदस्य, यात्रासु = प्रयाणेषु, क्षरत्सैन्यगजच्छलेन = मदस्राविसैनिककुञ्जरच्छद्मना, पुरः = अग्रे, याति = गच्छति, इव । पर्वतसदृशा अस्य गजा इत्यर्थः ॥ ५४ ॥

कोशः—'सारो बले स्थिरांशे च' इत्यमरः । 'सैन्यं सैनिकसेनयोः' इति हैमः । 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः । 'छले छद्मस्खलितयोः' इत्यनेकार्थसंग्रहः ॥ ५४ ॥

समासादि—महेन्द्रश्चासावद्रिश्चेति महेन्द्राद्रिः ( क० धा० ), तद्वत् समानः सारो

यस्य स महेन्द्रादिसमानसारः ( ब० व्री० )। महांश्चासावुदधिरिति महोदधिस्तस्य महोदधेः (क० धा०)। सेनायां भवाः सैन्याः, सैन्याश्च ते गजा इति सैन्यगजाः क्षरन्तश्च ते सैन्यगजाश्चेति क्षरत्सैन्यगजाः (क० धा०), तेषां छलं तेन क्षरत्सैन्यगजच्छलेन (त० पु०) ॥५४॥

व्याकरणम्—सैन्य = सेना 'सेनाया वा' इत्यनेन ण्यः। याति = या ( प्रापणे ), लट् ॥ ५४ ॥

वाच्यपरिवर्तनम्—महेन्द्रादिसमानसारेण, अनेन, महेन्द्रस्य, महोदधेः, च, पतिना, 'भूयते' यस्य, यात्रासु, महेन्द्रेण, क्षरत्सैन्यगजच्छलेन, पुरः, यायते, इव, ॥ ५४ ॥

तात्पर्यार्थः—महेन्द्रपर्वततुल्यबलः असौ हेमाङ्गदः महेन्द्रस्य समुद्रस्य च स्वामी अस्ति, यस्य यात्रायां महेन्द्राद्रिर्मदक्षरतां सैनिककुञ्जराणां व्याजेन अग्रे गच्छतीव ॥ ५४ ॥

भाषाऽर्थः—महेन्द्र पर्वत के तुल्य मतवाला यह ( राजा हेमांगद ) महेन्द्र और महोदधि ( इन दोनों ) का स्वामी है, जिस ( हेमांगद ) की यात्रा में महेन्द्र पर्वत मानों मद बहाने वाले सैनिक गजों के व्याज से आगे ( मद बहाता ) जाता है ॥ ५४ ॥

अथायं भुजद्वये ज्याघातरेखे बिभर्तीत्याह—

ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्ति यश्चापभृतां पुरोगः।
रिपुश्रियां साञ्जनबाष्पसेके बन्दीकृतानामिव पद्धती द्वे ॥ ५५ ॥

सञ्जीविनी—ज्याघातेति। सुभुजश्चापभृतां धनुर्धारिणां पुरोगो धनुर्धराग्रेसरो यः बन्दीकृतानां प्रगृहीतानाम्, 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः। रिपुश्रियां साञ्जनो बाष्पसेको ययोस्ते, कज्जलमिश्राश्रुसिक्ते इत्यर्थः। पद्धती इव द्वे ज्याघातानां रेखे मौर्वीकिणानां राजी भुजाभ्यां बिभर्ति। द्विवचनात्सव्यसाचित्वं गम्यते। रिपुश्रियां भुजाभ्यामेवाहरणात्तद्गतरेखयोस्तत्पद्धतित्वेनोत्प्रेक्षा। तयोः श्यामत्वात्साञ्जनाश्रुसेकोक्तिः ॥ ५५ ॥

अन्वयः—सुभुजः, चापभृतां, पुरोगः, यः, बन्दीकृतानां, रिपुश्रियां, साञ्जनबाष्पसेके, पद्धती, इव, द्वे, ज्याघातरेखे, भुजाभ्यां, बिभर्ति ॥ ५५ ॥

सुधा—सुभुजः = शोभनबाहुः, चापभृतां = धनुर्धारिणां, पुरोगः = अग्रेसरः, यः = हेमाङ्गदः, बन्दीकृतानां = प्रगृहीतानां, रिपुश्रियां = शत्रुलक्ष्मीनां, साञ्जनबाष्पसेके = कज्जलयुक्ताश्रुसिक्ते, पद्धती = सरणी, वर्त्मनीति यावत्। इव = यथा, द्वे = द्वित्वसंख्याविशिष्टे, ज्याघातरेखे = मौर्वीहननराजी, भुजाभ्यां = बाहुभ्यां, बिभर्ति = धारयति ॥ ५५ ॥

कोशः—'मौर्वी ज्या शिञ्जिनी गुणाः' इति, 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति, 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इति चामरः। 'अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने' इति मेदिनी। 'सरणिः पद्धतिः पद्या' इत्यमरः ॥ ५५ ॥

समासादि—हननं घातः, ज्याया घात इति ज्याघातस्तस्य रेखा ते ज्याघातरेखे ( त० पु० )। शोभनौ भुजौ यस्य सः सुभुजः ( ब० व्री० )। चापं बिभ्रतीति चापभृतस्तेषां चापभृताम्। रिपूणां श्रिय इति रिपुश्रियस्तासां रिपुश्रियाम् ( त० पु० )। बाष्पस्य सेक इति बाष्पसेकः ( त० पु० ), अञ्जनेन सहित इति साञ्जनः, साञ्जनो बाष्पसेको ययोस्ते साञ्जनबाष्पसेके ( ब० व्री० )। न बन्द्यः अबन्द्यः, अबन्द्यो बन्द्यः सम्पद्यमाना कृता इति बन्दीकृतास्तासां बन्दीकृतानाम् ॥ ५५ ॥

व्याकरणम्—घात = हन् ( हिंसागत्योः ), घञ् + 'हनस्तोऽचिण्णलोः' इत्यनेन तकारान्तादेशः, 'हो हन्तेर्ञ्णिन्नेषु' इत्यनेन घकारः। बिभर्ति = भृ + लट्। पद्धती = पाद + हन् + क्तिन् 'हिमकापिहतिषु च' इति पदादेशः, बह्वादिभ्यश्च' इति वा ङीप् ॥ ५५ ॥

वाच्यपरिवर्तनम्—सुभुजेन, चापभृतां, पुरोगेण, येन, बन्दीकृतानां, रिपुश्रियां, साञ्जनबाष्पसेके, पद्धती, इव, द्वे, ज्याघातरेखे, भुजाभ्यां, ध्रियेते ॥ ५५ ॥

तात्पर्यार्थः—शोभनबाहुर्धनुर्धारिणामग्रेसरो यो हेमाङ्गदो बन्दीकृतानां शत्रुश्रियां कज्जलमिश्राश्रुसिक्ते सरणी इव द्वे मौर्वीघातराजी बाहुभ्यां बिभर्ति ॥ ५५ ॥

भाषाऽर्थः—सुन्दर भुजावाला धनुषधारियों में अग्रेसर जो ( राजा हेमांगद ) पकड़े गये शत्रुओं की लक्ष्मी के काजल से युक्त आंसुओं से छिड़के हुये दो रास्ते की भांति दोनों हाथों में ( दो ) प्रत्यंचे के घात की रेखा धारण करता है ॥ ५५ ॥

अथ सागर एव हेमाङ्गदं प्रबोधयतीत्याह—

**यमात्मनः सद्मनि संनिकृष्टो मन्द्रध्वनित्याजितयामतूर्यः ।**

**प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥ ५६ ॥**

सञ्जीविनी—यमिति । आत्मनः सद्मनि सुप्तं यं हेमाङ्गदं संनिकृष्टः समीपस्थोऽत एव प्रासादवातायनदृश्यवीचिर्मन्द्रेण गम्भीरेण, 'मन्द्रस्तु गम्भीरे' इत्यमरः । ध्वनिना त्याजितं विवर्जितं यामस्य तूर्यं प्रहरावसानसूचकं वाद्यं येन स तथोक्तः, 'द्वौ यामप्रहरौ समौ' इत्यमरः । अर्णव एव प्रबोधयति, अर्णवस्यैव तूर्यकार्यकारित्वात्तद्वैयर्थ्यमित्यर्थः । समुद्रस्यापि सेव्यः किमन्येषामिति भावः ॥ ५६ ॥

अन्वयः—आत्मनः, सद्मनि, सुप्तं, यं, संनिकृष्टः, मन्द्रध्वनित्याजितयामतूर्यः, प्रासादवातायनदृश्यवीचिः, अर्णवः, एव, प्रबोधयति ॥ ५६ ॥

सुधा—आत्मनः = स्वस्य, सद्मनि = गृहे, सुप्तं = शयानं, यं = हेमाङ्गदं संनिकृष्टः = समीपस्थः, मन्द्रध्वनित्याजितयामतूर्यः = गम्भीरशब्दविवर्जितप्रहरान्तकसूचकवाद्यः, प्रासादवातायनदृश्यवीचिः = प्रासादगवाक्षावलोक्यतरङ्गः, अर्णवः = सागरः, एव, प्रबोधयति = जागरयति, समुद्रस्यैव शब्दकार्यकारित्वात्प्रहरान्तकर्मसूचकवाद्यवैयर्थ्यमित्याशयः ॥ ५६ ॥

कोशः—'वेश्म सद्म निकेतनम्' इति, 'मन्द्रस्तु गम्भीरे' इति, 'द्वौ यामप्रहरौ समौ' इति, 'प्रासादो देवभूभुजाम्' इति, 'वातायनं गवाक्षोऽथ' इति चामरः ॥ ५६ ॥

समासादि—यामस्य तूर्यमिति यामतूर्यं ( त०पु० ), मन्द्रश्चासौ ध्वनिश्चेति मन्द्रध्वनिः ( क० धा० ), तेन त्याजितं यामतूर्यं येन सः मन्द्रध्वनित्याजितयामतूर्यः (ब०व्री०) । प्रासादस्य वातायनानीति प्रासादवातायनानि ( त०पु० ), तैर्दृश्या वीचयो यस्य सः प्रासादवातायनदृश्यवीचिः ( ब०व्री० ) ॥ ५६ ॥

व्याकरणम्—संनिकृष्टः = सम् + नि + कृष् + क्तः । तूर्यः = तूर + यत् । प्रबोधयति = प्र + बुध् + णिच् + लट् । सुप्तं = स्वप् + क्तः ॥ ५६ ॥

वाच्यपरिवर्तनम्—आत्मनः, सद्मनि, सुप्तः, यः, संनिकृष्टेन, मन्द्रध्वनित्याजितयामतूर्येण, प्रासादवातायनदृश्यवीचिना, अर्णवेन, एव, प्रबोध्यते ॥ ५६ ॥

तात्पर्यार्थः—स्वगृहे शयाने यं नृपं हेमाङ्गदं समीपस्थः अत एव गम्भीरध्वनिना प्रहरान्तकसूचकवाद्यं निवारयिता प्रासादगवाक्षदृश्यवीचिः सागर एव एनं प्रबोधयति ॥ ५६ ॥

भाषाऽर्थः—अपने घर में सोते हुये जिसके समीप गम्भीर शब्द से पहर पहर की ध्वनि को चुप कराने वाला महलकी खिड़कियोंमें दीखती हुई लहरों वाला सागर ही जगाता है॥५६॥

अथ सागरस्य तटेषु प्रशमितप्रस्वेदक्लेशा सती त्वमनेन सह विहरेत्याह—

**अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।**

**द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥ ५७ ॥**

सञ्जीविनी—अनेनेति । अनेन राज्ञा सार्धं तालीवनैर्मर्मरेषु मर्मरेति ध्वनत्सु, 'अथमर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरवचनाद्गुणपरस्यापि मर्मरशब्दस्य गुणिपरत्वं प्रयोगादवसेयम् । अम्बुराशेः समुद्रस्य तीरेषु द्वीपान्तरेभ्य आनीतानि लवङ्गपुष्पाणि देवकुसुमानि यैस्तैः, 'लवङ्गं देवकुसुमम्' इत्यमरः । मरुद्भिर्वातैरपाकृताः प्रशमिताः स्वेदस्य लवा बिन्दवो यस्याः सा

तथाभूता सती त्वं विहर क्रीड ॥ ५७ ॥

अन्वयः--अनेन, सार्धं, तालीवनमर्मरेषु, अम्बुराशेः, तीरेषु, द्वीपान्तरानीतलवङ्गपुष्पैः, मरुद्भिः, अपाकृतस्वेदलवा, 'सती-त्वम्' विहर ॥ ५७ ॥

सुधा--अनेन = अमुना, हेमाङ्गदेनेति यावत् । सार्धं = समं, तालीवनमर्मरेषु = तालीवनमर्मरशब्दयुक्तेषु, अम्बुराशेः = जलपुञ्जस्य, समुद्रस्येति यावत् । तीरेषु = तटेषु, द्वीपान्तरानीतलवङ्गपुष्पैः = द्वीपान्तरप्राप्तश्रीसंज्ञकुसुमैः, मरुद्भिः = पवनैः, अपाकृतस्वेदलवा = प्रशमितप्रस्वेदकणा, सतीति शेषः । विहर = क्रीड, त्वमिति शेषः ॥ ५७ ॥

कोशः—'साकं सत्रा समं सह' इत्यमरः । 'राशिपुञ्जादि(?)' इत्यनेकार्थसंग्रहः । 'कूलं रोधश्च तीरञ्च' इत्यमरः । 'मर्मरो वसनान्तरं । शुष्कपत्रध्वनौ चापि' इति, 'स्वेदो घर्मे स्वेदने च' इति चानेकार्थसंग्रहः । 'लवङ्गं देवकुसुमं श्रीसंज्ञम्' इति, 'लवलेशकणाणवः' इति चामरः ॥ ५७ ॥

समासादि—अम्बूनां राशिरित्यम्बुराशिस्तस्याम्बुराशेः ( त० पु० ) । तालीनां वनानीति तालीवनानि तैः मर्मरास्तेषु तालीवनमर्मरेषु ( त० पु० ) । लवङ्गानां पुष्पाणीति लवङ्गपुष्पाणि, अन्यानि द्वीपानि द्वीपान्तराणि, तेभ्य आनीतानि लवङ्गपुष्पाणि यैस्तैः तैर्द्वीपान्तरानीतलवङ्गपुष्पैः ( ब० व्री० ) । अपाकृताः स्वेदस्य लवा यया सा अपाकृतस्वेदलवा ( ब० व्री० ) ॥ ५७ ॥

व्याकरणम्—विहर = वि + हृञ् + लोट् । आनीत = आ + णीञ् ( प्रापणे—जकारेत् ), क्तः + णस्य नः । अपाकृत = अप + आ + कृ + क्तः ॥ ५७ ॥

वाक्यपरिवर्तनम्—अनेन, सार्धं, तालीवनमर्मरेषु, अम्बुराशेः, तीरेषु, द्वीपान्तरानीतलवङ्गपुष्पैः, मरुद्भिः, अपाकृतस्वेदलवया, 'सत्या-त्वया' विह्रियताम् ॥ ५७ ॥

तात्पर्यार्थः—तालीवनैः मर्मरशब्दयुक्तेषु समुद्रस्य तटेषु द्वीपान्तरेभ्यः प्राप्तलवङ्गपुष्पैः पवनैः प्रशमितप्रस्वेदकणा सती त्वम् अनेन सह क्रीड ॥ ५७ ॥

भावार्थः—इस ( हेमाङ्गद ) के साथ तालीवनों के मर्मर शब्द वाले समुद्र के तट में द्वीपान्तरों से लवंग के फूलों को लाने वाली हवा से पसीने की बिन्दुओंको सुखाती हुई (तू ) विहार कर ॥ ५७ ॥

अथेन्दुमती हेमाङ्गदं तत्याजेत्याह—

**प्रलोभिताऽप्याकृतिलोभनीया विदर्भराजावरजा तयैवम् ।**
**तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५८ ॥**

सञ्जीविनी—प्रलोभिताऽपीति । आकृत्या रूपेण लोभनीयाऽऽकर्षणीया, न तु वर्णनमात्रेणेत्यर्थः । विदर्भराजावरजा भोजानुजेन्दुमती तया सुनन्दयैवं प्रलोभिताऽपि प्रचोदिताऽपि नीत्या पुरुषकारेण दूरकृष्टा दूरमानीता लक्ष्मीः प्रतिकूलं दैवं यस्य तस्मात्पुंस इव तस्माद्धेमाङ्गदादपावर्तत प्रतिनिवृत्ता ॥ ५८ ॥

अन्वयः—आकृतिलोभनीया, विदर्भराजावरजा, तया, एवं, प्रलोभिता, अपि, नीत्या, दूरकृष्टा, लक्ष्मीः, प्रतिकूलदैवात्, 'जनात्' इव, तस्मात्, अपावर्तत ॥ ५८ ॥

सुधा—आकृतिलोभनीया = रूपाकर्षणीया, न तु प्रशंसामात्रेणेत्यर्थः । विदर्भराजावरजा = भोजानुजा, इन्दुमतीति यावत् । तया = पूर्वोक्तया, सुनन्दयेति यावत् । एवम् = इत्थं, प्रलोभिता = प्रेरिता, अपि, नीत्या = नयेन, पुरुषार्थेनेति यावत् । दूरकृष्टा = दूरमानीता, लक्ष्मीः = श्रीः, प्रतिकूलदैवात् = अपकृष्टदिष्टात्, जनादिति शेषः । इव = यथा, तस्मात् = हेमाङ्गदात् , अपावर्तत = निवृत्ता ॥ ५८ ॥

कोशः—'आकृतिस्तु, जातौ रूपे वपुष्यपि' इत्यनेकार्थसंग्रहः । 'यवीयोऽवरजानुजाः' इ-

त्यमरः । 'नीतिर्नये प्रापणे च' इत्यनेकार्थसंग्रहः । 'प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च' इति, 'दैवं दिष्टं भागधेयम्' इति चामरः ॥ ५८ ॥

समासादि—लोभितुं योग्या लोभनीया, आकृत्या लोभनीयेत्याकृतिलोभनीया ( त० पु० )। विदर्भाणां राजा इति विदर्भराजस्तस्यावरजेति विदर्भराजावरजा (त० पु० )। प्रतिकूलं दैवं यस्य स प्रतिकूलदैवस्तस्मात् प्रतिकूलदैवात् ( ब० व्री० ) ॥ ५८ ॥

व्याकरणम्—प्रलोभिता = प्र + लुभ + क्तः + इट् । आकृति = आ + कृ + क्तिन् । लोभनीया = लुभ + अनीयर् । अपावर्तत = अप + अ + वृतु ( वर्तने—उकारेत् ), लङ्, तादेशः ॥५८॥

वाच्यपरिवर्तनम्—आकृतिलोभनीयया, विदर्भराजावरजया, तया, एवं, प्रलोभितया, अपि, [illegible], दूरकृष्टया, लक्ष्म्या, प्रतिकूलदैवात्, 'जनात्' इव, तस्मात्, अपावृत्यत ॥ ५८ ॥

तात्पर्यार्थः—यथा प्रतिकूलदैवात् पुरुषात् पुरुषार्थेन दूरमानीता लक्ष्मीः निवर्तते, तथैव रूपेण लोभनीया इन्दुमती सुनन्दया इत्थं प्रेरिताऽपि हेमाङ्गदात् प्रतिनिवृत्ता ॥ ५८ ॥

भाषाऽर्थः—रूप से लुभाने वाली विदर्भराजा की छोटी बहन उस ( सुनन्दा ) के इस प्रकार लुभाने पर भी जैसे पुरुषार्थ द्वारा दूर लाई गयी लक्ष्मी दैव के प्रतिकूल हुये पुरुष को छोड़ता है, वैसे उस ( हेमांगद ) को छोड़ कर चली गई ॥ ५८ ॥

अथ सुनन्दा नागपुरेशं प्राप्य इन्दुमतीमुवाचेत्याह—

**अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।**
**इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥ ५९ ॥**

सञ्जीविनी—अथेति । अथ द्वारे नियुक्ता दौवारिकी सुनन्दा, "तत्र नियुक्तः" इति ठक्प्रत्ययः, "द्वारादीनां च" इत्यौ आगमः । आकारेण देवसरूपं देवतुल्यम् उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्जतीरवर्तिनागपुरस्य नाथमेत्य प्राप्य हे चकोराक्षि ! इतो विलोकयेति पूर्वानुशिष्टां पूर्वमुक्तां भोजस्य राज्ञो गोत्रापत्यं स्त्रियं भोज्यामिन्दुमतीम्, "क्रौड्यादिभ्यश्च" इत्यत्र भोजात्क्षत्रियादित्युपसंख्यानात्ष्यङ्प्रत्ययः, "यङश्चाप्" इति चाप् । निजगाद, इतो विलोकयेति पूर्वमुक्त्वा पश्चाद्वक्तव्यं निजगादेत्यर्थः ॥ ५९ ॥

अन्वयः—अथ, दौवारिकी, देवसरूपम्, उरगाख्यस्य, पुरस्य, नाथम्, एत्य, हे चकोराक्षि !, 'इतः, 'त्वम्' विलोकय, इति, पूर्वानुशिष्टां, भोज्यां, निजगाद ॥ ५९ ॥

सुधा—अथ = अनन्तरम्, हेमाङ्गदानङ्गीकरणानन्तरमिति यावत् । दौवारिकी = द्वाररक्षिका, सुनन्देति यावत् । देवसरूपं = सुराकारं, देवतुल्याकारमिति यावत् । उरगाख्यस्य = पन्नगाह्वस्य, पुरस्य = नगरस्य, पाण्ड्यदेशे कान्यकुब्जतटवर्तिनागपुरस्येत्यर्थः । नाथं = स्वामिनम्, एत्य = प्राप्य, हे चकोराक्षि ! = हे कोरकेक्षणे !, इतः, विलोकय = पश्य, त्वमिति शेषः । इति = एवं, पूर्वानुशिष्टां = प्रथमोक्तां, भोज्याम् = इन्दुमतीं, निजगाद = उवाच, 'इतो विलोकय' इति पूर्वम् उक्त्वा पश्चाद् वक्तव्यविषयं निजगादेत्यर्थः ॥ ५९ ॥

कोशः—'उरगः पन्नगो भोगी' इति, 'आख्याह्वे अभिधानञ्च' इति चामरः । 'पुरं शरीरे नगरे' इति, 'देवस्तु नृपतौ तोयदे सुरे' इति चानेकार्थसंग्रहः ॥ ५९ ॥

समासादि—उरग आख्या यस्य स उरगाख्यस्तस्य उरगाख्यस्य ( ब० व्री० )। द्वारे नियुक्ता इति दौवारिकी । देवानां समानं रूपं यस्य स देवसरूपस्तं देवसरूपम् ( त० पु० )। चकोर इवाक्षिणी यस्याः सा तत्संबुद्धौ हे चकोराक्षि ! ( ब० व्री० )। पूर्वम् अनुशिष्टेति पूर्वानुशिष्टा तां पूर्वानुशिष्टाम् ( क० धा० )। भोजस्य गोत्रापत्यं स्त्री भोज्या तां भोज्याम् ॥ ५९ ॥

व्याकरणम्—दौवारिकी = द्वार + 'तत्र नियुक्तः' इत्यनेन ठक् + 'द्वारादीनाञ्च' इत्यनेन औकारागमः । अनुशिष्टाम् = अनु + शास् + क्तः + 'शास इदङ्हलोः' इतीत्वम् । निजगाद = नि + गद् + लिट् । भोज्यां = भोज + ष्यङ् + 'यङश्चाप्' इत्याप् ॥ ५९ ॥

वाच्यपरिवर्तनम्—अथ, दौवारिकया, देवरूपाम्, उरगाख्यस्य, पुरस्य, नाथम्, एत्य, हे चकोराक्षि !, इतः, 'त्वया' विलोक्यताम्, इति, पूर्वानुशिष्टा, भाज्या, निजगदे ॥ ५९ ॥

तात्पर्यार्थः—अथ द्वारपालिका सुनन्दा आकारेण देवतुल्यं नागपुरस्य स्वामिनं प्राप्य हे चकोराक्षि ! इतो विलोकय इति पूर्वमुक्त्वा पश्चात् वक्तव्यविषयमिन्दुमतीं जगाद ॥ ५९ ॥

भाषाऽर्थः—इसके बाद द्वारपालिना ( सुनंदा ), देवता के सदृश रूपवाले नागपुराधीश के पास प्राप्त होकर, हे चकोर की समान आखों वाली ! 'इधर देख' ऐसा पहले कहकर (पीछे वक्तव्य-विषय को ) इन्दुमती से कहा ॥ ५९ ॥

अथायं पाण्ड्यः अद्रिराज इवाभातीत्याह—

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ६० ॥

सञ्जीविनी—पाण्ड्य इति । अंसयोरर्पिताः लम्बन्त इति लम्बा हारा यस्य सः, हरिचन्दनेन गोशीर्षाख्येन चन्दनेन, 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः । क्लृप्ताङ्गरागः सिद्धानुलेपनोऽयं पाण्डूनां जनपदानां राजा पाण्ड्यः, "पाण्डोर्जनपदशब्दात्क्षत्रियाड्ड्यण्वक्तव्यः" इति ड्यण्प्रत्ययः, तस्य राजन्यपत्यवदिति वचनात् । बालातपेन रक्ता अरुणाः सानवो यस्य स सनिर्झरोद्गारः प्रवाहस्यन्दनसहितः, 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । अद्रिराज इवाभाति ॥ ६० ॥

अन्वयः—अंसार्पितलम्बहारः, हरिचन्दनेन, क्लृप्ताङ्गरागः, अयं, पाण्ड्यः, बालातपरक्तसानुः, सनिर्झरोद्गारः, अद्रिराजः, इव, आभाति ॥ ६० ॥

सुधा—अंसार्पितलम्बहारः = स्कन्धप्रदत्तलम्बायमानमुक्तावलिः, हरिचन्दनेन = गोशीर्षाह्वचन्दनेन, क्लृप्ताङ्गरागः = सिद्धानुलेपनः, हरिचन्दनेन लिप्ताङ्ग इत्यर्थः । अयम् = एषः, पुरोवर्त्तीति यावत् । पाण्ड्यः = पाण्ड्यदेशनृपः, बालातपरक्तसानुः = प्रातःकालीनप्रकाशेन अरुणप्रस्थः, सनिर्झरोद्गारः = जलप्रवाहयुक्तः, अद्रिराजः = पर्वतेशः, हिमालय इत्यर्थः । इव, आभाति = शोभते ॥ ६० ॥

कोशः—'रोहितो लोहितो रक्तः' इत्यमरः । 'हरिचन्दनमस्त्री स्यात्त्रिदशानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि' इति, 'सानुरस्त्री वने प्रस्थे वात्यामार्गप्रकोविदे' इति च मेदिनी । 'प्रकाशो द्योत आतपः' इति, 'वारिप्रवाहो निर्झरो झरः' इति चामरः ॥ ६० ॥

समासादि—लम्बन्त इति लम्बाः, लम्बाश्च ते हारा इति लम्बहाराः (क० धा०), अंसयोरर्पिता लम्बहारा यस्य सः अंसार्पितलम्बहारः ( ब० व्री० ) । अङ्गस्य राग इत्यङ्गरागः ( त० पु० ), क्लृप्तोऽङ्गरागो येन सः क्लृप्ताङ्गरागः ( ब० व्री० ) । हरेः ( इन्द्रस्य ) चन्दनमिति हरिचन्दनम् ( त० पु० ) । बालश्चासावातप इति बालातपः ( क० धा० ), तेन रक्ताः सानवो यस्य स बालातपरक्तसानुः ( ब० व्री० ) । निर्झरेण सहितः सनिर्झरस्तस्योद्गार इति सनिर्झरोद्गारः ( त० पु० ) । अद्रेः राजेत्यद्रिराजः ( त० पु० ) ॥ ६० ॥

व्याकरणम्—पाण्ड्यः = पाण्डु + ड्यण् । क्लृप्तः = कृपू + क्तः + 'कृपो रो लः' इति लत्वम् । आभाति = आ + भा + लट् । रक्त = रञ्ज + क्तः । उद्गारः = उद् + गॄ (निगरणे), 'उन्योर्ग्रः' इत्यनेन घञ् ॥ ६० ॥

वाच्यपरिवर्तनम्—अंसार्पितलम्बहारेण, हरिचन्दनेन, क्लृप्ताङ्गरागेण, अनेन, पाण्ड्येन, बालातपरक्तसानुना, सनिर्झरोद्गारेण, अद्रिराजेन, इव, आभायते ॥ ६० ॥

तात्पर्यार्थः—यथा बालातपेन अरुणप्रस्थः प्रवाहस्यन्दसहितश्च पर्वतराजः शोभते, तथैव स्कन्धार्पितलम्बायमानमुक्तावलिर्हरिचन्दनेन लिप्तशरीरोऽयं पाण्डुदेशाधिपो विभाति ॥ ६० ॥

भाषाऽर्थः—कन्धे पर लटके हुये हार ( और ) हरिचन्दन से लिप्त शरीर वाला यह पाण्डु देश का राजा, सबेरेकी घामसे लाल शिखर (और) झरना युक्त पर्वतराज (हिमालय) की भांति शोभित होरहा है ॥ ६० ॥

अथागस्त्यः प्रेम्णाऽस्य पाण्ड्यस्य सुस्नातं पृच्छतीत्याह—

**विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः ।**
**प्रीत्याऽश्वमेधावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६१ ॥**

सञ्जीविनी—विन्ध्यस्येति । विन्ध्यस्य नाम्नो महाद्रेः, तपनमार्गनिरोधाय वर्धमानस्येति शेषः । संस्तम्भयिता निवारयिता निःशेषं पीत उज्झितः पुनस्त्यक्तः सिन्धुराजः समुद्रो येन सोऽगस्त्योऽश्वमेधस्यावभृथे दीक्षान्ते कर्मणि, 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । आर्द्रमूर्तेः, स्नातस्येत्यर्थः । यस्य पाण्ड्यस्य प्रीत्या स्नेहेन न तु दाक्षिण्येन सुस्नातं पृच्छतीति सौस्नातिको भवति, "पृच्छतौ सुस्नातादिभ्यः" इत्युपसंख्यानाट्ठक् ॥ ६१ ॥

अन्वयः—विन्ध्यस्य, महाद्रेः, संस्तम्भयिता, निःशेषपीतोज्झितसिन्धुराजः, अगस्त्यः, अश्वमेधावभृथार्द्रमूर्तेः, यस्य, प्रीत्या, सौस्नातिकः, भवति ॥ ६१ ॥

सुधा—विन्ध्यस्य = विन्ध्यनाम्नः, महाद्रेः = महापर्वतस्य, तपनमार्गनिरोधाय वर्धमानस्येति शेषः । संस्तम्भयिता = (१)अवरोधयिता, निःशेषपीतोज्झितसिन्धुराजः = सम्पूर्णपानानन्तरत्यक्तसमुद्रपतिः, अगस्त्यः = कुम्भयोनिः, अगस्त्यमुनिरिति यावत् । अश्वमेधावभृथार्द्रमूर्तेः = अश्वमेधदीक्षान्तक्लिन्नप्रतिमस्य, अश्वमेधावभृथस्नातस्येत्यर्थः । यस्य = पाण्ड्यस्य, प्रीत्या = प्रेम्णा, सौस्नातिकः = सुस्नातपृच्छकः, भवति = विद्यते ॥ ६१ ॥

कोशः—'दीक्षान्तोऽवभृथो यज्ञे' इति, 'आर्द्रं सार्द्रं क्लिन्नं तिमितम्' इति चामरः । 'मूर्तिः पुनः प्रतिमायाम्' इत्यनेकार्थसंग्रहः । 'अथागस्त्यः कुम्भयोनिः' इति शब्दार्णवः ॥ ६१ ॥

समासादि—महांश्चासावद्रिरिति महाद्रिस्तस्य महाद्रेः ( क० धा० ) । आदौ पीतः पश्चात् उज्झित इति पीतोज्झितः ( क० धा० ), सिन्धूनां राजा इति सिन्धुराजः ( त०पु० ), निःशेषं पीतोज्झितः सिन्धुराजो येन स निःशेषपीतोज्झितसिन्धुराजः ( ब० व्री० ) । अश्वमेधस्यावभृथ इत्यश्वमेधावभृथः (त० पु० ) तस्मिन् आर्द्रा मूर्तिर्यस्य स तस्य अश्वमेधावभृथार्द्रमूर्तेः ( ब० व्री० ) । सुस्नातं पृच्छतीति सौस्नातिकः ॥ ६१ ॥

व्याकरणम्—संस्तम्भयिता = सम् + स्तम्भ + णिच् + तृच् । उज्झित = उज्झ ( उत्सर्गे), क्तः + इट् । सौस्नातिकः = सुस्नात + ठक् । भवति = भू + लट् ॥ ६१ ॥

वाच्यपरिवर्तनम्—विन्ध्यस्य, महाद्रेः, संस्तम्भयित्रा, निःशेषपीतोज्झितसिन्धुराजेन, अगस्त्येन, अश्वमेधावभृथार्द्रमूर्तेः, यस्य, प्रीत्या, सौस्नातिकेन, भूयते ॥ ६१ ॥

तात्पर्यार्थः—यदाऽसौ राजा यज्ञान्तस्नानं करोति, तदा विन्ध्याचलस्य अवरोधयिता सम्पूर्णसमुद्रपानकर्ता अगस्त्यः प्रेम्णा सुस्नातपृच्छको भवति ॥ ६१ ॥

भाषाऽर्थः—महापर्वत विन्ध्याचल को रोकने ( और ) संपूर्ण समुद्र को शोषने वाले अगस्त्य मुनि, अश्वमेधयज्ञ के आखिरी स्नान में भीगे शरीर वाले इस ( पाण्ड्य ) राजा से प्रेम पूर्वक सुस्नात ( कुशल ) पूछने वाले होते हैं ॥ ६१ ॥

अथ शङ्करात् ब्रह्मशिरोनामकं शस्त्रमासवता पाण्ड्येन सह रावणः सन्धिं कृत्वेन्द्रलोकं

(१) पौराणिकी कथा—पुरा किल विन्ध्यगुरुर्भगवानगस्त्यः इन्द्रादिसुरगणैः प्रार्थितः सन् सूर्यमार्गावरोधाय वर्द्धितशरीरस्य विन्ध्याचलस्य समीपमागतवान् । विन्ध्यस्तं गुरुं प्रणनाम । अगस्त्यस्तु 'मम प्रत्यावर्तनं यावत् त्वमेतदवस्थ एव तिष्ठ' इत्युक्त्वा अपुनर्निवर्तनाय दक्षिणां दिशमाश्रितवानीत ।

जेतुं जगामेत्याह—

**अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः ।**
**पुरा जनस्थानविमर्दशङ्की संधाय लङ्काधिपतिः प्रतस्थे ॥ ६२ ॥**

सञ्जीविनी--अस्त्रमिति । पुरा पूर्वं जनस्थानस्य खरालयस्य विमर्दशङ्की दृप्त उद्धतो लङ्काधिपती रावणो दुरापं दुर्लभमस्त्रं ब्रह्मशिरोनामकं हरादाप्तवता येन पाण्डयेन संधाय इन्द्रलोकावजयायेन्द्रलोकं जेतुं प्रतस्थे, इन्द्रविजयिनो रावणस्यापि विजेतेत्यर्थः ॥ ६२ ॥

अन्वयः—पुरा, जनस्थानविमर्दशङ्की, दृप्तः, लङ्काधिपतिः, दुरापम्, अस्त्रं, हरात्, आप्तवता, येन, सन्धाय, इन्द्रलोकावजयाय, प्रतस्थे ॥ ६२ ॥

सुधा—पुरा = पूर्वं, जनस्थानविमर्दशङ्की = खरालयविध्वंससंशयी, ( जनस्थानमिति खराख्यस्यासुरस्य निवासस्थानम् ।) दृप्तः = उद्धतः, लङ्काधिपतिः = लङ्केशः, रावण इति यावत । दुरापं = दुर्लभम्, अस्त्रं = शस्त्रं, ब्रह्मशिरोनामकमस्त्रमिति यावत् । हरात् = शिवात् , आप्तवता = प्राप्तवता, येन = पाण्डयेन, संधाय = सन्धिं विधाय, इन्द्रलोकावजयाय = इन्द्रलोकं जेतुं, प्रतस्थे = प्रस्थितः, इन्द्रविजयिनो रावणस्यापि विजेतेति भावः ॥ ६२ ॥

कोशः—'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इत्यमरः । 'हरो नाशकरुद्रयोः । वैश्वानरेऽपि' इति, 'शङ्का स्यात्संशये भये' इति चानेकार्थसंग्रहः ॥ ६२ ॥

समासादि—लङ्काया अधिपतिरिति लङ्काधिपतिः ( त० पु० ) । जनस्थानस्य विमर्द इति जनस्थानविमर्दस्तस्य शङ्काऽस्यास्तीति जनस्थानविमर्दशङ्की ( त० पु० ) । इन्द्रस्य लोक इतीन्द्रलोकस्तस्यावजयस्तस्मै इन्द्रलोकावजयाय ( त० पु० ) ॥ ६२ ॥

व्याकरणम्— दृप्तः = दृप् + क्तः । संधाय = सम् + धा + क्त्वा, ल्यबादेशः । प्रतस्थे = प्र = ष्ठा ( गतिनिवृत्तौ ), लिट् ॥ ६२ ॥

वाच्यपरिवर्तनम्—पुरा, जनस्थानविमर्दशङ्किना, दृप्तेन, लङ्काधिपतिना, दुरापम्, अस्त्र म्, आप्तवता, येन, सन्धाय, इन्द्रलोकावजयाय, प्रतस्थे ॥ ६२ ॥

तात्पर्यार्थः—पुरा खराख्यदैत्यस्थानविध्वंसशङ्की उद्धतो रावणः शिवाद्दुर्लभं ब्रह्मशिरोनामकं शस्त्रम् आप्तवता पाण्डयेन सह सन्धिं विधाय इन्द्रलोकं जेतुं प्रतस्थे ॥ ६२ ॥

भाषाऽर्थः—पहले जनस्थान ( खरदैत्यके निवासस्थान ) के नाश की शंका करने वाला उद्दंड लंका का स्वामी ( रावण ), शिव जी से दुर्लभ (ब्रह्मशिरोनामक) शस्त्र को प्राप्त करने वाले जिस ( पाण्डय ) के साथ संधि कर इन्द्रलोक को जीतने के लिये गया था ॥ ६२ ॥

अथ पाण्डयेन सह पाणिग्रहणे सति त्वं दक्षिणस्या दिशः सपत्नी भविष्यसीत्याह—

**अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी ।**
**रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥ ६३ ॥**

सञ्जीविनी--अनेनेति । महाकुलीनेन महाकुले जातेन, "महाकुलादञ्खञौ" इति खञ्प्रत्ययः । अनेन पाण्डयेन पाणौ त्वदीये विधिवद्यथाशास्त्रं गृहीते सति गुर्वी गुरुः, "वोतो गुणवचनात्" इति ङीप् । महीव रत्नैरनुविद्धो व्याप्तोऽर्णव एव मेखला यस्यास्तस्याः, इदं विशेषणं मह्यामिन्दुमत्यां च योज्यम् । दक्षिणस्या दिशः सपत्नी भव, अनेन सपत्न्यन्तराभावो ध्वन्यते ॥ ६३ ॥

अन्वयः—महाकुलीनेन, अनेन पाणौ, विधिवत्, गृहीते, 'सति-त्वं' गुर्वी, मही, इव, रत्नानुविद्धार्णवमेखलायाः, दक्षिणस्याः, दिशः, सपत्नी, भव ॥ ६३ ॥

सुधा—महाकुलीनेन = महावंशसम्भूतेन, अनेन = अमुना, पाण्डयेनेति यावत् । पाणौ = करे, त्वदीये हस्ते इत्यर्थः । विधिवत् = यथाशास्त्रं, गृहीते = स्वीकृते, सतीति शेषः ।

गुर्वी = महती, मही = पृथ्वी, इव = यथा, रत्नानुविद्धार्णवमेखलायाः = मणिव्याप्ताब्धिरशनायाः, दक्षिणस्याः = अवाचः, दिशः = आशायाः, सपत्नी = समानपतिका, भव = भूयाः, त्वमिति शेषः। रत्नानुविद्धेत्यादि विशेषणं मह्यामिन्दुमत्यां च योजनीयमिति बोध्यम् ॥६३॥

कोशः—'पाणिः शमः शयो हस्तः' इत्यमरमाला। 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके' इत्यनेकार्थसंग्रहः। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः ॥ ६३ ॥

समासादि—महच्च तत्कुलमिति महाकुलं तस्मिन् जातो महाकुलीनः ( क० धा० )। अनुविद्धश्चासावर्णव इत्यनुविद्धार्णवः ( क० धा० ), रत्नैरनुविद्धार्णव इति रत्नानुविद्धार्णवः ( त० पु० ), स एव मेखला यस्याः सा तस्याः रत्नानुविद्धार्णवमेखलायाः ( ब० व्री० )। समानः पतिर्यस्याः सा सपत्नी ( ब० व्री० ) ॥ ६३ ॥

व्याकरणम्—गृहीते = ग्रह(उपादाने), क्तः + सम्प्रसारणम्। गुर्वी = गुरु + 'वोतो गुणवचनात्' इति ङीष्। अनुविद्ध = अनु + व्यध + क्तः + सम्प्रसारणम्। सपत्नी = समान + पति + 'नित्यं सपत्न्यादिषु' इत्यनेन ङीष्, नोभावश्च, निपातनात्समानस्य सभावोऽपि। भव = भू + लोट् ॥ ६३ ॥

वाच्यपरिवर्तनम्—महाकुलीनेन, अनेन, पाणौ विधिवत्, गृहीते, 'सति–त्वया' गुर्व्या, मह्या, इव, रत्नानुविद्धार्णवमेखलायाः, दक्षिणस्याः, दिशः, सपत्न्या, भूयताम् ॥ ६३ ॥

तात्पर्यार्थः—महाकुलसम्भूतेन पाण्ड्येन सह यथाशास्त्रं पाणिग्रहणे सति त्वम् गुर्वी पृथ्वी इव रत्नैरनुव्याप्तसमुद्ररशनायाः दक्षिणस्याः दिशः सपत्नी भव ॥ ६३ ॥

भाषाऽर्थः—बड़े कुल में उत्पन्न इस (पाण्ड्य) के साथ विधि पूर्वक पाणिग्रहण (विवाह) होने से ( तू ) बड़ी पृथ्वी के समान रत्नों से भरे समुद्ररूपी कांची ( करधनी ) वाली दक्षिण दिशा की सपत्नी ( सौत ) हो ॥ ६३ ॥

किञ्च त्वं पाण्ड्येन सह मलयस्थलीषु रंस्यस इत्याह--

ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ ६४ ॥

सञ्जीविनी—ताम्बूलेति। ताम्बूलवल्लीभिर्नागवल्लीभिः परिरब्धाः पूगाः क्रमुका यासु तासु, 'ताम्बूलवल्ली ताम्बूलीनागवल्ल्यपि' इति, 'घोण्टातु पूगः क्रमुकः' इति चामरः। एलालताभिरालिङ्गिताश्चन्दना मलयजा यासु तासु, 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। तमालस्य तापिच्छस्य पत्राण्येवास्तरणानि यासु, 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः। मलयस्थलीषु शश्वन्मुहुः सदा वा रन्तुं प्रसादानुकूला भव ॥ ६४ ॥

अन्वयः—ताम्बूलवल्लीपरिणद्धपूगासु, एलालतालिङ्गितचन्दनासु, तमालपत्रास्तरणासु, मलयस्थलीषु, शश्वत्, रन्तुं, 'त्वम्' प्रसीद ॥ ६४ ॥

सुधा—ताम्बूलवल्लीपरिणद्धपूगासु = नागवल्लीपरिरब्धक्रमुकासु, एलालतालिङ्गितचन्दनासु = चन्द्रबालालताश्लिष्टमलयजासु, तमालपत्रास्तरणासु = तापिच्छदलरूपाच्छादनासु, मलयस्थलीषु = मलयाकृत्रिमभूमिषु, शश्वत् = मुहुः, रन्तुं = परिरब्धुं, प्रसीद = प्रसन्ना भव, अनुकूला भवेति यावत्। त्वमिति शेषः ॥ ६४ ॥

कोशः—'ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' इति मेदिनी। 'पृथ्वीका चन्द्रबालैला' इति, 'वल्ली तु व्रततिर्लता' इति, 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इति चामरः। 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी। 'मलयो देश आरामे शैलांशे पर्वतान्तरे' इत्यनेकार्थसंग्रहः। 'मुहुः पुनः पुनः शश्वत्' इत्यमरः ॥ ६४ ॥

समासादि—ताम्बूलाख्या वल्लीति ताम्बूलवल्ली (शाकपार्थिवादिः), ताभिः परिणद्धाः पूगा यासु तास्तासु ताम्बूलवल्लीपरिणद्धपूगासु ( ब० व्री० )। एलाया लता इत्येलालताः

(त० पु०), ताभिः आलिङ्गितानि चन्दनानि यासु तास्तासु एलालतालिङ्गितचन्दनासु (ब० व्री०)। तमालस्य पत्राण्येवास्तरणानि यासु तास्तासु तमालपत्रास्तरणासु (ब०व्री०)। मलयस्य स्थल्यस्तासु मलयस्थलीषु (त० पु०) ॥ ६४ ॥

व्याकरणम्--परिणद्ध = परि + णह् + क्तः । आलिङ्गित = आ + लिगि (चित्रीकरणे-इदित्), क्तः + नुम् + इट् । आस्तरणासु = आ + स्तृञ् (आच्छादने-ञित्), ल्युट् । रन्तुं = रमु (क्रीडायाम्-उदित्), तुमुन् । प्रसीद = प्र + षद्लृ--लोट् + 'पाघ्राध्मा' इति सीदादेशः । स्थली = स्थल + 'जानपदकुण्डगोणस्थल' इत्यादिना ङीप् ॥ ६४ ॥

वाच्यपरिवर्तनम्--ताम्बूलवल्लीपरिणद्धपूगासु, एलालतालिङ्गितचन्दनासु, तमालपत्रास्तरणासु, मलयस्थलीषु, शश्वत, रन्तुं, 'त्वया' प्रसद्यताम् ॥ ६४ ॥

तात्पर्यार्थः--नागवल्लीदलैः परिणद्धक्रमुकासु एलालताभिराश्लिष्टमलयजासु तमालपत्ररूपाच्छादनासु मलयाचलाकृत्रिमभूमिषु निरन्तरं पाण्डयेन सह रन्तुं त्वं प्रसन्ना भव ॥ ६४ ॥

भाषाऽर्थः--पान की लताओं से ढके हुये सुपारी के वृक्षों से, तथा इलायची की लताओं से लिपटे चंदन वाली और तमाल के पत्तों के बिछौने वाली मलयाचल पहाड़ की अकृत्रिम भूमियों में बराबर विहार करने के लिये (तू) प्रसन्न हो ॥ ६४ ॥

किञ्चानेन पाणिग्रहणे त्वं तडित्तोयदयोर्योग इव शोभिष्यस इत्याह--

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥ ६५ ॥

सञ्जीविनी—इन्दीवरेति । असौ नृप इन्दीवरश्यामतनुः त्वं रोचना गोरोचनेव गौरी शरीरयष्टिर्यस्याः सा, ततस्तडित्तोयदयोर्विद्युन्मेघयोरिव वां युवयोर्योगः समागमोऽन्योन्यशोभायाः परिवृद्धयेऽस्तु ॥ ६५ ॥

अन्वयः--असौ, नृपः, इन्दीवरश्यामतनुः, 'अस्ति' त्वं, रोचनागौरशरीरयष्टिः, 'असि' तडित्तोयदयोः, इव, वां, योगः, अन्योन्यशोभापरिवृद्धये, अस्तु ॥ ६५ ॥

सुधा--असौ = एषः, पुरोवर्त्तीति यावत् । नृपः = राजा, इन्दीवरश्यामतनुः—नीलकमलश्यामलवपुः, अस्तीति शेषः । त्वं रोचनागौरशरीरयष्टिः = गोरोचनवच्छुभ्रकायदण्डा, असीति शेषः । तडित्तोयदयोः = विद्युन्मेघयोः, इव, वां = युवयोः, योगः = सङ्गतिः, समागम इति यावत् । अन्योन्यशोभापरिवृद्धये = परस्परद्युतिवर्द्धनाय, अस्तु = भवतु ॥ ६५ ॥

कोशः—'इन्दीवरं नीलोत्पलम्' इत्यनेकार्थसंग्रहः । 'तनुःकाये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी । 'रोचना रक्तकह्लारे गोपित्ते वरयोषिति' इत्यनेकार्थसंग्रहः । 'गौरः श्वेतेऽरुणे पीते विशुद्धे चाभिधेयवत्' इति, 'यष्टिर्हारलताशस्त्रभेदयोर्ध्वजदण्डके' इति च मेदिनी ॥ ६५ ॥

समासादि--इन्दीवरमिव श्यामा तनुर्यस्य स इन्दीवरश्यामतनुः (ब० व्री०) । शरीरस्य यष्टिरिति शरीरयष्टिः (त०पु०), रोचना इव गौरी शरीरयष्टिर्यस्याः सा रोचनागौरशरीरयष्टिः (ब० व्री०) । अन्योन्यस्य शोभेत्यन्योन्यशोभा तस्याः परिवृद्धिस्तस्यै अन्योन्यशोभापरिवृद्धये (त० पु०) । तोयं ददातीति तोयदः, तडिच्च तोयदश्चेति तडित्तोयदौ तयोस्तडित्तोयदयोः (द्व०) ॥ ६५ ॥

व्याकरणम्—रोचना = रुच् + ल्युट् + 'अजाद्यतष्टाप्' इत्यनेन टाप् । यष्टिः = यज् (देवपूजासङ्गतिकरणदानेषु), बाहुलकात्तिः + 'व्रश्च भ्रस्ज' इत्यादिना षः + ष्टुत्वम् । अस्तु = अस् + लोट् ॥ ६५ ॥

वाच्यपरिवर्तनम्—अनेन, नृपेण, इन्दीवरश्यामतनुना, 'भूयते' त्वया, रोचनागौरशरीरयष्ट्या, 'भूयतं' तडित्तोयदयोः, इव, वां, योगेन, भूयताम् ॥ ६५ ॥

तात्पर्यार्थः—यथा विद्युन्मेघयोः संयोगः अन्यान्यशोभावर्द्धनाय भवति, तथैव नीलोत्पलश्यामाङ्गस्य पाण्डयस्य गोरोचनेव गौरशरीरायास्तव संयोगः अन्योऽन्यशोभावर्द्धनाय भवतु ॥ ६५ ॥

भाषाऽर्थः—यह ( पाण्डय ) राजा नील कमल के समान शरीर वाला (है), तू गोरोचन के समान गोर शरीर वाली (हो), मेघ और बिजली के संयोग की भांति तुम दोनों का संयोग परस्पर शोभा बढ़ाने वाला हो ॥ ६५ ॥

अथ सुनन्दाया उपदेश इन्दुमत्या मनस्यवकाशं न लेभ इत्याह—

**स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।**
**दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥ ६६ ॥**

सञ्जीविनी—स्वसुरिति । विदर्भाधिपतेर्भोजस्य स्वसुरिन्दुमत्याश्चेतसि तदीयः सुनन्दासंबन्ध्युपदेशो वाक्यं दिवाकरस्यादर्शनेन बद्धकोशे मुकुलितेऽरविन्दे नक्षत्रनाथांशुश्चन्द्रकिरण इव अन्तरमवकाशं न लेभे ॥ ६६ ॥

अन्वयः—विदर्भाधिपतेः, स्वसुः, चेतसि, तदीयः, उपदेशः, दिवाकरादर्शनबद्धकोशे, अरविन्दे, नक्षत्रनाथांशुः, इव, अन्तरं, न, लेभे ॥ ६६ ॥

सुधा—विदर्भाधिपतेः = विदर्भदेशस्वामिनः, स्वसुः = भगिन्याः, चेतसि = मनसि, तदीयः = सुनन्दासम्बन्धी, उपदेशः = वाक्यं, दिवाकरादर्शनबद्धकोशे = सूर्यानवलोकनमुकुलिते, अरविन्दे = पद्मे, नक्षत्रनाथांशुः = ऋक्षपतिरश्मिः, चन्द्रकिरण इत्यर्थः । इव = यथा, अन्तरम् = अवकाशं, न लेभे = न प्राप ॥ ६६ ॥

कोशः—'भगिनी स्वसा' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति, 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्' इति, 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इति चामरः ॥ ६६ ॥

समासादि—अधिपातीत्यधिपतिः, विदर्भस्याधिपतिरिति विदर्भाधिपतिस्तस्य विदर्भाधिपतेः ( त० पु० ) । दिवाकरस्यादर्शनमिति दिवाकरादर्शनं ( त० पु० ), तेन बद्धः कोशो यस्य स तस्मिन् दिवाकरादर्शनबद्धकोशे ( ब०व्री० ) । नक्षत्राणां नाथ इति नक्षत्रनाथस्तस्यांशुरिति नक्षत्रनाथांशुः ( त० पु० ) ॥ ६६ ॥

व्याकरणम्—लेभे = लभ् + लिट् । बद्ध = बन्ध + क्तः ॥ ६६ ॥

वाच्यपरिवर्तनम्—विदर्भाधिपतेः, स्वसुः, चेतसि, तदीयेन, उपदेशेन, दिवाकरादर्शनबद्धकोशे, अरविन्दे, नक्षत्रनाथांशुना, इव, अन्तरं, न, लेभे ॥ ६६ ॥

तात्पर्यार्थः—यथा सूर्यस्यादर्शनेन बद्धकोशे पद्मे चन्द्रकिरणः अवकाशं न लभते, तथैव इन्दुमत्याश्चेतसि सुनन्दोपदेशः अवकाशं न लेभे ॥ ६६ ॥

भाषाऽर्थः—विदर्भदेश के राजा ( पांडय ) की बहिन के चित्त में उस ( सुनन्दा ) का उपदेश सूर्य के दर्शन न होने से मुकुलित पद्म में चन्द्रमा की किरणों की भांति अवकाश नहीं पाया ॥ ६६ ॥

अथेन्दुमती यं यं नृपमतिक्रम्य गता स स नृपो दैन्यभावं प्राप्तवानित्याह—

**सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ ६७ ॥**

सञ्जीविनी—सञ्चारिणीति । पतिंवरा सेन्दुमती रात्रौ सञ्चारिणी दीपशिखेव यं यं भूमि-

पाले व्यतीयायातीत्य गता स स भूमिपालः, स सर्व इत्यर्थः। "नित्यवीप्सयोः" इति वीप्सायां द्विर्वचनम् । नरेन्द्रमार्गे राजपथेऽट्टाख्यो गृहभेद इव, 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः । विवर्णभावं विच्छायत्वम् अट्टस्तु तमोवृतत्वं प्रपेदे ॥ ६७ ॥

अन्वयः—पतिम्वरा, सा, रात्रौ, सञ्चारिणी, दीपशिखा, इव, यं, यं, व्यतीयाय, सः, सः, भूमिपालः, नरेन्द्रमार्गाट्टः, इव, विवर्णभावं, प्रपेदे ॥ ६७ ॥

सुधा—पतिम्वरा = स्वयम्वरा, सा = पूर्वोक्ता, इन्दुमतीति यावत् । रात्रौ = निशायां, सञ्चारिणी = गामिनी, भ्रमन्तीति यावत् । दीपशिखा = प्रदीपज्वाला, इव = यथा, यं यं = नृपं, व्यतीयाय = अतीत्य गता, स स = पूर्वोक्तः, स सर्व इत्यर्थः । वीप्सायां द्वित्वम् । भूमिपालः = पृथ्वीरक्षकः, नृप इति यावत् । नरेन्द्रमार्गाट्टः = राजपथाट्टालकः, इव, विवर्णभावं = विच्छायत्वं, प्रपेदे = प्राप ॥ ६७ ॥

कोशः—'दीपस्तु स्नेहाशः कज्जलध्वजः । दशेन्धनो गृहमणिर्दीपातिलक इत्यपि' इति त्रिकाण्डशेषः । 'अट्टो हट्टाऽट्टालकयोर्भृशे' इत्यनेकार्थसंग्रहः ॥ ६७ ॥

समासादि—सञ्चरितुं शीलमस्याः सा सञ्चारिणी । दीपस्य शिखा इति दीपशिखा ( त० पु० ) । नराणामिन्द्रो नरेन्द्रस्तस्य मार्ग इति नरेन्द्रमार्गः, स अट्टयन इति नरेन्द्रमार्गाट्टः ( त० पु० ) । विवर्णस्य भाव इति तं विवर्णभावम् ( त० पु० ) । भूमिं पालयतीति भूमिपालः ॥ ६७ ॥

व्याकरणम्—सञ्चारिणी = सम् + चर् + णिनिः + ङीप् । व्यतीयाय = वि + अति + इण् ( गतौ-णित् ), लिट् । अट्टः = अट्ट ( अतिक्रमणे ), कर्मणि घञ् ॥ ६७ ॥

वाच्यपरिवर्तनम्—पतिम्वरया, तया, रात्रौ, सञ्चारिण्या, दीपशिखया, इव, यः, यः, प्रतीये, तेन, तेन, भूमिपालेन, नरेन्द्रमार्गाट्टेन, इव, विवर्णभावः, प्रपेदे ॥ ६७ ॥

तात्पर्यार्थः—यथा रात्रौ दीपशिखा सञ्चरति, तथैव सा इन्दुमती यं यं नृपम् अतीत्य गता स स भूमिपालो राजमार्गस्थित अट्टालक इव दैन्यभावं प्राप्तवान् ॥ ६७ ॥

भाषाऽर्थः—पति को वरने वाली वह ( इन्दुमती ), रात्रि में फिरती हुई दीप की शिखा के समान जिस जिस ( राजा ) को छोड़ कर गई, वह वह राजा राजमार्ग की अटारी की नाई मलिनता को प्राप्त हुआ ॥ ६७ ॥

अथ स्वनिकटे उपस्थितामिन्दुमतीं दृष्ट्वा 'सा मां वरिष्यति न वा' इत्यजः समाकुलोऽभूदित्याह—

तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥ ६८ ॥

सञ्जीविनी—तस्यामिति । तस्यामिन्दुमत्यामुपस्थितायामासन्नायां सत्यां रघोः सूनुरजो मां वृणीत न वेति समाकुलः संशयितोऽभूत् , अथाजस्य वामेतरो वामादितरो दक्षिणो बाहुः केयूरं बध्यतेऽत्रेति केयूरबन्धोऽङ्गदस्थानं तस्योच्छ्वसितैः स्फुरणैः संशयं नुनोद ॥ ६८ ॥

अन्वयः—तस्याम्, उपस्थितायां, 'सत्यां' रघोः, सूनुः, मां, वृणीत, न, वा, इति, समाकुलः, अभूत् , अस्य, वामेतरः, बाहुः, केयूरबन्धोच्छ्वसितैः, संशयं, नुनोद ॥ ६८ ॥

सुधा—तस्यां = पूर्वोक्तायाम्, इन्दुमत्यामिति यावत् । उपस्थितायाम् = आसन्नायां, सत्यामिति शेषः । रघोः = दिलीपसुतस्य, सूनुः = पुत्रः, अज इति यावत् । माम् = अजं, वृणीत = वरयेत्, न, वेति शेषः । इति = इत्थं, समाकुलः = व्याकुलः, संशयित इति यावत् । अभूत् = बभूव, अस्य = अजस्य, वामेतरः = दक्षिणः, बाहुः = भुजः, केयूरबन्धोच्छ्वसितैः = अङ्गदबन्धस्थानस्फुरणैः, संशयं = संदेहं, नुनोद = चिच्छेद ॥ ६८ ॥

कोशः—'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति, 'विचिकित्सा तु संशयः । संदेहद्वापरौ च' इति, 'केयूरमङ्गदं तुल्ये' इति चामरः ॥ ६८ ॥

समासादि—सम्यक् आकुल इति समाकुलः । वामात् इतर इति वामेतरः । केयूरस्य बन्ध इति केयूरबन्धस्तस्योच्छ्वसितानीति केयूरबन्धोच्छ्वसितानि तैः केयूरबन्धोच्छ्वसितैः ( त० पु० ) ॥ ६८ ॥

व्याकरणम्—वृणीत = वृङ् ( संभक्तौ-ङित् ), श्ना + विधिलिङ्, 'ई हल्यघोः' इत्यनेन ईत्वम् । उच्छ्वसितैः = उत् + श्वस् + क्तः । नुनोद = णुद् + लिट् ॥ ६८ ॥

वाच्यपरिवर्तनम्—तस्याम्, उपस्थितायां, 'सन्यां' रघोः, सूनुना, मां, वृणीत, न, वा, इति, समाकुलेन, अभावि, अस्य, वामेतरेण, बाहुना, केयूरबन्धोच्छ्वसितैः, संशयः, नुनुदे ॥ ६८ ॥

तात्पर्यार्थः—यदा सा इन्दुमती अजस्य निकटे समागता तदा स रघुपुत्रोऽजः 'मां वृणीत न वा' इति संशयितमना अभूत्, अथास्य दक्षिणबाहुरङ्गदबन्धस्थानस्य स्फुरणैः संशयं चिच्छेद ॥ ६८ ॥

भाषार्थः—उस ( इन्दुमती ) के उपस्थित होने पर रघुपुत्र ( अज ) 'यह मुझे वरेगी या नहीं' ऐसा ( विचार कर ) व्याकुल हुआ, ( तब ) इसके दाहिने हाथ ने भुजबंध स्थान के फड़कने से संदेह को दूर किया ॥ ६८ ॥

अथेन्दुमती सर्वाङ्गेषु दोषरहितमजमेत्य राजान्तरगमनात् निवृत्तेत्याह—

तं प्राप्य सर्वावयवानवद्यं व्यावर्तताऽन्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदालिः ॥ ६९ ॥

सञ्जीविनी—तमिति । कुमारी सर्वेष्ववयवेष्वनवद्यमदोषं तमजं प्राप्य अन्योपगमाद्राजान्तरोपगमाद्व्यावर्तत निवृत्ता । तथा हि षट्पदालिः भृङ्गावलिः प्रफुल्लतीति प्रफुल्लं विकसितम्, पुष्पितमित्यर्थः । प्रपूर्वात्फुल्लतेः पचाद्यच् फलतेस्तु प्रफुल्तमिति पठितव्यम्, "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" इति निषेधात्, इत्युभयथाऽपि न कदाचिदनुपपत्तिरित्युक्तं प्राक् । सहकारं चूतविशेषमेत्य, 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । वृक्षान्तरं न काङ्क्षति, न हि सर्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाषः स्यादित्यर्थः ॥६९॥

अन्वयः—कुमारी, सर्वावयवानवद्यं, तं, प्राप्य, अन्योपगमात्, व्यावर्तत, हि, षट्पदालिः, प्रफुल्लं, सहकारम्, एत्य, वृक्षान्तरं, न, काङ्क्षति ॥ ६९ ॥

सुधा—कुमारी = कन्या, इन्दुमतीति यावत् । सर्वावयवानवद्यं = सकलाङ्गदोषशून्यं, तं = पूर्वोक्तम्, अजमिति यावत् । प्राप्य = आसाद्य, अन्योपगमात् = राजान्तरगमनात्, व्यावर्तत = निवृत्ता, हि = यतः, षट्पदालिः = भ्रमरपङ्क्तिः, प्रफुल्लं = संफुल्लं, विकसितमिति यावत् । पुष्पितमित्यर्थः । सहकारं = सौरभयुक्तमाम्रम्, एत्य = प्राप्य, वृक्षान्तरम् = अन्यतरुं, न, काङ्क्षति = वाञ्छति ॥ ६९ ॥

कोशः—'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' इति, 'सहकारोऽतिसौरभः' इति, 'षट्पदभ्रमरालयः' इति, 'वीथ्यालिरावलिः पङ्क्तिः श्रेणीलेखास्तुराजयः' इति चामरः ॥ ६९ ॥

समासादि—सर्वे च तेऽवयवा इति सर्वावयवाः ( क० धा० ), तेषु अनवद्यमिति सर्वावयवानवद्यम् (त० पु०) । अन्यस्योपगम इत्यन्योपगमस्तस्मात् अन्योपगमात् ( त०पु० ) । अन्यो वृक्षो वृक्षान्तरम् ( अ० भा० ) । षट्पदस्यालिरिति षट्पदालिः ( त० पु० ) ॥ ६९ ॥

व्याकरणम्—प्राप्य—प्र + आप्लृ ( व्याप्तौ—लृदित् ), क्त्वा, ल्यबादेशः । व्यावर्तत = वि + आ + अ + वृतु ( वर्तने ), लङ् । प्रफुल्लं = प्र + फुल्ल + पचाद्यच् । सहकारम् =

स + क्रु + अण् । एत्य = आ + इण् + ल्यप् । कांक्षति = काक्षि ( काङ्क्षायाम् ), लट् ॥ ६९ ॥

वाच्यपरिवर्तनम्—कुमार्या, सर्वावयवानवद्यं, तं, प्राप्य, अन्योपगमात्, व्यावृत्यत, हि, षट्पदाल्या, प्रफुल्लं, सहकारम्, एत्य, वृक्षान्तरं, न, काङ्क्ष्यते ॥ ६९ ॥

तात्पर्यार्थः—यथा भ्रमरपङ्क्तिः पुष्पितमाम्रवृक्षमुपेत्य वृक्षान्तरं गन्तुं न काङ्क्षति, तथैवेन्दुमती सर्वाङ्गेषु दोषशून्यमजं प्राप्य राजान्तरोपगमनान्निवृत्ता ॥ ६९ ॥

भाषाऽर्थः—कुमारी ( इन्दुमती ), संपूर्ण दोषों से रहित शरीर वाले उस ( अज ) के पास जाकर दूसरे ( राजा ) के समीप जाने से रुक गई, क्योंकि भौरों की झुंड फूले हुये आम्रवृक्ष के निकट जाकर दूसरे वृक्षको नहीं चाहती ॥ ६९ ॥

अथ सुनन्दा इन्दुमतीमजासक्तचित्तामवलोक्य तत्प्रत्ययवर्धनायाह—

**तस्मिन्समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य ।**

**प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥ ७० ॥**

सञ्जीविनी—तस्मिन्निति । तस्मिन्नजे समावेशिता संक्रामिता चित्तवृत्तिर्यया ताम्, इन्दोः प्रभेव प्रभा यस्यास्ताम् । आह्लादकत्वादिन्दुसाम्यम् । इन्दुमतीमवेक्ष्यानुक्रमज्ञा वाक्यपौर्वापर्याभिज्ञा सुनन्देदं वक्ष्यमाणं सविस्तरं सप्रपञ्चम्, "प्रथने वावशब्दे" इति घञो निषेधात्, "ऋदोरप्" इत्यप्प्रत्ययः । 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यमरः । वाक्यं वक्तुं प्रचक्रमे ॥ ७० ॥

अन्वयः—अनुक्रमज्ञा, सुनन्दा, इन्दुप्रभाम्, इन्दुमतीं, तस्मिन्, समावेशितचित्तवृत्तिम्, अवेक्ष्य, सविस्तरम्, इदं, वाक्यं, वक्तुं, प्रचक्रमे ॥ ७० ॥

सुधा—अनुक्रमज्ञा = आनुपूर्वीविदा, वाक्यपौर्वापर्याभिज्ञेति यावत् । सुनन्दा = दासी, द्वारपालिनीति यावत् । इन्दुप्रभां = चन्द्रकान्तिम्, इन्दुमतीं = भार्यां, विदर्भदेशेशस्वसारमिति यावत् । तस्मिन् = रघुपुत्रे, अज इति यावत् । समावेशितचित्तवृत्ति = सङ्क्रामितचेतोवृत्तिम्, अवेक्ष्य = विलोक्य, सविस्तरं = सप्रपञ्चम्, इदं = वक्ष्यमाणं, वाक्यं = वचनं, वक्तुं = कथितुं, प्रचक्रमे = उपक्रमं कृतवती ॥ ७० ॥

कोशः—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति, 'आनुपूर्वी स्त्रिया वावृत्परिपाटी अनुक्रमः' इति चामरः ॥ ७० ॥

समासादि—चित्तस्य वृत्तिरिति चित्तवृत्तिः ( त० पु० ), समावेशिता चित्तवृत्तिर्यया सा तां समावेशितचित्तवृत्तिम् ( ब० व्री० ) । इन्दोः प्रभेव प्रभा यस्याः सा इन्दुप्रभा तामिन्दुप्रभाम् ( ब० व्री० ) । अनुक्रमं जानातीति अनुक्रमज्ञा ॥ ७० ॥

व्याकरणम्—समावेशित = सम् + आ + विश + क्तः । वृत्ति = वृतु ( वर्तने ), क्तिन् । अवेक्ष्य = अव + ईक्ष + ल्यप् । प्रचक्रमे = प्र + क्रमु + लिट् । सविस्तरं = स + वि + स्तॄ + 'ऋदोरप्' इत्यप् ॥ ७० ॥

वाच्यपरिवर्तनम्—अनुक्रमज्ञया, सुनन्दया, इन्दुप्रभाम्, इन्दुमतीं, तस्मिन्, समावेशितचित्तवृत्तिम्, अवेक्ष्य, सविस्तरम्, इदं, वाक्यं, वक्तुं, प्रचक्रमे ॥ ७० ॥

तात्पर्यार्थः—वाक्यपौर्वापर्याभिज्ञा सुनन्दा चन्द्रसदृशकान्तिमिन्दुमतीं तस्मिन्नजे संक्रामितचेतोवृत्तिमवलोक्य सविस्तरमिदं वक्ष्यमाणवाक्यमुपक्रमितवती ॥ ७० ॥

भाषाऽर्थः—वाक्य का पूर्वापर जानने वाली सुनंदा चन्द्रमा के समान कांति वाली इंदुमतीको उस ( अज) में चित्तवृत्ति लगाये हुये देखकर सविस्तर यह वाक्य बोलने लगी ॥७०॥

अथ पूर्वमिक्ष्वाकुवंश्यानां राज्ञां काकुत्स्थसंज्ञामाह—

**इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।**

**काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ७१ ॥**

सञ्जीविनी--इक्ष्वाकुवंश्य इति । इक्ष्वाकोर्मनुपुत्रस्य वंश्यो वंशे भवः नृपाणां ककुदं श्रेष्ठः, 'ककुच्च ककुदं श्रेष्ठे वृषांसे राजलक्ष्मणि' इति विश्वः । आहितलक्षणः प्रख्यातगुणः, 'गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ' इत्यमरः । ककुदि वृषांसे तिष्ठतीति ककुत्स्थ इति प्रसिद्धः कश्चिद्राजाऽभूत । यतः ककुत्स्थादारभ्योन्नतेच्छा महाशयाः, 'महेच्छस्तु महाशयः' इत्यमरः। उत्तरकोसलेन्द्रा राजानो दिलीपादयः श्लाघ्यं प्रशस्तं ककुत्स्थस्यापत्यं पुमान्काकुत्स्थ इति शब्दं संज्ञां दधति बिभ्रति, तन्नामसंस्पर्शोऽपि वंशस्य कीर्तिकर इति भावः । पुरा किल पुरंजयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निखिलमसुरकुलं निहत्य ककुत्स्थसंज्ञां लेभे इति पौराणिकी कथाऽनुसन्धेया । वक्ष्यते चायमेवार्थ उत्तरश्लोके ॥ ७१ ॥

अन्वयः--इक्ष्वाकुवंश्यः, नृपाणां, ककुदम् , आहितलक्षणः, ककुत्स्थः इति, 'राजा' अभूत् , यतः, उन्नतेच्छाः, उत्तरकोशलेन्द्राः, श्लाघ्यं, काकुत्स्थशब्दं, दधति ॥ ७१ ॥

सुधा-(१)इक्ष्वाकुवंश्यः = मनुपुत्रकुलोद्भवः, नृपाणां = राज्ञां, ककुदं = श्रेष्ठः, आहितलक्षणः = प्रख्यातराजगुणयुक्तः, प्रख्यातनामा इति वाऽर्थः । ककुत्स्थः, इति, राजेति शेषः । अभूत् = अभवत् , यतः = यस्मात् , ककुत्स्थादारभ्य इति यावत् । उन्नतेच्छाः = उच्चाभिलाषाः, महाशया इति यावत् । उत्तरकोसलेन्द्राः = उत्तरकोसलदेशराजानः, दिलीपादय इति यावत् । श्लाघ्यं = प्रशस्तं, प्रशंसनीयमिति यावत् । काकुत्स्थशब्दं = काकुत्स्थाक्षरं, प्रशंसनीयां काकुत्स्थ(२)संज्ञामित्यर्थः । दधति = बिभ्रति ॥ ७१ ॥

कोशः--'इक्ष्वाकुः कटुतुम्ब्यां नृपान्तरे' इत्यनेकार्थसंग्रहः । 'ककुद् स्त्री ककुदोऽप्यस्त्री वृषाङ्के राजध्वजे वरे' इति मेदिनी । 'लक्षणं नाम्नि चिह्ने च' इति विश्वः । 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः ॥ ७१ ॥

समासादि--इक्षुमाकाङ्क्षतीतीक्ष्वाकुस्तस्य वंशे भव इतीक्ष्वाकुवंश्यः । ककुदि तिष्ठतीति ककुत्स्थः । आहितं लक्षणं यस्य स आहितलक्षणः ( ब० व्री० ) । ककुत्स्थस्यापत्यं पुमान् काकुत्स्थः । उन्नता इच्छा येषां ते उन्नतेच्छाः ( ब० व्री० ) । उत्तरश्चासौ कोसल इत्युत्तरकोसलः ( क० धा० ), तस्येन्द्रा इत्युत्तरकोसलेन्द्राः ( त० पु० ) ॥ ७१ ॥

व्याकरणम्-वंश्यः = वंश + यत् । ककुत्स्थः = ककुद् + स्था + कः । आहित = आ + हि + क्तः । काकुत्स्थ = ककुत्स्थ + अण् । उन्नत = उत् + णम् + क्तः ॥ ७१ ॥

वाच्यपरिवर्तनम्—इक्ष्वाकुवंश्येन, नृपाणां, ककुदेन, आहितलक्षणेन, ककुत्स्थेन, इति, 'राज्ञा' अभावि, यतः, उन्नतेच्छैः, उत्तरकोसलेन्द्रैः, श्लाघ्यः, काकुत्स्थशब्दः, धीयते ॥ ७१ ॥

तात्पर्यार्थः--इक्ष्वाकुवंशोत्पन्नः राज्ञां श्रेष्ठः प्रख्यातगुणवान् 'ककुत्स्थः' इति राजा अभूत् , तदारभ्य महाशया उत्तरकोसलराजानः प्रशंसनीयं काकुत्स्थशब्दं बिभ्रति ॥ ७१ ॥

भाषाऽर्थः—इक्ष्वाकुके वंश में उत्पन्न, राजाओं में श्रेष्ठ ( और ) प्रसिद्ध गुणवाला (अथवा प्रसिद्ध नाम वाला) 'ककुत्स्थ' राजा हुआ, जिस ( ककुत्स्थः संज्ञक पुरंजय ) से उच्च अभिलाषा वाले (महाशय) उत्तर कोसल देशके राजा प्रशंसनीय 'काकुत्स्थ' संज्ञा को धारण करते हैं ॥ ७१ ॥

---

( १ ) अयमिक्षुदण्डं विदीर्य अजोजनत्तस्मादस्य 'इक्ष्वाकुः' इति संज्ञा बभूवेति बोध्यम् ॥

( २ ) पौराणिकी कथा—पुरा किल इक्ष्वाकुनृपतिवंशे पुरञ्जयो नाम भूप आसीत । एकदा इन्द्रो देवासुराणां युद्धे देवाना सहायत्वाऽर्थमेनं निवेदितवान्, पुरञ्जयेनोक्तम्—'अस्माकं पराक्रमं युद्धे न केऽपि सोढुं शक्ष्यन्ति, अतो यदि भवान् वृषभरूपं स्वीकरोतु, तदा तदुपर्यारुह्य शत्रूणां संहारमहं करिष्यामीति । इन्द्रः स्वीकृतवान् , अथ स वृषभरूपधारिण इन्द्रस्य ककुदि स्थित्वा शिवलीलां प्राप्य सकलान् शत्रुभूतानसुरानाहत्य ककुत्स्थसंज्ञां प्राप एतदारभ्य इक्ष्वाकुवंश्यानां राज्ञां काकुत्स्थसंज्ञा सञ्जातेति ॥

अथ पुरञ्जयो वृषभरूपधरमिन्द्रमारुह्य दैत्यानवधदित्याह—

**महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।**
**चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥ ७२ ॥**

सञ्जीविनी—महेन्द्रमिति । यः ककुत्स्थः संयति युद्धे महानुक्षा महोक्षः, "अचतुर" इत्यादिना निपातः । तस्य रूपमिव रूपं यस्य तं महेन्द्रमास्थायारुह्य अत एव प्राप्ता पिनाकिन ईश्वरस्य लीला येन स तथोक्तः सन्बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखा निवृत्तपत्ररचनाश्चकार, तद्भर्तॄन्नसुरानवधीदित्यर्थः । न हि विधवाः प्रसाध्यन्त इति भावः ॥ ७२ ॥

अन्वयः—यः, प्राप्तपिनाकिलीलः, 'सन्' महोक्षरूप, महेन्द्रम्, आस्थाय, संयति, बाणैः, असुराङ्गनानां, गण्डस्थलीः, प्रोषितपत्रलेखाः, चकार ॥ ७२ ॥

सुधा—यः = ककुत्स्थः, प्राप्तपिनाकिलीलः = धृतशङ्करक्रीडः, सन्निति शेषः । महोक्षरूपं = वृषभरूपधारिणं, महेन्द्रं = वासवम्, आस्थाय = आरुह्य, इन्द्रमारुह्येत्यर्थः । संयति = संग्रामे, बाणैः = आशुगैः, शरैरिति यावत् । असुराङ्गनानां = दैत्यस्त्रीणां, गण्डस्थलीः = कपोलस्थलीः, प्रोषितपत्रलेखाः = निवृत्तपत्राङ्गुलयः, पत्ररचनारहिता इत्यर्थः । चकार = कृतवान् ॥ ७२ ॥

कोशः—'महेन्द्रो वासवे शैले' इत्यनेकार्थसंग्रहः । 'समुदायः स्त्रियः संयत् समित्याजिसमिद्युधः' इति, 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः' इति चामरः । 'गण्डः कपोले पिटके योगभेदे च गण्डके' इति विश्वः । 'पत्रलेखा पत्राङ्गुलिरिमे समे' इत्यमरः ॥ ७२ ॥

समासादि—महोक्षस्य रूपमिव रूपं यस्य स तं महोक्षरूपम् (ब०व्री०) । पिनाकिनो लीला इति पिनाकिलीला (त०पु०), प्राप्ता पिनाकिलीला येन सः प्राप्तपिनाकिलीलः (ब०व्री०) । असुराणामङ्गनास्तासामसुराङ्गनानाम् (त०पु०) । पत्राकारा लेखा इति पत्रलेखाः (शाकपार्थिवादिः), प्रोषिता पत्रलेखा यैस्ताः प्रोषितपत्रलेखाः (ब०व्री०) ॥ ७२ ॥

व्याकरणम्—आस्थाय = आ + ष्ठा + ल्यप् । संयति = सम् + यम् + क्विप् + तुक् च । प्रोषित = प्र + वस + क्तः + सम्प्रसारणम् ॥ ७२ ॥

वाच्यपरिवर्तनम्—येन, प्राप्तपिनाकिलीलेन, 'सता' महेन्द्रम्, आस्थाय, संयति, बाणैः, असुराङ्गनानां, गण्डस्थलीः, प्रोषितपत्रलेखाः, चक्रे ॥ ७२ ॥

तात्पर्यार्थः—यः ककुत्स्थः पुरञ्जयो वृषभरूपधारिणमिन्द्रमारुह्य पिनाकधारिणः शङ्करस्य लीलां प्राप्य सङ्ग्रामे बाणैरसुरस्त्रीणां कपोलान् पत्ररचनारहितांश्चकार ॥ ७२ ॥

भाषाऽर्थः—जिस (राजा-पुरंजय) ने, शिवकी लीलाको प्राप्त कर बैलका रूप धारण किये इन्द्रके ऊपर चढ़कर संग्राममें बाणोंसे असुरोंकी स्त्रियोंके कपोलोंको श्रृंगार हीन कर किया ॥ ७२ ॥

अथ ककुत्स्थः इन्द्रस्यार्धासनमधिष्ठितवानित्याह—

**ऐरावताऽऽस्फालनविश्लथं यः सङ्घट्टयन्नङ्गदमङ्गदेन ।**
**उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ७३ ॥**

सञ्जीविनी—ऐरावतेति । यः ककुत्स्थ ऐरावतस्य स्वर्गजस्याऽऽस्फालनेन ताडनेन विश्लथं शिथिलमङ्गदमैन्द्रमङ्गदेन स्वकीयेन संघट्टयन्संघर्षयन्स्वामग्र्यां श्रेष्ठां मूर्तिमुपेयुषोऽपि प्राप्तस्यापि गोत्रभिद इन्द्रस्य अर्धमासनस्यार्धासनम्, "अर्धं नपुंसकम्" इति समासः । अधितष्ठावधिष्ठितवान्, "स्थादिष्वभ्यासेन चाभ्यासस्य" इत्यभ्यासेन व्यवायेऽपि षत्वम् । न केवलं महोक्षरूपधारिण एव तस्य ककुदमारुक्षत्, किन्तु निजरूपधारिणोऽपीन्द्रस्यार्धासनमित्यपिशब्दार्थः । अथवा अर्धासनमपीत्यपेरन्वयः ॥ ७३ ॥

अन्वयः—यः, ऐरावताऽऽस्फालनविश्लथम्, अङ्गदम्, अङ्गदेन, संघट्टयन्, 'सन्' स्वाम्, अग्र्यां, मूर्तिम्, उपेयुषः, अपि, गोत्रभिदः, अर्धासनम्, अधितष्ठौ ॥ ७३ ॥

सुधा—यः = ककुत्स्थः, पुरञ्जय इति यावत् । ऐरावताऽऽस्फालनविश्लथं = स्वर्गीयगजता-

डनशिथिलम्, अङ्गदं = केयूरम्, अङ्गदेन = निजकेयूरेण, संघट्टयन् = संघर्षयन्, सन्निति शेषः। स्वां = निजाम्, अग्र्यां = श्रेष्ठां, मूर्तिं = तनुं, शरीरमिति यावत्। उपेयुषः = प्राप्तस्य, अपि, (१)गोत्रभिदः = पर्वतपक्षच्छिदः, वासवस्येति यावत्। अर्धासनम् = अर्धपीठम्, अधितष्ठौ = अधिष्ठितवान् ॥ ७३ ॥

कोशः—'मूर्तिः पुनः प्रतिमायां कायकाठिन्ययोरपि' इति हैमः। 'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः ॥ ७३ ॥

समासादि—ऐरावतस्याऽऽस्फालनमित्यैरावताऽऽस्फालनं तेन विश्लथमित्यैरावताऽऽस्फालनविश्लथम् (त० पु०)। आसनस्यार्धमित्यर्धासनम् (त० पु०)। गोत्रं भिनत्तीति गोत्रभित्तस्य गोत्रभिदः ॥७३॥

व्याकरणम्—आस्फालन = आ + स्फाल + णिच् + ल्युट्। संघट्टयन् = सम् + घट्ट + णिच् + शतृ। अधितष्ठौ = अधि + स्था + लिट् ॥ ७३ ॥

वाच्यपरिवर्तनम्—येन, ऐरावताऽऽस्फालनविश्लथम्, अङ्गदम्, अङ्गदेन, संघट्टयता, 'सता' स्वाम्, अग्र्यां, मूर्तिम्, उपेयुषः, अपि, गोत्रभिदः, अर्धासनम्, अधितष्ठे ॥ ७३ ॥

तात्पर्यार्थः—यः ककुत्स्थः पुरञ्जय ऐरावतस्य ताडनेन शिथिलमिन्द्रस्य केयूरं निजकेयूरेण संघर्षयन्निजां श्रेष्ठां मूर्तिं प्राप्तस्यापीन्द्रस्य अर्धासनमधिष्ठितवान्। (न केवलं वृषभरूपधारिण इन्द्रस्य ककुदमारुरोह किन्तु निजरूपधारिणोऽपीन्द्रस्यार्धासनमित्यपिशब्दतात्पर्यः) ॥ ७३ ॥

भाषाऽर्थ—जो (पुरंजय) ऐरावत (नामक हाथी) के मारने से ढीले बाजूबंद को (अपने) बाजूबंद से रगड़ता हुआ अपने उत्तम रूप को प्राप्त किये हुये भी पर्वतों के (पंख) को छेदने वाले (इन्द्र) के आधे आसन पर बैठा ॥ ७३ ॥

अथ ककुत्स्थवंशे दिलीपस्य जननमाह—

जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४ ॥

सञ्जीविनी—जात इति। उरुकीर्तिर्महायशाः कुलप्रदीपो वंशप्रदीपको दिलीपो नृपतिस्तस्य ककुत्स्थस्य कुले जातः किल। यो दिलीपः शक्राभ्यसूयाविनिवृत्तये, न त्वशक्त्येति भावः। एकेनोनाः शतं क्रतवो यस्य स एकोनशतक्रतुः तस्य भावे तत्त्वेऽतिष्ठत्, इन्द्रप्रीतये शततमं क्रतुमवशेषितवानित्यर्थः ॥ ७४ ॥

अन्वयः—उरुकीर्तिः, कुलप्रदीपः, नृपतिः, दिलीपः, तस्य, कुले, जातः, 'आसीत्' किल, यः, शक्राभ्यसूयाविनिवृत्तये, एकोनशतक्रतुत्वे, अतिष्ठत् ॥ ७४ ॥

सुधा—उरुकीर्तिः = महायशाः, कुलप्रदीपः = वंशदीपकः, नृपतिः = राजा, दिलीपः = रघुपिता, तस्य = पूर्वोक्तस्य, ककुत्स्थस्येति यावत्। कुले = वंशे, जातः = उत्पन्नः, आसीदिति शेषः। किल, किलेति निश्चये। यः = दिलीपः, शक्राभ्यसूयाविनिवृत्तये = इन्द्रासूयानिवृत्त्यर्थम्, गुणेषु इन्द्रकृतदोषारोपणनिवृत्त्यर्थमित्यर्थः। एकोनशतक्रतुत्वे = एकन्यूनशतयागत्वे, अतिष्ठत् = तस्थौ, शततमं यज्ञं न कृतवानित्यर्थः ॥ ७४ ॥

कोशः—'कुलं कुलयगणे गेहे देहे जनपदेऽन्वये' इत्यनेकार्थसंग्रहः। 'असूया त्वभ्यसूया च' इति शब्दार्णवः ॥ ७४ ॥

---

(१) पौराणिकी कथा—पुरा किल सत्ययुगे पर्वताः पक्षविशिष्टा आसन्, सर्वासां दिशां पर्यन्तं भ्रमन्ति स्म। ततस्तेषां पक्षवतां पतनेन च बहवो जीवा मम्रुः। अथाऽत्यन्तं भीता महर्षयो देवाश्च इन्द्रस्य निकटे जग्मुः, लोकहितैकपरायणः स मैनाकं विना स्ववज्रेण पर्वतानां पक्षान् चिच्छेद। तत आरभ्य तस्य 'गोत्रभिद्' इति संज्ञा सञ्जातेत्यनुसंधेया ॥

समासादि—उर्वी कीर्तिर्यस्य स उरुकीर्तिः ( ब० वी० ) । कुलस्य प्रदीप इति कुल-प्रदीपः ( त० पु० ) । पातीति पतिः, नृणां पतिरिति नृपतिः (त०पु०) । एकेनोना: शतं क्रतवो यस्य स एकोनशतक्रतुस्तस्य भावस्तस्मिन् एकोनशतक्रतुत्वे (ब० वी०) । शक्रस्याभ्यसूयेति शक्राभ्यसूया तस्या विनिवृत्तिस्तस्यै शक्राभ्यसूयाविनिवृत्तये ( त० पु० ) ॥ ७४ ॥

व्याकरणम्—अतिष्ठत् = अ + स्था + लङ्, 'पाघ्राध्मास्था' इत्यादिना तिष्ठादेशः । वि-निवृत्तये = वि + नि + वृतु + क्तिन् ॥ ७४ ॥

वाच्यपरिवर्तनम्—उरुकीर्तिना, कुलप्रदीपेन, नृपतिना, दिलीपेन, तस्य, कुले, जातेन, 'अभूयत' किल, येन, शक्राभ्यसूयाविनिवृत्तये, एकोनशतक्रतुत्वे, अस्थीयत ॥ ७४ ॥

तात्पर्यार्थः—महाकीर्तिसम्पन्नः वंशप्रदीपको दिलीपो नाम नृपः ककुत्स्थस्य कुले जातः आसीत्, यो गुणेषु इन्द्रस्य दोषारोपणविनिवृत्तये शततमयज्ञमवशेषितवान् ॥ ७४ ॥

भाषार्थ—बड़ा यश वाला कुलका दीपक राजा दिलीप उस ( ककुत्स्थ ) के वंश में उत्पन्न था, जो इन्द्रकी असूया ( गुण में दोषारोपण ) को हटाने के लिये निन्या-नवें ही यज्ञ में स्थित रहा ॥ ७४ ॥

अथ दिलीपस्य राज्यप्रशासनकाले निद्रितानां मत्तस्त्रीणामंशुकानि वातोऽपि नाकम्पयदि-त्याह—

**यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।**
**वातोऽपि नास्त्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ७५ ॥**

सञ्जीविनी—यस्मिन्निति । यस्मिन्दिलीपे महीं शासति सति विहरन्त्यत्रेति विहारः क्रीडा-स्थानं तस्यार्धपथे निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम्, 'वाणिनी नर्तकीमत्ताविदग्धवनितासु-च' इति विश्वः । 'वाणिन्यौ नर्तकीदूत्यौ' इत्यमरश्च । अंशुकानि वस्त्राणि वातोऽपि नास्त्रंसय-न्नाकम्पयत् आहरणायापहर्तुं को हस्तं लम्बयेत्, तस्याऽऽज्ञासिद्धत्वादकुतोभयसञ्चाराः प्रजा इत्यर्थः । अर्धश्चासौ पन्थाश्चेति विग्रहः,समप्रविभागे प्रमाणाभावान्नैकदेशिसमासः ॥ ७५ ॥

अन्वयः—यस्मिन्, महीं, शासति, 'सति' विहारार्धपथे, निद्रां, गतानां, वाणिनीनाम्, अंशुकानि, वातः, अपि, न, अस्त्रंसयत्, आहरणाय, हस्तं, कः, लम्बयेत् ॥ ७५ ॥

सुधा—यस्मिन् = दिलीपे, महीं = पृथिवीं, शासति = पालयति, राज्यं कुर्वतीति यावत् । सतीति शेषः । विहारार्धपथे = क्रीडास्थानार्धमार्गे, निद्रां = शयनं, गतानां = प्राप्तानां, प्रसुप्तानामित्यर्थः । वाणिनीनां = मत्तस्त्रीणां, नर्तकीनामिति यावत् । अंशुकानि = वस्त्राणि, वातः = पवनः, अपि, नास्त्रंसयत् = नाकम्पयत्, आहरणाय = आहर्तुं, हस्तं = करं, कः = जनः, लम्बयेत् = प्रसारयेत् ॥ ७५ ॥

कोशः—'स्याद्वाणिनी तु नर्तक्यां छेकमत्तस्त्रियोरपि' इत्यनेकार्थसंग्रहः । 'नभस्वद्वात-पवनपवमानप्रभञ्जनाः' इत्यमरः । 'अंशुकं श्लक्ष्णवस्त्रे स्याद् वस्त्रमात्रोत्तरीययोः' इति मेदिनी ॥ ७५ ॥

समासादि—अर्धश्चासौ पन्था इत्यर्धपथः (क०धा०), विहरन्त्यस्मिन्निति विहारः, वि-हारस्यार्धपथस्तस्मिन् विहारार्धपथे ( त० पु० ) ॥ ७५ ॥

व्याकरणम्—विहार = वि + हृ + घञ् । अस्त्रंसयत् = अ + स्रंसु + णिच् + लङ् ॥ ७५ ॥

वाच्यपरिवर्तनम्—यस्मिन्, महीं, शासति, 'सति' विहारार्धपथे, निद्रां, गतानां, वाणि-नीनाम्, अंशुकानि, वातेन, अपि, न, अस्त्रंस्यत, आहरणाय, हस्तः, केन, लम्ब्येत ॥ ७५ ॥

तात्पर्यार्थः—यस्मिन् दिलीपे पृथ्वीं शासति सति क्रीडास्थानस्यार्धमार्गे प्रसुप्तानां मत्त-स्त्रीणाम् अंशुकानि पवनोऽपि नाकम्पयत्, आहर्तुं हस्तं को जनः प्रसारयेत् ॥ ७५ ॥

भाषाऽर्थः—जिस दिलीप के राज्यके शासन ( काल ) में क्रीड़ास्थान के आधे मार्ग में सोई हुई मतवाली स्त्रियों की साड़ियों को हवा भी नहीं उड़ा सकती थी, आहरण करने के लिये हाथ को कौन बढ़ा सकता था ॥ ७५ ॥

अथ दिलीपपुत्रस्य रघोः प्रशंसामाह—

**पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।**
**चतुर्दिगावर्जितसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७६ ॥**

सञ्जीविनी—पुत्र इति । विश्वजितो नाम महाक्रतोः प्रयोक्ताऽनुष्ठाता तस्य दिलीपस्य पुत्रो रघुः पदं पैत्र्यमेव प्रशास्ति पालयति । यो रघुश्चतसृभ्यो दिग्भ्य आवर्जिताऽऽहृता संभृता सम्यग्वर्धिता च या तां चतुर्दिगावर्जितसंभृतां विभूतिं सम्पदं मृत्पात्रमेव शेषो यस्यास्तामकरोत्, विश्वजिद्यागस्य सर्वस्वदक्षिणाकत्वादित्यर्थः ॥ ७६ ॥

अन्वयः—विश्वजितः, महाक्रतोः, प्रयोक्ता, तस्य, पुत्रः, रघुः, पदं, प्रशास्ति, यः, चतुर्दिगावर्जितसम्भृतां, विभूतिं, मृत्पात्रशेषाम्, अकरोत् ॥ ७६ ॥

सुधा—विश्वजितः = विश्वजिन्नाम्नः, महाक्रतोः = महायज्ञस्य, प्रयोक्ता = अनुष्ठाता, तस्य = पूर्वोक्तस्य, दिलीपस्येति यावत् । पुत्रः = आत्मजः, रघुः = रघुराजा, पदं = स्थानं, पैत्र्यं राज्यमित्यर्थः । प्रशास्ति = पालयति, यः = रघुः, चतुर्दिगावर्जितसम्भृतां = चतुराशाऽऽहृतां सम्वर्धिताञ्च, विभूतिं = सम्पदं, मृत्पात्रशेषां = मृत्तिकाभाजनावशिष्टाम्, अकरोत् = कृतवान् ॥ ७६ ॥

कोशः—'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति, 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इति चामरः । 'पात्रं स्रुवादौ पर्णे च भाजने राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी ॥ ७६ ॥

समासादि—महांश्चासौ क्रतुरिति महाक्रतुस्तस्य महाक्रतोः ( क० धा० ) । चतस्रश्च ताः दिश इति चतुर्दिशः ( क० धा० ), ताभ्यः आवर्जिता सम्भृता चेति चतुर्दिगावर्जितसम्भृता तां चतुर्दिगावर्जितसम्भृताम् (त० पु०) । मृत्पात्रमेव शेषो यस्याः सा मृत्पात्रशेषा तां मृत्पात्रशेषाम् ( ब० व्री० ) ॥ ७६ ॥

व्याकरणम्—प्रशास्ति = प्र + शासु + लट् । प्रयोक्ता = प्र + युज् + तृच् । आवर्जित = आ + वृजी ( वर्जने ), क्तः + इट् । सम्भृतां = सम् + भृ + क्तः + टाप् । विभूतिं = वि + भू + क्तिन् ॥ ७६ ॥

वाच्यपरिवर्तनम्—विश्वजितः, महाक्रतोः, प्रयोक्त्रा, तस्य, पुत्रेण, रघुणा, पदं, प्रशिष्यते, येन, चतुर्दिगावर्जितसम्भृता, विभूतिः, मृत्पात्रशेषा, अक्रियत ॥ ७६ ॥

तात्पर्यार्थः—विश्वजितो महायज्ञस्यानुष्ठाता दिलीपसुतो रघुः पैत्र्यं राज्यं पालयति, यो रघुर्विश्वजिन्नाम्नि यज्ञे चतुर्दिग्भ्यः आहृतं सम्यक् वर्धितञ्च धनं सर्वं ब्राह्मणेभ्यो दत्वा केवलं मृत्पात्रशेषमकरोत् ॥ ७६ ॥

भाषाऽर्थः—विश्वजित महायज्ञ को करने वाला दिलीप का पुत्र, ( पिता के ) पद ( राज्य ) को पालता है, जिस ( रघु ) ने चारों दिशाओं से लाये और बढ़ाये गये धन को मिट्टी का पात्र शेष वाला कर दिया ॥ ७६ ॥

अथ रघोः सर्वदिग्व्याप्यपरिमेयं यश अस्तीत्याह—

**आरूढमद्रीनुदधीन्वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ।**
**ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयाऽलम् ॥ ७७ ॥**

सञ्जीविनी—आरूढमिति । किं च अद्रीनारूढम् उदधीन्वितीर्णमवगाढम्, सकलभूगोलव्यापकमित्यर्थः । भुजङ्गमानां वसतिं पातालं प्रविष्टम् ऊर्ध्वं स्वर्गादिकं गतं व्याप्तम्, इत्थं

सर्वदिग्व्यापीत्यर्थः । अनुबध्नातीत्यनुबन्धि चाविच्छेदि, कालत्रयव्यापकं चेत्यर्थः । अत एवै-वं भूतं यस्य यश इयत्तया देशतः कालतो वा केनचिन्मानेन परिमातुं नालं न शक्यम् ॥ ७७ ॥

अन्वयः—अद्रीन्, आरूढम्, उदधीन्, वितीर्णं, भुजङ्गमानां, वसतिं, प्रविष्टम्, ऊर्ध्वं, गतम्, अनुबन्धि, च, यस्य, यशः, इयत्तया, परिच्छेत्तुम्, अलं, न, 'अस्ति' ॥ ७७ ॥

सुधा—अद्रीन् = पर्वतान्, आरूढम् = अभिनिविष्टम्, उदधीन् = जलधीन्, समुद्रानिति यावत् । वितीर्णम् = अवगाढं, सकलभूगोलव्यापकमित्यर्थः । भुजङ्गमानां = सर्पाणां, वसतिं = वासं, पातालमिति यावत् । प्रविष्टं = निविष्टम्, ऊर्ध्वं = स्वर्गादिकं, गतं = प्राप्तं, सर्वदिग्व्यापीत्यर्थः । अनुबन्धि, = अविच्छेदि, च, कालत्रयव्यापकञ्चेत्यर्थः । यस्य = रघोः, यशः = कीर्तिः, इयत्तया = देशतः कालतो वा, परिच्छेत्तुं = परिमातुं, केनचिन्मानेनेति शेषः । नालं = न शक्यम्, अस्तीति शेषः ॥ ७७ ॥

कोशः—'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः । 'वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने' इति मेदिनी । 'अलं भूषणपर्याप्तिवारणेषु निरर्थके । अलं शक्तौ च निर्दिष्टम्' इति विश्वः ॥ ७७ ॥

समासादि—भुजेन (कौटिल्येन) गच्छन्तीति भुजङ्गमास्तेषां भुजङ्गमानाम् । अनुबध्नातीति तदनुबन्धि इदमो भाव इयत्ता तया इयत्तया ॥ ७७ ॥

व्याकरणम्—आरूढम् = आ + रुह + क्तः । वितीर्णम् = वि + तॄ + क्तः । भुजङ्गमानां = भुज + गम् + 'गमेः सुपि वाच्यः' इति वार्तिकेन खच् + 'खच्च डिद्वा वक्तव्यः' इति वा डित् । प्रविष्टम् = प्र + विश् + क्तः । अनुबन्धि = अनु + बन्ध + इनिः । परिच्छेत्तुं = परि + छिदिर् ( द्वैधीकरणे—इरित् ), तुमुन् ॥ ७७ ॥

वाच्यपरिवर्तनम्—अद्रीन्, आरूढेन, उदधीन्, वितीर्णेन, वसतिं, प्रविष्टेन, ऊर्ध्वं, गतेन, अनुबन्धिना, च, यस्य, यशसा, इयत्तया, परिच्छेत्तुं, न, अलं, 'भूयते' ॥ ७७ ॥

तात्पर्यार्थः—पर्वतानारूढं समुद्रानवगाढं सर्पाणां वासे प्रविष्टं स्वर्गादिपर्यन्तं व्याप्तं यस्य रघोः कालत्रयव्यापकं यशः देशतः कालतो वा केनचिन्मानेन परिमातुं न शक्यमस्ति ॥७७॥

भाषार्थः—पर्वतों पर चढा हुआ, समुद्रों के पार तक गया हुआ, सांपों के वास ( पाताल ) में प्रविष्ट, और आकाश तक व्याप्त हुआ, ( तीनों काल में ) अलग नहीं हुआ, जिस ( रघु ) का यश, ( देश या काल किसी तरह से) तुलना करनेके लिये समर्थ नहीं है ॥ ७७ ॥

अथ सुनन्दा रघुपुत्रस्याजस्य वर्णनमाह—

**असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।**
**गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति ॥ ७८ ॥**

सञ्जीविनी—असाविति । असावजाख्यः कुमारः त्रिविष्टपस्य स्वर्गस्य पतिमिन्द्रं जयन्त इव, 'जयन्तः पाकशासनिः' इत्यमरः । तं रघुमनुजातः, तस्माज्जात इत्यर्थः । तज्जातोऽपि तदनुजातो भवति जन्यजनकयोरानन्तर्यात्, "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति क्तः । सोपसृष्टत्वात्सकर्मकत्वम् । आह चात्रैव सूत्रे वृत्तिकारः–"श्लिषादयः सोपसृष्टाः सकर्मका भवन्ति" इति । दम्यः शिक्षणीयावस्थः योऽजो गुर्वीं भुवनस्य धुरं धुर्येण धुरन्धरेण चिरनिरूढेन पित्रा सदृशं तुल्यं यथा तथा बिभर्ति । यथा कश्चिद्वत्सतरोऽपि धुर्येण महोक्षेण समं वहतीत्युपमालङ्कारो ध्वन्यते, 'दम्यवत्सतरौ समौ' इत्यमरः ॥ ७८ ॥

अन्वयः—असौ, कुमारः, अजः, त्रिविष्टपस्य, पतिं, जयन्तः, इव, तम्, अनुजातः, दम्यः, यः, भुवनस्य, गुर्वीं, धुरं, धुर्येण, पित्रा, सदृशं, बिभर्ति ॥ ७८ ॥

सुधा—असौ = एषः, अग्रे विद्यमान इति यावत् । कुमारः, = युवराजः, अजः = रघुसुतः, त्रिविष्टपस्य = सुरलोकस्य, स्वर्गस्येत्यर्थः । पतिं = स्वामिनं, जयन्तः = पाकशासनिः, ऐन्द्रिरिति

यावत्। इव = यथा, तं = पूर्वोक्तं, रघुमिति यावत्। अनुजातः = उत्पन्नः, रघोर्जात इत्यर्थः। दम्यः = शिक्षणीयवयस्कः, यः = अजः, भुवनस्य = लोकस्य, गुर्वीं = महतीं, धुरं = भारं, महद्भारमित्यर्थः। धुर्येण = धूर्वहेन, पित्रा = जनकेन, रघुणेति यावत्। सदृशं = तुल्यं, बिभर्ति = धारयति ॥ ७८ ॥

कोशः—'कुमारो बालके स्कन्दे युवराजेऽश्ववारके' इति विश्वः। 'सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्' इति, 'जयन्तः पाकशासनिः' इति चामरः। 'धूर्यानमुखभारयोः' इति हेमः। 'दम्यवत्सतरौ समौ' इत्यमरः। 'भुवनं विष्टपेऽपि स्यात्सलिले गहने जले' इति मेदिनी ॥ ७८ ॥

समासादि—कुमारयतीति कुमारः। धुरं वहतीति धुर्यस्तेन धुर्येण ॥ ७८ ॥

व्याकरणम्—अनुजातः--अत्र 'गत्यर्थाकर्मक' इत्यादिना क्तः। गुर्वीं = गुरु + 'वोतोगुणवचनात्' इति ङीष्। धुर्येण = धुर् + 'धुरो यड्ढकौ' इत्यनेन यत्। दम्यः = दम + यत्, क्यप् वा। बिभर्ति = भृ + लट् ॥ ७८ ॥

वाच्यपरिवर्तनम्—अनेन, कुमारेण, अजेन, त्रिविष्टपस्य, पतिं, जयन्तेन, इव, तम्, अनुजातेन, दम्येन, येन, भुवनस्य, गुर्वी, धूः, पित्रा, सदृशं, भ्रियते ॥ ७८ ॥

तात्पर्यार्थः—यथा इन्द्राज्जयन्तो जातस्तथैवासौ बालकोऽजस्तस्माद्रघोरुत्पन्नः, शिक्षणावस्थायां भुवनस्य महद्भारं धुरन्धरेण पित्रा रघुणा तुल्यं बिभर्ति। ( यथा कश्चिद् वत्सतरः धुरन्धरेण वृषभेण समं वहति, तथैव रघुसूनुरजोऽपीत्याशयः ) ॥ ७८ ॥

भावार्थः—यह कुमार अज, स्वर्ग के स्वामी ( इन्द्र ) से जयन्त की भांति उस (रघु) से पैदा हुआ, जो शिक्षणीय अवस्था वाला, जगत् के भारी भार को पिता ( रघु ) के समान धारण करता है ॥ ७८ ॥

अथ 'रघुसुतमजं वृणीष्व' इति सुनन्दा, इन्दुमतीम्प्राहेत्याह—

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥

सञ्जीविनी--कुलेनेति। कुलेन कान्त्या लावण्येन नवेन वयसा यौवनेन विनयः प्रधानं येषां तैस्तैर्गुणैः श्रुतशीलादिभिश्चात्मनस्तुल्यं स्वानुरूपममुमजं त्वं वृणीष्व, किं बहुना? रत्नं काञ्चनेन समागच्छतु संगच्छताम्। प्रार्थनायां लोट्। रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वाद्युवयोः समागमः प्रार्थ्यत इत्यर्थः ॥ ७९ ॥

अन्वयः—कुलेन, कान्त्या, नवेन, वयसा, विनयप्रधानैः, तैस्तैः, गुणैः, आत्मनः, तुल्यम्, अमुं, त्वं, वृणीष्व, रत्नं, काञ्चनेन, समागच्छतु ॥ ७९ ॥

सुधा—कुलेन = वंशेन, कान्त्या = द्युत्या, लावण्येनेति यावत्। नवेन = नूतनेन, वयसा = यौवनेन, विनयप्रधानैः = प्रणतिमुख्यैः, तैस्तैः = पूर्वोक्तैः, तादृशैरित्यर्थः। गुणैः = श्रुतशीलादिभिः, आत्मनः = स्वस्य, तुल्यं = सदृशं, स्वानुरूपमिति यावत्। अमुम् + अजं, त्वं, वृणीष्व = वरिषीयाः, रत्नं = मणिः, काञ्चनेन = हेम्ना, सुवर्णेनेति यावत्। समागच्छतु = सङ्गच्छताम् ॥७९॥

कोशः = 'नवीनो नूतनो नवः' इत्यमरः। 'विनयः शिक्षाप्रणत्योः' इति, 'काञ्चनं हेम्नि किञ्जल्के काञ्चनो नागकेसरे' इति चानेकार्थसंग्रहः ॥ ७९ ॥

समासादि—विनयः प्रधानं येषां ते विनयप्रधानास्तैर्विनयप्रधानैः (ब० व्री०)। काञ्चतीति काञ्चनं तेन काञ्चनेन ॥ ७९ ॥

व्याकरणम्—वृणीष्व = वृञ् (वरणे-ञित्), लोट्। समागच्छतु = सम् + आ + गम् = प्रार्थनायां लोट्। काञ्चनेन + काचि (दीप्तौ), नन्द्यादित्वाल्ल्युः ॥ ७९ ॥

वाच्यपरिवर्तनम्—कुलेन, कान्त्या, नवेन, वयसा, विनयप्रधानैः, तैस्तैः, गुणैः, आत्म-

नः, तुल्यः, असौ, त्वया, व्रियताम्, रत्नेन, काञ्चनेन, 'सह' समागम्यताम् ॥ ७९ ॥

तात्पर्यार्थः—हे इन्दुमति ! वंशेन लावण्येन नवेन यौवनेन विनयमुख्यैस्तैस्तैः पूर्वोक्तैः श्रुतशीलादिभिर्गुणैर्निजानुरूपममुं रघुसूनुमजं वृणीष्व, रत्नं सुवर्णेन सङ्गच्छताम्। (यथा रत्नसुवर्णयोर्योगः शोभनो भवति तथा युवयोः संयोगोऽपि भवित्विति) ॥७९॥

भाषाऽर्थः—वंश, कांति, नई अवस्था, और विनयप्रधान वाले उन उन (श्रुत शीलादि) गुणों से अपने तुल्य इस (अज) को तू वर, रत्न सोने के (साथ) मिले। (रत्न और सोने का योग जैसे अच्छा मालूम होता है वैसे तुम दोनों का संयोग भी अच्छा हो) ॥ ७९ ॥

अथेन्दुमती लज्जां लघूकृत्य माल्येन तमजं स्वीचकारेत्याह—

**ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या।**
**दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ ८० ॥**

सञ्जीविनी—तत इति। ततः सुनन्दावचनस्यावसानेऽन्ते नरेन्द्रकन्येन्दुमती लज्जां तनूकृत्य संकोच्य प्रसादेन मनःप्रसादेनामलया प्रसन्नया दृष्ट्या संवरणस्य स्रजा स्वयंवरणार्थं स्रजेव कुमारमजं प्रत्यग्रहीत्स्वीचकार, सम्यक्सानुरागमपश्यदित्यर्थः ॥ ८० ॥

अन्वयः—ततः, सुनन्दावचनावसाने, नरेन्द्रकन्या, लज्जां, तनूकृत्य, प्रसादामलया, दृष्ट्या, सम्वरणस्रजा, इव, कुमारं, प्रत्यग्रहीत् ॥ ८० ॥

सुधा—ततः = तदनन्तरं, सुनन्दावचनावसाने = सुनन्दावचोऽन्ते, नरेन्द्रकन्या = राजकुमारी, इन्दुमतीति यावत्। लज्जां = त्रपां, तनूकृत्य = संकोच्य, लघूकृत्येति यावत्। प्रसादामलया = प्रसन्नतानिर्मलया, दृष्ट्या = दृशा, सम्वरणस्रजा = वरणीयमाल्येन, इव, कुमारं = युवराजम्, अजमिति यावत्। प्रत्यग्रहीत् = स्वीचकार ॥ ८० ॥

कोशः—'वचनं वचः' इति, 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इति, 'माल्यं मालास्रजौ मूर्ध्नि' इति चामरः ॥ ८० ॥

समासादि—सुनन्दाया वचनमिति सुनन्दावचनं तस्यावसानं तस्मिन् सुनन्दावचनावसाने (त०पु०)। नरेन्द्रस्य कन्या इति नरेन्द्रकन्या (त०पु०)। प्रसादेनामलेति प्रसादामला तया प्रसादामलया (त० पु०)। सम्वरणस्य स्रग् इति सम्वरणस्रक् तया सम्वरणस्रजा (त०पु०) ॥ ८० ॥

व्याकरणम्—दृष्ट्या = दृशिर् (प्रेक्षणे-इरित्), क्तिन्। प्रत्यग्रहीत् = प्रति + अ + ग्रह + लुङ् ॥ ८० ॥

वाच्यपरिवर्तनम्—ततः, सुनन्दावचनावसाने, नरेन्द्रकन्यया, लज्जां, तनूकृत्य, प्रसादामलया, दृष्ट्या, सम्वरणस्रजा, इव, कुमारः, प्रत्यग्राहि ॥ ८० ॥

तात्पर्यार्थः—ततः सुनन्दावचनावसाने इन्दुमती लज्जां लघूकृत्य मनः प्रसन्नतानिर्मलया दृष्ट्या स्वयम्वरमाल्येनेव तमजं स्वीचकार ॥ ८० ॥

भाषाऽर्थ—इसके बाद सुनन्दा के वचन के अन्त में नरेन्द्रकन्या ( इन्दुमती ) ने, लज्जा को थोड़ी कर प्रसन्नता के ( कारण ) निर्मल दृष्टि से स्वयंवर की मालाकी नाई कुमार ( अज ) को स्वीकार किया ॥ ८० ॥

अथेन्दुमती अभाषमाणाऽप्यजेऽनुरागं रोमाञ्चव्याजेन प्रादर्शयदित्याह—

**सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम्।**
**रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥**

सञ्जीविनी—सेति। सा कुमारी यूनि तस्मिन्नजेऽभिलाषबन्धमनुरागग्रन्थिं शालीनतयाऽधृष्टतया, 'स्यादधृष्टस्तु शालीनः' इत्यमरः। "शालीनकौपीने अधृष्टाकार्ययोः" इति निपातः। वक्तुं न शशाक तथाऽप्यरालकेश्याः सोऽभिलाषबन्धो रोमाञ्चलक्ष्येण पुलकव्याजेन,

'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः। गात्रयष्टिं भित्त्वा निराक्रामत्, सात्त्विकाऽऽविर्भावलिङ्गेन प्रकाशित इत्यर्थः ॥ ८१ ॥

अन्वयः—सा, तस्मिन्, यूनि, अभिलाषबन्धं, शालीनतया, वक्तुं, न, शशाक, 'तथाऽपि' अरालकेश्याः, सः, रोमाञ्चलक्ष्येण, गात्रयष्टिं, भित्वा, निराक्रामत् ॥ ८१ ॥

सुधा—सा = कुमारी, इन्दुमतीति यावत्। तस्मिन् = पूर्वोक्ते, यूनि = तरुणे, अभिलाषबन्धम् = अनुरागग्रंथिं, शालीनतया = अधृष्टतया, लज्जायुक्ततयेत्यर्थः। वक्तुं = गदितुं, न शशाक = न समर्थाऽभूत, 'तथाऽपि अरालकेश्याः = कुटिलकेश्याः, सः = पूर्वोक्तः, अभिलाषबन्ध इति यावत्। रोमाञ्चलक्ष्येण = पुलकव्याजेन, गात्रयष्टिं = शरीरयष्टिं, भित्वा = छित्वा, निराक्रामत् = बहिर्बभूव ॥ ८१ ॥

कोशः—'वयस्थस्तरुणो युवा' इति, 'स्यादधृष्टस्तु शालीनः' इति चामरः। 'अरालः कुटिले सर्जरसे च समदन्तिनि' इति विश्वः ॥ ८१ ॥

समासादि—अभिलाषस्य बन्ध इत्यभिलाषबन्धस्तमभिलाषबन्धम् ( त०पु० )। शालीनस्य भावः शालीनता तया शालीनतया। लक्षितुं योग्यं लक्ष्यं रोमाञ्चेन लक्ष्यमिति रोमाञ्चलक्ष्यं तेन रोमाञ्चलक्ष्येण ( त०पु० )। गात्ररूपा यष्टिरिति गात्रयष्टिस्तां गात्रयष्टिम् ( शा०पा० )। अरालः केशो यस्याः सा अरालकेशी तस्या अरालकेश्याः (ब० व्री०) ॥८१॥

व्याकरणम्—शशाक = शक्लृ + लिट्। वक्तुं = वच + तुमुन्। गात्र = गा + ष्ट्रन्। यष्टिं = यज + क्तिन्। भित्वा = भिद् + क्त्वा। निराक्रामत् = निर् + आङ् + अ + क्रमु + लङ् ॥ ८१॥

वाच्यपरिवर्तनम्—तया, तस्मिन्, यूनि, अभिलाषबन्धः, शालीनतया, वक्तुं, न, शेके, 'तथाऽपि' अरालकेश्याः, तेन, रोमाञ्चलक्ष्येण, गात्रयष्टिं, भित्वा, निराक्रम्यत ॥ ८१ ॥

तात्पर्यार्थः—सा इन्दुमती तस्मिन्नजे अनुरागग्रंथिमधृष्टतया वक्तुं न शशाक, तथाऽपि कुटिलकेश्याः सोऽनुरागबन्धः रोमाञ्चव्याजेन शरीरयष्टिं भित्वा बहिर्बभूव ॥ ८१ ॥

भावार्थः—वह ( इन्दुमती ) उस जवान ( अज ) में, प्रेम ग्रंथि को, लज्जा से युक्त होने के कारण बोलने के लिये समर्थ न हुई, तो भी वह प्रेमग्रंथि ( प्रेम की गांठ ) रोमाञ्च के बहाने से टेढ़े बालों वाली (इन्दुमती) के शरीर को भेदन कर बाहर निकल आई॥८१॥

अथाजेऽनुरागवतीमिन्दुमतीं विलोक्य सुनन्दा परिहासं कृतवतीत्याह—

**तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे।**
**आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ ८२ ॥**

सञ्जीविनी—तथेति। सख्यामिन्दुमत्यां तथागतायां तथाभूतायाम्, दृष्टानुरागायां सत्यामित्यर्थः। सखी सहचरी, "सख्यशिश्वीति भाषायाम्" इति निपातनान्ङीष्। वेत्रभृत्सुनन्दा हे आर्ये! पूज्ये! अन्यतोऽन्यं प्रति व्रजाम इति परिहासपूर्वमाबभाषे। अथ वधूरिन्दुमत्येनां सुनन्दामसूयया रोषेण कुटिलं ददर्श, अन्यागमनस्यासह्यत्वादित्यर्थः ॥ ८२ ॥

अन्वयः—सख्यां, तथागतायां, 'सत्यां' सखी, वेत्रभृत्, हे आर्ये! 'वयम्' अन्यतः, व्रजामः, इति, परिहासपूर्वम्, आबभाषे, अथ, वधूः, एनाम्, असूयाकुटिलं, ददर्श ॥ ८२ ॥

सुधा—सख्यां = आल्याम्, इन्दुमत्यामिति यावत्। तथागतायां = तथाभूतायां, सत्यामिति शेष। दृष्टानुरागायां सत्यामित्यर्थः। सखी = वयस्या, सहचरीति यावत्। वेत्रभृत् = सुनन्दा, हे आर्ये! = हे पूज्ये!, अन्यतः = अन्यम्प्रति, व्रजामः = गच्छामः, वयमिति शेषः। इति = एवं, परिहासपूर्वं = परिहास्यपूर्वकम्, आबभाषे = उक्तवती, अथ = परिहासानन्तरं, वधूः = नवोढा, इन्दुमतीति यावत्। एनां = सुनन्दाम्, असूयाकुटिलं = रोषजिह्मं, ददर्श = अपश्यत् ॥ ८२ ॥

कोशः—'तत्र हासो हसो हास्यं वर्धरं हासिका स्त्रियाम्' इति शब्दार्णवः। 'आलिः सखी

।वयस्याऽथ' इत्यमरः । 'सखा मित्रे सहाये ना वयस्यायां सखी मता' इति मेदिनी । 'वधूः स्नुषानवोढार्स्त्रीभार्यास्पृक्काङ्गनासु च । शाट्यां च शारिबायां च' इति विश्वः ॥ ८२ ॥

समासादि—परिहासः पूर्वो यस्य तत् परिहासपूर्वम् ( ब०व्री० ) । वेत्रं बिभर्तीति वेत्रभृत् । असूयया कुटिलमित्यसूयाकुटिलम् ( त०पु० ) ॥ ८२ ॥

व्याकरणम्—सखी = अत्र 'सख्यशिश्वीति भाषायाम्' इति निपातनान्ङीष् । आबभाषे = आ + भास् + लिट् । व्रजामः = व्रज + लट् । कुटिलं = कुट + इलच् । ददर्श = दृश् + लिट् ॥८२॥

वाच्यपरिवर्तनम्—सख्यां, तथागतायां, 'सत्यां', सख्या, वेत्रभृता, हे आर्ये !, अस्माभिः, अन्यतः, व्रज्यते, इति, परिहासपूर्वम्, आबभाषे, अथ, वध्वा, एषा, असूयाकुटिलं, ददृशे ॥ ८२ ॥

तात्पर्यार्थः—इन्दुमतीमजे सानुरागां विलोक्य परिहासपूर्वकं सुनन्दा कथयामास, हे आर्ये ! वयमन्यम्प्रति गच्छामः किम् ? अथेन्दुमती एनां रोषेण कुटिलं ददर्श ॥ ८२ ॥

भाषाऽर्थः—सखी ( इन्दुमती ) को वैसी दशा में प्राप्त हुई देख कर वेत्र को धारण करने वाली ( सुनन्दा ), हे आर्य्ये ! दूसरे ( राजा ) के पास चलें ( क्या ? ) इस प्रकार परिहास पूर्वक बोली, तब वधू ( इन्दुमती ) ने गुस्से से उस ( सुनंदा ) को तिरछी देखी ॥ ८२ ॥

अथेन्दुमती अजस्य कण्ठे माल्यं समर्पयामासेत्याह—

**सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।**
**आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥ ८३ ॥**

सञ्जीविनी—सेति । करभः करप्रदेशविशेषः, 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । करभ उपमा ययोस्तावूरू यस्याः सा करभोपमोरूः, "ऊरूत्तरपदादौपम्ये" इत्यूङ्प्रत्ययः । सा कुमारी चूर्णेन मङ्गलचूर्णेन गौरं लोहितं गुणं स्रजं मूर्तं मूर्तिमन्तमनुरागमिव धात्र्या उपमातुः सुनन्दायाः कराभ्यां रघुनन्दनस्याजस्य कण्ठे यथाप्रदेशं यथास्थानमासञ्जयामासासक्तं कारयामास । न तु स्वयमाससञ्ज, अनौचित्यात् ॥ ८३ ॥

अन्वयः—करभोपमोरूः, सा, चूर्णगौरं, गुणं, मूर्तम्, अनुरागम्, इव, धात्रीकराभ्यां, रघुनन्दनस्य, कण्ठे, यथाप्रदेशम्, आसञ्जयामास ॥ ८३ ॥

सुधा—करभोपमोरूः = करभसदृशसक्थी, सा = पूर्वोक्ता, इन्दुमतीति यावत् । चूर्णगौरं = मङ्गलचूर्णारुणं, गुणं = सूत्रयुक्तं, माल्यमित्यर्थः । मूर्तं = मूर्तिमन्तं, मूर्तिधरमिति यावत् । अनुरागं = प्रेमाणम्, इव, धात्रीकराभ्याम् = उपमातृहस्ताभ्यां, रघुनन्दनस्य = रघुसूनोः, अजस्येति यावत् । कण्ठे = गले, यथाप्रदेशं = यथास्थानम्, आसञ्जयामास = आसक्तं कारयामास, अर्पयामासेत्यर्थः ॥८३॥

कोशः—'गौरः श्वेतेऽरुणे पीते विशुद्धे चाभिधेयवत्' इति, 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति च मेदिनी । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । गुणो ज्यासूद ( सूत्र ) तन्तुषु' इत्यनेकार्थसंग्रहः ॥ ८३ ॥

समासादि—चूर्णेन गौरस्तं चूर्णगौरम् ( त० पु० ) । रघोर्नन्दन इति रघुनन्दनस्तस्य रघुनन्दनस्य (त० पु०) । धात्र्याः कराविति ताभ्यां धातृकराभ्याम् (त०पु०) । करभ उपमा ययोस्तौ करभोपमौ, करभोपमावूरू यस्याः सा करभोपमोरूः ( ब० व्री० ) । प्रदेशमनतिक्रम्येति यथाप्रदेशम् (अ० भा०) ॥ ८३ ॥

व्याकरणम्—चूर्ण = चूर्ण + घञ् । करभोपमोरूः—अत्र 'ऊरूत्तरपदादौपम्ये' इत्यनेन ऊङ् । आसञ्जयामास = आ + षञ्ज ( सङ्गे ), णिच् + लिट् । गुणम् = अर्श आद्यच् ॥ ८३ ॥

वाच्यपरिवर्तनम्—करभोपमोर्वा, तया, चूर्णगौरं, गुणं, मूर्त्तम्, अनुरागम्, इव, धात्रीकराभ्यां, कण्ठे, यथाप्रदेशम्, आसञ्जयामासे ॥ ८३ ॥

तात्पर्यार्थः—करभोपमोरूः सा इन्दुमती मङ्गलचूर्णेन लोहितं सूत्रयुक्तं माल्यं मूर्तिमन्तमनुरागमिव सुनन्दायाः हस्ताभ्यामजस्य कण्ठे यथास्थानमर्पयामास ॥ ८३ ॥

भाषार्थः—करभ ( मणिबन्धसे लेकर कनिष्ठा पर्यन्त ) के सरीखे जंघावाली वह (इन्दुमती), मंगल के चूर्ण से रक्त डोरे वाली माला को, मूर्तिमान् अनुराग के समान धाय (सुनन्दा ) के हाथों से रघुनंदन ( अज ) के गले में ठीक जगह पर पहनाई ॥ ८३ ॥

अथाजो मालार्पणसमये इन्दुमतीं कण्ठार्पितभुजपाशां मेन इत्याह—

**तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।**
**अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥ ८४ ॥**

सञ्जीविनी—तयेति । वरेण्यो वरणीय उत्कृष्टः । वृञ एण्यः । सोऽजो मङ्गलपुष्पमय्या मधूकादिकुसुममय्या विशालवक्षःस्थले लम्बया लम्बमानया तया प्रकृतया स्रजा विदर्भराजावरजामिन्दुमतीं कण्ठार्पितौ बाहू एव पाशौ ययाताममंस्त । मन्यतेर्लुङ् । बाहुपाशकल्पसुखमन्वभूदित्यर्थः ॥ ८४ ॥

अन्वयः—वरेण्यः, सः, मङ्गलपुष्पमय्या, विशालवक्षःस्थललम्बया, तया, स्रजा, विदर्भराजावरजां, कण्ठार्पितबाहुपाशाम्, अमंस्त ॥ ८४ ॥

सुधा—वरेण्यः = वरणीयः, श्रेष्ठ इति यावत् । सः = पूर्वोक्तः, अज इति यावत् । मङ्गलपुष्पमय्या = मधुद्रुमादिकुसुमनिर्मितया, विशालवक्षःस्थललम्बया = महद्वक्षःस्थललम्बमानया, तया = पूर्वोक्तया, स्रजा = मालया, विदर्भराजावरजां = विदर्भदेशनृपानुजाम्, इन्दुमतीमिति यावत् । कण्ठार्पितबाहुपाशां = गलप्रदेशप्रदत्तभुजपाशाम्, अमंस्त = मेने ॥ ८४ ॥

कोशः—'माल्यं मालास्रजौ मूर्ध्नि' इति, 'विशालं पृथुलं महत्' इति चामरः । 'पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्वकः । सुकर्णं च स्वसामर्थ्यान् मृगपक्ष्यादिबन्धने' इति मेदिनी ॥ ८४ ॥

समासादि—मङ्गलार्थं पुष्पमिति मङ्गलपुष्पं तस्य विकार इति मङ्गलपुष्पमयी तया मङ्गलपुष्पमय्या । विशालं च तद् वक्षःस्थलमिति विशालवक्षःस्थलं (क०धा०), तस्मिन् लम्बत इति विशालवक्षःस्थललम्बा तया विशालवक्षःस्थललम्बया । कण्ठे अर्पितौ बाहू एव पाशौ यया सा तां कण्ठार्पितबाहुपाशाम्(ब०व्री०) । विदर्भाणां राजा इति विदर्भराजस्तस्यावरजा तां विदर्भराजावरजाम् ( त०पु० ) ॥ ८४ ॥

व्याकरणम्—अमंस्त = अ + मन ( ज्ञाने ), लुङ् । वरेण्यः = वृञ (वरणे—जित्), एण्य ( उणादिः ) ॥ ८४ ॥

वाच्यपरिवर्तनम्—वरेण्येन, तेन, मङ्गलपुष्पमय्या, विशालवक्षःस्थललम्बया, तया, स्रजा विदर्भराजावरजा, कण्ठार्पितबाहुपाशा, अमानि ॥ ८४ ॥

तात्पर्यार्थः—उत्कृष्टः स अजो मधुर्शालपुष्पनिर्मितया विशालवक्षःस्थले लम्बमानया मालया इन्दुमतीं कण्ठार्पितबाहुपाशां मेने ॥ ८४ ॥

भाषार्थः—श्रेष्ठ उस ( अज ) ने, मङ्गलपुष्प ( महुये आदि ) के फूलकी बनी विशाल वक्षःस्थल में लटकी हुई उस माला से विदर्भराजा की बहन ( इन्दुमती ) को मानों गले में अर्पण किया हुआ भुजरूपी पाश माना ॥ ८४ ॥

अथ नागरिका राज्ञां कर्णपरुषकरं वाक्यमब्रुवन्नित्याह—

**शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।**
**इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५ ॥**

सञ्जीविनी—शशिनमिति । तत्र स्वयंवरे समगुणयोस्तुल्यगुणयोरिन्दुमतीरघुनन्दनयोर्योगेन प्रीतिर्येषां ते समगुणयोगप्रीतयः पौराः पुरे भवा जना इयमजसंगतेन्दुमती मेघैर्मुक्तं

शशिनं शरच्चन्द्रमुपगता कौमुदी अनुरूपं सदृशं जलनिधिमवतीर्णा प्रविष्टा जह्नुकन्या भागीरथी, तत्सदृशीत्यर्थः । इत्येवं नृपाणां श्रवणयोः कटु परुषमेकमविसंवादि वाक्यमेकवाक्यं विवव्रुः । मालिनीवृत्तम् ॥ ८५ ॥

अन्वयः—तत्र, समगुणयोगप्रीतयः, पौराः, इयं, मेघमुक्तं, शशिनम् ,उपगता, कौमुदी, 'इव' अनुरूपं, जलनिधिम्, अवतीर्णा, जह्नुकन्या, 'इव' इति, नृपाणां,श्रवणकटु, एकवाक्यं,विवव्रुः८५

सुधा—तत्र = स्वयम्वरे, समगुणयोगप्रीतयः = तुल्यगुणसंयोगप्रसन्नाः, पौराः = नागरिकाः, इयम् = एषा, अजसङ्गतेन्दुमतीति यावत् । मेघमुक्तम् = अभ्रत्यक्तं, शशिनम् = इन्दुं, शरच्चन्द्रमिति यावत् । उपगता = अधिगता, प्राप्तेत्यर्थः । कौमुदी = चन्द्रिका, इवेत शेषः । अनुरूपं = स्वसदृशं, जलनिधिं = समुद्रम्, अवतीर्णा = प्रविष्टा, सङ्गतेति यावत् । जह्नुकन्या = गङ्गा, इवेति शेषः । इति = इत्थं, नृपाणां = राज्ञां, श्रवणकटु = कर्णपरुषम्, एकवाक्यम् = अविसम्वादिवचनं, विवव्रुः = अब्रुवन् । मालिनीछन्दस्तल्लक्षणं च—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥ ८५ ॥

कोशः—'चन्द्रिका कौमुदी ज्योत्स्ना' इति, 'अभ्रं मेघो वारिवाहः' इति, 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा' इति, 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इति चामरः॥८५॥

समासादि—शशोऽस्त्यस्येति शशी तं शशिनम् । जलस्य निधिरिति जलनिधिस्तं जलनिधिम् ( त० पु० ) । रूपस्य योग्यमित्यनुरूपम् ( अ० भा० ) । जह्नोः कन्या इति जह्नुकन्या ( त० पु० ) । समौ च तौ गुणाविति समगुणौ ( क० धा० ), तयोर्योगस्तेन प्रीतिर्येषां ते समगुणयोगप्रीतयः (ब०व्री०) । श्रवणयोः कटुरिति त० । श्रवणकटु । एकं च तद् वाक्यमिति तत् एकवाक्यम् ( क० धा० ) ॥ ८५ ॥

व्याकरणम्—शशिनं = शश + इनिः । अवगता = अव + गम् + क्तः + टाप् । अवतीर्णा = अव + स्तॄ + क्तः + टाप् । पौराः = पुर + अण् । विवव्रुः = वि + वृ + लिट् ॥ ८५ ॥

वाच्यपरिवर्तनम्—तत्र, समगुणयोगप्रीतिभिः, पौरैः, इयं, मेघमुक्तं, शशिनम्, उपगता, कौमुदी, 'इव' अनुरूपं, जलनिधिम् , अवतीर्णा, जह्नुकन्या, 'इव' इति, नृपाणां, श्रवणकटु, एकवाक्यं, विवव्रे ॥ ८५ ॥

तात्पर्यार्थः—तत्र स्वयम्वरे इन्दुमतीरघुनन्दनयोर्योगेन प्रसन्नाः पुरनिवासिनो जनाः—'इयमजसङ्गतेन्दुमती मेघमुक्तं चन्द्रमसं कौमुदीवाधिगता, स्वसदृशं समुद्रं गङ्गेवाधिगता' इति महीपतीनां कर्णपरुषकरमविसम्वादिवाक्यमब्रुवन् ॥ ८५ ॥

भाषाऽर्थः—उस ( स्वयम्वर ) में समान गुणवाले ( इन्दुमती और अज ) के योग से प्रसन्न हुये पुरवासी जन, 'यह ( अज संगत इन्दुमती ) मेघ से मुक्त चन्द्रमा को, चाँदनी ( की तरह ) प्राप्त हुई है, अपने योग्य समुद्र को गंगा ( की तरह ) प्राप्त हुई है, इस प्रकार राजाओं के कानों को दुस्सह वाक्य बोले ॥ ८५ ॥

अथाजपक्षीयं तदतिरिक्तपक्षीयं च राजमण्डलं हृष्टमहृष्टञ्चाभूदित्याह—

**प्रमुदितवरपक्षमेकतस्तत्क्षितिपतिमण्डलमन्यतो वितानम् ।**
**उषसि सर इव प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८६ ॥**

सञ्जीविनी—प्रमुदितेति । एकत एकत्र प्रमुदितो हृष्टो वरस्य जामातुः पक्षो वर्गो यस्य तत्तथोक्तम् अन्यतोऽन्यत्र वितानं शून्यम् , भग्नाशत्वादप्रहृष्टमित्यर्थः । तत्क्षितिपतिमण्डलम् उषसि प्रभाते प्रफुल्लपद्मं कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सर इव सरस्तुल्यम् आसीत् । पुष्पिताग्रावृत्तमेतत् ॥ ८६ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये स्वयंवरवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

अन्वयः—एकतः, प्रमुदितवरपक्षम्, अन्यतः, वितानं, तत्, क्षितिपतिमण्डलम्, उषसि, प्रफुल्लपद्मं, कुमुदवनप्रतिपन्ननिद्रं, सरः, इव, आसीत् ॥ ८६ ॥

सुधा--एकतः = एकत्र, प्रमुदितवरपक्षः = आनन्दितजामातृवर्गः, अन्यतः, अन्यत्र, वितानं = शून्यं, भग्नाशमिति यावत् । तत् = पूर्वोक्तं, क्षितिपतिमण्डलं = पृथ्वीशसङ्घातः, राजसमूह इति यावत् । उषसि = प्रभाते, प्रफुल्लपद्मं = विकसितकमलं, कुमुदवनप्रतिपन्ननिद्रं = कैरवविपिनप्राप्तनिमीलनं, सरः = कासारः, इव = यथा, आसीत् = अभूत् । पुष्पिताग्राच्छन्दस्तल्लक्षणं च-'अयुजिनयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा'इति ॥८६॥

कोशः--'वरो जामातरि वृत्तौ देवतादेरभीप्सिते' इति मेदिनी । 'मण्डलं बिम्बदेशयोः । भुजङ्गभेदे परिधौ शुनि द्वादशराजके । सङ्घाते कुष्ठभेदे च' इत्यनेकार्थसंग्रहः । 'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि । प्रभातञ्च' इति, 'कासारः सरसी सरः' इति चामरः । 'कुमुदं कैरवे रक्तपद्मे ऽस्त्री' इति मेदिनी ॥ ८६ ॥

समासादि--वरस्य पक्ष इति वरपक्षः ( त० पु० ), प्रमुदितो वरपक्षो यस्मिन् तत् प्रमुदितवरपक्षम् ( ब० व्री० ) । पातीति पतिः, क्षितीनां पतिरिति क्षितिपतिस्तस्य मण्डलमिति क्षितिपतिमण्डलम् ( त० पु० ) । प्रफुल्लं पद्मं यस्मिन् तत् प्रफुल्लपद्मम् ( ब० व्री० ) । कुमुदस्य वनमिति कुमुदवनम् (त० पु०), तेन प्रतिपन्ना निद्रा यस्य तत् कुमुदवनप्रतिपन्ननिद्रम् ( ब० व्री० ) ॥ ८६ ॥

व्याकरणम्--प्रमुदित = प्र + मुद् + क्तः । एकतः = एक + तसिः । वितानं = वि + तन् + घञ् । प्रफुल्ल = प्र + फुल्ल ( विकसने ), पचाद्यच् । प्रतिपन्न = प्रति + पद् + क्तः ॥ ८६ ॥

वाच्यपरिवर्तनम्--एकतः, प्रमुदितवरपक्षेण, अन्यतः, वितानेन, तेन, क्षितिपतिमण्डलेन, उषसि, प्रफुल्लपद्मेन, कुमुदवनप्रतिपन्ननिद्रेण, सरसा, इव, अभूयत ॥ ८६ ॥

तात्पर्यार्थः--यथा सरः पद्मकुमुदयोर्विकासाविकासाभ्यां किंयद्भागेन विकसितं कियद्भागेन चाविकसितमवभासते, तथैव क्षितिपतिमण्डलमपि अजवर्गीयराज्ञां प्रमादेन तद्व्यतिरिक्तवर्गीयराज्ञामप्रमादेन च प्रसन्नमप्रसन्नञ्चावभासते स्म ॥ ८६ ॥

भाषाऽर्थः--एक तरफ प्रसन्न वर ( अज ) के पक्ष वाला राजसमूह, ( और ) दूसरे तरफ अप्रसन्न राज समूह, प्रातः काल में विकसित ( खिले ) कमल ( और ) अविकसित कुमुदिनियों वाले तालाब के समान हुये ॥ ८६ ॥

इति श्रीमहाकविकालिदासविरचिते रघुवंशमहाकाव्ये पण्डितश्रीकपिलदेवमिश्रसूनुना मिश्रोपनामकश्रीसुदामाशर्म्मणा विरचितया सुधाऽऽख्यया व्याख्यया समुल्लसितः स्वयम्वरवर्णनो नाम षष्ठः सर्गः समाप्तः ॥ ६ ॥

## अथ सप्तमः सर्गः ।

भजेमहि निर्पायैकं मुहुरन्ये पयोधरम् ।
मार्गन्तं बालमालोक्याश्वासयन्तौ हि दंपती ॥

**अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम् ।**
**स्वसारमादाय विदर्भनाथः पुरप्रवेशाभिमुखो बभूव ॥ १ ॥**

सञ्जीविनी-अथेति । अथ विदर्भनाथो भोजः सदृशेनोपयन्त्रा वरेण युक्ताम् अत एव साक्षात्प्रत्यक्षम्, 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । स्कन्देन युक्तां 'देवसेनामिव' देवसेना नाम देवपुत्र स्कन्दपत्नी, पूर्वं ब्रह्मणा निर्मिते देवसेनादैत्यसेने इन्द्रकन्येऽभूतां तयोः पूर्वस्याः पतित्वे स्क-

न्द्रोऽभिषिक्त इत्यागमः । तामिव स्थितां स्वसारं भगिनीमिन्दुमतीमादाय गृहीत्वा पुरप्रवेशाभिमुखो बभूव । उपजातिवृत्तं सर्गेऽस्मिन् ॥ १ ॥

अन्वयः—अथ, विदर्भनाथः, सदृशेन, उपयन्त्रा, युक्तां, साक्षात्, स्कन्देन, 'युक्तां' देवसेनाम्, इव, 'स्थितां' स्वसारम्, आदाय, पुरप्रवेशाभिमुखः, बभूव ॥ १ ॥

सुधा—अथ = अनन्तरम्, अजवरणानन्तरमिति यावत् । विदर्भनाथः = विदर्भदेशाधिपतिः, भोज इति यावत् । सदृशेन = योग्येन, उपयन्त्रा = वरेण, युक्तां = संयुताम्, 'अत एव' साक्षात् = प्रत्यक्षं, स्कन्देन = कार्तिकेयेन, युक्तामिति शेषः । देवसेनाम् = इन्द्रकन्यां, स्कन्दपत्नीमिति यावत् । इव = यथा, स्थितामिति शेषः । स्वसारं = भगिनीम्, इन्दुमतीमिति यावत् । आदाय = गृहीत्वा, पुरप्रवेशाभिमुखः = नगरप्रवेशोन्मुखः, बभूव = अभूत, नगरं प्रति चचालेत्यर्थः । अस्मिन्सर्गे उपजातिश्छन्दस्तल्लक्षणं च—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ १ ॥

कोशः—'देवसेनेन्द्रकन्यायां सैन्ये दिविषदामपि' इत्यनेकार्थसंग्रहः । 'भगिनी स्वसा' इत्यमरः । 'अभिर्वीप्साऽऽभिमुख्ययोः' इति विश्वः ॥ १ ॥

समासादि—विदर्भस्य नाथ इति विदर्भनाथः ( त० पु० ) । अभि ( आभिमुख्यं ) मुखं यस्य सोऽभिमुखः ( ब० व्री० ), पुरस्य प्रवेश इति पुरप्रवेशस्तस्याभिमुख इति पुरप्रवेशाभिमुखः ( त० पु० ) ॥ १ ॥

व्याकरणम्—उपयन्त्रा = उप + यम् + तृच् । युक्तां = युज् + क्तः + टाप् । स्कन्देन = स्कन्दतेः पचाद्यच् । आदाय = आ + दा + ल्यप् ॥ १ ॥

वाच्यपरिवर्तनम्—अथ, विदर्भनाथेन, सदृशेन, उपयन्त्रा, युक्तां, साक्षात्, स्कन्देन, 'युक्तां' देवसेनाम्, इव, 'स्थितां' स्वसारम्, आदाय, पुरप्रवेशाभिमुखेन, बभूवे ॥ १ ॥

तात्पर्यार्थः—अथ विदर्भाधिपतिर्भोजो योग्येन वरेण युक्तामत एव साक्षात् स्कन्देन युक्तां कार्तिकेयपत्नीमिव स्थितामिन्दुमतीं गृहीत्वा पुरं प्रविवेश ॥ १ ॥

भाषाऽर्थः—इसके बाद विदर्भ देश का राजा ( भोज ), योग्य वर ( अज ) से युक्त (अत एव) साक्षात कार्तिकेय के सहित देवसेना (स्कंद की स्त्री) के समान बहन (इन्दुमती) को लेकर नगर प्रवेश के लिये चला ॥ १ ॥

अथ राजानः शिबिरस्थानं जग्मुरित्याह—

**सेनानिवेशान्पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः ।**
**भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेषेषु च साभ्यसूयाः ॥ २ ॥**

सञ्जीविनी—सेनेति । भोजस्य राज्ञो गोत्रापत्यं स्त्री भोज्या तामिन्दुमतीं प्रति व्यर्थमनोरथत्वाद्रूपेष्वाकृतिषु वेषेषु नेपथ्येषु च साभ्यसूया वृथेति निन्दतः । किं च विभाते प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव मन्दभासः क्षीणकान्तयः पृथिवीक्षितो नृपा अपि सेनानिवेशाञ्छिबिराणि जग्मुः ॥ २ ॥

अन्वयः—विभातग्रहमन्दभासः, पृथिवीक्षितः, अपि, भोज्यां, प्रति, व्यर्थमनोरथत्वात्, रूपेषु, वेषेषु, च, साभ्यसूयाः, 'सन्तः' सेनानिवेशान्, जग्मुः ॥ २ ॥

सुधा—विभातग्रहमन्दभासः = प्रातःकालिकचन्द्रादिनक्षत्रतुल्यक्षीणकान्तयः, पृथिवीक्षितः = महीपतयः, राजान इति यावत् । अपि, भोज्याम् = इन्दुमतीं, प्रति, व्यर्थमनोरथत्वात् = विफलाभिलाषत्वात्, रूपेषु = आकृतिषु, वेषेषु = नेपथ्येषु, च, साभ्यसूयाः = सासूयाः, वृथेति निन्दन्त इत्यर्थः । सन्त इति शेषः । सेनानिवेशान् = शिबिराणि, जग्मुः = अगमन् ॥ २ ॥

कोशः—'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः' इति, 'इच्छा कांक्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः' इति चामरः ॥ २ ॥

समासादि—सेनाया निवेशा इति सेनानिवेशास्तान् सेनानिवेशान् (त०पु०)। पृथिवीं क्षियन्तीति ते पृथिवीक्षितः। विभातस्य ग्रहा इति विभातग्रहाः (त०पु०), विभातग्रहा इव मन्दा भासो येषां ते विभातग्रहमन्दभासः (ब०व्री०)। व्यर्थौ मनोरथौ येषां ते व्यर्थमनोरथास्तेषां भावो व्यर्थमनोरथत्वं तस्मात् व्यर्थमनोरथत्वात् (ब० व्री०) ॥ २ ॥

व्याकरणम्—क्षितः = क्षि (निवासगत्योः), क्विप् + तुक्। जग्मुः = गम् + लिट्। विभात = वि + भा + क्तः ॥ २ ॥

वाच्यपरिवर्तनम्—विभातग्रहमन्दभाभिः, पृथिवीक्षिद्भिः, अपि, भोज्यां, प्रति, व्यर्थमनोरथत्वात्, रूपेषु, वेषेषु, च, साभ्यसूयैः, 'सद्भिः' सेनानिवेशाः, जग्मिरे ॥ २ ॥

तात्पर्यार्थः—प्रातःकाले चन्द्रादिग्रहतुल्यक्षीणकान्तयो राजानोऽपि इन्दुमतीम्प्रति विफलमनोरथत्वात् रूपेषु वेषेषु च वृथेति निन्दन्तः सन्तः शिबिराणि जग्मुः ॥ २ ॥

भाषाऽर्थः—प्रातःकाल के (चन्द्रमा आदि) ग्रहों के समान मन्द कान्ति वाले नृप लोग भी इन्दुमती के प्रति विफल मनोरथ होने से (अपने) रूप और वेष की निन्दा करते हुये शिबिर में गये ॥ २ ॥

अथ राजानः स्वयंवरे कथं न विघ्नं कृतवन्त इत्याशङ्क्याऽऽह—

> सांनिध्ययोगात्किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः।
> काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ ३ ॥

सञ्जीविनी—ननु कुद्धाश्चेत्क्षुभ्यन्तां तत्राऽऽह—सान्निध्येति। तत्र स्वयंवरक्षेत्रे शच्या इन्द्राण्याः संनिधिरेव सांनिध्यम्, तस्य योगात्सद्भावाद्धेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणामभावः किल, किलेति स्वयंवरविघातकाः शच्या विनाश्यन्त इत्यागमसूचनार्थम्। तेन हेतुना काकुत्स्थमजमुद्दिश्य समत्सरोऽपि सर्वेऽपि क्षितिपाललोकः शशाम नाक्षुभ्यत ॥ ३ ॥

अन्वयः—तत्र, शच्याः, सांनिध्ययोगात्, स्वयंवरक्षोभकृताम्, अभावः, 'बभूव' किल, तेन, काकुत्स्थम्, उद्दिश्य, समत्सरः, अपि, क्षितिपाललोकः, शशाम ॥ ३ ॥

सुधा—तत्र = स्वयंवरे, शच्याः = इन्द्राण्याः, सांनिध्ययोगात् = सामीप्यसद्भावात्, पूजनादित्यर्थः। स्वयंवरक्षोभकृतां = स्वयंवरविघातकानाम्, अभावः = अविद्यमानत्वं, बभूवेति शेषः। किल, किलशब्दः स्वयंवरविघ्नकारका इन्द्राण्या विनाश्यन्ते इत्यागमसूचनार्थं इति बोध्यम्। तेन = कारणेन, स्वविनाशहेतुनेत्यर्थः। काकुत्स्थम् = अजम्, उद्दिश्य = दृष्ट्वा, समत्सरः = अन्यशुभद्वेषयुक्तः, क्रोधयुक्त इति यावत्। अपि, क्षितिपाललोकः = राजसमूहः, शशाम = नाक्षुभ्यत्, शान्तिं गत इत्यर्थः ॥ ३ ॥

कोशः—'शचीन्द्राणीशतावर्योः' इत्यनेकार्थसंग्रहः। 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु' इत्यमरः ॥ ३ ॥

समासादि—संनिधिरेव सांनिध्यं तस्य योगस्तस्मात् सांनिध्ययोगात् (त०पु०)। स्वयंवरस्य क्षोभ इति स्वयंवरक्षोभस्तं कुर्वन्तीति स्वयंवरक्षोभकृतस्तेषां स्वयंवरक्षोभकृताम् (त०पु०)। ककुत्स्थस्यापत्यं पुमान् काकुत्स्थस्तं काकुत्स्थम्। क्षितिं पालयतीति क्षितिपालस्तस्य लोक इति क्षितिपाललोकः (त०पु०) ॥ ३ ॥

व्याकरणम्—सांनिध्य = सम् + निधि + ष्यञ्। काकुत्स्थं = ककुत्स्थ + अण्। उद्दिश्य = उत् + दिश + ल्यप्। शशाम = शम् + लिट् ॥ ३ ॥

वाच्यपरिवर्तनम्—तत्र, शच्याः, सांनिध्ययोगात्, स्वयंवरक्षोभकृताम्, अभावेन, 'बभूवे' तेन, काकुत्स्थम्, उद्दिश्य, समत्सरेण, अपि, क्षितिपाललोकेन, शेमे ॥ ३ ॥

तात्पर्यार्थः—तत्र स्वयंवरे इन्द्राण्याः अर्चनात् स्वयंवरविघ्नकारिणां जनानामभावो बभूव, तेन कारणेन काकुत्स्थमजं विलोक्य क्रोधयुक्तोऽपि राजसमूहः शान्तिं प्राप्तवान् ॥ ३ ॥

भाषाऽर्थः—उस (स्वयंवर) में इन्द्राणी के समीप होने (याने पूजन) से स्वयंवर में विघ्न करने वालों का अभाव हुआ, इसी कारण से काकुत्स्थ (अज) को देखकर क्रोधित भी राजाओं का समूह शान्त होगया। ( स्वयंवर में इन्द्राणी का पूजन किया जाता है, अत एव उसमें विघ्न नहीं होता ) ॥ ३ ॥

अथाज इन्दुमत्या सह सुसंस्कृतं राजमार्गं प्राप्तेत्याह—

**तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम् ।**
**वरः स वध्वा सह राजमार्गं प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४ ॥**

सञ्जीविनी—तावदिति । 'यावत्तावच्च साकल्ये' इत्यमरः । तावत्प्रकीर्णाः साकल्येन प्रसारिता अभिनवा नूतना उपचाराः पुष्पप्रकरादयो यस्य तं तथोक्तम्, इन्द्रायुधानीव द्योतितानि प्रकाशितानि तोरणान्यङ्काश्चिह्नानि यस्य तं ध्वजानां छाया ध्वजच्छायम्, 'छाया बाहुल्ये' इति नपुंसकत्वम् । तेन निवारित उष्ण आतपो यत्र तं तथा राजमार्गं स वरो वोढा वध्वा सह प्राप विवेश ॥ ४ ॥

अन्वयः—सः, वरः, वध्वा, सह, तावत्, प्रकीर्णाभिनवोपचारम्, इन्द्रायुधद्योतिततोरणाङ्कं, ध्वजच्छायनिवारितोष्णं, राजमार्ग, प्राप ॥ ४ ॥

सुधा—सः = पूर्वोक्तः, वरः = उपयन्ता, अज इति यावत् । वध्वा = इन्दुमत्या, सह = साकं, तावत् = साकल्येन, प्रकीर्णाभिनवोपचारं = प्रसारितनवपुष्पप्रकरादियुक्तम्, इन्द्रायुधद्योतिततोरणाङ्कं = शक्रधनुःसदृशप्रकाशिततोरणचिह्नं, ध्वजच्छायनिवारितोष्णं = पताकाच्छायदूरीकृताऽऽतपं, राजमार्गं = नृपपथं, प्राप = विवेश ॥ ४ ॥

कोशः—'यावत्तावच्च साकल्ये' इति, 'इन्द्रायुधं शक्रधनुः' इति, 'तोरणोऽस्त्री बहिर्द्वारम्' इति चामरः । 'उष्णो ग्रीष्मदक्षातपाऽहिमाः' इत्यनेकार्थसंग्रहः ॥ ४ ॥

समासादि—अभिनवाश्च त उपचारा इत्यभिनवोपचाराः (क०धा०), प्रकीर्णा अभिनवोपचारा यस्य स तं प्रकीर्णाभिनवोपचारम् ( ब०व्री० ) । इन्द्रस्याऽऽयुधानीतीन्द्रायुधानि, तद्वद् द्योतितानि तोरणानीतीन्द्रायुधद्योतिततोरणानि, तान्येवाङ्का यस्य स तमिन्द्रायुधद्योतिततोरणाङ्कम् (ब०व्री०) । राज्ञां मार्ग इति राजमार्गस्तं राजमार्गम् (त०पु०) । ध्वजानां छायेति ध्वजच्छायं (त०पु०), ध्वजच्छायेन निवारित उष्णो यस्मिन् स तं ध्वजच्छायनिवारितोष्णम् (ब०व्री०) ॥ ४ ॥

व्याकरणम्—प्राप = प्र + आप्लृ (व्याप्तौ-लृदित्), लिट् । उष्णम् = उष् + नक् ॥ ४ ॥

वाच्यपरिवर्तनम्—तेन, वरेण, वध्वा, सह, तावत्, प्रकीर्णाभिनवोपचारः, इन्द्रायुधद्योतिततोरणाङ्कः, ध्वजच्छायनिवारितोष्णः, राजमार्गः, प्रापे ॥ ४ ॥

तात्पर्यार्थः—अजः इन्दुमत्या सह साकल्येन प्रसारिताभिनवपुष्पप्रकरादियुक्तमिन्द्रायुधसदृशप्रकाशिततोरणचिह्नं ध्वजच्छायनिवारिताऽऽतपं राजमार्गं विवेश ॥ ४ ॥

भाषाऽर्थः—वह वर, वधू (इन्दुमती)के सहित चारों तरफ से सजाये गये नये पुष्प आदि वाले इन्द्रधनुष के समान कांतिमान् बंदवारोंके चिह्न (और) ध्वजा की छाया से धूप मिटाने वाले राजमार्ग में प्राप्त हुआ ॥ ४ ॥

अथ पुरस्त्रियो गवाक्षद्वारा राजमार्गे वध्वा सह गच्छन्तमजं ददृशुरित्याह—

**ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।**
**बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५ ॥**

सञ्जीविनी—तत इति । ततस्तदनन्तरं चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्याजस्याऽऽलोकने तत्पराणामासक्तानां पुरसुन्दरीणामित्थं वक्ष्यमाणप्रकाराणि त्यक्तान्यन्यकार्याणि केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः, नपुंसके भावे क्तः । बभुवुः ॥५॥

अन्वयः—ततः, चामीकरजालवत्सु, सौधेषु, तद्दालोकनतत्पराणां, पुरसुन्दरीणाम्, इत्थं, त्यक्तान्यकार्याणि, विचेष्टितानि, इत्थं, बभूवुः ॥ ५ ॥

सुधा—ततः = तदनन्तरं, राजमार्गगमनानन्तरमिति यावत् । चामीकरजालवत्सु = काञ्चनगवाक्षयुक्तेषु, सौधेषु = राजसदनेषु, गृह इति यावत् । तद्दालोकनतत्पराणाम् = अजदर्शनोत्सुकानां, पुरसुन्दरीणां = नगररमणीनाम्, इत्थम् = एवं, वक्ष्यमाणप्रकाराणीति यावत् । त्यक्तान्यकार्याणि = मुक्तकेशबन्धनादिकार्याणि, विचेष्टितानि = व्यापाराः, बभूवुः = अभूवन् ॥५॥

कोशः—'सौधोऽस्त्री राजसदनम्' इति, 'चामीकरं जातरूपं महारजतकाञ्चने' इति, 'सुन्दरी रमणी रामा' इति चामरः ॥ ५ ॥

समासादि—तस्याऽऽलोकनमिति तदालोकनं तस्मिन् तत्परा इति तदालोकनतत्परास्तासां तदालोकनतत्पराणाम् ( त० पु० ) । सुधा एषां सन्तीति सौधास्तेषु सौधेषु । चमाकर (आकर) भवाश्चामीकरास्तेषां जालानि सन्त्येषु ते तेषु चामीकरजालवत्सु (त०पु०)। पुरस्य सुन्दर्य इति पुरसुन्दर्यस्तासां पुरसुन्दरीणाम् (त०पु०) । त्यक्तान्यन्यकार्याणि येषु तानि त्यक्तान्यकार्याणि (ब०व्री०) ॥ ५ ॥

व्याकरणम्—सौधेषु = सुधा + अण् । चामीकर = चमीकर + 'तत्र भवः' इत्यण् । विचेष्टितानि = वि + चेष्टा + इतच् ॥ ५ ॥

वाच्यपरिवर्तनम्—ततः, चामीकरजालवत्सु, सौधेषु, तदालोकनतत्पराणां, पुरसुन्दरीणाम्, इत्थं, त्यक्तान्यकार्यैः, विचेष्टितैः, बभूवे ॥ ५ ॥

तात्पर्यार्थः—राजमार्गगमनानन्तरं सौवर्णगवाक्षयुक्तेषु राजसदनेष्वजस्य दर्शने समुत्सुकानां पुरसुन्दरीणामित्थं केशबन्धनादीनि कार्याणि त्यक्त्वा व्यापारा बभूवुः ॥ ५ ॥

भाषाऽर्थः—उसके बाद सुवर्ण के झरोखे दार महलों में उस (अज) को देखने के लिये तत्पर पुर की स्त्रियों की, अन्य (केश बंधन आदि) कार्यों को छोड़कर इस प्रकार चेष्टा हुई ॥ ५ ॥

अथ तत्र काचिदसंयतमपि केशपाशं नाबध्नादित्याह—

**आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।**
**बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥**

सञ्जीविनी—तान्येवाह पञ्चभिः श्लोकैः—आलोकेति । सहसाऽऽलोकमार्गं गवाक्षपथं व्रजन्त्या कयाचित्कामिन्योद्वेष्टनवान्तमाल्यः उद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनः अत एव वान्तमाल्यो बन्धविश्लेषणोद्गीर्णमाल्यः करेण रुद्धो गृहीतोऽपि च केशपाशः केशकलापः, 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । तावद्दालोकमार्गप्राप्तिपर्यन्तं बद्धुं बन्धनार्थं न संभावितो न चिन्तित एव ॥ ६ ॥

अन्वयः—सहसा, आलोकमार्गं, व्रजन्त्या, कयाचित्, उद्वेष्टनवान्तमाल्यः, करेण, रुद्धः, अपि, केशपाशः, तावत्, बद्धुं, न, एव, सम्भावितः, ॥ ६ ॥

सुधा—सहसा = झटिति, अविचार्येति यावत् । आलोकमार्गम् = अवलोकनपन्थानं, गवाक्षपथमिति यावत् । व्रजन्त्या = गच्छन्त्या, कयाचित् = कामिन्या, उद्वेष्टनवान्तमाल्यः = उन्मुक्तबन्धनोद्गीर्णमालः, करेण = हस्तेन, रुद्धः = अवरुद्धः, गृहीत इत्यर्थः । अपि, केशपाशः = कचकलापः, तावत् = गवाक्षपथप्राप्तिपर्यन्तं, बद्धुं = बन्धनार्थं, न, एव, सम्भावितः = चिन्तितः, नैव विचारित इत्यर्थः ॥ ६ ॥

कोशः—'पाशस्तु' मृगपक्ष्यादिबन्धने । कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः । छात्राद्यन्ते च निन्दाऽर्थः' इत्यनेकार्थसंग्रहः ॥ ६ ॥

समासादि—आलोकस्य मार्ग इत्यालोकमार्गस्तमालोकमार्गम् (त०पु०) । उद्वेष्टनम् (अत एव) वान्तं माल्यं यस्मिन् स उद्वेष्टनवान्तमाल्यः (ब०व्री०) ॥ ६ ॥

व्याकरणम्—उद्वेष्टन = उद् + वेष्ट (वेष्टने), ल्युट् । बद्धुं = बन्ध + तुमुन् । सम्भावितः = सम् + भू + णिच् + क्तः । रुद्धः = रुध + क्तः ॥ ६ ॥

वाच्यपरिवर्तनम्—सहसा, आलोकमार्गं, व्रजन्ती, काचित्, उद्वेष्टनवान्तमाल्यं, करेण, रुद्धम्, अपि, केशपाशं, तावत्, बद्धुं, न, एव, सम्भावितवती ॥ ६ ॥

तात्पर्यार्थः—तस्मिन् क्षणे गवाक्षपथं गच्छन्ती काचित् द्रुतगमनवशात् उन्मुक्तबंधन मत एव उद्गीर्णमाल्यं हस्तेन गृहीतमपि केशकलापं गवाक्षपथप्राप्तिपर्यन्तं पुनर्बन्धनाय नैव विचारितवती ॥६ ॥

भाषाऽर्थः—शीघ्र झरोखे के रास्ते से जाती हुई किसी एक स्त्रीने बंधन के खुल जाने से माला गिरने के कारण हाथमें पकड़े हुये केशों के जूड़े को तब तक बांधने की चिन्ता नहीं की ॥ ६ ॥

अथ काचित् गवाक्षपर्यन्तं मार्गं लाक्षारागचिह्नयुक्तं कृतवतीत्याह—

**प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।**
**उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ७ ॥**

सञ्जीविनी—प्रसाधिकेति । काचित् प्रसाधिकयाऽलंकर्त्र्यालम्बितं रञ्जनार्थं धृतं द्रवरागमेवाऽऽर्द्रालक्तकमेव अग्रश्चासौ पादश्चेत्यग्रपाद इति कर्मधारयसमासः । "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः । तमाक्षिप्याऽऽकृष्य उत्सृष्टलीलागतिस्त्यक्तमन्दगमना सती आगवाक्षाद्गवाक्षपर्यन्तं पदवीं पन्थानमलक्तकाङ्कां लाक्षारागचिह्नां ततान विस्तारयामास ॥ ७ ॥

अन्वयः—काचित्, प्रसाधिकालम्बितं, द्रवरागम्, एव, अग्रपादम्, आक्षिप्य, उत्सृष्टलीलागतिः, 'सती' आगवाक्षात, अलक्तकाङ्कां, पदवीं, ततान ॥ ७ ॥

सुधा—काचित् = कामिनी, प्रसाधिकालम्बितम् = अलङ्कर्त्र्या रञ्जनार्थं धृतं, द्रवरागम् = आर्द्राऽलक्तकम्, एव, अग्रपादम् = अग्रचरणं, आक्षिप्य = आकृष्य, उत्सृष्टलीलागतिः = मुक्तमन्दगमना, सतीति शेषः । आगवाक्षात = गवाक्षपर्यन्तम्, अलक्तकाङ्कां = लाक्षारागचिह्नयुक्तां, पदवीं = सृतिं, पन्थानमिति यावत् । ततान = विस्तारयामास ॥ ७ ॥

कोशः—'राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः' इति, 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इति चामरः ॥ ७ ॥

समासादि—प्रसाधिकयालम्बित इति प्रसाधिकालम्बितस्तं प्रसाधिकालम्बितम् (त०पु०) । अग्रश्चासौ पाद इत्यग्रपादस्तमग्रपादम् (क०धा०)। गमनं गतिः, लीलाया गतिरिति लीलागतिः (त०पु०), उत्सृष्टा लीलागतिर्यया सा उत्सृष्टलीलागतिः(ब०व्री०) । गवाक्षमभिव्याप्येत्यागवाक्षं तस्मादागवाक्षात् (अ०भा०) । अलक्तकस्याङ्को यस्यां सा अलक्तकाङ्का तामलक्तकाङ्काम् (ब०व्री०) ॥ ७ ॥

व्याकरणम्—प्रसाधिका = प्र + साध् + णिच् + ण्वुल् + टाप् । आक्षिप्य = आ + क्षिप (प्रेरणे), ल्यप् । उत्सृष्ट = उत् + सृज + क्तः । ततान = तनु (विस्तारे), लिट् ॥ ७ ॥

वाच्यपरिवर्तनम्—कयाचित्, प्रसाधिकालम्बितं, द्रवरागम्, एव, अग्रपादम्, आक्षिप्य, उत्सृष्टलीलागत्या, 'सत्या' आगवाक्षात्, अलक्तकाङ्का, पदवी, तेने ॥ ७ ॥

तात्पर्यार्थः—काचित् कामिनी अलङ्कर्त्र्या रञ्जनार्थं धृतमार्द्रालक्तकमेवाग्रपादमाकृष्य त्यक्तमन्दगमना सती गवाक्षपर्यन्तं लाक्षारागचिह्नयुक्तं पन्थानं विस्तारयामास ॥ ७ ॥

भाषाऽर्थः—कोई (स्त्री), शृङ्गार करने वाली से धरे हुये भींगे महावर के रंगसे युक्त पैरों को खींच ( और ) धीमी चाल को छोड़ कर झरोखे तक महावर के चिह्नों से मार्ग को विस्तृत किया ॥ ७ ॥

अथ काचिन्नयनान्तरे शलाकामुद्वहन्ती गवाक्षसमीपं गतेत्याह—

**विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ८ ॥**

सञ्जीविनी—विलोचनमिति । अपरा स्त्री दक्षिणं विलोचनमञ्जनेन सम्भाव्यालंकृत्य, सम्भ्रमादिति भावः । तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा सती तथैव शलाकामञ्जनतूलिकां वहन्ती सती वातायनसंनिकर्षं गवाक्षसमीपं ययौ । दक्षिणग्रहणं संभ्रमादुत्क्रमकरणद्योतनार्थम्, "सव्यं हि पूर्वं मनुष्या अञ्जते" इति श्रुतेः ॥ ८ ॥

अन्वयः—अपरा, दक्षिणं, विलोचनम्, अञ्जनेन, सम्भाव्य, तद्वञ्चितवामनेत्रा, 'सती' तथा, एव, शलाकां, वहन्ती, वातायनसन्निकर्षं, ययौ ॥ ८ ॥

सुधा—अपरा = अन्या, कामिनीति यावत्। दक्षिणम् = अवामं, विलोचनम्, अञ्जनेन = कज्जलेन, सम्भाव्य = अलङ्कृत्य, तद्वञ्चितवामनेत्रा = अञ्जनवर्जितसव्यनयना, सतीति शेषः । तथा = तेन प्रकारेण, एव, शलाकाम् = एषिकाम्, अञ्जनतूलिकामिति यावत् । वहन्ती = गृह्यमाणा, वातायनसन्निकर्षं = गवाक्षसमीपं, ययौ = जगाम ॥ ८ ॥

कोशः—'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । आरामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' इति, 'अञ्जनं कज्जले चाक्तौ' इति च मेदिनी । 'वातायनं गवाक्षोऽथ' इत्यमरः ॥ ८ ॥

समासादि—वामं च तन्नेत्रमिति वामनेत्रं ( क० धा० ), तेन ( अञ्जनेन ) वञ्चितं वामनेत्रं यस्याः सा तद्वञ्चितवामनेत्रा ( ब० व्री० ) । वातायनस्य सन्निकर्षमिति वातायनसन्निकर्षम् ( त० पु० ) ॥ ८ ॥

व्याकरणम्—सम्भाव्य = सम् + भू + णिच् + ल्यप् । ययौ = या ( प्रापणे ), लिट् । शलाकां = शल ( गतौ ), आकन् । वहन्ती = वह (प्रापणे), शतृ + 'उगितश्च' इति ङीप् ॥८॥

वाच्यपरिवर्तनम्—अपरया, दक्षिणं, विलोचनम्, अञ्जनेन, सम्भाव्य, तद्वञ्चितवामनेत्रया, 'सत्या' तथा, एव, शलाकां, वहन्त्या, वातायनसन्निकर्षं, यये ॥ ८ ॥

तात्पर्यार्थः—काचित् स्त्री दक्षिणं नयनं कज्जलेन अलङ्कृत्य वामनेत्रमञ्जनेन वर्जितं कुर्वती सती तथैव हस्तेन अञ्जनशलाकां गृह्यमाणा गवाक्षसमीपं जगाम ॥ ८ ॥

भावार्थः—दूसरी ( कोई स्त्री ), दाहिने आंखों में काजल लगाकर ( और ) बांई आंखों को उस काजल से रहित करती हुई, वैसे ही शलाका को ( हाथ से ) पकड़ी हुई झरोखे के निकट गयी ॥ ८ ॥

अथ काचिद् गमनेन त्रुटितां नीवीं न बबन्धेत्याह—

**जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।**
**नाभिप्रविष्टाऽऽभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ९ ॥**

सञ्जीविनी—जालान्तरेति । अन्या स्त्री जालान्तरप्रेषितदृष्टिर्गवाक्षमध्यप्रेरितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसनग्रन्थिम्, 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः । न बबन्ध किं तु नाभिप्रविष्टा आभरणानां कङ्कणाऽऽदीनां प्रभा यस्य तेन, प्रभैव नाभेराभरणमभूदिति भावः । हस्तेन वासोऽवलम्ब्य गृहीत्वा तस्थौ ॥ ९ ॥

अन्वयः—अन्या, जालान्तरप्रेषितदृष्टिः, 'सती' प्रस्थानभिन्नां नीवीं, न, बबन्ध, 'किन्तु' नाभिप्रविष्टाऽऽभरणप्रभेण, हस्तेन, वासः, अवलम्ब्य, तस्थौ ॥ ९ ॥

सुधा—अन्या = अपरा, कामिनीति यावत् । जालान्तरप्रेषितदृष्टिः = गवाक्षमध्यप्रेरितनेत्रा, सतीति शेषः । प्रस्थानभिन्नां = गमनत्रुटितां, नीवीं = वस्त्रग्रन्थि, न बबन्ध = नावध्नात्। 'किन्तु' नाभिप्रविष्टाऽऽभरणप्रभेण = नाभिप्रविष्टकङ्कणाङ्गुलीयककान्तियुक्तेन, हस्तेन =

करेण, वासः = वस्त्रम्, अवलम्ब्य = गृहीत्वा, तस्थौ = स्थिता ॥ ९ ॥

कोशः—'जालं तु गवाक्षे क्षारके गणे' इत्यनेकार्थसंग्रहः । 'यात्रा व्रज्याऽभिनिर्याणं प्रस्थानं गमनं गमः' इत्यमरः । 'नीवी, स्त्रीकटीवस्त्रबन्धने । मूलद्रव्ये परिपणे' इत्यनेकार्थ संग्रहः ॥ ९ ॥

समासादि—जालस्यान्तरमिति जालान्तरं, तत्र प्रेषिता दृष्टिर्यया सा जालान्तरप्रेषित-दृष्टिः ( ब० व्रीο ) । प्रस्थानेन भिन्नेति प्रस्थानभिन्ना तां प्रस्थानभिन्नाम् ( त० पु० ) । आभरणस्य प्रभेत्याभरणप्रभा ( त० पु० ), नाभौ प्रविष्टा आभरणप्रभा यस्य स तेन नाभिप्रविष्टाऽऽभरणप्रभेण (ब० व्री०) ॥ ९ ॥

व्याकरणम्—प्रेषित = प्र + इष् + क्तः + इट् । दृष्टिः = दृश् + क्तिन् । प्रस्थान = प्र + स्था + 'ल्युट् च' इत्यनेन ल्युट् । तस्थौ = स्था + लिट् । अवलम्ब्य = अव + लबि + ल्यप् ॥ ९ ॥

वाच्यपरिवर्तनम्—अन्यया, जालान्तरप्रेषितदृष्ट्या, 'सत्या' प्रस्थानभिन्ना, नीवी, न, बबन्धे, 'किन्तु' नाभिप्रविष्टाऽऽभरणप्रभेण, हस्तेन, वासः, अवलम्ब्य, तस्थे ॥ ९ ॥

तात्पर्यार्थः = काचित् स्त्री गवाक्षमध्यप्रेरितनयना सती शीघ्रगमनेन त्रुटितां नीवीं न बबन्ध, किन्तु नाभिप्रविष्टकङ्कणाद्याभरणकान्तियुक्तेन वस्त्रं गृहीत्वा तस्थौ ॥ ९ ॥

भाषाऽर्थः—दूसरी ( कोई स्त्री ), झरोखे के मध्य में दृष्टि लगायी हुई चलने से टूटी हुई वस्त्र की गांठ को नहीं बांधी ( किन्तु ) नाभि पर पड़ी हुई भूषण की प्रभा वाले हाथ से वस्त्र को पकड़ कर स्थित हुई ॥ ९ ॥

अथ कस्याश्चिन्मेखला अङ्गुष्ठमूले सूत्रशेषा आसीदित्याह—

**अर्धाञ्चिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।**
**कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १० ॥**

सञ्जीविनी—अर्धाञ्चितेति । सत्वरमुत्थितायाः कस्याश्चिदर्धाञ्चिता मणिभिरर्धगुम्फिता दुर्निमिते संभ्रमाद्दुरुत्क्षिप्ते, 'डुमिञ्प्रक्षेपणे' इति धातोः कर्मणि क्तः । पदे पदे प्रतिपदम्, वीप्सायां द्विर्भावः । गलन्ती गलद्रत्ना सती रशना मेखला तदानीं गमनसमयेऽङ्गुष्ठमूलेऽर्पितं सूत्रमेव शेषो यस्याः सा आसीत् ॥ १० ॥

अन्वयः—सत्वरम्, उत्थितायाः, कस्याश्चित्, अर्धाञ्चिता, दुर्निमिते, पदे पदे, गलन्ती, रशना, तदानीम्, अङ्गुष्ठमूलार्पितसूत्रशेषा, आसीत् ॥ १० ॥

सुधा—सत्वरम् = अविलम्बितं, शीघ्रमिति यावत् । उत्थितायाः = समुत्थितायाः, कस्याश्चित् = कामिन्याः, स्त्रिय इति यावत् । अर्धाञ्चिता = अर्धग्रथिता, दुर्निमिते = संभ्रमाद्दुरुत्क्षिप्ते, त्वरया अयथातथं विन्यस्त इत्यर्थः । पदे पदे = प्रतिपदं, वीप्सायां द्वित्वम् । गलन्ती = पतन्ती, पतद्रत्नेत्यर्थः । रशना = मेखला, तदानीं = तदा, गमनसमय इति यावत् । अङ्गुष्ठमूलार्पितसूत्रशेषा = अङ्गुष्ठमूले प्रदत्ततन्तुशेषा, आसीत् = अभूत् ॥ १० ॥

कोशः—'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इति, 'स्त्री कट्यां मेखला काञ्ची सप्तकी रशना तथा' इति चामरः ॥ १० ॥

समासादि—अर्धमञ्चितं यस्यां सा अर्धाञ्चिता (ब० व्री०) । अङ्गुष्ठस्य मूलमित्यङ्गुष्ठ-मूलं, तस्मिन्नर्पितं सूत्रमेव शेषो यस्याः सा अङ्गुष्ठमूलार्पितसूत्रशेषा (ब० व्री० ) ॥ १० ॥

व्याकरणम्—दुर्निमिते = दुर् + नि + डुमिञ् ( प्रक्षेपे—डुजित् ), क्तः । गलन्ती = गल ( प्रस्रवणे ), शतृ + ङीप् ॥ १० ॥

वाच्यपरिवर्तनम्—सत्वरम्, उत्थितायाः, कस्याश्चित्, अर्धाञ्चितया, दुर्निमिते, पदे पदे, गलन्त्या, रशनया, तदानीम्, अङ्गुष्ठमूलार्पितसूत्रशेषया, अभूयत ॥ १० ॥

तात्पर्यार्थः—शीघ्रमुत्थितायाः कस्याश्चित् स्त्रियः मणिभिरर्धगुम्फिता त्वरयाऽयथातथं

ग्रथिता स्ते पदे पदे गलन्ती मेखला अङ्गुष्ठमूले सूत्रशेषाऽभूत् ॥ १० ॥

भाषाऽर्थः--जल्दी से उठने के कारण किसी स्त्री की ( मणियों से ) आधी गुथी गई, ( शीघ्र चलने से) ठीक ठीक नहीं रक्खे गये पग पग में गिरती हुई मेखला, अंगूठे के मूल में (केवल) शेष डोरे वाली रह गई। (जब कोई वस्तु गूथी जाती है तो प्रायः गूथने के समय डोरा पैर के अंगूठे में लगा ली जाती है ) ॥ १० ॥

अथ तदानीं गवाक्षाः कमलालङ्कृता इवाऽऽसन्नित्याह—

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राऽऽभरणा इवाऽऽसन् ॥ ११ ॥**

सञ्जीविनी--तासामिति । तदानीं सान्द्रकुतूहलानां तासां स्त्रीणामासवगन्धो गर्भे येषां तैः विलोलानि नेत्राण्येव भ्रमरा येषां तैः मुखैर्व्याप्तान्तराश्छन्नावकाशा गवाक्षाः सहस्रपत्राऽऽभरणा इव कमलालंकृता इव, 'सहस्रपत्रं कमलम्' इत्यमरः। आसन् ॥ ११ ॥

अन्वयः—'तदानीं' सान्द्रकुतूहलानां, तासाम्, आसवगन्धगर्भैः, विलोलनेत्रभ्रमरैः, मुखैः, व्याप्तान्तराः, गवाक्षाः, सहस्रपत्राऽऽभरणाः, इव, आसन् ॥ ११ ॥

सुधा—'तदानीं' सान्द्रकुतूहलानां = प्राप्तकौतुकानां, तासां = स्त्रीणाम्, आसवगन्धगर्भैः = शीधुगन्धयुक्तैः, विलोलनेत्रभ्रमरैः = चञ्चललोचनद्विरफैः, मुखैः = आननैः, व्याप्तान्तराः = छन्नावकाशाः, पूर्णमध्यभागा इत्यर्थः । गवाक्षाः = जालकाः, सहस्रपत्राभरणाः = कमलालङ्कृताः, इव = यथा, आसन् = अभवन् ॥ ११ ॥

कोशः—'मैरयमासवः शीधुः' इति, 'कौतुकं च कुतूहलम्' इति चामरः। 'गवाक्षो जालके कपौ' इत्यनेकार्थसंग्रहः। 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्' इत्यमरः ॥११ ॥

समासादि—आसवस्य गन्ध इत्यासवगन्धः (त० पु०), स गर्भे येषां ते तैरासवगन्धगर्भैः ( ब० व्री० )। व्याप्तमन्तरं येषां ते व्याप्तान्तराः (ब० व्री० )। सान्द्रं कुतूहलं यासां ताः सान्द्रकुतूहलास्तासां सान्द्रकुतूहलानाम् (ब० व्री०) । विलोलानि च तानि नेत्राणीति विलोलनेत्राणि ( क० धा० ), तान्येव भ्रमरा येषां ते तैर्विलोलनेत्रभ्रमरैः ( ब० व्री० )। सहस्रपत्राणामाभरणानि येषु ते सहस्रपत्राऽऽभरणाः ( ब० व्री० ) ॥ ११ ॥

व्याकरणम्—आसव = आ + सु — अण् । व्याप्त = वि + आप् + क्तः । आसन् = आ + अस ( भुवि ), लङ् ॥ ११ ॥

वाच्यपरिवर्तनम्—'तदानीं' सान्द्रकुतूहलानां, तासाम्, आसवगन्धगर्भैः, विलोलनेत्रभ्रमरैः, मुखैः, व्याप्तान्तरैः, गवाक्षैः, सहस्रपत्राऽऽभरणैः, इव, अभूयत ॥ ११ ॥

तात्पर्यार्थः—गमनसमये प्राप्तकुतूहलानां तासां स्त्रीणामासवगन्धयुक्तैश्चञ्चलनयनरूपभ्रमरैर्मुखैश्छन्नावकाशा गवाक्षाः कमलालङ्कृता इवाऽऽसन् ॥ ११ ॥

भाषाऽर्थः—( उस समय ) आश्चर्य प्राप्त करने वाली उन स्त्रियों के आसव ( मदिरा ) के गंधयुक्त चंचल नेत्र रूपी भौंरे वाले मुखों से व्याप्त हुये झरोखे, मानो कमलों से अलंकृत थे ॥ ११ ॥

अथ नयनैरजमवलोकयन्त्यो नार्यो विषयान्तराणि न ज्ञातवत्य इत्याह—

**ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।**
**तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ १२ ॥**

सञ्जीविनी—ता इति । ता नार्यो रघोरपत्यं राघवमजम्, "तस्यापत्यम्" इत्यण्प्रत्ययः। दृष्टिभिरापिबन्त्योऽपि तृष्णया पश्यन्त्यो विषयान्तराण्यन्यान्विषयान्न जग्मुः, न विविदुरित्यर्थः। तथा हि आसां नारीणां शेषेन्द्रियवृत्तिश्चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्वाऽऽत्मना स्वरूपकार्त्स्न्येन चक्षुःप्रविष्टेव श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्ते-

श्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्त किमु, अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥ १२ ॥

अन्वयः—ताः, नार्यः, राघवं, दृष्टिभिः, आपिबन्त्यः, 'सत्यः' विषयान्तराणि, न, जग्मुः, तथा हि, आसां, शेषेन्द्रियवृत्तिः, सर्वात्मना, चक्षुःप्रविष्टा, इव, 'बभूव' ॥ १२ ॥

सुधा—ताः = पूर्वोक्ताः, नार्यः = स्त्रियः, दृष्टिभिः = नयनैः, राघवम् = अजम्, आपिबन्त्यः = तृष्णया पश्यन्त्यः, सत्य इति शेषः । विषयान्तराणि = इन्द्रियान्तराणि, चक्षुरिन्द्रियेतरेन्द्रियकार्याणीति यावत् । न, जग्मुः = न विविदुः, तथा हि = यतः, आसां = नारीणां, शेषेन्द्रियवृत्तिः = नेत्रातिरिक्तसर्वेन्द्रियव्यापारः, सर्वात्मना = स्वरूपकात्स्न्येन, चक्षुःप्रविष्टा = नयननिविष्टा, इव, बभूव इति शेषः ॥ १२ ॥

कोशः—'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इति, 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इति चामरः ॥ १२ ॥

समासादि—शेषाणि च तानीन्द्रियाणीति शेषेन्द्रियाणि ( क० धा० ), शेषेन्द्रियाणां वृत्तिरिति शेषेन्द्रियवृत्तिः ( त० पु० ) ॥ १२ ॥

व्याकरणम्—वृत्तिः = वृतु (वर्तने-उकारत्), क्तिन् ॥१२॥

वाच्यपरिवर्तनम्—ताभिः, नारीभिः, राघवं, दृष्टिभिः, आपिबन्तीभिः, 'सद्भिः' विषयान्तराणि, न, जग्मिरे, तथा हि, आसां, शेषेन्द्रियवृत्त्या, सर्वात्मना, चक्षुःप्रविष्टया, इव, 'बभूवे' ॥ १२ ॥

तात्पर्यार्थः—नयनैरजं पश्यन्त्यस्ताः स्त्रियः कार्यान्तराणि न जग्मुः, यत आसां स्त्रीणां नयनातिरिक्तपञ्चेन्द्रियव्यापारः स्वरूपकात्स्न्येन चक्षुःप्रविष्ट इव बभूव ॥ १२ ॥

भाषाऽर्थः—वे स्त्रियां अज को दृष्टियों से पीती हुई ( याने देखती हुई ) अन्य इन्द्रियों के सुख की ओर न गईं, क्योंकि इन ( स्त्रियों ) की चक्षुरिन्द्रिय के अलावे अन्य इन्द्रियों के व्यापार, मानों सब प्रकार से आंखों में प्रवेश कर गये ( थे ) ॥ १२ ॥

अथेन्दुमती स्वयंवरप्रसादादेव स्वानुरूपं स्वामिनं प्राप्तेत्याह—

**स्थाने वृता भूपतिभिः परोक्षैः स्वयंवरं साधुममंस्त भोज्या ।**
**पद्मेव नारायणमन्यथाऽसौ लभेत कान्तं कथमात्मतुल्यम् ॥ १३ ॥**

सञ्जीविनी—'शृण्वन्कथाः श्रोत्रसुखाः कुमारः' इति वक्ष्यति ताः कथयति 'स्थाने' इत्यादिभिस्त्रिभिः-स्थान इति । भोज्येन्दुमती परोक्षैरदृष्टैर्भूपतिभिर्वृता ममैवेयमिति प्रार्थिताऽपि स्वयंवरमेव साधु हितममंस्त मेने न तु ।परोक्षमेव कंचित्प्रार्थकं वव्रे स्थाने युक्तमेतत्, 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । कुतः ? अन्यथा स्वयंवराभावेऽसाविन्दुमती पद्ममस्या अस्तीति पद्मा लक्ष्मीः, "अर्शआदिभ्योऽच्" इत्यच्प्रत्ययः । नारायणमिव आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत ? न लभेतैव, सदसद्विवेकाभावादिति भावः ॥ १३ ॥

अन्वयः—भोज्या, परोक्षैः, भूपतिभिः, वृता, 'अपि' स्वयंवरम्, एव, साधुम्, अमंस्त, स्थाने, असौ, पद्मा, नारायणम्, इव, आत्मतुल्यं, कान्तं, कथं, लभेत ॥ १३ ॥

सुधा—भोज्या = भोजभगिनी, इन्दुमतीति यावत् । परोक्षैः = अदृष्टैः, भूपतिभिः = राजभिः, वृता = प्रार्थिता, अपीति शेषः । स्वयंवरमेव, साधुं = हितम्, अमंस्त = मेने, स्थाने = युक्तमेतत्, अन्यथा = स्वयंवराभावे, असौ = इन्दुमती, पद्मा = लक्ष्मीः, नारायणं, विष्णुम्, इव = यथा, आत्मतुल्यं = स्वानुरूपं, कान्तं = प्रियं, पतिमिति यावत् । कथं = केन-प्रकारेण, लभेत = प्राप्नुयात्, न प्राप्नुयादेवेत्यर्थः ॥ १३ ॥

कोशः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इति, 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इति चामरः । 'कान्तो रम्ये प्रिये' इत्यनेकार्थसंग्रहः ॥ १३ ॥

समासादि—पातीति पतिः, भुवः पतिरिति भूपतिस्तैर्भूपतिभिः । स्वयं वृणीते इति स्वयंवरस्तं स्वयंवरम् । भोजस्य गोत्रापत्यं स्त्री भोज्या । आत्मनस्तुल्य इत्यात्मतुल्यस्तमात्मतुल्यम् ॥ १३ ॥

व्याकरणम्—वृता = वृ + क्तः + टाप् । लभेत = लभ + विधिलिङ् ॥ १३ ॥

वाच्यपरिवर्तनम्—भोज्यया, भूपतिभिः, वृतया, 'अपि' स्वयंवरः, एव, साधुः, अमानि, स्थाने, अनया, पद्मया, नारायणः, इव, आत्मतुल्यः, कान्तः, कथं, लभ्येत ॥ १३ ॥

तात्पर्यार्थः—इन्दुमती अदृष्टैर्भूपैर्मय्येवेयमिति प्रार्थिताऽपि स्वयंवरमेव साधुं मेने, उचितमेवैतत् अन्यथाऽसौ लक्ष्मीर्नारायणमिव स्वानुरूपं पतिमजं कथं लभेत ? ॥ १३ ॥

भाषाऽर्थः—इन्दुमती को बिना देखे राजाओं ने प्रार्थना भी किया ( तो भी इन्दुमती ने ) स्वयंवर को ही अच्छा माना, नहीं तो यह ( इन्दुमती ), लक्ष्मी नारायण के समान अपने योग्य पति ( अज ) को कैसे प्राप्त करती ॥ १३ ॥

अथेन्दुमत्या अजस्य च ब्रह्मणो रूपरचनायाः साफल्यमाह—

**परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥**

सञ्जीविनी—परस्परेणेति । स्पृहणीयशोभं सर्वाऽऽशास्यसौन्दर्यमिदं द्वन्द्वं मिथुनं, "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इत्यनेन निपातः । परस्परेण नायोजयिष्यच्चेन्न योजयेद्यदि तर्हि प्रजानां पत्युर्विधातुरस्मिन्द्वये द्वन्द्वे रूपविधानयत्नः सौन्दर्यनिर्माणप्रयासो वितथो विफलोऽभविष्यत्, एतादृशानुरूपस्त्रीपुंसान्तराभावादिति भावः । "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङ्, 'कुतश्चित्कारणवैगुण्यात्क्रियाया अनभिनिष्पत्तिः क्रियाऽतिपत्तिः' इति वृत्तिकारः ॥ १४ ॥

अन्वयः—'प्रजापतिः' स्पृहणीयशोभम् , इदं, द्वन्द्वं, चेत् , परस्परेण, न, अयोजयिष्यत् , 'तर्हि' अस्मिन्, द्वये, प्रजानां, पत्युः, रूपविधानयत्नः, वितथः, अभविष्यत् ॥ १४ ॥

सुधा—स्पृहणीयशोभं = वाञ्छनीयद्युति, सकलजनप्रशंसनीयसौन्दर्यमिति यावत् । इदं = पुरोवर्त्ति, द्वन्द्वं = युग्मं, चेत् = यदि, परस्परेण = अन्योन्येन, नायोजयिष्यत् = नामेलयिष्यत , प्रजापतिरिति शेषः । 'तर्हि' अस्मिन् = एतस्मिन् , द्वये = द्वितये, द्वन्द्वे इति यावत् । प्रजानां = जनानां, पत्युः = स्वामिनः, ब्रह्मण इत्यर्थः । रूपविधानयत्नः = सौन्दर्यरचनाप्रयासः, वितथः = विफलः, अभविष्यत ॥ १४ ॥

कोशः—'द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः' इति मेदिनी । 'प्रजाः स्यात्संततौ जने' इत्यमरः ॥ १४ ॥

समासादि—स्पृहणीया शोभा यस्य स तं स्पृहणीयशोभम् ( ब० व्री० ) । रूपस्य विधानमिति रूपविधानं तस्य यत्न इति रूपविधानयत्नः ( त० पु० ) ॥ १४ ॥

व्याकरणम्—स्पृहणीय = स्पृह + अनीयर् । अयोजयिष्यत् = अ + युज् + णिच् + लृङ् । अभविष्यत् = अ + भू + लृङ् ॥ १४ ॥

वाच्यपरिवर्तनम्—'प्रजापतिना' स्पृहणीयशोभम् , इदं, द्वन्द्वं, चेत् , परस्परेण, न, अयोजयिष्यत, 'तर्हि' अस्मिन् , द्वये, प्रजानां, पत्युः, रूपविधानयत्नेन, वितथेन, अभविष्यत ॥१४॥

तात्पर्यार्थः—प्रजापतिः सर्वातिशयसौन्दर्यसम्पन्नमिदं मिथुनं यदि परस्परेण नायोजयिष्यत्तर्हि प्रजापतेरस्मिन् द्वन्द्वे सौन्दर्यनिर्माणप्रयासो विफलोऽभविष्यत् ॥ १४ ॥

भाषाऽर्थः—( ब्रह्मा ) अत्यन्त शोभायमान इस जोड़े को यदि परस्पर न मिलाता, तो इन दोनों में ब्रह्मा का रूप बनाने का यत्न विफल हो जाता ॥ १४ ॥

अथ मनो जन्मान्तरसंगतिज्ञं भवत्यत एव रतिरूपेणोत्पन्नेन्दुमती स्वानुरूपं पतिं कामरू-

पमजं प्राप्तेत्याह—

**रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथा हि बाला ।**
**गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसङ्गतिज्ञम् ॥ १५ ॥**

सञ्जीविनी—रतीति । रतिस्मरौ यौ नित्यसहचरावित्यभिप्रायः । नूनं तावेवेयं चायं चेमौ दंपती अभूताम् , एतद्रूपेणोत्पन्नौ । कुतः ? तथा हि इयं बाला राज्ञां सहस्रेषु राजसहस्रमध्ये, सत्यपि व्यत्यासकारण इति भावः। आत्मप्रतिरूपं स्वतुल्यमेव, "तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः" इति दण्डी । गता प्राप्ता । तदपि कथं जातमत आह--हि यस्मान्मनो जन्मान्तरसङ्गतिज्ञं भवति, तदेवेदमिति प्रत्यभिज्ञाऽभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीत्युक्तम् । जन्मान्तरसाहचर्यमेवात्र प्रवर्तकमिति भावः ॥ १५ ॥

अन्वयः—इमौ, नूनं, रतिस्मरौ, अभूताम् , तथाहि, इयं, बाला, राज्ञां, सहस्रेषु, आत्मप्रतिरूपम् , एव, गता, हि, मनः, जन्मान्तरसंगतिज्ञं, 'भवति' ॥ १५ ॥

सुधा—इमौ = दम्पती, इन्दुमत्यजाविति यावत् । नूनं = निश्चयेन, रतिस्मरौ = स्मरस्त्रीमन्मथौ, अभूताम् = बभूवतुः, एतद्रूपेणोत्पन्नाविति यावत् । तथा हि = यतः, इयम् = एषा, बाला = कुमारी, इन्दुमतीति यावत् राज्ञां = नृपाणां, सहस्रेषु = सहस्रसंख्याविशिष्टेषु, अनेकनृपमध्येष्विति यावत् ।आत्मप्रतिरूपं = स्वसमानम्, एव, गता = प्राप्ता, हि = यस्मात्, मनः = मानसं, जन्मान्तरसंगतिज्ञं = पूर्वजन्मसंयोगज्ञं, भवतीति शेषः ॥ १५ ॥

कोशः—'रतिः स्मरस्त्रियां रागे' इति,'नूनं तर्के निश्चिते च' इति चानेकार्थसंग्रहः । 'स्वान्तं हृन्मानसं मनः, इत्यमरः ॥ १५ ॥

समासादि—आत्मनः प्रतिरूपमित्यात्मप्रतिरूपम् ( त० पु० ) । अन्यज्जन्म जन्मान्तरम् , तस्य सङ्गतिस्तं जानातीति तज्जन्मान्तरसङ्गतिज्ञम् ( त० पु० ) ॥ १५ ॥

व्याकरणम्—अभूताम् = अ + भू + लुङ् । सहस्रेषु = स + हस् + रः । सङ्गतिज्ञं = सङ्गति + ज्ञा + कः ॥ १५ ॥

वाच्यपरिवर्तनम्—आभ्यां, नूनं, रतिस्मराभ्याम् , अभावि, तथा हि, अनया, बालया, राज्ञां, सहस्रेषु, आत्मप्रतिरूपः, एव, गतः, हि, मनसा, जन्मान्तरसङ्गतिज्ञेन, 'भूयते' ॥ १५॥

तात्पर्यार्थः—इमौ दम्पती नूनं रतिकामदेवरूपेणोत्पन्नौ, तथाहि--इयमिन्दुमती राज्ञां सहस्रेषु स्वानुरूपं स्वामिनमजं प्राप्ता यतश्चित्तं पूर्वजन्मसंयोगं जानाति ॥ १५ ॥

भाषाऽर्थः—यह दोनों ( इन्दुमती और अज ) निश्चय ही कामदेव और रति ( रूप ) हैं, इसी से इस बाला ( इन्दुमती ) ने हजारों राजाओं में अपने सदृश इस ( अज ) को पाया, क्योंकि मन पूर्वजन्म की संगति को जानता है ॥ १५ ॥

अथेत्थं पौराङ्गनानामालापं शृण्वन्नजः कन्याप्रदगृहं प्रापेत्याह—

**इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन्कथाः श्रोत्रसुखाः कुमारः ।**
**उद्भासितं मङ्गलसंविधाभिः सम्बन्धिनः सद्म समाससाद ॥ १६ ॥**

सञ्जीविनी—इतीति । इति 'स्थाने वृता' इत्याद्युक्तप्रकारेण पौरवधूमुखेभ्य उद्गता उत्पन्नाः श्रोत्रयोः सुखा मधुराः सुखशब्दो विशेष्यनिघ्नः, 'पापं पुण्यं सुखादि च' इत्यमरः । कथा गिरः शृण्वन्कुमारोऽजो मङ्गलसंविधाभिर्मङ्गलरचनाभिरुद्भासितं शोभितं सम्बन्धिनः कन्यादायिनः सद्म गृहे समाससाद प्राप ॥ १६ ॥

अन्वयः—इति, पौरवधूमुखेभ्यः, उद्गताः, श्रोत्रसुखाः, कथाः, शृण्वन् , 'सन्' कुमारः, मङ्गलसंविधाभिः, उद्भासितं, सम्बन्धिनः, सद्म, समाससाद ॥ १६ ॥

सुधा—इति = एवम् , उक्तप्रकारेणेति यावत् । पौरवधूमुखेभ्यः = नागरिकस्त्रीवक्त्रेभ्यः, उद्गताः = उत्पन्नाः, श्रोत्रसुखाः = कर्णसुखकराः, कर्णमधुरा इति यावत् । कथाः = गिरः,

श्रृण्वन् = आकर्णयन्, सन्निति शेषः । कुमारः = युवराजः, अज इति यावत् । मङ्गसंविधाभिः = शुभरचनाभिः, मङ्गलसामग्रीभिरिति यावत् । उद्भासितं = दीप्तिमत्, शोभितमित्यर्थः । सम्बन्धिनः = कन्यादातुः, भोजस्येति यावत् । सद्म = निकेतनं, गृहमिति यावत् । समाससाद = प्राप ॥ १६ ॥

कोशः—'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इति, 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इति चामरः ॥ १६ ॥

समासादि—पुरे भवाः पौराः पौराश्च ता वध्व इति पौरवध्वः (क०धा०), तासां मुखानीति पौरवधूमुखानि, तेभ्यः पौरवधूमुखेभ्यः ( त० पु० ) । सुखयन्तीति सुखाः, श्रोत्रयोः सुखा इति श्रोत्रसुखाः ( त० पु० ) । सम्यग् विधानं संविधा, मङ्गलस्य संविधा इति मङ्गलसंविधास्ताभिर्मङ्गलसंविधाभिः ( त० पु० ) ॥ १६ ॥

व्याकरणम्—उद्गताः = उद् + गम् + क्तः + टाप । पौर = पुर + अण् । श्रृण्वन् = श्रु + शतृ + 'श्रुवः श्र च' इत्यनेन श्नुः श्नुश्च प्रत्ययः । उद्भासितम् = उद् + भास् + क्तः + इट् । समाससाद = सम् + आ + सद् + लिट् ॥ १६ ॥

वाच्यपरिवर्तनम्—इति, पौरवधूमुखेभ्यः, उद्गताः, श्रोत्रसुखाः, कथाः, श्रृण्वता, 'सता' कुमारेण, मङ्गलसंविधाभिः, उद्भासितं, सम्बन्धिनः, सद्म, समासेदे ॥ १६ ॥

तात्पर्यार्थः—एवं नागरिकवधूमुखेभ्यरुत्पन्नाः कर्णमधुरा गिरः श्रृण्वन् कुमारोऽजः मङ्गलरचनाभिः शोभितं भोजस्य गृहं प्राप ॥ १६ ॥

भाषाऽर्थः—इस प्रकार पुरवासिनी स्त्रियों के मुख से निकली हुई कानों को सुख देने वाली कथा को सुनता हुआ अज शुभ सामग्रियों से ( सजाने के कारण ) शोभायमान भोज के घर में प्राप्त हुआ ॥ १६ ॥

अथाजो हस्तिन्या अवतीर्य भोजप्रदर्शितञ्चत्वरं विवेशेत्याह—

ततोऽवतीर्याऽऽशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥

सञ्जीविनी—तत इति । ततोऽनन्तरं करेणुकाया हस्तिन्याः सकाशादाशु शीघ्रमवतीर्य कामरूपेश्वरे दत्तो हस्तो येन सोऽजः अथोऽनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितमन्तश्चतुष्कं चत्वरं नारीणां मनांसीव विवेश ॥ १७ ॥

अन्वयः—ततः, सः, कामरूपेश्वरदत्तहस्तः, 'सन्' करेणुकायाः, आशु, अवतीर्य, अथो, वैदर्भनिर्दिष्टम्, अन्तः, चतुष्कं, नारीमनांसि, इव, विवेश ॥ १७ ॥

सुधा—ततः = तदनन्तरं, भोजगृहगमनानन्तरमिति यावत् । सः = अजः, कामरूपेश्वरदत्तहस्तः = कामरूपेशप्रदत्तकरः, कामरूपपतिपरिगृहीतहस्त इति यावत् । सन्निति शेषः । करेणुकायाः = हस्तिन्याः सकाशात् । आशु = तूर्णं, शीघ्रमिति यावत् । अवतीर्य = अधस्तार्य, अथो = अनन्तरं, वैदर्भनिर्दिष्टं = भोजप्रदर्शितम्, अन्तः, चतुष्कं = चत्वरम्, अवरोधाङ्गणमित्यर्थः । नारीमनांसि = स्त्रीमानसानि, इव, विवेश = प्रविष्टवान् ॥ १७ ॥

कोशः—'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी । 'मङ्गलानन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः ॥ १७ ॥

समासादि—कामरूपस्येश्वर इति कामरूपेश्वरः ( त० पु० ), तस्मिन् दत्तो हस्तो येन सः कामरूपेश्वरदत्तहस्तः, अथवा कामरूपेश्वरस्य दत्तः ( परिगृहीतः ) हस्तो येन सः कामरूपेश्वरदत्तहस्तः ( ब० व्री० ) । वैदर्भेण निर्दिष्ट इति वैदर्भनिर्दिष्टस्तं वैदर्भनिर्दिष्टम् ( त० पु० ) । नारीणां मनांसीति नारीमनांसि ( त० पु० ) । चतुर्भिः ( स्तम्भैः ) कायतीति चतुष्कस्तं चतुष्कम् ॥ १७ ॥

व्याकरणम्--अवतीर्य = अव + तॄ ( प्लवनतरणयोः ), ल्यप् । विवेश = विश् = लिट् । चतुष्कं = चतुः + कै ( शब्दे ), कः ॥ १७ ॥

वाच्यपरिवर्तनम्--ततः, तेन, कामरूपेश्वरदत्तहस्तेन, 'सता' करेणुकायाः, आशु, अवतीर्य, अथो, वैदर्भनिर्दिष्टम्, अन्तः, चतुष्कं, नारीमनांसि, इव, विविशे ॥ १७ ॥

तात्पर्यार्थः--तदनन्तरमजः कामरूपदेशाधिपतेः करमवलम्ब्य हस्तिन्याः सकाशात् शीघ्रमवतीर्य अनन्तरं वैदर्भप्रदर्शितमन्तःपुरं स्त्रीणां मनांसीव विवेश ॥ १७ ॥

भाषाऽर्थः--उसके बाद वह ( अज ) कामरूप देश के राजा का हाथ पकड़ हथिनी से जल्दी उतर कर विदर्भराजा ( भोज ) से दिखाये अन्तःपुर में मानो स्त्रियों के मन में प्रवेश किया ॥ १७ ॥

अथ सिंहासनस्थोऽजो भोजेन दत्तं वस्त्रद्वयं गृहीतवानित्याह--

**महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम् ।**
**भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः ॥ १८ ॥**

सञ्जीविनी—महार्हेति । महार्हसिंहासने संस्थितोऽसावजः भोजेनोपनीतं रत्नैः सहितं सरत्नं मधुपर्कमिश्रमर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोर्युग्मं च वनिताकटाक्षैरन्यस्त्रीणामपाङ्गदर्शनैः सार्धं जग्राह गृहीतवान् ॥ १८ ॥

अन्वयः--महार्हसिंहासनसंस्थितः, असौ, भोजोपनीतं, सरत्नं, मधुपर्कमिश्रम्, अर्घ्य, दुकूलयुग्मं, च, वनिताकटाक्षैः, सार्द्धं, जग्राह ॥ १८ ॥

सुधा—महार्हसिंहासनसंस्थितः = बहुमूल्यसिंहासनाधिष्ठितः = असौ = एषः, अज इति यावत् । भोजोपनीतं = भोजभूपाऽऽनीतं, सरत्नं = समणि, मधुपर्कमिश्रं = (१)मधुपर्कमिलितम्, अर्घ्यं = पूजासंपादनद्रव्यं, दुकूलयुग्मं = क्षौममिथुनं, च, वनिताकटाक्षैः = अङ्गनाऽपाङ्गदर्शनैः, स्त्रीणां तिर्यगवलोकनैरिति यावत् । सार्धं = साकं, जग्राह = स्वीकृतवान् ॥ १८ ॥

कोशः—'दुकूलं सूक्ष्मवाससि । क्षौमवस्त्रेऽथ' इत्यनेकार्थसंग्रहः । 'वनिताजातरागस्त्री स्त्रियोस्त्रिषु च याचिते' इति मेदिनी । 'कटाक्षोऽपाङ्गदर्शने' इत्यमरः ॥ १८ ॥

समासादि—महार्हं च तत् सिंहासनमिति महार्हसिंहासनं ( क० धा० ), तत्र संस्थित इति महार्हसिंहासनसंस्थितः (त० पु०) । रत्नैः सहितमिति सरत्नम् । अर्घार्थमिदम् अर्घ्यम् । मधुना पर्को ( योगो ) यत्रेति मधुपर्कस्तेन मिश्रस्तं मधुपर्कमिश्रम् । भोजेनोपनीतमिति भोजोपनीतम् ( त० पु० ) । दुकूलस्य युग्ममिति दुकूलयुग्मम् ( त० पु० ) । वनितानां कटाक्षा इति वनिताकटाक्षास्तैर्वनिताकटाक्षैः ( त० पु० ) ॥ १८ ॥

व्याकरणम्—अर्घ्यम् = अर्घ + 'पादार्घाभ्यां च' इति यत् । मधुपर्क = मधु + पृच् + घञ् । उपनीतम् = उप + णीञ् ( प्रापणे-ञित् ), क्तः । जग्राह = ग्रह + लिट् ॥ १८ ॥

वाच्यपरिवर्तनम्—महार्हसिंहासनसंस्थितेन, अनेन, भोजोपनीतं, सरत्नं, मधुपर्कमिश्रम्, अर्घ्यं, दुकूलयुग्मं, च, वनिताकटाक्षैः, सार्द्धं, जगृहे ॥ १८ ॥

तात्पर्यार्थः—बहुमूल्यसिंहासनस्थः सोऽजः भोजभूपेन समानीतं सरत्नं मधुपर्कसहितं

---

(१) मधुपर्कपदार्थश्च—

"दधि सर्पिर्जलं क्षौद्रसिते चैतैश्च पञ्चभिः ।
प्रोच्यते मधुपर्कस्तु" इति ॥

आपस्तम्बस्तु—

सर्पिरेकगुणं प्रोक्तं शोधितं द्विगुणं मधु ।
मधुपर्कविधौ प्रोक्तं सर्पिषा च समं दधि ॥ इत्याह ॥

पूजासाधनद्रव्यं वस्त्रयुग्मं च स्त्रीणामपाङ्गदर्शनैः साकं स्वीकृतवान् ॥ १८ ॥

भाषाऽर्थः—अनमोल सिंहासन पर बैठे हुये उस ( अज ) ने, भोज से लाये गये रत्न ( और ) मधुपर्क सहित पूजन द्रव्यों और दो वस्त्रों को, स्त्रियों के कटाक्षों के सहित ग्रहण किया ॥ १८ ॥

अथ सेवका दुकूलवस्त्रधारिणमजं वधूसमीपमानीतवन्त इत्याह—

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ १९ ॥

सञ्जीविनी—दुकूलेति । दुकूलवासाः सोऽजः विनीतैर्नम्रैरवरोधरक्षैरन्तःपुराधिकृतैर्वधूसमीपं निन्ये । तत्र दृष्टान्तः—स्फुटफेनराजिरुदन्वान्समुद्रो नवैर्नूतनैश्चन्द्रपादैश्चन्द्रकिरणैर्वेलायाः सकाशं समीपमिव । पूर्णदृष्टान्तोऽयम् ॥ १९ ॥

अन्वयः—दुकूलवासाः, सः, विनीतैः, अवरोधरक्षैः, वधूसमीपं, स्फुटफेनराजिः, उदन्वान्, नवैः, चन्द्रपादैः, वेलासकाशम् , इव, निन्ये ॥ १९ ॥

सुधा—दुकूलवासाः = क्षौमवस्त्रयुक्तः, दुकूलवस्त्रधारीति यावत् । सः = वरः, अज इति यावत् । विनीतैः = नम्रैः, अवरोधरक्षैः = अन्तःपुरपालकैः, सेवकैरित्यर्थः । वधूसमीपम् = इन्दुमतीनिकटं, स्फुटफेनराजिः = प्रकाशितफेनपङ्क्तिः, उदन्वान् = सागरः, नवैः = नूतनैः, चन्द्रपादैः = इन्दुकरणैः, वेलासकाशं = तटसमीपम्, इव = यथा, निन्ये = नीयते स्म ॥ १९ ॥

कोशः—'अवरोधस्तु नृपौकसि । शुद्धान्ते च तिरोधाने गर्तादौ रोधनेऽपि च' इत्यनेकार्थसंग्रहः । 'वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने' इति, 'पादा बुध्ने तुरीयांशे शैले प्रत्यन्तपर्वते । चरणे च मयूखे च' इति च मेदिनी ॥१९॥

समासादि—दुकूलं वासो यस्य स दुकूलवासाः ( ब० व्री० ) । वध्वाः समीपमिति वधूसमीपम् ( त० पु० ) । अवरोधं रक्षन्तीत्यवरोधरक्षास्तैरवरोधरक्षैः । वेलायाः सकाशमिति वेलासकाशम् ( त० पु० ) । फेनस्य राजिरिति फेनराजिः ( त० पु० ), स्फुटा फेनराजिर्यस्य सः स्फुटफेनराजिः ( ब० व्री० ) । चन्द्रस्य पादा इति चन्द्रपादास्तैश्चन्द्रपादैः (त०पु०) ॥१९॥

व्याकरणम्—निन्ये = णीञ् ( प्रापणे-ञित् ), कर्मणि लिट् । विनीतैः = वि + णीञ् + क्तः । उदन्वान्—अत्र 'उदन्वानुदधौ च' इति मत्वन्तो निपातितः ॥ १९ ॥

वाच्यपरिवर्तनम्—दुकूलवाससं, तं विनीताः, अवरोधरक्षाः, वधूसमीपं, स्फुटफेनराजिम् , उदन्वन्तं, नवाः, चन्द्रपादाः, वेलासकाशम् , इव, निन्युः ॥ १९ ॥

तात्पर्यार्थः—यथा स्फुटफेनपङ्क्तिः सागरो नूतनाभिरिन्दुप्रभाभिस्तटसमीपं नीयते, तथैव दुकूलवस्त्रधारी सोऽजः नम्रैः सेवकैरिन्दुमतीनिकटं निन्ये ॥ १९ ॥

भाषाऽर्थः—रेशमी कपड़े (पीताम्बर) पहने हुये अज को नम्र सेवकोंने वधू (इन्दुमती) के पास, जैसे शोभायमान फेन की पंक्तिवाले समुद्र को नवीन चन्द्रमा के किरण तीर के निकट पहुंचाता है, वैसे पहुंचाया ॥ १९ ॥

अथ भोजपुरोहितो वधूवरौ संयोजयामासेत्याह—

तत्रार्चितो भोजपतेः पुरोधा हुत्वाऽग्निमाज्यादिभिरग्निकल्पः ।
तमेव चाधाय विवाहसाक्ष्ये वधूवरौ सङ्गमयाञ्चकार ॥ २० ॥

सञ्जीविनी—तत्रेति । तत्र सद्मन्यर्चितः पूजितोऽग्नितुल्यो भोजपतेर्भोजदेशाधीश्वरस्य पुरोधाः पुरोहितः, 'पुरोधास्तु पुरोहितः' इत्यमरः । आज्यादिभिर्द्रव्यैरग्निं हुत्वा तमेव चाग्निं विवाहसाक्ष्ये आधाय साक्षिणं च कृत्वेत्यर्थः । वधूवरौ सङ्गमयाञ्चकार योजयामास ॥ २० ॥

अन्वयः—तत्र, अर्चितः, अग्निकल्पः, भोजपतेः, पुरोधाः, आज्यादिभिः, अग्निं, हुत्वा,

तम्, एव, विवाहसाक्ष्ये, आधाय, च, वधूवरौ, सङ्गमयाञ्चकार ॥ २० ॥

सुधा—तत्र = कन्याप्रदगृहे, अर्चितः = पूजितः, अग्निकल्पः = अग्नितुल्यः, भोजपतेः = भोजदेशाधिपस्य, पुरोधाः = पुरोहितः, आज्यादिभिः = घृतादिभिः, अग्निं = वह्निं, हुत्वा = होमं कृत्वा, तं = पूर्वोक्तम्, एव, अग्निमेवेति यावत् । विवाहसाक्ष्ये = उद्वाहसाक्षिकर्मणि, आधाय = गृहीत्वा, साक्षिणं कृत्वेत्यर्थः । वधूवरौ = कुमारीकुमारौ, इन्दुमत्यजाविति यावत् । सङ्गमयाञ्चकार = संयोजयामास ॥ २० ॥

कोशः—'पुरोधास्तु पुरोहितः' इति, 'घृतमाज्यं हविः सर्पिः' इति, 'विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इति चामरः ॥ २० ॥

समासादि—भोजस्य पतिरिति भोजपतिस्तस्य भोजपतेः ( त० पु० ) । साक्षिणो भावः कर्म वा साक्ष्यं, विवाहस्य साक्ष्यमिति विवाहसाक्ष्यं तस्मिन् विवाहसाक्ष्ये ( त० पु० ) ॥२०॥

व्याकरणम्-अर्चितः = अर्च (पूजायाम्), क्तः + इट् । हुत्वा = हु (दानादानयोः), क्त्वा । आधाय = आ + धा + ल्यप् । साक्ष्ये = सह + अक्षि + ष्यञ् । सङ्गमयाञ्चकार = सम् + गम् + णिच् + आम् + कृ + लिट् ॥ २० ॥

वाच्यपरिवर्तनम्—तत्र, अर्चितेन, अग्निकल्पेन, भोजपतेः, पुरोधसा, आज्यादिभिः, अग्निं, हुत्वा, तम्, एव, विवाहसाक्ष्ये, आधाय, च, वधूवरौ, सङ्गमयाञ्चक्राते ॥ २० ॥

तात्पर्यार्थः—कन्याप्रदसद्मनि पूजितोऽग्नितुल्यो भोजनृपस्य पुरोहितो घृतादिभिरग्निं हुत्वा तमेवाग्निं विवाहकर्मणि साक्षिणं च कृत्वा वधूवरौ संयोजयामास ॥ २० ॥

भाषाऽर्थः—वहाँ पूजनीय अग्नि के समान ( तेजस्वी ) भोज राजा के पुरोहित ने, घृत आदि से अग्नि को आहुति देकर और उस ( अग्नि ) को ही विवाह की साक्षी में करके वधू और वर को मिलाया ॥ २० ॥

अथ सोऽजः स्वहस्तेनेन्दुमत्या हस्तं परिगृह्याशोभतेत्याह—

**हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।**
**अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ २१ ॥**

सञ्जीविनी—हस्तेनेति । स राजसूनुर्हस्तेन स्वकीयेन वध्वा हस्तं परिगृह्य अनन्तरायाः संनिहिताया अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूत आम्र इव सुतरां चकासे ॥ २१ ॥

अन्वयः—सः, राजसूनुः, हस्तेन, वध्वाः, हस्तं, परिगृह्य, अनन्तराशोकलताप्रवालं, प्रतिपल्लवेन, प्राप्य, चूतः, इव, सुतरां, चकाशे ॥ २१ ॥

सुधा—सः = पूर्वोक्तः, राजसूनुः = नृपसुतः, अज इत्यर्थः । हस्तेन = पाणिना, स्वकीयहस्तेनेति यावत् । वध्वाः = इन्दुमत्याः, हस्तं = करं, परिगृह्य = गृहीत्वा, अनन्तराशोकलताप्रवालं = सन्निकटवञ्जुलवल्लीपल्लवं, प्रतिपल्लवेन = स्वकीयप्रवालेन, प्राप्य = लब्ध्वा, चूतः = आम्रः, इव = यथा, सुतराम् = अत्यन्तं, चकासे = दिदीपे ॥ २१ ॥

कोशः—'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः । 'अशोकस्त्रिषु निःशोके पुंसि कङ्केलिपादपे । स्त्रियां तु कटुरोहिण्यां पारदे स्यान्नपुंसकम्' इति मेदिनी । 'आम्रश्चूतो रसालोऽसौ' इति, 'पल्लवोऽस्त्री किसलयम्' इति चामरः ॥ २१ ॥

समासादि—राज्ञः सूनुरिति राजसूनुः ( त० पु० ) । अशोकस्य लतेत्यशोकलता, अनन्तरा चासावशोकलतेत्यनन्तराशोकलता ( क० धा० ), तस्याः प्रवाल इति तमनन्तराशोकलताप्रवालम् ( त० पु० ) ॥ २१ ॥

व्याकरणम्-परिगृह्य = परि + ग्रह (उपादाने), ल्यप् । चकासे = कास् + लिट् । प्राप्य = प्र + आप्लृ + ल्यप् ॥ २१ ॥

वाच्यपरिवर्तनम्—तेन, राजसूनुना, हस्तेन, वध्वाः, हस्तं, परिगृह्य, अनन्तराशोकलताप्रवालं, प्रतिपल्लवेन, प्राप्य, चूतेन, इव, सुतरां, चकासे ॥ २१ ॥

तात्पर्यार्थः—यथा सन्निहितवञ्जुललतापल्लवं स्वकीयेन पल्लवेनाऽऽदाय आम्रः शोभते, तथैव सोऽजः स्वकीयेन हस्तेनेन्दुमत्याः हस्तं परिगृह्य अशोभत ॥ २१ ॥

भाषाऽर्थः—वह राज पुत्र (अज) अपने हाथ से वधू (इन्दुमती) का हाथ पकड़कर, जैसे निकट की अशोकलता के पल्लव को शाखाओं से धारण किये आम्रवृक्ष शोभित होता है, वैसे अत्यन्त शोभित हुआ ॥ २१ ॥

अथ तदा वधूवरयोरात्मवृत्तिर्मन्मथेन समं विभक्तेवाऽऽसीदित्याह—

**आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।**
**तस्मिन्द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ॥ २२ ॥**

सञ्जीविनी—आसीदिति । वरः कण्टकितः पुलकितः प्रकोष्ठो यस्य स आसीत् ,'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । कुमारी स्विन्नाङ्गुलिः संववृते बभूव । अत्रोत्प्रेक्षते—तस्मिन्द्वये मिथुने तत्क्षणमात्मवृत्तिः सात्त्विकोदयरूपा वृत्तिर्मनोभवेन कामेन समं विभक्तेव पृथक्कृतेव प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्पाणिस्पर्शकृतत्वमुत्प्रेक्षते । अत्र वात्स्यायनः—"कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च भवति पुरुषस्तु रोमाञ्चितो भवति एभिरनयोर्भावं परीक्षेत" इति । स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणम्, न तु प्रतिनियमो विवक्षितः, 'एभिः'इति बहुवचनसामर्थ्यात् । एवं सति कुमारसंभवे—"रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" इति व्युत्क्रमवचनं न दोषायेति । "वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य" इत्यपरार्धस्य पाठान्तरे व्याख्यानान्तरम्—पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा तयोर्वधूवरयोर्मनोभवस्य वृत्तिः स्थितिः समं विभक्तेव, समीकृतेवेत्यर्थः ॥ २२ ॥

अन्वयः—वरः, कण्टकितप्रकोष्ठः, आसीत, कुमारी, स्विन्नाङ्गुलिः, संववृते, तत्क्षणं, मनोभवेन, तस्मिन्, द्वये, आत्मवृत्तिः, समं, विभक्ता, इव ॥ २२ ॥

सुधा—वरः = उपयन्ता, अज इति यावत् । कण्टकितप्रकोष्ठः = रोमाञ्चयुक्तकेयूरबन्धस्थानः, आसीत् = अभवत, कुमारी = कन्या, इन्दुमतीति यावत् । स्विन्नाङ्गुलिः = स्वेदयुक्तकरशाखाः, संववृते = बभूव, तत्क्षणं = सद्यः, मनोभवेन = कामदेवेन, तस्मिन् = पूर्वोक्ते, द्वये = द्वन्द्वे, आत्मवृत्तिः = सात्विकादिवृत्तिः, समं = तुल्यं, विभक्ता = पृथक्कृता, इव । सात्विका यथा—"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विकाः स्मृताः ॥" इति ॥ २२ ॥

कोशः—'कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । वैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः' इति मेदिनी । 'प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः' इति कात्यः । 'प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात्' इति मेदिनी च ॥ २२ ॥

समासादि—कण्टको ( रोमाञ्चो ) जातोऽस्येति कण्टकितः, कण्टकितः प्रकोष्ठो यस्य सः कण्टकितप्रकोष्ठः ( ब० व्री० ) । स्विन्नाः अङ्गुलयो यस्याः सा स्विन्नाङ्गुलिः ( ब०व्री ) । आत्मनो वृत्तिरित्यात्मवृत्तिः ( त० पु० ) ॥ २२ ॥

व्याकरणम्—कण्टकित = कण्टक + इतच् । संववृते = सम् + वृत् + लिट् । विभक्ता = वि + भज + क्तः + टाप् ॥ २२ ॥

वाच्यपरिवर्तनम्—वरेण, कण्टकितप्रकोष्ठेन, अभूयत, कुमार्या, स्विन्नाङ्गुल्या, संववृते, तत्क्षणं, मनोभवः, तस्मिन्, द्वये, आत्मवृत्तिं, समं, विभक्तवान्, इव ॥ २२ ॥

तात्पर्यार्थः—पाणि गृहीते सत्यजः पुलकितप्रकोष्ठ आसीत्, इन्दुमती स्विन्नाङ्गुलिर्बभूव,

तस्मिन्क्षणे कामदेवेन तस्मिन् मिथुने सात्त्विकादिवृत्तिः तुल्यं पृथक्कृतेव ॥ २२ ॥

भाषाऽर्थः—वर ( अज ) रोमांचयुक्त प्रकोष्ठ वाला हुआ, कुमारी ( इन्दुमती ) स्विन्न ( पसीजी हुई ) अंगुली वाली हुई, उस समय कामदेवने मानो अपनी ( सात्त्विक आदि ) वृत्ति को उन दोनों में बराबर बांट दिया (केहुनी के अधोभाग को 'प्रकोष्ठ' कहते हैं') ॥२२॥

क्वचित् "वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य" इत्यपरार्धस्य पाठान्तरं दृश्यते तत्र व्याख्यानम्—

अन्वयः—पाणिसमागमेन, तयोः, मनोभवस्य, वृत्तिः, समं, विभक्ता, इव ॥ २२ ॥

सुधा—पाणिसमागमेन, हस्तसंस्पर्शेन, तयोः = पूर्वोक्तयोः, वधूवरयोरिति यावत् । मनोभवस्य = कामस्य, वृत्तिः = स्थितिः, समं = तुल्यं, विभक्ता, = समीकृता, इव ॥ २२ ॥

समासादि—पाण्योः समागम इति पाणिसमागमस्तेन पाणिसमागमेन (त०पु०)॥ २२ ॥

वाच्यपरिवर्तनम्—पाणिसमागमः, तयोः, मनोभवस्य, वृत्तिं, समं , विभक्तवान् ॥ २२

तात्पर्यार्थः—( पूर्वार्द्धं पूर्ववत् ) पाणिसंस्पर्शः वधूवरयोः कामदेवस्य स्थितिः समीकृतेव ॥ २२ ॥

भाषाऽर्थः—हाथों के संस्पर्श ने उन दोनों ( वधू और वर ) को कामदेव की स्थिति तुल्य कर दिया ॥ २२ ॥

अथ वधूवरयोर्नयनानि सङ्कुचितानि बभूवुरित्याह—

**तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।**
**ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ २३ ॥**

सञ्जीविनी—तयोरिति । अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्तितानि क्रिययोर्निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या निवर्तितानि प्रत्याकृष्टान्यन्योन्यस्मिंल्लोलानि सतृष्णानि, 'लोलश्चलसतृष्णयोः' इत्यमरः । तयोर्दम्पत्योर्विलोचनानि दृष्टयो मनोज्ञां रम्यां ह्रिया निमित्तेन यन्त्रणां संकोचमानशिरे प्रापुः ॥ ॥ २३ ॥

अन्वयः—अपाङ्गप्रतिसारितानि, क्रियासमापत्तिनिवर्तितानि, अन्योन्यलोलानि, तयोः, विलोचनानि, मनोज्ञां, ह्रीयन्त्रणाम् , आनशिरे ॥ २३ ॥

सुधा—अपाङ्गप्रतिसारितानि = नयनान्तप्रवर्तितानि, क्रियासमापत्तिनिवर्तितानि = निरीक्षणादिक्रियासङ्गतिप्रत्याकृष्टानि, अन्योन्यलोलानि = परस्परसतृष्णानि, तयोः = दम्पत्योः, वधूवरयोरिति यावत् । विलोचनानि = नयनानि, मनोज्ञां = मनोरमां, ह्रीयन्त्रणां = लज्जानिमित्तव्यथाम् , आनशिरे = प्रापुः ॥ २३ ॥

कोशः—'अपाङ्गो नेत्रान्तपुण्ड्रयोः' इत्यनेकार्थसंग्रहः । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः । 'लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः' इत्यनेकार्थसंग्रहः ॥ २३ ॥

समासादि—अपाङ्गेषु प्रतिसारितानीत्यपाङ्गप्रतिसारितानि (त० पु०) । क्रिययोः (निरीक्षणलक्षणयोः) समापत्तिरिति क्रियासमापत्तिस्तया निवर्तितानीति क्रियासमापत्तिनिवर्तितानि ( त० पु० ) । ह्रिया ( निमित्तेन ) यन्त्रणेति ह्रीयन्त्रणा तां ह्रीयन्त्रणाम् ( त० पु० ) । अन्योन्यस्मिन् लोलानीत्यन्योन्यलोलानि ( त० पु० ) ॥ २३ ॥

व्याकरणम्—प्रतिसारितानि = प्रति + सृ (गतौ), णिच् + क्तः । निवर्तितानि = नि + वृतु + णिच् + क्तः । यन्त्रणा = यत्रि ( सङ्कोचे ), युच् + टाप् । आनशिरे = अश् + लिट् ॥ २३ ॥

वाच्यपरिवर्तनम्—अपाङ्गप्रतिसारितैः, क्रियासमापत्तिनिवर्तितैः, अन्योन्यलोलैः, विलोचनैः, मनोज्ञा, ह्रीयन्त्रणा, आनशिरे ॥ २३ ॥

तात्पर्यार्थः—अपाङ्गपर्यन्तनिवर्तितानि अवलोकनलक्षणयोर्यदृच्छासङ्गत्या प्रत्याकृष्टानि परस्परसतृष्णानि वधूवरयोर्नयनानि रमणीयं लज्जया निमित्तेन सङ्कोचं प्रापुः ॥ २३ ॥

भावार्थः—किनारे तक फैलाई हुई (और) क्रिया ( देखने आदि ) की संगतिसे लौटाई हुई परस्पर तृष्णा वाली उन दोनों ( इंदुमती और अज ) की आंखें लज्जाके कारण संकोच को प्राप्त हुई ॥ २३ ॥

अथाग्नेः प्रदक्षिणाऽवसरे वधूवरमिथुनं शुशुभ इत्याह—

**प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।**
**मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥**

सञ्जीविनी—प्रदक्षिणेति । तन्मिथुनमुदर्चिष उन्नतज्वालस्य कृशानोर्वह्नेः प्रदक्षिणप्रक्रमणात्प्रदक्षिणीकरणात् मेरोरुपान्तेषु समीपेषु वर्तमानमावर्तमानं मेरुं प्रदक्षिणीकुर्वदित्यर्थः। अन्योन्यसंसक्तं परस्परसंसक्तं, मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा चाहस्त्रियामं रात्रिदिवमिव, समाहारे द्वन्द्वैकवद्भावः । चकासे दिदीपे ॥ २४ ॥

अन्वयः—तत्, मिथुनम्, उदर्चिषः, कृशानोः, प्रदक्षिणप्रक्रमणात्, मेरोः, उपान्तेषु, वर्तमानम्, अन्योन्यसंसक्तम्, अहस्त्रियामम्, इव, चकासे ॥ २४ ॥

सुधा—तत् = पूर्वोक्तं, मिथुनं = द्वन्द्वम्, उदर्चिषः = प्रज्ज्वलितस्य, कृशानोः = अग्नेः, प्रदक्षिणप्रक्रमणात् = प्रदक्षिणीकरणात्, मेरोः = मेरुपर्वतस्य, उपान्तेषु = निकटेषु, वर्तमानं = विद्यमानम्, आवर्तमानमिति यावत् । अन्योन्यसंसक्तं = परस्परसङ्गतम्, अहस्त्रियामं = रात्रिन्दिवम्, इव = यथा, चकासे = शुशुभे ॥ २४ ॥

कोशः—'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः' इति, 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इति चामरः ॥ २४ ॥

समासादि—प्रगतो दक्षिणः प्रदक्षिणः, तस्य प्रक्रमणमिति प्रदक्षिणप्रक्रमणं तस्मात् प्रदक्षिणप्रक्रमणात् (त०पु०)। उत् (ऊर्ध्वम्) अर्चिर्यस्य स उदर्चिस्तस्योदर्चिषः (ब० व्री०) । अन्योन्येषु संसक्तमित्यन्योन्यसंसक्तम् ॥२४॥

व्याकरणम्—चकासे = कास् + लिट् । संसक्तं = सम् + षच ( समवाये ), क्तः ॥ २४ ॥

वाच्यपरिवर्तनम्—तेन, मिथुनेन, उदर्चिषः, कृशानोः, प्रदक्षिणप्रक्रमणात्, मेरोः, उपान्तेषु, वर्तमानेन, अन्योन्यसंसक्तेन, अहस्त्रियामेण, इव, चकासे ॥ २४ ॥

तात्पर्यार्थः—यथा मेरुपर्वतस्य निकटे आवर्तमानं परस्परसंगतं रात्रिन्दिवं शोभते, तथाऽग्नेः प्रदक्षिणीकरणात परस्परसङ्गतं वधूवरमिथुनं शुशुभे ॥ २४ ॥

भावार्थः—वे (वधूवर के) जोड़े प्रज्वलित अग्निकी प्रदक्षिणा करने से, मेरुपर्वत के निकट चारो तरफ विद्यमान ( और ) परस्पर मिले हुये दिनरात के समान शोभित हुये ॥ २४ ॥

अथेन्दुमती याजकेन नियुक्ता सती लाजमग्नावजुहोदित्याह—

**नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।**
**चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥ २५ ॥**

सञ्जीविनी—नितम्बेति । नितम्बेन गुर्व्यलघ्वी, 'दुर्धरालघुनोर्गुर्वी' इति शाश्वतः । विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन प्रयुक्ता 'जुहुधि' इति नियुक्ता मत्तचकोरस्येव नेत्रे यस्याः सा लज्जावती सा वधूरग्नौ लाजविसर्गं चकार ॥ २५ ॥

अन्वयः—नितम्बगुर्वी, मत्तचकोरनेत्रा, लज्जावती, सा, वधूः, विधातृप्रतिमेन, तेन, गुरुणा, प्रयुक्ता, 'सती' अग्नौ, लाजविसर्गं, चकार ॥ २५ ॥

सुधा—नितम्बगुर्वी = स्थूलनितम्बा, मत्तचकोरनेत्रा = प्रमत्तचकोरनयना, लज्जावती = त्रपावती, सा = पूर्वोक्ता, वधूः = कुमारी, इन्दुमतीति यावत् । विधातृप्रतिमेन = ब्रह्मस्वरूपेण, तेन = पूर्वोक्तेन, गुरुणा = याजकेन, प्रयुक्ता = नियुक्ता, सतीति शेषः । अग्नौ = वह्नौ, लाजविसर्गं = लाजत्यागं, चकार = कृतवती ॥ २५ ॥

कोशः—'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि' इति मेदिनी । 'लाजास्तु भृष्टधान्ये स्युः' इत्यनेकार्थसंग्रहः ॥ २५ ॥

समासादि—नितम्बेन गुर्वीति नितम्बगुर्वी ( त० पु० ) । प्रतिमीयतेऽनयेति प्रतिमा, विधातुः प्रतिमेव प्रतिमा यस्य स विधातृप्रतिमस्तेन विधातृप्रतिमेन (ब० व्री०) । मत्तश्चासौ चकोर इति मत्तचकोरः (क० धा०),तद्वन्नेत्रे यस्याः सा मत्तचकोरनेत्रा (ब० व्री०) । लज्जाऽस्त्यस्याः सा लज्जावती । लाजस्य विसर्ग इति लाजविसर्गस्तं लाजविसर्गम् (त० पु०) ॥२५॥

व्याकरणम्–गुर्वी = गुरु + 'वोतो गुणवचनात्' इति ङीप् । प्रयुक्ता = प्र + युज + क्तः + टाप् । प्रतिमा = प्रति + मी + 'आतश्चोपसर्गे' इत्यङ् । लज्जावती = लज्जा + मतुप् + वत्वम् + ङीप् ॥ २५ ॥

वाच्यपरिवर्तनम्—नितम्बगुर्व्या, मत्तचकोरनेत्रया, लज्जावत्या, तया, वध्वा, विधातृप्रतिमेन, तेन, गुरुणा, प्रयुक्तया, 'सत्या' अग्नौ, लाजविसर्गः, चक्रे ॥ २५ ॥

तात्पर्यार्थः—स्थूलनितम्बा मत्तचकोरनेत्रा लज्जावती सा कुमारी इन्दुमती ब्रह्मस्वरूपेण तेन याजकेन गुरुणा नियुक्ता सत्यग्नौ लाजत्यागं कृतवती ॥ २५ ॥

भाषाऽर्थः—बड़े नितम्बों ( और ) मतवाले चकोर के समान आंखों वाली लज्जायुक्त उस वधू ( इन्दुमती ) ने, ब्रह्मा के तुल्य उस गुरु से नियुक्त होकर अग्नि में लाज ( लावे ) का त्याग किया ॥ २५ ॥

अथाग्नेर्निर्गतो धूमो मुहूर्तमिन्दुमत्याः कर्णोत्पलतां प्रापेत्याह—

हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥

सञ्जीविनी—हविरिति । हविष आज्यादेः शमीपल्लवानां लाजानां च गन्धोऽस्यास्तीति हविःशमीपल्लवलाजगन्धी । "शमीपल्लवमिश्राल्लाँजानञ्जलिना वपति" इति कात्यायनः । पुण्यो धूमः कृशानोः पावकादुदियायोद्गतः । कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य स तथोक्तः स धूमस्तस्या वध्वा मुहूर्तं कर्णोत्पलतां कर्णाऽऽभरणतां प्रपेदे ॥ २६ ॥

अन्वयः—हविःशमीपल्लवलाजगन्धी, पुण्यः, सः, धूमः, कृशानोः, उदियाय, कपोलसंसर्पिशिखः, 'सन्' तस्याः, मुहूर्तकर्णोत्पलतां, प्रपेदे ॥ २६ ॥

सुधा—हविःशमीपल्लवलाजगन्धी = घृतादिशिवापत्रलाजगन्धयुक्तः, पुण्यः = पवित्रः, सः = पूर्वोक्तः, धूमः, कृशानोः = पावकात्, अग्नेरिति यावत् । उदियाय = उद्गतः, कपोलसंसर्पिशिखः = गण्डस्थलप्रसरणशीलज्वालः, सन्निति शेषः । तस्याः = वध्वाः, मुहूर्तकर्णोत्पलतां = मुहूर्तमात्रश्रोत्रभूषणतां, प्रपेदे = प्राप ॥ २६ ॥

कोशः—'शमी सक्तुफला शिवा' इति, 'गण्डौ कपोलौ' इति चामरः ॥ २६ ॥

समासादि—शम्याः पल्लवा इति शमीपल्लवाः ( त० पु० ), हविपश्च शमीपल्लवाश्च लाजाश्चेति हविःशमीपल्लवलाजाः (द्व०), तेषां गन्धोऽस्यास्तीति हविःशमीपल्लवलाजगन्धी । कपोलयोः संसर्पिणी शिखा यस्य सः कपोलसंसर्पिशिखः ( ब० व्री० ) । कर्णस्योत्पलमिति कर्णोत्पलं, तस्य भावः कर्णोत्पलता, मुहूर्तं कर्णोत्पलतेति तां मुहूर्तकर्णोत्पलताम् ( त० पु० ) ॥ २६ ॥

व्याकरणम्—उदियाय = उत् + इण् (गतौ—णित्),लिट् । उत्पलताम् = उत्पल + तल् + टाप् । प्रपेदे = प्र + पद + लिट् ॥ २६ ॥

वाच्यपरिवर्तनम्—हविःशमीपल्लवलाजगन्धिना, पुण्येन, तेन, धूमेन, कृशानोः, उदीये, कपोलसंसर्पिशिखेन, 'सता' तस्याः, मुहूर्तकर्णोत्पलता, प्रपेदे ॥ २६ ॥

तात्पर्यार्थः—घृतादिहविःशमीपत्रगन्धोत्पन्नः पवित्रो धूमोऽग्नेर्निर्गतवान्, गण्डस्थलप्रस-

रणशीलशिखः सन् तस्या इन्दुमत्या मुहूर्तमात्रं कर्णभूषणतां प्रपेदे ॥ २६ ॥

भाषाऽर्थः—हविष, शमी के पत्ते, और लाज की सुगंधियों से युक्त पवित्र धूएं अग्नि से निकले (और) कपोलों पर शिखा को फैलाते हुये मुहूर्तमात्र उस ( इन्दुमती ) के कानों की नील कमल पन दो प्राप्त हुये ॥ २६ ॥

अथ तस्मादिन्दुमत्याः नेत्रद्वयं वाष्पाकुलं कपोलस्थलमरुणं च बभूवेत्याह—

**तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम् ।**

**वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव ॥ २७ ॥**

सञ्जीविनी—तदिति । तद्वधूमुखमाचारेण प्राप्तादूधूमग्रहणात् अञ्जनस्य क्लेदोऽञ्जनक्लेदः, अञ्जनमिश्रवाष्पोदकमित्यर्थः । तेन समाकुलाक्षम् । प्रम्लानो बीजाङ्कुरो यत्राङ्कुर एव कर्णपूरोऽवतंसो यस्य तत्पाटलगण्डलेखमरुणगण्डस्थलं च बभूव ॥ २७ ॥

अन्वयः—तत्, वधूमुखम्, आचारधूमग्रहणात्, अञ्जनक्लेदसमाकुलाक्षं, प्रम्लानबीजाङ्कुरकर्णपूरं, पाटलगण्डलेखं, बभूव ॥ २७ ॥

सुधा—तत् = पूर्वोक्तं, वधूमुखम् = इन्दुमत्याननम्, आचारधूमग्रहणात् = आचारप्राप्तधूमस्वीकारात्, अञ्जनक्लेदसमाकुलाक्षं = कज्जलमिलितवाष्पजलेन चञ्चलनयनं, प्रम्लानबीजाङ्कुरकर्णपूरं = म्लानयवाङ्कुररूपावतंसं, पाटलगण्डलेखम् = अरुणकपोलस्थलं, बभूव = अभूत् ॥ २७ ॥

कोशः—'कर्णपूरः स्याच्छिरीषे नीलोत्पलवतंसयोः' इत्यनेकार्थसंग्रहः । 'श्वेतरक्तस्तु पाटलः' इत्यमरः ॥ २७ ॥

समासादि—अञ्जनस्य क्लेद इत्यञ्जनक्लेदः ( त० पु० ), तेन समाकुलेऽक्षिणी यस्य तदञ्जनक्लेदसमाकुलाक्षम् ( ब० व्रीं० ) । प्रम्लानो बीजाङ्कुर एव कर्णपूरो यस्य तत् प्रम्लानबीजाङ्कुरकर्णपूरम् ( ब० व्री० ) । वध्वा मुखमिति वधूमुखम् ( त० पु० ) । आचारस्य धूम इत्याचारधूमस्तस्य ग्रहणं तस्मात् आचारधूमग्रहणात् ( त० पु० ) । गण्डस्य लेखेति गण्डलेखा ( त० पु० ), पाटला गण्डलेखा यस्य तत्पाटलगण्डलेखम् ( ब० व्री० ) ॥ २७ ॥

व्याकरणम्—अञ्जनम् = अञ्ज + करणे ल्युट् । प्रम्लान = प्र + म्लै ( हर्षक्षये ) क्तः + आत्वं + तस्य नकारः ॥ २७ ॥

वाच्यपरिवर्तनम्—तेन, वधूमुखेन, आचारधूमग्रहणात्, अञ्जनक्लेदसमाकुलाक्षेण, प्रम्लानबीजाङ्कुरकर्णपूरेण, पाटलगण्डलेखेन, बभूवे ॥ २७ ॥

तात्पर्यार्थः—तद्वधूमुखमाचारप्राप्तधूमस्वीकारादञ्जनमिलितवाष्पोदकेन चञ्चलनेत्रयुक्तं प्रम्लानयवाङ्कुररूपकर्णावतंसम् अरुणकपोलस्थलं बभूव ॥ २७ ॥

भाषाऽर्थः—उस वधू ( इन्दुमती ) का मुख, आचार के धूएं के ग्रहण से कज्जल से मिले हुये आंखों के जल से चंचल नयन वाला ( और ) मुरझाये हुये यवांकुर रूप कर्णफूल (तथा) लाल कपोल स्थल वाला हुआ ॥ २७ ॥

अथ वधूवरौ आर्द्राक्षतारोपणमनुभूतवन्तावित्याह—

**तौ स्नातकैर्बन्धुमता च राज्ञा पुरंध्रिभिश्च क्रमशः प्रयुक्तम् ।**

**कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम् ॥ २८ ॥**

सञ्जीविनी—ताविति । कनकासनस्थौ तौ कन्याकुमारौ स्नातकैर्गृहस्थविशेषैः कृतसमावर्तनैरित्यर्थः ॥ 'स्नातकस्त्वाप्लुतो व्रती' इत्यमरः । बन्धुमता बन्धुपुरःसरेणेत्यर्थः । राज्ञा च पुरंध्रिभिः पतिपुत्रवतीभिर्नारीभिश्च क्रमशः प्रयुक्तं स्नातकादीनां पूर्वपूर्ववैशिष्ट्यात्क्रमेण कृतमार्द्राक्षतानामारोपणमन्वभूतामनुभूतवन्तौ ॥ २८ ॥

अन्वयः—कनकासनस्थौ, तौ, कन्याकुमारौ, स्नातकैः, बन्धुमता, राज्ञा, च, पुरंध्रिभिः, च, क्रमशः, प्रयुक्तम्, आर्द्राक्षतारोपणम्, अन्वभूताम् ॥ २८॥

सुधा—कनकासनस्थौ = सुवर्णपीठारूढौ, तौ = पूर्वोक्तौ, कन्याकुमारौ = वधूवरौ, स्नातकैः = अचिरकृतविवाहैः, गृहस्थविशेषैरिति यावत्। बन्धुमता = बान्धवविशिष्टेन, राज्ञा = नृपेण, च, पुरंध्रिभिः = गृहधारिणीभिः, पतिपुत्रवतीस्त्रीभिरिति यावत्। च, क्रमशः = यथाक्रमं, प्रयुक्तं = कृतम्, आर्द्राक्षतारोपणं = क्लिन्नतण्डुलवपनम्, अन्वभूताम् = अनुभूतवन्तौ ॥ २८ ॥

कोशः—'स्यात्तु कुटुम्बिनी। पुरंध्री' इत्यमरः। 'पुरं नपुंसकं गेहे' इति मेदिनी। 'स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम्' इत्यमरः ॥ २८ ॥

समासादि—बन्धुर्विद्यते यस्य स बन्धुमान् तेन बन्धुमता। पुरं धारयन्तीति पुरंध्रयस्ताभिः पुरंध्रिभिः। कन्या च कुमारश्चेति कन्याकुमारौ ( द्व० )। कनकस्यासनमिति कनकाऽऽसनं, तत्र तिष्ठत इति कनकासनस्थौ ( त० पु० )। आर्द्राश्च तेऽक्षता इत्यार्द्राक्षताः ( क० धा० ), तेषामारोपणमित्यार्द्राक्षतारोपणम् ( त० पु० ) ॥ २८ ॥

व्याकरणम्—बन्धुमता = बन्धु + मतुप्। पुरंध्रिभिः = पुर + धृञ् ( धारणे—ञित् ), स्वार्थे णिच् + 'संज्ञायां भृतॄ' इत्यादिना खच्, 'खचि ह्रस्वः' इत्यनेन ह्रस्वः। अन्वभूताम् = अनु + अ + भू + लङ् ॥ २८ ॥

वाच्यपरिवर्तनम्—कनकासनस्थाभ्यां, ताभ्यां, कन्याकुमाराभ्यां, स्नातकैः, बन्धुमता, राज्ञा, च, पुरंध्रिभिः, च, क्रमशः, प्रयुक्तम्, आर्द्राक्षतारोपणम्, अन्वभावि ॥ २८ ॥

तात्पर्यार्थः—सुवर्णपीठस्थौ वधूवरावचिरकृतविवाहैर्गृहस्थविशेषैर्बन्धुयुक्तेन राज्ञा च पुत्रवतीभिः स्त्रीभिश्च क्रमेण कृतमार्द्राक्षतारोपणमनुभूतवन्तौ ॥ २८ ॥

भाषाऽर्थः—सुवर्ण के सिंहासन पर बैठे हुये वे वर वधू स्नातकों और बन्धुओं के सहित-राजा, (तथा) पति पुत्र वाली स्त्रियों से क्रमशः किये गये आर्द्र अक्षत के आरोपण (त्याग) को अनुभव ( ग्रहण ) किये। (इस समय कहीं कहीं इसे धान बोना कहते हैं) ॥ २८ ॥

अथ भोजो विवाहविधिं सम्पाद्य समागतान् राज्ञोऽर्चितुमधिकारिणः आज्ञापयामासेत्याह—

**इति स्वसुर्भोजकुलप्रदीपः सम्पाद्य पाणिग्रहणं स राजा।**
**महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः ॥ २९ ॥**

सञ्जीविनी—इतीति। अधिश्रीः अधिगता प्राप्ता श्रीः संपत् येन सः अधिकसंपन्नो भोजकुलप्रदीपः स राजा इति स्वसुरिन्दुमत्याः पाणिग्रहणं विवाहं सम्पाद्य कारयित्वा महीपतीनां राज्ञां पृथगेकैकशोऽर्हणार्थं पूजार्थमधिकृतानधिकारिणः समादिदेशाऽऽज्ञापयामास ॥२९॥

अन्वयः—अधिश्रीः, भोजकुलप्रदीपः, सः, राजा, इति, स्वसुः, पाणिग्रहणं, सम्पाद्य, महीपतीनां, पृथक्, अर्हणार्थम्, अधिकृतान्, समादिदेश ॥ २९ ॥

सुधा—अधिश्रीः—अधिकलक्ष्मीः, अधिकसम्पत्तिमानिति यावत्। भोजकुलप्रदीपः = भोजवंशदीपः, सः = पूर्वोक्तः, राजा = नृपः, भोज इति यावत्। इति = एवम्, उक्तविधिनेति यावत्। स्वसुः = भगिन्याः, इन्दुमत्या इति यावत्। पाणिग्रहणं = विवाहं, सम्पाद्य = कारयित्वा, महीपतीनां = भूपतीनां, पृथक् = एकैकशः, अर्हणार्थं = पूजनार्थं, सत्कारार्थमिति यावत्। अधिकृतान् = अधिकारिणः, भृत्यानिति यावत्। समादिदेश = समाज्ञप्तवान् ॥२९॥

कोशः—'राज्ञि राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः' इति, 'भगिनी स्वसा' इति चामरः ॥ २९ ॥

समासादि—भोजस्य कुलमिति भोजकुलं तस्य प्रदीप इति भोजकुलप्रदीपः (त० पु०)।

पणायन्त्यनेन पाणिः, पाणिर्गृह्यतेऽस्मिन्निति तत् पाणिग्रहणम् । पान्तीति पतयः, मह्याः पतय इति महीपतयस्तेषां महीपतीनाम् (त० पु०) । अधिगता श्रीर्येन स अधिश्रीः ॥ २९ ॥

व्याकरणम्—सम्पाद्य = सम् + पद् + णिच् + ल्यप् । पाणिग्रहणम् = पण ( व्यवहारे ), 'अशिपणाय्यो' इत्याद्युणादिसूत्रेण इण् , आयप्रत्ययस्य लुक् पाणिरिति, तस्मात् ग्रह + ल्युट् पाणिग्रहणमिति । समादिदेश = सम् + आ + दिश् + लिट् ॥ २९ ॥

वाच्यपरिवर्तनम्—अधिश्रिया, भोजकुलप्रदीपेन, तेन, राज्ञा, इति, स्वसुः, पाणिग्रहणं, सम्पाद्य, महीपतीनां, पृथक् , अर्हणार्थम्, अधिकृताः, समादिदिशिरे ॥ २९ ॥

तात्पर्यार्थः—अधिकसम्पत्तिमान् भोजवंशप्रदीपः स राजा भोजः उक्तविधिना भगिन्या विवाहं विधाय राज्ञामेकैकशः सत्कारार्थम् अधिकारिणः समाज्ञापयामास ॥ २९ ॥

भाषाऽर्थः—अधिकसम्पत्तिवान् भोजवंश का दीपक उस राजा ( भोज ) ने, इस प्रकार बहन ( इन्दुमती ) का विवाह सम्पादन कर, राजाओं के अलग अलग पूजन ( सत्कार ) करने के लिये अधिकारियों ( नौकरों ) को आज्ञा दिया ॥ २९ ॥

अथ राजानो भोजकृतां पूजाम् उपदामिषेण प्रत्यर्प्य जग्मुरित्याह—

लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाच्छलेन ॥ ३० ॥

सञ्जीविनी—लिङ्गैरिति । मुदः संतोषस्य लिङ्गैश्चिह्नैः कपटहासादिभिः संवृतविक्रिया निगूहितमत्सराः अत एव प्रसन्ना बहिर्निर्मला गूढनक्रा अन्तर्लीनग्राहा ह्रदा इव स्थितास्ते नृपा वैदर्भं भोजमामन्त्र्याऽऽपृच्छ्य तदीयां वैदर्भीयां पूजामुपदाच्छलेनोपायनमिषेण प्रत्यर्प्य ययुर्गतवन्तः ॥ ३० ॥

अन्वयः—मुदः, लिङ्गैः, संवृतविक्रियाः, ते, गूढनक्राः, प्रसन्नाः, ह्रदाः, इव, वैदर्भम् , आमन्त्र्य, तदीयां, पूजाम् , उपदाच्छलेन, प्रत्यर्प्य, ययुः ॥ ३० ॥

सुधा—मुदः = हर्षस्य, सन्तोषस्येति यावत् । लिङ्गैः = चिह्नैः, संवृतविक्रियाः = निगूहितमत्सराः, ते = पूर्वोक्ताः, राजान इति यावत् । गूढनक्राः = अन्तर्लीनकुम्भीराः, प्रसन्नाः = निर्मलाः, ह्रदाः = अगाधजलयुक्ततडागाः, इव, वैदर्भं = विदर्भराजानं, भोजमिति यावत् । आमन्त्र्य = आपृच्छ्य, तदीयां = भोजसंबन्धिनीं, पूजां = सपर्याम् , उपदाच्छलेन = उपायनव्याजेन, प्रत्यर्प्य = समर्प्य, ययुः = जग्मुः ॥ ३० ॥

कोशः—'तत्रागाधजलो ह्रदः' इति, 'नक्रस्तु कुम्भीरः' इति, 'पूजानमस्यापचितिः सपर्याचार्हणाः समाः' इति, 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इति चामरः ॥ ३० ॥

समासादि—संवृता विक्रिया येषां ते संवृतविक्रियाः ( ब० व्री० ) । गूढा नक्रा येषु ते गूढनक्राः ( ब० व्री० ) । उपदायाश्छलमित्युपदाच्छलं तेनोपदाच्छलेन ( त० पु० ) ॥३०॥

व्याकरणम्—संवृत = सम् + वृ + क्तः । आमन्त्र्य = आ + मत्रि ( गुप्तपरिभाषणे ), ल्यप् । ययुः = या + लिट् । प्रत्यर्प्य = प्रति + ऋ + णिच् + 'अर्ति ह्री' इत्यादिना पुक् + ल्यप् ॥ ३० ॥

वाच्यपरिवर्तनम्—मुदः, लिङ्गैः, संवृतविक्रियैः, तैः, गूढनक्रैः, प्रसन्नैः, ह्रदैः, इव, वैदर्भम्, आमन्त्र्य, तदीयां, पूजाम् , उपदाच्छलेन, प्रत्यर्प्य, ययै ॥ ३० ॥

तात्पर्यार्थः—सन्तोषस्य कपटहासादिभिश्चिह्नैर्निगूहितविक्रियास्ते भूपा अन्तर्लीनग्राहा बहिर्निर्मला अगाधजलयुक्ततडागा इव भोजमापृच्छ्य तदीयाम्पूजामुपायनव्याजेन प्रत्यर्प्य गतवन्तः ॥ ३० ॥

भाषाऽर्थः—संतोष के चिह्नों से विकार छिपाये हुये वे नृप, भीतर रहने वाले नाक और बाहर से निर्मल अथाह जल वाले तालाव के समान विदर्भराजा से पूछकर उनकी दी हुई

पूजा को भेंट के बहाने लौटाकर चले गये ॥ ३० ॥

अथ राजानोऽजस्य पन्थानमवरुध्य तस्थुरित्याह—

**स राजलोकः कृतपूर्वसंविदारम्भसिद्धौ समयोपलभ्यम् ।**
**आदास्यमानः प्रमदामिषं तदावृत्य पन्थानमजस्य तस्थौ ॥ ३१ ॥**

सञ्जीविनी—स इति । आरम्भसिद्धौ कार्यसिद्धौ विषये पूर्वं कृता कृतपूर्वा, सुप्सुपेति समासः । कृतपूर्वा संवित्संकेतो मार्गावरोधरूप उपायो येन स तथोक्तः, 'संविद्युद्धे प्रतिज्ञायां संकेताचारनामसु' इति केशवः । स राजलोकः समयोपलभ्यमजप्रस्थानकाले लभ्यम्, तदा तस्यैकाकित्वादिति भावः । 'समरोपलभ्यम्' इति पाठे युद्धसाध्यमित्यर्थः । तत्प्रमदैवाऽऽमिषं भोग्यवस्तु, 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' इति केशवः । आदास्यमानो ग्रहीष्यमाणः सन्नजस्य पन्थानमावृत्यावरुध्य तस्थौ ॥ ३१ ॥

अन्वयः—आरम्भसिद्धौ, कृतपूर्वसंवित्, सः, राजलोकः, समयोपलभ्यं, तत्, प्रमदामिषम्, आदास्यमानः, 'सन्' अजस्य, पन्थानम्, आवृत्य, तस्थौ ॥ ३१ ॥

सुधा—आरम्भसिद्धौ = उद्यमसिद्धौ, कृतपूर्वसंवित् = पूर्वं कृतसङ्केतः, सः = पूर्वोक्तः, राजलोकः = नृपसमूहः, समयोपलभ्यम् = अजप्रस्थानकाले लभ्यं, तत् = पूर्वोक्तं, प्रमदामिषं = तदिन्दुमतीरूपभोग्यवस्तु, आदास्यमानः = ग्रहीष्यमाणः, सन्निति शेषः । अजस्य = रघुपुत्रस्य, पन्थानं = मार्गम्, आवृत्य = अवरुध्य, तस्थौ = स्थितः । समयोपलभ्यमित्यत्र 'समरोपलभ्यम्' इति पाठे 'युद्धसाध्यम्' इत्यर्थो बोध्यः ॥ ३१ ॥

कोशः—'संवित्संभाषणे ज्ञाने संग्रामे नाम्नि तोषणे । क्रियाकारे प्रतिज्ञायां सङ्केताचारयोरपि' इत्यनेकार्थसंग्रहः । 'आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः' इति, 'आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि सम्भोगेऽप्युत्कोचे पललेऽपि च' इति मेदिनी ॥ ३१ ॥

समासादि—राज्ञां लोक इति राजलोकः ( त० पु० ) । पूर्वं कृता इति कृतपूर्वा, ( क० धा० ), कृतपूर्वा संवित् येन स कृतपूर्वसंवित् (ब०व्री०) । आरम्भस्य सिद्धिरित्यारम्भसिद्धिस्तस्यामारम्भसिद्धौ ( त० पु० ) । समये उपलभ्यमिति समयोपलभ्यम् ( त० पु० ) । प्रमदा एवामिषमिति तत् प्रमदामिषम् ॥ ३१ ॥

व्याकरणम्—संवित् = सम् + विद् + क्विप् । आदास्यमानः = आ + दा + लृट् + स्यादेशः + शानच् । आवृत्य = आ + वृतु + ल्यप् । तस्थौ = स्था + लिट् ॥ ३१ ॥

वाच्यपरिवर्तनम्—आरम्भसिद्धौ, कृतपूर्वसंविदा, तेन, राजलोकेन, समयोपलभ्यं, तत्, प्रमदामिषम्, आदास्यमानेन, 'सता' अजस्य, पन्थानम्, आवृत्य, तस्थे ॥ ३१ ॥

तात्पर्यार्थः—कार्यसिद्धौ पूर्वंकृतो मार्गावरोधरूप उपायः स राजलोकः अजप्रस्थानकाले प्राप्यं तत् प्रमदारूपभोग्यवस्तु ग्रहीष्यमाणः सन् अजस्य मार्गमवरुध्य तस्थौ ॥ ३१ ॥

भाषाऽर्थः—कार्य की सिद्धि के लिये पहले से संकेत करके वह नृप समूह अज के प्रस्थान काल में पाने योग्य उस प्रमदा (इन्दुमती) रूप भोग्यवस्तु को लेने की अभिलाषा से अज के मार्ग को रोक कर ठहरा ॥ ३१ ॥

थ भोजः सपत्नीकमजं प्रास्थापयत् स्वयं चानुजगामेत्याह—

**भर्ताऽपि तावत्क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।**
**सत्त्वानुरूपाऽऽहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥**

सञ्जीविनी—भर्ताऽपीति । अनुष्ठितः संपादितोऽनन्तरजाया अनुजाया विवाहो येन स तथोक्तः, क्रथकैशिकानां देशानां भर्ता स्वामी भोजोऽपि तावत्तदा सत्त्वानुरूपमुत्साहानुरूपं यथा तथा आ समन्तात्, अनेनानियतवस्तुदानमित्यर्थः । हरणं कन्यायै देयं धनम् । तदेवाऽऽह कात्यायनः—"ऊढया कन्यया वाऽपि पत्युः पितृगृहेऽपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं

सौदायिकं स्मृतम् ॥" 'यौतकादि तु यद्देयं सुदायो हरणं च तत्' इत्यमरः। आहरणीकृतश्रीर्येन तथोक्तः सन् राघवमजं प्रास्थापयत्प्रस्थापितवान्स्वयमन्वगादनुजगाम च ॥ ३२ ॥

अन्वयः—अनुष्ठितानन्तरजाविवाहः, क्रथकैशिकानां, भर्ता, अपि, तावत्, सत्वानुरूपाऽऽहरणीकृतश्रीः, 'सन्' राघवं, प्रास्थापयत्, 'स्वयम्' अन्वगात्, च ॥ ३२ ॥

सुधा—अनुष्ठितानन्तरजाविवाहः = सम्पादितलघुभगिनीविवाहः, क्रथकैशिकानां = क्रथकैशिकदेशविशेषाणां, भर्ता = स्वामी, भोज इति यावत्। अपि, तावत = तदा, सत्वानुरूपाऽऽहरणीकृतश्रीः = विभवानुरूपाऽऽसुदायीकृतसम्पत्तिः, विभवानुरूपमनियतवस्तुदानं यौतकत्वेन दत्वेत्यर्थः। सन्निति शेषः। राघवम् = अजं, प्रास्थापयत् = प्रस्थापितवान्, 'स्वयम्' अन्वगात् = अनुजगाम, च ॥ ३२ ॥

कोशः—'सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वव्यवसायासु वित्तेष्वस्त्री तु जन्तुषु' इति मेदिनी। 'यौतकादि तु यद्देयं सुदायो हरणं च तत्' इत्यमरः। हरणं यौतकद्रव्येऽप्यङ्गहारे भुजे हृतौ' इत्यनेकार्थसंग्रहोऽपि ॥ ३२ ॥

समासादि—अनन्तरे जातेत्यनन्तरजा तस्या विवाह इत्यनन्तरजाविवाहः ( त० पु० ), अनुष्ठितोऽनन्तरजाविवाहो येन सोऽनुष्ठितानन्तरजाविवाहः (ब०व्रीः०)। सत्वस्यानुरूपमिति सत्वानुरूपम् ( यथा तथा ) आ समन्तात् हरणमित्याहरणम्, न आहरणमित्यनाहरणम्, अनाहरणमाहरणम् कृता इत्याहरणीकृता, आहरणी कृता श्रीर्येन सः सत्वानुरूपाऽऽहरणीकृतश्रीः ( ब०व्री० ) ॥ ३२ ॥

व्याकरणम्—अनुष्ठित = अनु + स्था + क्तः + इत्वम्। विवाहः = वि + वह + घञ्। प्रास्थापयत् = प्र = अ + स्था + लुङ् + णिच्, + पुक्। अन्वगात् = अनु + अ + इण् + लुङ् + गादेशः ॥ ३२ ॥

वाच्यपरिवर्तनम्—अनुष्ठितानन्तरजाविवाहेन, क्रथकैशिकानां, भर्त्रा, अपि, तावत्, सत्वानुरूपाऽऽहरणीकृतश्रिया, 'सता' राघवः, प्रस्थापयाञ्चक्रे, 'स्वेन' अन्वगायि, च ॥ ३२ ॥

तात्पर्यार्थः—लघुभगिनीविवाहं सम्पाद्य भोजो विभवानुरूपं धनं यौतकत्वेन दत्वा अजं प्रास्थापयत् स्वयं चानुजगाम ॥ ३२ ॥

भाषार्थः—छोटी बहन ( इन्दुमती ) का विवाह संपादन कर लेने पर क्रथकैशिक देश का स्वामी ( भोज ) अपने विभव के अनुसार यौतक देकर अज को बिदा किया, और स्वयं भी उसके पीछे गया ॥ ३२ ॥

अथ भोजो रात्रित्रयमजेन सार्द्धं पथि व्यतीत्य निवृत्त इत्याह—

तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा।
तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः ॥ ३३ ॥

सञ्जीविनी—तिस्र इति। कुण्डिनं विदर्भनगरं तस्येशो भोजस्त्रिषु लोकेषु प्रथितेनाजेन सार्धं मार्गे पथि तिस्रो वसती रात्रीरुषित्वा स्थित्वा, 'वसती रात्रिवेश्मनोः' इत्यमरः। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। पर्वात्यये दर्शान्त उष्णरश्मेः सूर्यात्सोमश्चन्द्र इव तस्मादजादपावर्तत, तं विसृज्य निवृत्त इत्यर्थः ॥ ३३ ॥

अन्वयः—कुण्डिनेशः, मार्गे, त्रिलोकप्रथितेन, अजेन, सार्द्धं, तिस्रः, वसतीः, उषित्वा, पर्वात्यये, उष्णरश्मेः, सोमः, इव, तस्मात्, अपावर्तत ॥ ३३ ॥

सुधा—कुण्डिनेशः = विदर्भनगरस्वामी, मार्गे = पथि, त्रिलोकप्रथितेन = जगत्त्रयविश्रुतेन, अजेन = रघुसुतेन, सार्द्धं = समं, तिस्रः = त्रित्वसंख्याविशिष्टाः, वसतीः = रात्रीः, उषित्वा = व्यतीत्य, वासं कृत्वेति यावत्। पर्वात्यये = दर्शातिक्रमे, अमावास्यान्त इति यावत्। उष्णरश्मेः = सूर्यात्। सोमः = इन्दुः, इव = यथा, तस्मात् = अजात्, अपावर्तत = न्यवर्तत = स्वयं निवृत्त [illegible]र्थः ॥ ३३ ॥

कोशः—'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । 'वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने' इति मेदिनी । 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे विषुवादिषु । दर्शप्रतिपदोः सन्धौ स्यात्तिथेः पञ्चकान्तरे' इति, 'अत्ययोऽतिक्रमे कृच्छ्रेऽत्युत्पाते नाशदण्डयोः' इति च धरणिः ॥ ३३ ॥

समासादि—त्रयाणां लोकानां समाहारस्त्रिलोकं ( द्वि० ), त्रिलोकेषु प्रथित इति त्रिलोकप्रथितस्तेन त्रिलोकप्रथितेन ( त० पु० ) । कुण्डिनस्येश इति कुण्डिनेशः ( त० पु० ) । पर्वणोऽत्यय इति पर्वात्ययस्तस्मिन् पर्वात्यये (त० पु०) । उष्णा रश्मयो यस्य स उष्णरश्मिस्तस्मात् उष्णरश्मेः ॥ ३३ ॥

व्याकरणम्—प्रथितेन = प्रथ + क्तः + इट् । वसतीः = वस् + क्तिन्, ङीप् । उषित्वा = वस ( निवासे ), क्त्वा + सम्प्रसारणम् । अपावर्तत = अप + अ + वृतु + लङ् ॥ ३३ ॥

वाच्यपरिवर्तनम्—कुण्डिनेशेन, मार्गे, त्रिलोकप्रथितेन, अजेन, सार्द्धं, तिस्रः, वसतीः, उषित्वा, पर्वात्यये, उष्णरश्मेः, सोमेन, इव, तस्मात्, अपावृत्यत ॥ ३३ ॥

तात्पर्यार्थः—यथाऽमावास्यान्ते सूर्याच्चन्द्रोऽपावर्तते, तथैव विदर्भाधिपो भोजोऽपि मार्गे जगत्त्रयविश्रुतेनाजेन साकं रात्रित्रयमुषित्वा तस्मादजात् स्वयं निवृत्तः ॥ ३३ ॥

भाषाऽर्थः—कुंडिनपुर का स्वामी ( भोज ), मार्ग में तीनों लोकों में प्रसिद्ध अज के साथ तीन रात्रि बिता कर अमावास्याके अन्त में सूर्य से चन्द्रमा के समान लौट आया ॥ ३३ ॥

अथ पूर्वतो बद्धवैराः राजानोऽजस्य स्त्रीरत्नप्राप्तिं न सेहिर इत्याह—

प्रमन्यवः प्रागपि कोसलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।
अतो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥

सञ्जीविनी—प्रमन्यव इति । नृपा राजानः प्रागपि प्रत्येकमात्तस्वतया दिग्विजये गृहीतधनत्वेन कोसलेन्द्रे रघौ प्रमन्यवो रूढवैरा बभूवुः, अतो हेतोः स्वयंवरार्थं समेताः सङ्गताः सन्तस्तदात्मजस्य रघुसूनोः स्त्रीरत्नलाभं न चक्षमिरे न सेहिरे ॥ ३४ ॥

अन्वयः—नृपाः, प्राक्, अपि, प्रत्येकम्, आत्तस्वतया, कोसलेन्द्रे, प्रमन्यवः, बभूवुः, अतः, समेताः, 'सन्तः' तदात्मजस्य, स्त्रीरत्नलाभं, न, चक्षमिरे ॥ ३४ ॥

सुधा—नृपाः = राजानः, प्राक् = पूर्वम्, अपि, प्रत्येकम् = एकैकम्, आत्तस्वतया = दिग्विजयकाले गृहीतधनतया, कोसलेन्द्रे = रघौ, प्रमन्यवः = प्ररूढवैराः, बद्धवैरा इति यावत् । बभूवुः = अभूवन् । अतः = अस्मात् कारणात्, समेताः = संयुक्ताः, सन्त इति शेषः । तदात्मजस्य = रघुपुत्रस्य, अजस्येति यावत् । स्त्रीरत्नलाभं = स्त्रीरत्नप्राप्तिं, न चक्षमिरे = नासहन्त ॥३४॥

कोशः—'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यनेकार्थसंग्रहः । 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनी ॥ ३४ ॥

समासादि—प्रगता मन्यवो येषां ते प्रमन्यवः ( ब० व्री० ) । कोसलस्येन्द्र इति कोसलेन्द्रस्तस्मिन् कोसलेन्द्रे (त० पु०) । आत्तं स्वं येन स आत्तस्वस्तस्य भाव आत्तस्वता तया आत्तस्वतया (ब०व्री०) । स्त्रीरेव रत्नमिति स्त्रीरत्नं तस्य लाभ इति स्त्रीरत्नलाभस्तं स्त्रीरत्नलाभम् ( त० पु० ) । तस्यात्मज इति तदात्मजस्तस्य तदात्मजस्य ( त० पु० ) ॥ ३४ ॥

व्याकरणम्—चक्षमिरे = क्षमूष् ( सहने-ऊषित् ), लिट् ॥ ३४ ॥

वाच्यपरिवर्तनम्—नृपैः, प्राक्, अपि, प्रत्येकम्, आत्तस्वतया, कोसलेन्द्रे, प्रमन्युभिः, बभूवे, अतः, समेतैः, 'सद्भिः' तदात्मजस्य, स्त्रीरत्नलाभः, न, चक्षमे ॥ ३४ ॥

तात्पर्यार्थः—ते राजानः पूर्वमेव रघोर्दिग्विजये गृहीतधनत्वेन रघौ प्ररूढवैराः बभूवुः, अस्मात् कारणात् सम्मिलिताः सन्तोऽजस्य स्त्रीरत्नप्राप्तिं नासहन्त ॥ ३४ ॥

भाषाऽर्थः—राजा लोग पहले ही से हर एक ( राजाओं का ) धन ग्रहण कर लेने के कारण रघु से वैर मानते थे, इस कारण ( वे ) मिलकर उसके पुत्र ( अज ) के स्त्री रूप रत्न

के लाभ को न सह सके ॥ ३४ ॥

अथ राजानो मार्गे इन्दुमतीमादाय गच्छन्तमजमवरुरुधुरित्याह—

**तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।**
**बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ ३५ ॥**

सञ्जीविनी—तमिति । दृप्त उद्धतः स राजन्यगणो राजसंघातः भोजकन्यामुद्वहन्तं नयन्तं तमजं बलिना वैरोचनिना प्रदिष्टां दत्तां श्रियमाददानं स्वीकुर्वाणं त्रिविक्रमस्येमं त्रैविक्रमं पादमिन्द्रशत्रुः प्रह्लाद इव पथि रुरोध । तथा च ब्रह्माण्डपुराणे—"विरोचनविरोधेऽपि प्रह्लादः प्राक्तनं स्मरन् । विष्णोस्तु क्रममाणस्य पादाम्भोजं रुरोध ह ॥" इति ॥ ३५ ॥

अन्वयः—दृप्तः, सः, राजन्यगणः, भोजकन्याम्, उद्वहन्तं, तं, बलिप्रदिष्टां, श्रियम्, आददानं, त्रैविक्रमं, पादम्, इन्द्रशत्रुः, इव, पथि, रुरोध ॥ ३५ ॥

सुधा—दृप्तः = उद्धतः, अहंकारयुक्त इति यावत् । सः = पूर्वोक्तः, राजन्यगणः = राजसमूहः, भोजकन्याम् = भोजतनयाम्, इन्दुमतीमिति यावत् । उद्वहन्तं = नयन्तं, तम् = अजं, बलिप्रदिष्टां = वैरोचनिदत्तां, श्रियं = लक्ष्मीम्, आददानं = गृह्यमाणं, त्रैविक्रमं = त्रिविक्रमसंबन्धिनं, वामनरूपधारिणं वैष्णवमित्यर्थः । पादं = चरणम्, इन्द्रशत्रुः = प्रह्लादः, इव = यथा पथि = मार्गे, रुरोध = अरुधत् ॥ ३५ ॥

कोशः—'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इति, 'पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः' इति चामरः ॥ ३५ ॥

समासादि—भोजस्य कन्येति भोजकन्या तां भोजकन्याम् ( त० पु० ) । राज्ञोऽपत्यं राजन्यस्तस्य गण इति राजन्यगणः । बलिना प्रदिष्टेति बलिप्रदिष्टा तां बलिप्रदिष्टाम् ( त० पु० ) । त्रयो विक्रमाः पादविन्यासा यस्य स त्रिविक्रमः ( ब० व्री० ), त्रिविक्रमस्येमं त्रैविक्रमम् । इन्द्रस्य शत्रुरितीन्द्रशत्रुः ( त० पु० ) ॥ ३५ ॥

व्याकरणम्—रुरोध = रुध् + लिट् । राजन्य = राजन् + 'राजश्वशुराद्यत्' इत्यनेन, यत्, 'ये चाभावकर्मणोः' इत्यनः प्रकृतिभावः । दृप्तः = दृप् + क्तः ॥ ३५ ॥

वाच्यपरिवर्तनम्—दृप्तेन, तेन, राजन्यगणेन, भोजकन्याम्, उद्वहन्, सः, बलिप्रदिष्टां, श्रियम्, आददानः, त्रैविक्रमः, पादः, इन्द्रशत्रुणा, इव, पथि, रुरुधे ॥ ३५ ॥

तात्पर्यार्थः—यथा प्रह्लादो बलिना दत्तां श्रियं गृह्यमाणं वामनचरणमवरुरोध, तथोद्धतः स राजसमूहो भोजकन्यां नीयमानमजं पथि अवरुरोध ॥ ३५ ॥

भाषाऽर्थः—अहंकारी उस राजाओं के समूहने भोज की कन्या को ले जाते हुये अज को, जैसे बलि की लक्ष्मी ग्रहण करते हुये वामन ( विष्णु ) के चरण को प्रह्लादने रोका था, वैसे रोका ॥ ३५ ॥

अथेन्दुमत्या रक्षार्थमजो बहुसैन्यं मन्त्रिणं नियोज्य नृपसेनामभियुक्तवानित्याह—

**तस्याः स रक्षाऽर्थमनल्पयोधमादिश्य पित्र्यं सचिवं कुमारः ।**
**प्रत्यग्रहीत्पार्थिववाहिनीं तां भागीरथीं शोण इवोत्तरङ्गः ॥ ३६ ॥**

सञ्जीविनी—तस्या इति । स कुमारोऽजस्तस्या इन्दुमत्या रक्षाऽर्थमनल्पयोधं बहुभटं पितुरागतं पित्र्यम्, आप्तमित्यर्थः । सचिवमादिश्याज्ञाप्य तां पार्थिववाहिनीं राजसेनाम्, 'ध्वजिनी वाहिनी सेना' इत्यमरः । भागीरथीमुत्तरङ्गः शोणः शोणाख्यो नद इव प्रत्यग्रहीदभियुक्तवान् ॥ ३६ ॥

अन्वयः—सः, कुमारः, तस्याः, रक्षार्थम्, अनल्पयोधं, पित्र्यं, सचिवम्, आदिश्य, उत्तरङ्गः, शोणः, भागीरथीम्, इव, तां पार्थिववाहिनीम्, प्रत्यग्रहीत् ॥ ३६ ॥

सुधा—सः = पूर्वोक्तः, कुमारः = युवराजः, अज इति यावत् । तस्याः = इन्दुमत्याः, रक्षा-

थ = रक्षणार्थम्, अनल्पयोधं = बहुभटं, पित्र्यं = पितृपरम्परागतं, सचिवं = मन्त्रिणम्, आदिश्य = आज्ञाप्य, उत्तरङ्गः = उद्गतोर्मिः, शोणः = शोणाऽऽख्यनदः, भागीरथीं = गङ्गाम्, इव = यथा, तां = पूर्वोक्तां, पार्थिववाहिनीं = नृपसेनां, प्रत्यग्रहीत् = अभियुक्तवान् ॥ ३६ ॥

कोशः—'मन्त्री सहायः सचिवौ' इत्यमरः। 'वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः' इति विश्वः। 'शोणः कृशानौ स्योनाके लोहिताश्वे नदे पुमान्। त्रिषु कोकनदच्छाये' इति मेदिनी ॥ ३६ ॥

समासादि—न अल्पा योधा यस्य स अनल्पयोधस्तमनल्पयोधम् (ब०व्री०)। पितुरागतं पित्र्यम्। वाहाः सन्त्यस्यामिति वाहिनी, पृथिव्या अयं पार्थिवस्तस्य वाहिनीति तां पार्थिववाहिनीम् (त० पु०) ॥ ३६ ॥

व्याकरणम्—पित्र्यं = पितृ + यत्। प्रत्यग्रहीत् = प्रति + अ + ग्रह + लुङ्। वाहिनीं = वाह + इनिः + ङीप् ॥ ३६ ॥

वाच्यपरिवर्तनम्—तेन, कुमारेण, तस्याः, रक्षार्थम्, अनल्पयोधं, पित्र्यं, सचिवम्, आदिश्य, उत्तरङ्गेण, शोणेन, भागीरथी, इव, सा, पार्थिववाहिनी, प्रत्यग्राहि ॥ ३६ ॥

तात्पर्यार्थः—यथा उत्तरङ्गः शोणाऽऽख्यनदः गङ्गां प्रतिगृह्णाति, तथैव सोऽजः इन्दुमत्या रक्षणार्थं बहुसैन्यमाप्तं मन्त्रिणमाज्ञाप्य तां नृपसेनां प्रत्यग्रहीत् ॥ ३६ ॥

भाषाऽर्थः—उस कुमार (अज) ने इन्दुमती की रक्षाके लिये बहुत सेना वाले पिता के मंत्री को आज्ञा देकर, बड़ी तरंगों वाला शोणभद्रनद जैसे गङ्गा को रोकता है, वैसे उस सेना को रोका ॥ ३६ ॥

अथाजः सकलसेनाङ्गैन युयोधेत्याह—

**पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम्।**
**यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७ ॥**

सञ्जीविनी—पत्तिरिति। पत्तिः पादचारो योद्धा पदातिं पादचारमभ्यपतत्, पदा पादाभ्यामततीति पदातिः, "पादस्य पदाज्यातिगोपहतेषु" इत्यनेन पदादेशः, 'पदातिपत्तिपदगपादातिकपदाजयः' इत्यमरः। रथेशो रथिको रथिनं रथारोहमभ्यपतत्, तुरङ्गसाद्यश्वारोहस्तुरगाधिरूढमश्वारोहमभ्यपतत्, 'रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः' इत्यमरः। गजस्य यन्ता हस्त्यारोहो गजस्थं पुरुषमभ्यपतत्, इत्थमनेन प्रकारेण तुल्यप्रतिद्वन्द्व्येकजातीयप्रतिभटं युद्धं बभूव। अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनो योधाः, 'द्वन्द्वं कलहयुग्मयोः' इत्यमरः ॥ ३७ ॥

अन्वयः—पत्तिः, पदातिं, रथेशः, रथिनं, तुरङ्गसादी, तुरगाधिरूढं, गजस्य, यन्ता, गजस्थम्, अभ्यपतत्, 'इत्थं' तुल्यप्रतिद्वन्द्वि, युद्धं, बभूव ॥ ३७ ॥

सुधा—पत्तिः = पदगो योद्धा, पदातिं = पादगामिनम्, अभ्यपतत् = अभ्यहन्, रथेशः = रथिकः, रथिनं = रथारोहिणम्, 'अभ्यपतत्'। तुरङ्गसादी = अश्वारोही, तुरगाधिरूढम् = अश्वारोहिणम्, 'अभ्यपतत्'। गजस्य = हस्तिनः, यन्ता = नेता, हस्त्यारोहीति यावत्। गजस्थं = हस्त्यारोहिणं, 'अभ्यपतत्'। 'इत्थम्' तुल्यप्रतिद्वन्द्वि = एकजातीयप्रतियोधं, युद्धं = संग्रामः, बभूव = अभूत् ॥ ३७ ॥

कोशः—'पत्तिः, सेनाभित्पद्गयोर्गतौ' इत्यनेकार्थसंग्रहः। 'यन्ता हस्तिपके सूते' इति, 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इति चामरः ॥ ३७ ॥

समासादि—पद्यत इति पत्तिः। पादाभ्यामततीति पदातिस्तं पदातिम्। रथमस्या स्तीति रथी तं रथिनम्। रथस्येश इति रथेशः। अवश्यं सीदतीति सादी, तुरङ्गस्य सादीति तुरङ्गसादी। तुरगमधिरूढ इति तुरगाधिरूढस्तं तुरगाधिरूढम्। तुल्यं प्रतिद्वन्द्वमस्त्येषामिति तत्तुल्यप्रतिद्वन्द्वि ॥ ३७ ॥

व्याकरणम्—अधिरूढम् = अधि + रुह + क्तः । यन्ता = यम् + तृच् । अभ्यपतत् = अभि + अ + पत् + लङ् । युद्धं = युध् + क्तः ॥ ३७ ॥

वाच्यपरिवर्तनम्—पत्तिना, पदातिः, रथेशेन, रथी, तुरङ्गसादिना, तुरगाधिरूढः, गजस्य, यन्त्रा, गजस्थः, अभ्यपत्यत, 'इत्थं, तुल्यप्रतिद्वन्द्विना, युद्धेन, बभूव ॥ ३७ ॥

तात्पर्यार्थः—पादचारो योद्धा पादचारं, रथारोही रथारूढं, अश्वारोही अश्वारोहं, हस्त्यारोही हस्त्यारोहिणं पुरुषमभ्यहन्, इत्थं तुल्यजातीयप्रतिभटं युद्धं बभूव ॥ ३७ ॥

भाषाऽर्थः—पैदल पैदल को, रथी रथी को, घुड़सवार घुड़सवार को, हाथीसवार हाथी-सवार को मारे, इस प्रकार तुल्यजोड़ वाला संग्राम हुआ ॥ ३७ ॥

अथ नृपाः युद्धसमये निजनामान्युच्चारयितुं समर्था न बभूवुरित्याह—

**नदत्सु तूर्येष्वविभाव्यवाचो नोदीरयन्ति स्म कुलोपदेशान् ।**
**बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृतः शशंसुः ॥ ३८ ॥**

सञ्जीविनी—नदत्स्विति । तूर्येषु नदत्सु सत्स्वविभाव्यवाचोऽनवधार्यगिरश्चापभृतो धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैस्ते कुलोपदेशास्तान्कुलनामानि नोदीरयन्ति स्म नोच्चारयामासुः, श्रोतुमशक्यत्वाद्वाचो नाब्रुवन्नित्यर्थः । किन्तु बाणाक्षरैर्बाणेषु लिखिताक्षरैरेव परस्परस्यान्योन्यस्योर्जितं प्रख्यातं नाम शशंसुरूचुः ॥ ३८ ॥

अन्वयः—चापभृतः, तूर्येषु, नदत्सु, 'सत्सु' अविभाव्यवाचः, 'सन्तः' कुलोपदेशान्, न, उदीरयन्ति स्म, परस्परस्य, उर्जितम्, नाम, बाणाक्षरैः, एव, शशंसुः, ॥ ३८ ॥

सुधा—चापभृतः = धानुष्काः, धनुर्धारिण इति यावत् । तूर्येषु = वाद्यविशेषेषु, नदत्सु = शब्दायमानेषु, सत्स्विति शेषः । अविभाव्यवाचः = अनवधार्यगिरः, सन्त इति शेषः । कुलोपदेशान् = वंशनामानि, नोदीरयन्ति स्म = न कथयन्ति स्म, परस्परस्य = अन्योन्यस्य, ऊर्जितं = प्रसिद्धं, नाम = अभिधानं, बाणाक्षरैः, शराक्षरैः, एव, शशंसुः = कथयामासुः ॥ ३८ ॥

कोशः—'बाणो वृक्षविशेषे स्याच्छरस्यावयवे शरे । बलिपुत्रेऽप्यथ' इत्यनेकार्थसंग्रहः । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः ॥ ३८ ॥

समासादि—न विभाव्या वाक् यस्य स अविभाव्यवाक् तस्याविभाव्यवाचः (ब०व्री०) । कुलमुपदिश्यते (प्रख्याप्यते) यैस्ते कुलोपदेशास्तान् कुलोपदेशान् (ब० व्री०) । बाणेषु (लिखितानि) अक्षराणि इति बाणाक्षराणि तैर्बाणाक्षरैः । चापं बिभर्त्तीति चापभृत्तस्य चापभृतः ॥३८॥

व्याकरणम्—तूर्येषु = तुर + यत् । अविभाव्य = न + वि + भू (प्राप्तौ), णिच् + यत् । उदीरयन्ति = उत् + ईर + णिच् + लिट् । ऊर्जितम् = ऊर्ज + क्तः । शशंसुः = शंसु + लिट् ॥ ३८ ॥

वाच्यपरिवर्तनम्—चापभृद्भिः, तूर्येषु, नदत्सु, 'सत्सु' अविभाव्यवाग्भिः, 'सद्भिः' कुलोपदेशाः, न, उदीर्यन्ते स्म, परस्परस्य, ऊर्जितं, नाम, बाणाक्षरैः, एव, शशंसे ॥ ३८ ॥

तात्पर्यार्थः—धनुर्धारिणो वाद्यविशेषेषु शब्दायमानेष्वनवधार्यगिरः सन्तो वंशनामानि न कथयन्ति स्म, किन्तु बाणलिखिताक्षरैरेव अन्योन्यस्य प्रख्यातं नाम उदीरयामासुः ॥३८॥

भाषाऽर्थः—धनुषधारियोंने तुरहियों के बजनेमें वचनों का निर्धारण न करते हुये वंशके नामका उच्चारण नहीं किया, किन्तु बाणोंके अक्षरों ही से अपने प्रसिद्ध नामको बतलाया ॥३८॥

अथ युद्धेऽश्वखुरोत्थापितधूलिः सूर्यमाच्छादयामासेत्याह—

**उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः ।**
**विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥ ३९ ॥**

सञ्जीविनी—उत्थापित इति । संयति सङ्ग्रामेऽश्वैस्तुरगैरुत्थापितः स्यन्दनवंशानां रथसमूहानां चक्रै रथाङ्गैः,'चक्रं सैन्ये जलावर्ते रथावयवराष्ट्रयोः । संसारे मण्डले वृन्ते धर्मभेदास्त्रभेदयोः ॥' इति वैजयन्ती । सान्द्रीकृतो घनीकृतः, 'वंशः पृष्ठास्थिन गेहोर्ध्वकाष्ठे वेणौगणे कुले॰

इति केशवः। कुञ्जरकर्णानां तालैस्ताडनैर्विस्तारितः प्रसारितो रेणुर्नेत्रक्रमेणांशुकपरिपाट्या, अंशुकमिवेत्यर्थः। 'स्याज्जटांशुकयोर्नेत्रम्' इति, 'क्रमोऽङ्घ्रौ परिपाट्यां च' इति च केशवः। सूर्यमुपरुरोधाऽऽच्छादयामास ॥ ३९ ॥

अन्वयः—संयति, अश्वैः, उत्थापितः, स्यन्दनवंशचक्रैः, सान्द्रीकृतः, कुञ्जरकर्णतालैः, विस्तारितः, रेणुः, नेत्रक्रमेण, सूर्यम्, उपरुरोध ॥ ३९ ॥

सुधा—संयति = सङ्ग्रामे, अश्वैः = तुरङ्गैः, उत्थापितः = उर्ध्वं प्रापितः, स्यन्दनवंशचक्रैः = रथसङ्घरथाङ्गैः, सान्द्रीकृतः = घनीकृतः, कुञ्जरकर्णतालैः = हस्तिश्रोत्रताडनैः, विस्तारितः = प्रसारितः, रेणुः = पांशुः, नेत्रक्रमेण = वस्त्रपरिपाट्या, वस्त्रमिवेत्यर्थः। सूर्यं = रविम्, उपरुरोध = आच्छादयामास ॥ ३९ ॥

कोशः—'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इति, 'घनं निरन्तरं सान्द्रम्' इति चामरः। 'स्यन्दनं स्रवणे तोये स्यन्दनस्तिनिशे रथे' इति, 'वंशः सङ्घेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च' इति चानेकार्थसंग्रहः। 'नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नद्यां च' इति मेदिनी ॥ ३९ ॥

समासादि—स्यन्दनानां वंशा इति स्यन्दनवंशास्तेषां चक्राणि तैः स्यन्दनवंशचक्रैः (त० पु०)। कुञ्जराणां कर्णा इति कुञ्जरकर्णास्तेषां ताला इति कुञ्जरकर्णतालास्तैः कुञ्जरकर्णतालैः (त० पु०)। नेत्राणां क्रम इति नेत्रक्रमस्तेन नेत्रक्रमेण ॥ ३९ ॥

व्याकरणम्—उत्थापितः = उद् + स्था + णिच् + पुक् + क्तः। सान्द्रीकृतः = सान्द्र + कृ + क्तः + च्विः। विस्तारितः = वि + स्तॄ + णिच् + क्तः। उपरुरोध = उप + रुध् + लिट् ॥ ३९ ॥

वाच्यपरिवर्तनम्—संयति, अश्वैः, उत्थापितेन, स्यन्दनवंशचक्रैः, सान्द्रीकृतेन, कुञ्जरकर्णतालैः, विस्तारितेन, रेणुना, नेत्रक्रमेण, सूर्यः, उपरुरुधे ॥ ३९ ॥

तात्पर्यार्थः—सङ्ग्रामेऽश्वखुरैरुत्थापितः रथसमूहानां चक्रैर्घनीकृतः गजकर्णताडनैः प्रस्तारितः पांशुः वस्त्रमिव सूर्यमाच्छादयामास ॥ ३९ ॥

भाषार्थः—युद्धमें अश्वोंसे उड़ाई (तथा) रथसमूह के पहियों से घनी की गयी (और) हाथियों के कानों की फटकार से फैलाई गई धूलि ने वस्त्र की भांति सूर्यको ढक दिया ॥३९॥

अथ युद्धे मत्स्याकृतयो ध्वजा मत्स्या इव शोभन्ते स्मेत्याह—

**मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि।**
**बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि ॥ ४० ॥**

सञ्जीविनी—मत्स्येति। वायुवशाद्विदीर्णैर्विवृतैर्मुखैः प्रवृद्धानि ध्वजिनीरजांसि सैन्यरेणून्पिबन्तो गृह्णन्तो मत्स्यध्वजा मत्स्याकारा ध्वजाः पर्याविलानि परितः कलुषाणि नवोदकानि पिबन्तः परमार्थमत्स्याः सत्यमत्स्या इव बभुर्भान्ति स्म ॥ ४० ॥

अन्वयः—मत्स्यध्वजाः, वायुवशात्, विदीर्णैः, मुखैः, प्रवृद्धध्वजिनीरजांसि, पिबन्तः, 'सन्तः' पर्याविलानि, नवोदकानि, 'पिबन्तः' परमार्थमत्स्याः, इव, बभुः ॥ ४० ॥

सुधा—मत्स्यध्वजाः = मीनाकारपताकाः, वायुवशात् = पवनाधीनत्वात्, वायुवेगादित्यर्थः। विदीर्णैः = विवृतैः, मुखैः = आननैः, प्रवृद्धध्वजिनीरजांसि = विस्तृतसैन्यपांशून्, पिबन्तः = गृह्णन्तः, सन्त इति शेषः। पर्याविलानि = परितो मलिनानि, नवोदकानि = नूतनजलानि, पिबन्त इति शेषः। परमार्थमत्स्याः = सत्यमीनाः, इव = यथा, बभुः = शोभन्ते स्म ॥ ४० ॥

कोशः—'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्' इत्यमरः। 'वशमायत्ततायां स्याद्वशमिच्छाप्रभुत्वयोः' इति विश्वः। 'कलुषोऽनच्छ आविलः' इत्यमरः ॥ ४० ॥

समासादि—मत्स्याकारा ध्वजा इति मत्स्यध्वजाः (शाकपार्थिवादिः)। वायोर्वश इति वायुवशस्तस्मात् वायुवशात् (त० पु०)। ध्वजिन्याः रजांसीति ध्वजिनीरजांसि (त० पु०), प्रवृद्धानि च तानि ध्वजिनीरजांसीति प्रवृद्धध्वजिनीरजांसि (क० धा०)। परमा अर्था येषां ते

परमार्थाः ( ब० व्री० ), परमार्थाश्च ते मत्स्या इति परमार्थमत्स्याः ( क० धा० )। परितः आविलानीति तानि पर्याविलानि ॥ ४० ॥

व्याकरणम्—विदीर्णैः = वि + दृ + क्तः । प्रवृद्ध = प्र + वृध् + क्तः । बभुः = भा + लिट् । मत्स्याः = मद् 'ऋतन्यञ्जि' इत्यौणादिकः स्यन् ॥ ४० ॥

वाच्यपरिवर्तनम्—मत्स्यध्वजैः, वायुवशात्, विदीर्णैः, मुखैः, प्रवृद्धध्वजिनीरजांसि, पिबद्भिः, 'सद्भिः' पर्याविलानि, नवोदकानि, 'पिबद्भिः' परमार्थमत्स्यैः, इव, बभे ॥ ४० ॥

तात्पर्यार्थः—मीनाकाराः पताका वायुवेगात् विवृतैर्मुखैर्विस्तृतानि सैन्यरजांसि गृह्णन्तः परितः कलुषितानि नूतनजलानि पिबन्तः सत्यमत्स्या इव भान्ति स्म ॥ ४० ॥

भाषार्थः—मत्स्य की आकृति वाली ध्वजायें हवा के वेग से मुख फैलाये, तथा बढ़ी हुई सेना की धूलि को ग्रहण करते हुये मैला और नवीन जल पीते हुये सच्ची मछलियों की भांति शोभित हुईं ॥ ४० ॥

अथ सैनिकाः पांशूनां घनीभूतत्वात् रथं चक्रशब्देन, गजं घण्टाक्वणितेन च विजज्ञुरित्याह—

**रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः ।**

**स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥**

सञ्जीविनी—रथ इति । सान्द्रे प्रवृद्धे रजसि रथो रथाङ्गध्वनिना चक्रस्वनेन विजज्ञे ज्ञातः, नागो हस्ती विलोलानां घण्टानां क्वणितेन नादेन विजज्ञे, आत्मपरावबोधः स्वपरविवेकः, योधानामिति शेषः । स्वभर्तॄणां स्वस्वामिनां नामग्रहणान्नामोच्चारणाद्बभूव, रजोऽन्धतया सर्वे स्वं परं च शब्दादेवानुमाय प्रजघ्नुरित्यर्थः ॥ ४१ ॥

अन्वयः—'सैनिकैः' सान्द्रे, रजसि, रथाङ्गध्वनिना, रथः, विजज्ञे, नागः, विलोलघण्टाक्वणितेन, 'विजज्ञे' आत्मपरावबोधः, स्वभर्तृनामग्रहणात्, बभूव ॥ ४१ ॥

सुधा—'सैनिकैः' सान्द्रे = घनीभूते, रजसि = पांशौ, रथाङ्गध्वनिना = रथचक्रशब्देन, रथः = स्यन्दनः, विजज्ञे = ज्ञातः, नागः = गजः, विलोलघण्टाक्वणितेन = चञ्चलघण्टाशब्देन, विजज्ञे इति शेषः । आत्मपरावबोधः = स्वपरविवेकः, स्वभर्तृनामग्रहणात् = स्वस्वामिनामोच्चारणात्, बभूव = अभूत्, सैनिकानामिति शेषः ॥ ४१ ॥

कोशः—'रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे' इति, 'आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे' इति चानेकार्थसंग्रहः ॥ ४१ ॥

समासादि—रथस्याङ्गमिति रथाङ्गं तस्य ध्वनिरिति रथाङ्गध्वनिस्तेन रथाङ्गध्वनिना (त०पु०) । विलोलाश्च ताः घण्टा इति विलोलघण्टाः ( क० धा० ), तासां क्वणितमिति विलोलघण्टाक्वणितं तेन विलोलघण्टाक्वणितेन ( त० पु० ) । नाम्नो ग्रहणमिति नामग्रहणं स्वस्य भर्तेति स्वभर्ता, स्वभर्तुर्नामग्रहणमिति स्वभर्तृनामग्रहणं तस्मात् स्वभर्तृनामग्रहणात् ( त० पु० ) । सह अन्द्यत इति सान्द्रं तस्मिन् सान्द्रे ( त० पु० ) । आत्मा च परश्चेत्यात्मपरौ ( क० धा० ), तयोरवबोध इत्यात्मपरावबोधः ॥ ४१ ॥

व्याकरणम्—विजज्ञे = वि + ज्ञा + कर्मणि लिट् । सान्द्रे = सह + अदि ( बन्धने ) बाहुलकादूरक् ॥ ४१ ॥

वाच्यपरिवर्तनम्—'सैनिकाः' सान्द्रे, रजसि, रथाङ्गध्वनिना, रथं, विजज्ञुः, नागं, विलोलघण्टाक्वणितेन, 'विजज्ञुः' आत्मपरावबोधेन, स्वभर्तृनामग्रहणात्, बभूवे ॥ ४१ ॥

तात्पर्यार्थः—सैनिकाः सान्द्रधूलौ रथं रथचक्रशब्देन ज्ञातवन्तः, गजं चञ्चलघण्टाशब्देन ज्ञातवन्तः, सैनिकानां स्वपरविवेकः स्वस्वामिनां नामग्रहणात् अभूत् ॥ ४१ ॥

भाषार्थः—( सैनिक लोग) निबिड संग्राम में पहियों के शब्द से रथ को जाने, और हाथी को चंचल घंटाओं के शब्द से जाने, ( योधाओं को ) अपने और दूसरे का ज्ञान अपने अपने स्वामी का नाम लेने से हुआ ॥ ४१ ॥

अथ शस्त्रविद्धाश्वहस्त्याद्युत्पन्नो रुधिरप्रवाहः प्रातःकालिकः सूर्योऽभूदित्याह—

**आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य।**
**शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ ४२ ॥**

सञ्जीविनी—आवृण्वत इति। लोचनमार्गमावृण्वतो दृष्टिपथमुपरुन्धत आजौ युद्धे विजृम्भितस्य व्याप्तस्य रज एवान्धकारं तस्य शस्त्रक्षतेभ्यो जन्म यस्य स तथोक्तो रुधिरप्रवाहो बालारुणो बालार्कोऽभूत्, 'अरुणो भास्करेऽपि स्यात्' इत्यमरः। बालविशेषणं रुधिरसावर्ण्यार्थम् ॥ ४२ ॥

अन्वयः—लोचनमार्गम्, आवृण्वतः, आजौ, विजृम्भितस्य, रजोऽन्धकारस्य, शस्त्रक्षताश्वद्विपवीरजन्मा, रुधिरप्रवाहः, बालारुणः, अभूत् ॥ ४२ ॥

सुधा—लोचनमार्गं = नयनपथम्, आवृण्वतः = उपरुन्धतः, आजौ = सङ्ग्रामे, विजृम्भितस्य = व्याप्तस्य, पूर्णस्येति यावत्। रजोऽन्धकारस्य = पांशुरूपतिमिरस्य, निवृत्तय इति शेषः। शस्त्रक्षताश्वद्विपवीरजन्मा = अस्त्रविद्धतुरङ्गगजभटोत्पन्नः, रुधिरप्रवाहः = रक्तप्रवाहः, बालारुणः = बालार्कः, प्रातःकालिकसूर्य इति यावत्। अभूत् = बभूव ॥ ४२ ॥

कोशः—'आजिः क्षणे समक्ष्मायां युधि' इति, 'वीरो जिने भटे श्रेष्ठे' इति चानेकार्थसंग्रहः। 'अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु' इत्यमरः ॥ ४२ ॥

समासादि—लोचनयोर्मार्ग इति लोचनमार्गस्तं लोचनमार्गम् ( त० पु० )। रज एवान्धकार इति रजोऽन्धकारस्तस्य रजोऽन्धकारस्य ( क० धा० )। अश्वाश्च द्विपाश्च वीराश्चेत्यश्वद्विपवीराः ( द्व० ), शस्त्रैः क्षताश्च तेऽश्वद्विपवीरा इति शस्त्रक्षताश्वद्विपवीराः (क० धा०), तेभ्यो जन्म यस्य सः शस्त्रक्षताश्वद्विपवीरजन्मा ( ब० ब्री० )। बालश्चासावरुणश्चेति बालारुणः ( क० धा० )। रुधिरस्य प्रवाह इति रुधिरप्रवाहः ( त० पु० ) ॥ ४२ ॥

व्याकरणम्—आवृण्वतः = आ + वृ + शतृ + श्नुः। विजृम्भितस्य = वि + जृभि + क्तः + इट्। क्षत = क्षण + ( हिंसायाम् ), भावे क्तः ॥ ४२ ॥

वाच्यपरिवर्तनम्—लोचनमार्गम्, आवृण्वतः, आजौ, विजृम्भितस्य, रजोऽन्धकारस्य, शस्त्रक्षताश्वद्विपवीरजन्मना, रुधिरप्रवाहेण, बालारुणेन, अभावि ॥ ४२ ॥

तात्पर्यार्थः—दृष्टिपथमुपरुन्धतो युद्धे व्याप्तस्य रजोरूपान्धकारस्य निवृत्तये आयुधविद्धेभ्यस्तुरङ्गगजयोधेभ्य उत्पन्नो रुधिरप्रवाहः प्रभातकालिकःसूर्योऽभूत् ॥ ४२ ॥

भाषार्थः—आंखों के मार्ग को रोकने वाली ( और ) युद्ध में फैली हुई धूलि रूप अंधकारकी ( निवृत्ति के लिये ) शस्त्रों से विंधे गये घोड़े, हाथी, और योद्धाओं से उत्पन्न रुधिरप्रवाह प्रातः काल का सूर्य हुआ ॥ ४२ ॥

अथ रुधिरेण त्याजितपृथ्वीसम्बन्धः स रेणुः रराजेत्याह—

**स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः।**
**अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाऽऽबभासे ॥ ४३ ॥**

सञ्जीविनी—स इति। क्षतजेन रुधिरेण छिन्नमूलः, त्याजितभूतलसम्बन्ध इत्यर्थः। तस्य क्षतजस्योपरिष्टात्पवनावधूतो वाताहतः स रेणुः अङ्गारशेषस्य हुताशनस्याग्नेः पूर्वोत्थितो धूम इव आबभासे दिदीपे ॥ ४३ ॥

अन्वयः—क्षतजेन, छिन्नमूलः, तस्य, उपरिष्टात्, पवनावधूतः, सः, रेणुः, अङ्गारशेषस्य, हुताशनस्य, पूर्वोत्थितः, धूमः, इव, आबभासे ॥ ४३ ॥

सुधा—क्षतजेन = रुधिरेण, छिन्नमूलः = त्याजितपृथ्वीसंयोगः, तस्य = पूर्वोक्तस्य, रुधिरस्येति यावत्। उपरिष्टात् = उपरि, पवनावधूतः = वायुकम्पितः, सः = पूर्वोक्तः, रेणुः = पांशुः, अङ्गारशेषस्य = उल्मुकमात्रावशिष्टस्य, हुताशनस्य = अग्नेः, पूर्वोत्थितः = प्रागुत्पन्नः, धूमः,

इव = यथा, आबभासे = चकासे ॥ ४३ ॥

कोशः—'रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्' इति, 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इति चामरः। 'अङ्गारमुल्मुके न स्त्री पुलिङ्गस्तु महीसुते' इति मेदिनी ॥ ४३ ॥

समासादि—छिन्नं मूलं यस्य स छिन्नमूलः ( ब० व्री० )। पवनेनावधूत इति पवनावधूतः ( त० पु० )। अङ्गारमेव शेषो यस्य सोऽङ्गारशेषः ( ब० व्री० )। पूर्वम् उत्थित इति पूर्वोत्थितः ॥ ४३ ॥

व्याकरणम्—छिन्न = छिदिर् ( द्वैधीकरणे-इरित् ), क्तः। क्षतजेन = क्षत = जनी + डः। अवधूतः = अव + धूञ् + क्तः । उत्थितः = उद् + स्था + क्तः + इत्वम्। आबभासे = आ + भास + लिट् ॥ ४३ ॥

वाच्यपरिवर्तनम्—क्षतजेन, छिन्नमूलेन, तस्य, उपरिष्टात्, पवनावधूतेन, तेन, रेणुना, अङ्गारशेषस्य, हुताशनस्य, पूर्वोत्थितेन, धूमेन, इव, आबभासे ॥ ४३ ॥

तात्पर्यार्थः—यथाऽङ्गारमात्रावशिष्टस्याग्नेः पूर्वमुत्पन्नो धूमो भाति, तथैव रुधिरेण त्याजितपृथ्वीसम्बन्धस्तस्योपरिष्टात् पवनेन कम्पितः स रेणुर्बभौ ॥ ४३ ॥

भाषाऽर्थः—खून से कटी जड़ वाली ( और ) उसी ( खून ) के ऊपर हवा से चलती हुई वह धूलि, अंगारे मात्र बची हुई आग के ( ऊपर ) पहले उठे हुये धूएं की भांति शोभायमान हुई ॥ ४३ ॥

अथ रथिनोऽपगतशस्त्रप्रहारमूर्च्छाः सन्तः स्वप्रहर्तॄनेव जघ्नुरित्याह—

**प्रहारमूर्च्छाऽपगमे रथस्था यन्तॄनुपालभ्य निवर्तिताश्वान्।**

**यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥**

सञ्जीविनी—प्रहारेति। रथस्था रथिनः प्रहारेण या मूर्च्छा तस्या अपगमे सति 'मूर्च्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्मः' इति कृत्वा निवर्तिताश्वान्यन्तॄन्सारथीनुपालभ्यासाधु कृतमित्यधिक्षिप्य पूर्वं यैः स्वयं सादिता हताः लक्षितपूर्वकेतून्, पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञातानित्यर्थः। तानेव सामर्षतया सकोपत्वेन हेतुना निजघ्नुः प्रजह्रुः ॥ ४४ ॥

अन्वयः—रथस्थाः, प्रहारमूर्च्छाऽपगमे, निवर्तिताश्वान्, यन्तॄन्, उपालभ्य, यैः, सादिताः, लक्षितपूर्वकेतून्, तान्, एव, सामर्षतया, निजघ्नुः ॥ ४४ ॥

सुधा—रथस्थाः = रथिनः, रथारोहिण इति यावत्। प्रहारमूर्च्छाऽपगमे = शस्त्रप्रहारजन्यमोहविगते, सतीति शेषः। निवर्तिताश्वान् = 'सारथिभिर्मूर्च्छितानां युद्धाद्बहिर्नीत्वा संरक्षणं कार्यमिति तद्धर्मः' इति ज्ञात्वा प्रत्यावर्तिततुरगान्, यन्तॄन् = सारथीन्, उपाकृत्य = तिरस्कृत्य, त्वया न समीचीनं कृतमिति धिक्कृत्येति यावत्। यैः = पूर्वं यैः रथिभिः, सादिताः = प्रहृताः, लक्षितपूर्वकेतून् = प्राग्दृष्टध्वजान्, ध्वजैः प्रत्यभिज्ञातानिति यावत्। तान् = पूर्वोक्तान्, एव, स्वप्रहर्तॄन्रथिन एवेति यावत्। सामर्षतया = सक्रोधत्वेन, निजघ्नुः = प्रहृतवन्तः ॥ ४४ ॥

कोशः—'मूर्च्छा तु कश्मलं मोहो' इति, 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इति चामरः ॥ ४४ ॥

समासादि—प्रहारेण मूर्च्छेति प्रहारमूर्च्छा तस्या अपगमस्तस्मिन् प्रहारमूर्च्छाऽपगमे ( त० पु० )। रथे तिष्ठन्तीति रथस्थाः। निवर्तिता अश्वा यैस्ते निवर्तिताश्वास्तान् निवर्तिताश्वान् (ब० व्री०) लक्षिताः पूर्वं केतवो येषां ते लक्षितपूर्वकेतवस्तान् लक्षितपूर्वकेतून् ( ब० व्री० )। अमर्षेण सह वर्तमानः सामर्षस्तस्य भावः सामर्षता तया सामर्षतया ॥ ४४ ॥

व्याकरणम्—अपगमे = अप + गम् + 'ग्रहवृदृनिश्चिगमश्च' इत्यनेन अप् । उपालभ्य = उप + आ + लभ + ल्यप् । सादिताः = षद् + णिच् = क्तः । निजघ्नुः = नि + हन् + लिट् ॥ ४४ ॥

वाच्यपरिवर्तनम्—रथस्थैः, प्रहारमूर्च्छाऽपगमे, 'सति' निवर्तिताश्वान्, यन्तॄन्, उपालभ्य, यैः, सादितैः, लक्षितपूर्वकेतवः, ते, एव, सामर्षतया, निजघ्निरे ॥ ४४ ॥

तात्पर्यार्थः—रथारोहिणो योद्धारः शस्त्रप्रहारजन्यमूर्च्छाविनाशे सति प्रत्यावर्तिताश्वान् सारथीन् तिरस्कृत्य, पूर्वं यैः रथारोहिभिः प्रहारं कृताः केतुभिः प्रत्यभिज्ञातान् तानेव सकोपत्वेन प्रजह्नुः ॥ ४४ ॥

भाषाऽर्थः—रथ से लड़ने वाले प्रहार की मूर्च्छा मिट जाने पर, घोड़े को लौटाने वाले सारथियों को तिरस्कार कर पहले जिन ( रथ के योद्धाओं ) ने प्रहार किया था उन्हीं को ध्वजाओं से पहचान कर गुस्सा होने के कारण प्रहार करने लगे ॥ ४४ ॥

अथ सैनिकानां छिन्ना अपि शरा निजवेगबलेन लक्ष्यं प्रापुरित्याह—

**अप्यर्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।**

**संप्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥**

सञ्जीविनी—अपीति । अर्धश्चासौ मार्गश्च अर्धमार्गस्तस्मिन्नर्धमार्गे परेषां बाणैर्लूनाश्छिन्ना अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शरा आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिर्लोहाग्रवद्भिः, 'सस्य बाणाग्रयोः फलम्' इति विश्वः । पूर्वार्धभागैः शृणातीति शरुः तस्मै हितं शरव्यं लक्ष्यम्, "उगवादिभ्यो यत्" इति यत्प्रत्ययः, 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः । संप्रापुरेव, न तु मध्ये पतिता इत्यर्थः ॥ ४५ ॥

अन्वयः—हस्तवतां, धनुर्भृतां, पृषत्काः, अर्धमार्गे, परबाणलूनाः, अपि, आत्मजवानुवृत्त्या, फलिभिः, पूर्वार्द्धभागैः, शरव्यम्, एव, संप्रापुः ॥ ४५ ॥

सुधा—हस्तवतां = कृतहस्तानां, शीघ्रबाणत्यागिनामित्यर्थः । धनुर्भृतां = चापधारिणां, पृषत्काः = बाणाः, अर्धमार्गे = अर्धपथि, परबाणलूनाः = शत्रुशरच्छिन्नाः, अपि, आत्मजवानुवृत्त्या = स्वशीघ्रगत्या, फलिभिः = लोहाग्रवद्भिः, पूर्वार्द्धभागैः = पूर्वार्द्धांशैः, शरव्यं = लक्ष्यम्, एव, सम्प्रापुः = सम्प्राप्तवन्तः, न तु मध्ये पतिता इत्यर्थः ॥ ४५ ॥

कोशः—'फलं हेतुकृते जातीफले फलकसस्ययोः' इत्यनेकार्थसंग्रहः । 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः ॥ ४५ ॥

समासादि—अर्धश्चासौ मार्गश्चेत्यर्धमार्गस्तस्मिन् अर्धमार्गे ( क० धा० ) । परेषां बाणा इति परबाणास्तैर्लूना इति परबाणलूनाः ( त० पु० ) । धनुर्बिभ्रतीति धनुर्भृतस्तेषां धनुर्भृताम् । आत्मनो जवस्तस्यानुवृत्तिस्तया आत्मजवानुवृत्त्या ( त० पु० ) । पूर्वस्यार्द्धभाग इति पूर्वार्द्धभागस्तैः पूर्वार्द्धभागैः (त० पु०) । शृणातीति शरुस्तस्मै हितं शरव्यम् ॥४५॥

व्याकरणम्—लूनाः = लूञ् + क्तः । पृषत्काः = पृषत् + संज्ञायां कन् । सम्प्रापुः = सम् + प्र + आप् + लिट् । शरव्यम् = शरु + यत् ॥ ४५ ॥

वाच्यपरिवर्तनम्—हस्तवतां, धनुर्भृतां, पृषत्कैः, अर्धमार्गे, परबाणलूनैः, अपि, आत्मजवानुवृत्त्या, फलिभिः, पूर्वार्द्धभागैः, शरव्यम्, एव, सम्प्रापे ॥ ४५ ॥

तात्पर्यार्थः—शीघ्रबाणत्यागिनां धनुर्धारिणां बाणाः अर्धमार्गे शत्रुबाणछिन्ना अपि स्वशीघ्रगत्या लोहाग्रवद्भिः पूर्वस्य अर्द्धभागैर्लक्ष्यं सम्प्रापुः ॥ ४५ ॥

भाषाऽर्थः—शीघ्र बाण चलाने वाले धनुषधारियों के बाण आधे मार्ग में शत्रुओं के बाणों से छिन्न हुये भी अपनी शीघ्रगति के कारण पूर्व के अर्द्ध भाग से ही लक्ष्य को प्राप्त किये ॥ ४५ ॥

अथ हस्तिपकानामन्योन्ययुद्धे शरैश्छिन्नान्यपि शिरांसि दीर्घकालेन पतितानीत्याह—

**आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः ।**

**हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥**

सञ्जीविनी—आधोरणेति । गजसंनिपाते गजयुद्धे निशितैरत एव क्षुराग्रैः क्षुरस्याग्रमिवाग्रं

येषां तैश्चक्रैरायुधविशेषैर्हतानि छिन्नान्यपि श्येनानां पक्षिविशेषाणाम्, 'पक्षी श्येनः' इत्यमरः। नखाग्रकोटिषु व्यासक्ताः केशा येषां तानि आधोरणानां हस्त्यारोहिणाम्, 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः। शिरांसि चिरेण पेतुः पतितानि, शिरःपातात्प्रागेवारुह्य पश्चादुत्पततां पक्षिणां नखे केशसङ्गश्चिरपातहेतुरिति भावः॥ ४६॥

अन्वयः—गजसन्निपाते, निशितैः, क्षुराग्रैः, चक्रैः, हृतानि, अपि, श्येननखाग्रकोटिव्यासक्तकेशानि, आधोरणानां, शिरांसि, चिरेण, पेतुः॥ ४६॥

सुधा—गजसन्निपाते = हस्तियुद्धे, निशितैः = तीक्ष्णैः, क्षुराग्रैः = क्षुरमुखसदृशैः, चक्रैः = आयुधविशेषैः, हृतानि = छिन्नानि, पृथक्कृतानीति यावत्। अपि, श्येननखाग्रकोटिव्यासक्तकेशानि = शशादननखराग्रश्रेणिसंलग्नकचानि, आधोरणानां = हस्तिपकानां, शिरांसि = उत्तमाङ्गानि, चिरेण = दीर्घकालेन, पेतुः = पतितानि॥ ४६॥

कोशः—'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति मेदिनी। 'कचः केशः शिरोरुहः' इति, 'अथ शशादनः। पत्त्री श्येनः' इति चामरः॥ ४६॥

समासादि—गजानां सन्निपाता इति गजसन्निपातास्तैर्गजसन्निपातैः (त० पु०)। क्षुरस्याग्रमिवाग्रं येषां ते क्षुराग्रास्तैः क्षुराग्रैः (ब० व्री०)। श्येनानां नखानीति श्येननखानि (त० पु०), तेषामग्रकोटिषु व्यासक्ताः केशा येषां तानि श्येननखाग्रकोटिव्यासक्तकेशानि (ब० व्री०)॥ ४६॥

व्याकरणम्—सन्निपाते = सम् + नि + पत् = घञ्। निशितैः = नि + शिञ् (निशाने), क्तः। व्यासक्त = वि + आ + षञ्ज (सङ्गे), क्तः। पेतुः = पत् = लिट्॥ ४६॥

वाच्यपरिवर्तनम्—गजसन्निपाते, निशितैः, क्षुराग्रैः, चक्रैः, हृतैः, अपि, श्येननखाग्रकोटिव्यासक्तकेशानि, आधोरणानां, शिरोभिः, चिरेण, पेते॥ ४६॥

तात्पर्यार्थः—गजयुद्धे तीक्ष्णैर्क्षुरधारासदृशैः शस्त्रविशेषैः श्येनपक्षिनखाग्रकोटिषु संलग्नकेशानि हस्तिपकानामुत्तमाङ्गानि दीर्घकालेन पेतुः॥ ४६॥

भाषार्थः—हाथियों के संग्राम में क्षुरे की धार की नाई तेज धार वाले चक्रों से कटे हुये, बाज पक्षी के नखों के अग्रकोटि में लगे केश के कारण हाथी पर चढ़ने वालों के शिर देर से गिरे॥ ४६॥

अथाश्वारोहिणो योधाः प्रहारेऽशक्तं शत्रुं जीवन्तमेव वाञ्छन्ति स्मेत्याह—

**पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी।**
**तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष॥ ४७॥**

सञ्जीविनी—पूर्वमिति। पूर्वं प्रथमं प्रहर्ताऽश्वसादी तौरङ्गिकः प्रतिप्रहारेऽक्षममशक्तं तुरङ्गमस्कन्धे निषण्णदेहम्, मूर्च्छितमित्यर्थः। रिपुं भूयो न जघान पुनर्न प्रजहार किन्तु प्रत्याश्वसन्तं पुनरुज्जीवन्तमाचकाङ्क्ष, "नायुधव्यसनं प्राप्तं नार्तं नातिपरिक्षतम्" इति निषेधादिति भावः॥ ४७॥

अन्वयः—पूर्वं, प्रहर्ता, अश्वसादी, प्रतिप्रहाराक्षमं, तुरङ्गमस्कन्धनिषण्णदेहं, रिपुं, भूयः, न, जघान, 'किन्तु' प्रत्याश्वसन्तम्, आचकाङ्क्ष॥ ४७॥

सुधा—पूर्वं = प्राक्, प्रहर्ता = प्रहारकः, अश्वसादी = तुरगारोही, प्रतिप्रहाराक्षमं = प्रतिप्रहारासमर्थं, तुरङ्गमस्कन्धनिषण्णदेहं = अश्वांसन्यस्तशरीरं, मूर्च्छितमित्यर्थः। रिपुं = शत्रुं, भूयः = पुनः, न जघान = न हतवान्, 'किन्तु' प्रत्याश्वसन्तं = पुनरुज्जीवन्तम्, आचकाङ्क्ष = वाञ्छति स्म॥ ४७॥

कोशः—'घोटके वीतितुरगतुरङ्गाश्वतुरंगमाः' इति, 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इति चामरः॥ ४७॥

समासादि—प्रहरणं प्रहारः, प्रहारं प्रहारं प्रतीति प्रतिप्रहारम् (अ० भा०), तस्मिन्नक्षम-

मिति प्रतिप्रहाराक्षमम् ( त० पु० ) । सीदत्यवश्यमिति सादी, अश्वस्य सादीत्यश्वसादी ( त० पु० )। तुरेण गच्छतीति तुरङ्गमः, तस्य स्कन्ध इति तुरङ्गमस्कन्धः ( त० पु० ), तुरङ्गमस्कन्धे निषण्णो देहो यस्य तं तुरङ्गमस्कन्धनिषण्णदेहम् ( ब० व्री० ) । प्रत्याश्वसितीति प्रत्याश्वसन् तं प्रत्याश्वसन्तम् ॥ ४७ ॥

व्याकरणम्-प्रहर्ता = प्र + हृञ् + तृच् । जघान = हन + लिट् । अश्वसादी = अश्व + षद्लृ + 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यनेन णिनिः । तुरङ्गम = तुर + गम् + 'गमेश्च' इति वा डित, 'अरुर्द्विषदजन्तस्य मुम्' इत्यनेन मुम् । निषण्ण = नि + षद् — क्तः । प्रत्याश्वसन्तं = प्रति + आ + श्वस ( प्राणने ), शतृ । आचकाङ्क्ष = आ + काक्षि + लिट् ॥ ४७ ॥

वाच्यपरिवर्तनम्—पूर्वं, प्रहर्त्रा, अश्वसादिना, प्रतिप्रहाराक्षमः, तुरङ्गमस्कन्धनिषण्णदेहः, रिपुः, भूयः, न, जघ्ने, 'किन्तु' प्रत्याश्वसन्, आचकाङ्क्षे ॥ ४७ ॥

तात्पर्यार्थः—प्राक् प्रहारकर्ता अश्वारोही प्रतिप्रहारेऽशक्तं मूर्च्छितं शत्रुं पुनर्न जघान, किन्तु तस्य पुनरुज्जीवनं वाञ्छति स्म ॥ ४७ ॥

भाषाऽर्थः—पहले प्रहार करने वाले घोड़सवार ने, प्रहार करने में असमर्थ घोड़े के कन्धे पर शरीर रक्खे ( अर्थात् मूर्च्छित हुये ) शत्रु पर फिर प्रहार नहीं किया, किन्तु ( उसके ) जीने की इच्छा किया ॥ ४७ ॥

अथ गजाः स्वदन्तेषु खड्गप्रहारजन्यमग्निं शुण्डादण्डगतजलकणैः शान्तं चक्रुरित्याह—

**तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः ।**
**उद्यन्तमग्निं शमयाम्बभूवुर्गजा विविग्नाः करशीकरेण ॥ ४८ ॥**

सञ्जीविनी—तनुत्यजामिति । तनुत्यजां तनुषु निःस्पृहाणामित्यर्थः । वर्मभृतां कवचिनां सम्बन्धिभिर्बृहत्सु दन्तेषु पतद्भिरत एव विकोशैः पिधानादुद्धृतैः, 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमरः । असिभिः खड्गैरुद्यन्तमुत्थितमग्निं विविग्ना भीता गजाः करशीकरेण शुण्डादण्डजलकणेन शमयाम्बभूवुः शान्तं चक्रुः ॥ ४८ ॥

अन्वयः—तनुत्यजां, वर्मभृतां, बृहत्सु, दन्तेषु, पतद्भिः, विकोशैः, असिभिः, उद्यन्तम्, अग्निं, विविग्नाः, गजाः, करशीकरेण, शमयाम्बभूवुः ॥ ४८ ॥

सुधा—तनुत्यजां = शरीरत्यागिनां, देहेषु निःस्पृहाणामिति यावत् । वर्मभृतां = कवचधारिणां, बृहत्सु = महत्सु, दन्तेषु = दशनेषु, पतद्भिः = निपतद्भिः, विकोशैः = पिधानादुद्धृतैः, खड्गकोशान्निर्गतैरित्यर्थः । असिभिः = खड्गैः, उद्यन्तम् = उद्गतम्, उत्थितमिति यावत्, अग्निं = वह्निं, विविग्नाः = भीताः, गजाः = हस्तिनः, करशीकरेण = वमथुना, शुण्डादण्डगतजलकणेनेति यावत् । शमयाम्बभूवुः = शान्तं व्यदधुः ॥ ४८ ॥

कोशः-'कोशोऽस्त्री कुड्मले पात्रे पेश्यां शब्दादिसंग्रहे । जातिकोशेऽर्थसंघाते दिव्ये खड्गपिधानके' इति मेदिनी । 'असिः खड्गे नदीभिदि' इति हैमः । 'वमथुः करशीकरः' इत्यमरः ॥ ४८ ॥

समासादि—तनुं त्यजन्तीति तनुत्यजस्तेषां तनुत्यजाम् । वर्म बिभ्रतीति वर्मभृतस्तेषां वर्मभृताम् । करस्य शीकर इति करशीकरस्तेन करशीकरेण ( त० पु० ) ॥ ४८ ॥

व्याकरणम्—पतद्भिः = पत + शतृ । उद्यन्तम् = उत् + इण् + शतृ । शमयाम्बभूवुः = शम् + णिच् + आम् + भू + लिट् ॥ ४८ ॥

वाच्यपरिवर्तनम्—तनुत्यजां, वर्मभृतां, बृहत्सु, दन्तेषु, पतद्भिः, विकोशैः, असिभिः, उद्यन्, अग्निः, विविग्नैः, गजैः, करशीकरेण, शमयाम्बभूवे ॥ ४८ ॥

तात्पर्यार्थः—शरीरेषु निःस्पृहाणां कवचधारिणां सम्बन्धिभिः महत्सु हस्तिदशनेषु विधानादुद्धृतैःखड्गैरुद्भूतमग्निं, भीतास्ते गजाः शुण्डादण्डगतजलकणेन,शान्तं व्यदधुः ॥४८॥

भाषाऽर्थः—देह को त्यागने वाले ( और ) कवच धारण करनेवाले ( योधाओं ) ने बड़े

दांतो में, मियाने से नीकली हुई तलवारों के लगने से उठी आग को, डरे हुये हाथियों ने सूंडके जल से शान्ति किया ॥४८॥

अथ रणभूमिर्यमस्य पानभूमिरिव भाति स्मेत्याह—

**शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव ।**
**रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥४९॥**

सञ्जीविनी—शिलीमुखेति । शिलीमुखैर्बाणैरुत्कृत्तानि शिरांस्येव फलानि तैराढ्या सम्पन्ना च्युतैर्भ्रष्टैः शिरांसि त्रायन्त इति शिरस्त्राणि 'शीर्षण्यं च शिरस्त्रेऽथ' इत्यमरः । तैश्चषकोत्तरा चषकः पानपात्रमुत्तरं यस्यां सेव, 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । शोणितान्येव मद्यं तस्य कुल्याः प्रवाहा यस्यां सा, 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । रणक्षितिर्युद्धभूमिर्मृत्योः पानभूमिरिव रराज ॥ ४९ ॥

अन्वयः—शिलीमुखोत्कृत्तशिरःफलाढ्या, च्युतैः, शिरस्त्रैः, चषकोत्तरा, इव, शोणितमद्यकुल्या, रणक्षितिः, मृत्योः, पानभूमिः, इव, रराज ॥ ४९ ॥

सुधा—शिलीमुखोत्कृत्तशिरःफलाढ्या = बाणोच्छिन्नशिरःरूपफलसम्पन्ना, च्युतैः = भ्रष्टैः, पतितैरिति यावत् । शिरस्त्रैः = शीर्षण्यैः, चषकोत्तरा = पानपात्रोत्तरा, इव = यथा, शोणितमद्यकुल्या = रुधिररूपमदिराप्रवाहा, रणक्षितिः = समरभूमिः, मृत्योः = यमस्य, पानभूमिः = मद्यपानस्थानम्, इव, रराज = शुशुभे ॥ ४९ ॥

कोशः—'अलिबाणौ शिलीमुखौ' इत्यमरः । 'चषकोऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः' इति, 'रणः क्वाणे रणे पुंसि समरे पुंनपुंसकम्' इति, 'मृत्युर्ना मरणे यमे' इति च मेदिनी ॥४९॥

समासादि—शिला शल्यं मुखं येषां ते शिलीमुखाः, शिलीमुखैरुत्कृत्तानि शिरांसि एव फलानि येषां तानि शिलीमुखोत्कृत्तशिरःफलानि ( ब० व्री० ), तैः आढ्या इति शिलीमुखोत्कृत्तशिरःफलाढ्या ( त० पु० ) । शिरांसि त्रायन्त इति शिरस्त्राणि तैः शिरस्त्रैः । चषक उत्तरं यस्यां सा चषकोत्तरा ( ब० व्री० ) । रणस्य क्षितिरिति रणक्षितिः ( त० पु० ) । शोणितान्येव मद्यानीति शोणितमद्यानि तेषां कुल्या यस्यां सा शोणितमद्यकुल्या (ब०व्री०) । पानस्य भूमिरिति पानभूमिः ( त० पु० ) ॥ ४९ ॥

व्याकरणम्—उत्कृत्त = उत् + कृता ( छेदने ), क्तः । चषक = चष ( भक्षणे ), क्वुन् । ( उणादिः ) । रराज = राज् + लिट् ॥ ४९ ॥

वाच्यपरिवर्तनम्—शिलीमुखोत्कृत्तशिरःफलाढ्यया, च्युतैः, शिरस्त्रैः, चषकोत्तरया, इव, शोणितमद्यकुल्यया, रणक्षित्या, मृत्योः, पानभूम्या, इव, रेजे ॥ ४९ ॥

तात्पर्यार्थः—यथा यमस्य पानभूमिः राजते, तथा बाणोच्छिन्नोत्तमाङ्गरूपफलैः सम्पन्ना पतितैः शीर्षण्यैः पानपात्रोत्तरा इव रुधिररूपमद्यप्रवाहा समरभूमिर्यमस्य मद्यपानभूमिरिव रराज ॥ ४९ ॥

भाषाऽर्थः—बाणोंके अग्रभाग से कटे हुये शिररूपी फलोंसे संपन्न, ( और ) गिरे हुये युद्धके टोप रूपी कटोरे सामने धरा हुई, ( तथा ) रुधिररूपी मद्यकी नदीवाली युद्धभूमि, यम-( मदिरा ) पीने की भूमि की नाई शोभित हुई ॥ ४९ ॥

अथ शृगाली केयूराग्रेण हततालुदेशा सती बाहुखण्डं तत्याजेत्याह—

**उपान्तयोर्निष्कुशितं विहङ्गैराक्षिप्य तेभ्यः पिशितप्रियाऽपि ।**
**केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार ॥ ५० ॥**

सञ्जीविनी—उपान्तयोरिति । उपान्तयोः प्रान्तयोर्विहङ्गैः पक्षिभिर्निष्कुशितं खण्डितम्, "इण्निष्ठायाम्" इतीडागमः । भुजच्छेदं भुजखण्डं तेभ्यो विहङ्गेभ्य आक्षिप्याच्छिद्य पिशितप्रिया मांसप्रियाऽपि शिवा क्रोष्ट्री 'शिवः कीलः शिवा क्रोष्ट्री' इति विश्वः । केयूरकोट्या-

ऽङ्गदाग्रेण क्षतस्तालुदेशो यस्याः सा सती अपाचकारापसारयामास । किरतेः करोतेर्वा लिट् ॥ ५० ॥

अन्वयः--विहङ्गैः, उपान्तयोः, निष्कुषितं, भुजच्छेदं, तेभ्यः, आक्षिप्य, पिशितप्रिया, अपि, शिवा, केयूरकोटिक्षततालुदेशा, 'सती' अपाचकार ॥ ५० ॥

सुधा--विहङ्गैः = पक्षिभिः, उपान्तयोः = प्रान्तयोः, निष्कुषितं = खण्डितं, चञ्चुहतमित्यर्थः। भुजच्छेदं = बाहुखण्डं, तेभ्यः = विहङ्गेभ्यः, पक्षिभ्य इति यावत् । आक्षिप्य = आच्छिद्य, पिशितप्रिया = मांसप्रिया, अपि, मांसलोभकारिणीत्यर्थः । शिवा = क्रोष्ट्री, श्रृगालीति यावत् । केयूरकोटिक्षततालुदेशा = अङ्गदाग्रहतकाकुदस्थाना, सतीति शेषः । अपाचकार = अपसारयामास, तत्याजेत्यर्थः ॥ ५० ॥

कोशः--'खगे विहङ्गविहगविहङ्गमविहायसः' इति, 'पिशितं तरलं मांसं पललं क्रव्यमामिषम्' इति, 'तालु काकुदम्' इति चामरः । 'शिवः किल शिवा क्रोष्ट्री भवेदामलकी शिवा' इति शाश्वतः ॥ ५० ॥

समासादि--अन्तस्य समीपमित्युपान्तं, तयोरुपान्तयोः ( अ०भा० ) । विहायसि गच्छन्तीति विहङ्गास्तैर्विहङ्गैः । पिशितं प्रियं यस्याः सा पिशितप्रिया ( ब० व्री० ) । तालुनो देश इति तालुदेशः (त०पु०), केयूरस्य कोट्या क्षतः तालुदेशो यस्याः सा केयूरकोटिक्षततालुदेशा ( ब० व्री० ) । भुजयोश्छेद इति भुजच्छेदस्तं भुजच्छेदम् ( त० पु० ) ॥ ५० ॥

व्याकरणम्--निष्कुषितं = निर् + कुष + क्तः । विहङ्गैः = विहायस् + गम् + 'गमेश्च'इत्यनेन खच् , 'विहायसो विह च' इति वार्तिकेन विहादेशः, 'खच्च डिद्वा' इति डित् । आक्षिप्य = आ + क्षिप ( प्रेरणे ),क्त्वा, ल्यबादेशः । अपाचकार = अप + आ + कृ + लिट् ॥ ५० ॥

वाच्यपरिवर्तनम्--विहङ्गैः, उपान्तयोः, निष्कुषितं, भुजच्छेदं, तेभ्यः, आक्षिप्य, पिशितप्रियया, अपि, शिवया, केयूरकोटिक्षततालुदेशया, 'सत्या' अपाचक्रे ॥ ५० ॥

तात्पर्यार्थः--पक्षिभिः प्रान्तयोर्खण्डितं बाहुखण्डं तेभ्यः पक्षिभ्य आच्छिद्य मांसप्रियाऽपि क्रोष्ट्री अङ्गदाग्रेण क्षततालुप्रदेशा सती तं बाहुखण्डम् अत्यजत् ॥ ५० ॥

भाषार्थः--पक्षियोंसे दोनों तरफ चोंच मारे हुये हाथके टुकड़े उन्हीं पक्षियों से गिरवा कर मांसका लोभिनी सियारिनने भुजबंदके अग्रभागसे तालू छिला जानेके कारण उस ( हाथके टुकड़े ) को छोड़ दिया ॥ ५० ॥

अथ कश्चिद्वीरः सद्यो देवत्वं प्राप्य सदेवाङ्गनः सन्युद्धे स्वं कबन्धं ददर्शेत्याह--

**कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।**
**वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥ ५१ ॥**

सञ्जीविनी--कश्चिदिति । द्विषतः खड्गेन हृतोत्तमाङ्गश्छिन्नशिराः, 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । कश्चिद्वीरः सद्यो विमानप्रभुतां विमानाधिपत्यं, देवत्वमित्यर्थः । उपेत्य प्राप्य वामाङ्गसंसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना यस्य स तथोक्तः सन् । अग्निपुराणे "वराप्सरःसहस्राणि भूपमायोधने हतम् । त्वरितान्युपधावन्ति मम भर्तायमेति च ॥" इति समरे नृत्यत्स्वं निजं कबन्धं विशिरस्कं कलेवरं ददर्श, 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्ध कलेवरम्' इत्यमरः ॥ ५१ ॥

अन्वयः--द्विषत्खड्गहृतोत्तमाङ्गः, कश्चित् , सद्यः, विमानप्रभुताम्, उपेत्य, वामाङ्गसंसक्तसुराङ्गनः, 'सन्' समरे, स्वं, नृत्यत्कबन्धं, ददर्श ॥ ५१ ॥

सुधा--द्विषत्खड्गहृतोत्तमाङ्गः = शत्रुकृपाणछिन्नशिराः,कश्चित् = भटः, सद्यः = तत्क्षणे, विमानप्रभुताम् = देवयानस्वामित्वं, देवत्वमिति यावत् । उपेत्य = प्राप्य, वामाङ्गसंसक्तसुराङ्गनः = सव्योत्सङ्गदेवसुन्दरीयुक्तः, सन्निति शेषः । समरे = रणे, स्वम् = आत्मीयं, नृत्यत्क-

बन्धं = नृत्यं कुर्वतशिरोरहितशरीरं, नृत्यद्रुण्डमिति यावत्। ददर्श = अवलोकयामास ॥ ५१ ॥

कोशः--'सद्यः सपदि तत्क्षणे' इति, 'देवयानं विमानोऽस्त्री' इति चामरः। 'कबन्धं सलिले रुण्डे कबन्धो राहुरक्षसोः' इत्यनेकार्थसंग्रहः ॥ ५१ ॥

समासादि--द्विषतो खड्ग इति द्विषत्खड्गः (त० पु०), तेन हतमुत्तमाङ्गं यस्य स द्विषत्खड्गहतोत्तमाङ्गः (ब० व्री०)। प्रभोर्भावः प्रभुता, विमानस्य प्रभुतेति विमानप्रभुता तां विमानप्रभुताम् (त० पु०)। वामञ्च तदङ्गमिति वामाङ्गम् (क० धा०), तस्मिन् संसक्ता सुराङ्गना यस्य स वामाङ्गसंसक्तसुराङ्गनः (ब० व्री०)। कं मुखं बध्यते छिद्यते अस्मादिति कबन्धः, नृत्यश्चासौ कबन्ध इति नृत्यत्कबन्धस्तं नृत्यत्कबन्धम् (क० धा०) ॥ ५१ ॥

व्याकरणम्--हत = हन् + क्तः। उपेत्य = उप + इण् + ल्यप्। संसक्त = सम् + षञ्ज् + क्तः। नृत्यत् = नृती (नर्तने), शतृ। कबन्धं = क + बन्ध् (बन्धने), घञ्। ददर्श = दृशिर् + लिट् ॥ ५१ ॥

वाच्यपरिवर्तनम्--द्विषत्खड्गहतोत्तमाङ्गेन, केनचित्, सद्यः, विमानप्रभुताम्, उपेत्य, वामाङ्गसंसक्तसुराङ्गनेन, 'सता' समरे, स्वः, नृत्यत्कबन्धः, ददृशे ॥ ५१ ॥

तात्पर्यार्थः--शत्रोर्खड्गेन छिन्नशिराः कश्चिद्वीरस्तत्क्षणे देवत्वं सम्प्राप्य वामाङ्गे देवसुन्दरीसहितः सन् रणे निजं नृत्यन्तं रुण्डं दृष्टवान् ॥ ५१ ॥

भाषाऽर्थः--शत्रुओं की तलवारसे कटा हुआ शिर वाला कोई योद्धा, उसी क्षणमें विमान की प्रभुता (देवतापन) को पाकर बाएं अंगमें देवसुन्दरीके सहित युद्धमें अपने नाचते हुये कबन्ध (मुड़कटे धड़) को देखने लगा ॥ ५१ ॥

अथ कौचिद्वीरौ परस्परसारथ्यश्वमरणानन्तरं बाहुयुद्धेन मृतावित्याह--

**अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित्।**
**व्यश्वौ गदाव्यायतसम्प्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ ॥ ५२ ॥**

सञ्जीविनी--अन्योन्येति। कौचिद्वीरावन्योन्यस्य सूतयोः सारथ्योरुन्मथनान्निधनात्तावेव सूतौ रथिनौ योद्धारौ चाभूताम्, तावेव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतो दीर्घः सम्प्रहारो युद्धं ययोस्तावभूताम्, ततो भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्दनं निष्ठा नाशो ययोस्तौ बाहुयुद्धसक्तावभूताम्, 'निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः ॥ ५२ ॥

अन्वयः--कौचित्, अन्योन्यसूतोन्मथनात्, तौ, एव, सूतौ, रथिनौ, च, अभूताम्, व्यश्वौ, 'सन्तौ' गदाव्यायतसम्प्रहारौ, 'अभूताम्' भग्नायुधौ, 'सन्तौ' बाहुविमर्दनिष्ठौ, 'अभूताम्'॥५२॥

सुधा--कौचित् = वीरा, अन्योन्यसूतोन्मथनात् = परस्परसारथिमरणात्, तौ = पूर्वोक्तौ, एव, सूतौ = सारथी, रथिनौ = स्यन्दनारोहिणौ, च, अभूतां = बभूवतुः, व्यश्वौ = नष्टतुरगौ, सन्ताविति शेषः। गदाव्यायतसम्प्रहारौ = गदादीर्घयुद्धकर्तारौ, अभूतामिति शेषः। भग्नायुधौ = नष्टगदौ, सन्ताविति शेषः। बाहुविमर्दनिष्ठौ = मरणावधिभुजयुद्धोद्यतौ, अभूतामिति शेषः ॥ ५२ ॥

कोशः--'सूतस्तु सारथौ तक्ष्णि क्षत्रियाद् ब्राह्मणीसुते। बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु' इति मेदिनी ॥ ५२ ॥

समासादि--सूतयोरुन्मथनमिति सूतोन्मथनम्, अन्योन्यस्य सूतोन्मथनमित्यन्योन्यसूतोन्मथनं तस्मादन्योन्यसूतोन्मथनात् (त० पु०)। विगता अश्वा ययोस्तौ व्यश्वौ (ब० व्री०)। गदाभ्यां व्यायतः सम्प्रहारो ययोस्तौ गदाव्यायतसम्प्रहारौ (ब० व्री०)। भग्नमायुधं ययोस्तौ भग्नायुधौ (ब० व्री०)। बाहोर्विमर्द इति बाहुविमर्दः (त० पु०), तेन निष्ठा ययोस्तौ बाहुविमर्दनिष्ठौ (ब० व्री०) ॥ ५२ ॥

व्याकरणम्--उन्मथनात् = उद् + मन्थ् + ल्युट्। व्यायत = वि + आ + यम् + क्तः।

सम्प्रहार = सम् + प्र + हृञ् + घञ् ॥ ५२ ॥

वाच्यपरिवर्तनम्--काभ्याञ्चित्, अन्योन्यसूतोन्मथनात्, ताभ्याम्, एव, सूताभ्यां, रथिभ्यां, च, अभावि, व्यश्वाभ्यां, 'सद्भ्याम्' गदाव्यायतसम्प्रहाराभ्याम्, 'अभावि' भग्नायुधाभ्यां, 'सद्भ्याम्' बाहुविमर्दनिष्ठाभ्याम्, 'अभावि' ॥ ५२ ॥

तात्पर्यार्थः—कौचिद्वीरौ परस्परसारथिमरणात् तावेव सारथी रथिनौ चाभूताम्, नष्टाश्वौ सन्तौ दीर्घगदायुद्धासक्तावभूताम्, पुनर्नष्टगदौ सन्तौ बाहुयुद्धेन नाशावभूताम् ॥५२॥

भाषार्थः--कोई दो योधा आपसमें सारथियोंके मारे जाने के कारण वही सारथी और रथी हुये, घोड़े का नाश होने से ( वहीं ) गदाओंके बड़े प्रहारक हुये, फिर आयुध (गदा) के टूटने से बाहुयुद्ध से नाश हुये ॥ ५२ ॥

अथ कयोश्चिद्वीरयोः देवत्वेऽपि एकाप्सरःप्रार्थितयोर्विवादो बभूवेत्याह—

**परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।**
**अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ५३ ॥**

सञ्जीविनी—परस्परेणेति । परस्परेणान्योन्यं क्षतयोः क्षततन्वोः समकालमेककाले यथा तथोत्क्रान्तवाय्वोर्युगपदुद्गतप्राणयोः एकैवाप्सराः प्रार्थिता याभ्यां तयोरेकाप्सरःप्रार्थितयोः, प्रार्थितैकाप्सरसोरित्यर्थः । "वाहिताग्न्यादिषु" इति परनिपातः । अथवा एकस्यामप्सरसि प्रार्थितं प्रार्थना ययोरिति विग्रहः । 'स्त्रियां बहुष्वप्सरसः' इति बहुत्वाभिधानं प्रायिकम् । कयोश्चित्प्रहर्त्रोर्योधयोरमर्त्यभावेऽपि देवत्वेऽपि विवादः कलह आसीत्, एकाऽऽमिषाभिलाषो हि महद्वैरबीजमिति भावः ॥ ५३ ॥

अन्वयः—परस्परेण, क्षतयोः, समकालम्, एव, उत्क्रान्तवाय्वोः, कयोश्चित्, प्रहर्त्रोः, एकाप्सरःप्रार्थितयोः, अमर्त्यभावे, अपि, विवादः, आसीत् ॥ ५३ ॥

सुधा—परस्परेण = अन्योन्येन, क्षतयोः = हतयोः, विद्धदेहयोरिति यावत् । समकालम् = एककालम्, एव, उत्क्रान्तवाय्वोः = युगपदुद्गतप्राणवाय्वोः, कयोश्चित्, प्रहर्त्रोः = प्रहारकयोः, वीरयोरित्यर्थः । एकाप्सरःप्रार्थितयोः = एकसुराङ्गनाप्रार्थनासक्तयोः, अमर्त्यभावे = देवत्वे, अपि, विवादः = कलहः, आसीत् = बभूव, एकस्मिन् वस्तुनि द्वयोःस्पृहायां वैरं भवत्येवेति भावः ॥ ५३ ॥

कोशः—'आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः । अमरा निर्जरा देवास्त्रिदशा विबुधा सुराः' इत्यमरः ॥ ५३ ॥

समासादि—उत्क्रान्तौ वायू ययोस्तावुत्क्रान्तवायू तयोरुत्क्रान्तवाय्वोः ( ब० व्री० ) । म्रियन्तेऽस्मिन्निति मर्तः ( भूलोकः ), मर्ते एव मर्त्यः, न मर्त्य इत्यमर्त्यस्तस्य भावोऽमर्त्यभावस्तस्मिन्नमर्त्यभावे । एका एवाप्सराः प्रार्थिता याभ्यां तावेकाप्सरसौ तयोरेकाप्सरःप्रार्थितयोः ( ब० व्री० ) । अथवा—एकस्याम् अप्सरसि प्रार्थितं ( प्रार्थना ) ययोस्तौ तयोरेकाप्सरःप्रार्थितयोः ( ब० व्री० ) ॥ ५३ ॥

व्याकरणम्—प्रहर्त्रोः = प्र + हृ + तृच् । अमर्त्य = अ + मृ + 'हसिमृग्रिण्' इत्याद्यौणादिकस्तन्, ततः-'नवसूरमर्तयविष्ठेभ्यो यत्' इति वार्तिकेन स्वार्थे यत् । प्रार्थितयोः = प्र + अर्थ + क्तः + इट्, प्रार्थितशब्दस्य 'वाहिताग्न्यादिषु' इत्यनेन परनिपातः ॥ ५३ ॥

वाच्यपरिवर्तनम्—परस्परेण, क्षतयोः, समकालम्, एव, उत्क्रान्तवाय्वोः, कयोश्चित्, प्रहर्त्रोः, एकाप्सरःप्रार्थितयोः, अमर्त्यभावे, अपि, विवादेन, अभूयत ॥ ५३ ॥

तात्पर्यार्थः—परस्परविनष्टदेहयोरेककालमेवोद्गतप्राणवाय्वोः कयोश्चिदेकस्यां देवाङ्गनायां प्रार्थनासक्तयोर्वीरयोर्देवत्वभावेऽपि कलहोऽभूत् ॥ ५३ ॥

भाषाऽर्थः—आपसमें ( शर आदि से ) हत हुये, ( और ) एक ही समय में प्राण छोड़े

हुये कोई दो वीर एक अप्सरा में इच्छा रखने के कारण देवतापनको प्राप्त होकर भी विवाद करने लगे ॥ ५३ ॥

अथोभौ व्यूहावन्योन्यस्मादनियतं जयं पराजयञ्च प्राप्तवन्तावित्याह—

**व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरव्यवस्थम् ।**
**पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ॥ ५४ ॥**

सञ्जीविनी—व्यूहाविति । तावुभौ व्यूहौ सेनासंघातौ, 'व्यूहस्तु बलविन्यासः' इत्यमरः। पश्चात्पुरश्च यौ मारुतौ द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते, तयोः पर्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्मी इव इतरेतरस्मादन्योन्यस्मादव्यवस्थं व्यवस्थारहितमनियतं जयं भङ्गं पराजयं चापतुः प्राप्तवन्तौ ॥ ५४ ॥

अन्वयः—तौ, उभौ, व्यूहौ, पश्चात्पुरोमारुतयोः, पर्यायवृत्त्या, प्रवृद्धौ, महार्णवोर्मी, इव, इतरेतरस्मात्, अव्यवस्थं, जयं, भङ्गं, च, आपतुः ॥ ५४ ॥

सुधा—तौ = पूर्वोक्तौ, उभौ = द्वौ, व्यूहौ = सेनाविन्यासौ, पश्चात्पुरोमारुतयोः = पश्चात्पुरस्तात्पवनयोः, पर्यायवृत्त्या = क्रमवृत्त्या, क्रमश इत्यर्थः । प्रवृद्धौ = वृद्धिं गतौ, महार्णवोर्मी = महासमुद्रतरङ्गौ, इव = यथा, इतरेतरस्मात = अन्योन्यस्मात्, अव्यवस्थं = व्यवस्थारहितम्, अनियतमिति यावत् । जयं = विजयं, भङ्गं = पराजयं, च, आपतुः = प्राप्तवन्तौ ॥ ५४ ॥

कोशः—'व्यूहः स्यात् बलविन्यासे निर्माणे तर्कवृन्दयोः' इति मेदिनी । 'पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे' इति विश्वः ॥ ५४ ॥

समासादि—पश्चाच्च पुरश्च यौ मारुताविति पश्चात्पुरोमारुतौ तयोः पश्चात्पुरोमारुतयोः (क० धा०) । पर्यायस्य वृत्तिरिति पर्यायवृत्तिस्तया पर्यायवृत्त्या ( त० पु० ) । महांश्चासावर्णव इति महार्णवः ( क० धा० ), तस्योर्मिस्तौ महार्णवोर्मी ( त० पु० ) ॥ ५४ ॥

व्याकरणम्—व्यूहौ = वि + ऊह + घञ् । आपतुः = आप् + लिट्, अतुसादेशः । पर्याय = परि + इण् + घञ् ॥ ५४ ॥

वाच्यपरिवर्तनम्—ताभ्याम्, उभाभ्यां, व्यूहाभ्यां, पश्चात्पुरोमारुतयोः, पर्यायवृत्त्या, प्रवृद्धाभ्याम्, महार्णवोर्मिभ्याम्, इव, इतरेतरस्मात्, अव्यवस्थः, जयः, भङ्गः, च, आपे ॥ ५४ ॥

तात्पर्यार्थः—पूर्वोक्तौ द्वौ सेनाविन्यासौ पश्चात्पुरःपवनयोः क्रमशो वृद्धिं गतौ महासमुद्रतरङ्गाविव अन्योन्यस्मादनियतं जयं पराजयं च प्राप्तवन्तौ ॥ ५४ ॥

भाषार्थः—वे दोनों व्यूह (जगह जगह पर सेनाओं के विन्यास) ने, पीछे और आगेकी हवासे क्रमशः बढ़ाई हुई महासागरकी दो लहरोंकी नाई जय और पराजयको प्राप्त किये ॥ ५४ ॥

अथ अजः शत्रुणा स्वसैन्ये भग्नेऽपि शत्रुसेनाम्प्रत्येव जगामेत्याह—

**परेण भग्नेऽपि बले महौजा ययावजः प्रत्यरिसैन्यमेव ।**
**धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥**

सञ्जीविनी—परेणेति । बले स्वसैन्ये परेण परबलेन भग्नेऽपि महौजसा महाबलोऽजोऽरिसैन्यं प्रत्येव ययौ । तथा हि–समीरणेन वायुना धूमो निवर्त्येत कक्षादपसार्येत, वर्ततेर्ण्यन्तात्कर्मणि संभावनायां लिङ् । वह्निस्तु यतो यत्र कक्षस्तृणम्, 'कक्षौ तु तृणवीरुधौ' इत्यमरः । तत एव तत्रैव, प्रवर्तत इति शेषः । सार्वविभक्तिकस्तसिः ॥ ५५ ॥

अन्वयः—महौजाः, अजः, परेण, बले, भग्ने, अपि, अरिसैन्यं, प्रति, एव, ययौ, समीरणेन, धूमः, निवर्त्येत, वह्निः, तु, यतः, कक्षः, 'भवति' ततः, एव, 'प्रवर्तते' ॥ ५५ ॥

सुधा—महौजाः = महाप्रतापी, महाबलिष्ठ इति यावत् । अजः = रघुपुत्रः, परेण = शत्रुणा, बले = स्वसैन्ये, भग्ने = नष्टे, अपि, अरिसैन्यं = शत्रुसेनां, प्रति, शत्रुसेनासन्मुखमित्यर्थः ।

एव, ययौ = जगाम, समीरणेन = वायुना, धूमः, निवर्त्यंत = कक्षादपसार्यंत, वह्निः = अग्निः, तु, यतः = यत्र, कक्षः = तृणं, तृणपुञ्जमित्यर्थः। भवतीति शेषः। ततः = तत्र, एव, प्रवर्तते इति शेषः॥ ५५॥

कोशः—'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च' इति मेदिनी। 'कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे' इत्यनेकार्थसंग्रहः॥ ५५॥

समासादि—महत् ओजो यस्य स महौजाः (ब० व्री०)। सेना एव सैन्यम्, अरेः सैन्यमित्यरिसैन्यम् ( त० पु० )॥ ५५॥

व्याकरणम्—भग्ने = भञ्ज् + क्तः। सैन्य = सेना + 'चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्' इति वार्तिकेन ष्यञ्। निवर्त्यंत = नि + वृतु + लङ् + कर्मणि यक्॥ ५५॥

वाच्यपरिवर्तनम्—महौजसा, अजेन, परेण, बले, भग्ने, अपि, अरिसैन्यं, प्रति, एव, ययो, समीरणः, धूमं, निवर्तयेत्, वह्निना, तु, यतः, कक्षेण, 'भूयते' ततः, एव, 'प्रवर्त्यते'॥५५॥

तात्पर्यार्थः—यथा वायुना तृणाद्धूमेऽपसारितेऽप्यग्निस्तु यत्र तृणं तत्रैव गच्छति, तथैव महाप्रतापी अजः शत्रुणा स्वबले नष्टेऽपि शत्रुसेनां प्रत्येव जगाम॥ ५५॥

भाषाऽर्थः—बड़ा बलवान् अज शत्रुओंसे (अपनी) सेना भंग होने पर भी शत्रुसेना ही की ओर गया, ( क्यों कि ) हवासे धूआं हट जाता है, किन्तु आग तो जहां तृण ( है ) वहीं ( प्रवृत्त होती है )॥ ५५॥

अथाजः शत्रुसमूहं निवारयामासेत्याह—

रथी निषङ्गी कवची धनुष्मान्दृप्तः स राजन्यकमेकवीरः।
निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः॥ ५६॥

सञ्जीविनी—रथीति। रथी रथारूढो निषङ्गी तूणीरवान्, 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः। कवची वर्मधरो धनुष्मान्धनुर्धरो दृप्तो रणदृप्त एकवीरोऽसहायशूरः सोऽजो राजन्यकं राजसमूहम्, "गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्" इत्यनेन वुञ्प्रत्ययः। महावराहो वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तमुद्वेलमर्णवाम्भ इव निवारयामास॥ ५६॥

अन्वयः—रथी, निषङ्गी, कवची, धनुष्मान्, दृप्तः, एकवीरः, सः, महावराहः, कल्पक्षयोद्वृत्तम्, अर्णवाम्भः, इव, राजन्यकं, निवारयामास॥ ५६॥

सुधा—रथी = स्यन्दनारूढः, निषङ्गी = तूणीरवान्, धृततूणीर इति यावत्। कवची = वर्मधरः, धनुष्मान् = धानुष्कः, धनुर्धर इति यावत्। दृप्तः = रणदुर्मदः, एकवीरः = असहायभटः, सः = अजः, महावराहः = महासूकरः, वराहावतारो विष्णुरित्यर्थः। कल्पक्षयोद्वृत्तं = कल्पान्तसमयेऽमर्यादम्, अर्णवाम्भः = समुद्रजलम्, इव = यथा, राजन्यकं = नृपसमूहं, निवारयामास = अनिवारयत्॥ ५६॥

कोशः—'निषङ्गस्तूणखड्गयोः' इत्यनेकार्थसंग्रहः। 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः। 'वीरो जिने भटे श्रेष्ठे वीरं शृङ्ग्यां नतेऽपि च' इत्यनेकार्थसंग्रहः। 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः॥ ५६॥

समासादि—रथोऽस्यास्तीति रथी। निषङ्गोऽस्यास्तीति निषङ्गी। कवचोऽस्यास्तीति कवची। धनुरस्यास्तीति धनुष्मान्। राज्ञोऽपत्यानि राजन्यानि, राजन्यानां समूहो राजन्यकम्। एकश्चासौ वीर इत्येकवीरः (क० धा०)। महांश्चासौ वराह इति महावराहः (क०धा०)। कल्पस्य क्षय इति कल्पक्षयस्तस्मिन् उद्वृत्तमिति कल्पक्षयोद्वृत्तम् ( त० पु० )। अर्णवस्याम्भ इत्यर्णवाम्भः ( त० पु० )॥ ५६॥

व्याकरणम्—राजन्यकम् = राजन् + 'राजश्वशुराद्यत्' इत्यनेन यत्, 'ये चाभावकर्मणोः'

इत्यनः प्रकृतिभावः, तस्मात् 'गोत्रोक्षोष्ट्रो' इत्यादिना समूहार्थे कः। निवारयामास = नि + वृ + णिच् + लिट्। क्षय = क्षि + अच्। उद्वृत्तम् = उद् + वृतु + क्तः॥ ५६॥

वाच्यपरिवर्तनम्--रथिना, निषङ्गिणा, कवचिना, धनुष्मता, दृप्तेन, एकवीरेण, तेन, महावराहेण, कल्पक्षयोद्वृत्तम्, अर्णवाम्भः, इव, राजन्यकं, निवारयामासे॥ ५६॥

तात्पर्यार्थः--यथा वराहावतारो विष्णुरेक एव प्रलयकाले प्रवृद्धं महासागरजलं निवारयति, तथा स्यन्दनारूढो धृततूणीरः कवचधरो रणदुर्मदोऽसहायभटः सोऽजः नृपसमूहं निवारयामास॥ ५६॥

भाषाऽर्थः—रथ पर चढे, तरकस लगाये, कवचधारण किये, धनुर्धर, गर्वयुक्त, एकवीर उस अजने, प्रलयकाल में समुद्र के बढ़े हुये जल को महावराह ( वराहावतार विष्णु ) के तुल्य राजाओं के समूह को निवारित किया॥ ५६॥

अथ युध्यतोऽस्याजस्य मौर्व्येव शत्रुघ्नशरोत्पादिनीवालक्ष्यतेत्याह—

**स दक्षिणं तूणमुखेन वामं व्यापारयन्हस्तमलक्ष्यताजौ।**
**आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान्सुषुवे रिपुघ्नान्॥ ५७॥**

सञ्जीविनी—स इति। सोऽजः आजौ सङ्ग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वाममतिसुन्दरम्, 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः। व्यापारयन्नलक्ष्यत, शरसंधानादयस्तु दुर्लक्ष्या इत्यर्थः। सकृदाकर्णकृष्टा योद्धुरस्याजस्य मौर्वी ज्या रिपून्घ्नन्तीति रिपुघ्नास्तान्, "अमनुष्यकर्तृके च" इति टक्प्रत्ययः। बाणान्सुषुव इव सुषुवे किमु, इत्युत्प्रेक्षा॥ ५७॥

अन्वयः--'वीरैः' सः, आजौ, दक्षिणं, हस्तं, तूणमुखेन, वामं, व्यापारयन्, 'सन्' अलक्ष्यत, योद्धुः, अस्य, सकृत्, आकर्णकृष्टा, मौर्वी, रिपुघ्नान्, बाणान्, सुषुवे, इव॥५७॥

सुधा--सः = पूर्वोक्तः, अज इति यावत्। आजौ = संग्रामे, दक्षिणं = वामेतरं, हस्तं = करं, तूणमुखेन = निषङ्गविवरेण, वामम् = अतिसुन्दरं, व्यापारयन् = व्याप्रियमाणः, सन्निति शेषः। अलक्ष्यत = अदृश्यत, वीरैरिति शेषः। शीघ्रशरप्रयोगादस्य शरसंधानादयस्तु वीलक्ष्या इत्यर्थः। योद्धुः = युद्धकर्तुः, अस्य = अजस्य, सकृत् = एकवारम्, आकर्णकृष्टा = कर्णपर्यन्तमाकृष्टा, मौर्वी = ज्या, रिपुघ्नान् = शत्रुघ्नान्, बाणान् = शरान्, सुषुवे = जनयामास, इव, ॥ ५७॥

कोशः—'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः। 'सकृत् सहैकवारयोः' इत्यजयः॥ ५७॥

समासादि--तूणस्य मुखमिति तूणमुखं तेन तूणमुखेन। व्यापारयतीति व्यापारयन्। कर्णमभिव्याप्येत्याकर्णम् (अ०भा०), तत्र कृष्टेत्याकर्णकृष्टा ( त० पु० )। मूर्वाया विकारो मौर्वी। रिपुं घ्नन्तीति रिपुघ्नास्तान् रिपुघ्नान्॥ ५७॥

व्याकरणम्--व्यापारयन् = वि + आ + पृ + णिच् + शतृ। अलक्ष्यत = अ + लक्ष ( दर्शनाङ्कनयोः ), णिच् + लङ् + कर्मणि यक्। कृष्टा = कृष् + क्तः + टाप्। मौर्वी = मूर्वा + अण्। सुषुवे = षूङ् + लिट्॥ ५७॥

वाच्यपरिवर्तनम्—'वीराः' तम्, आजौ, दक्षिणं, हस्तं, तूणमुखेन, वामं, व्यापारयन्तं, 'सन्तम्' अलक्षयन्, योद्धुः, अस्य, सकृत्, आकर्णकृष्टया, मौर्व्या, रिपुघ्नाः, बाणाः, सुषुविरे, इव॥ ५७॥

तात्पर्यार्थः—वीरैः सोऽजः सङ्ग्रामे दक्षिणकरं निषङ्गविवरेणातिसुन्दरं व्यापारयन् अदृश्यत, अस्य योद्धुरजस्यैकवारं कर्णपर्यन्तमाकृष्टा मौर्वी शत्रुघ्नान् शरान् जनयामासेव॥ ५७॥

भाषाऽर्थः—( वीरों ) से, वह (अज ) युद्धमें दाहिने हाथको तरकसके मुख पर अत्यंत सुन्दर व्यापार करता हुआ ( याने रखता हुआ ) दिखाई पड़ा, इस योद्धा ( अज ) की एक बार कर्ण पर्यन्त खींचा हुई प्रत्यंचे ( धनुषकी रस्सी ) ने, मानो शत्रु के मारने वाले बाण उत्पन्न किये॥ ५७॥

अथाजो भल्लच्छिन्नैः शत्रुशिरोभिः पृथ्वीं छादयामासेत्याह—

**स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः।**
**तस्तार गां भल्लनिकृत्तकण्ठैर्हुंकारगर्भैर्द्विषतां शिरोभिः॥ ५८॥**

सञ्जीविनी—स इति। सोऽजः रोषेण दष्टा अत एवाधिकलोहिता ओष्ठा येषां तानि तैः व्यक्ता ऊर्ध्वा रेखा यासां ता भ्रुकुटीर्भ्रूभङ्गान्वहद्भिः भल्लनिकृत्ता बाणविशेषच्छिन्नाः कण्ठा येषां तैः हुंकारगर्भैः सहुंकारैः, हुंकुर्वाद्भिरित्यर्थः। द्विषतां शिरोभिर्गां भूमिं तस्तार छादयामास॥ ५८॥

अन्वयः—सः, रोषदष्टाधिकलोहितोष्ठैः, व्यक्तोर्ध्वरेखाः, भ्रुकुटीः, वहद्भिः, भल्लनिकृत्तकण्ठैः, हुंकारगर्भैः, द्विषतां, शिरोभिः, गां, तस्तार॥ ५८॥

सुधा—सः = पूर्वोक्तः, अज इति यावत्। रोषदष्टाधिकलोहितोष्ठैः = क्रोधचर्वितबहुरक्ताधरैः, व्यक्तोर्ध्वरेखाः = स्फुटोपरितनपङ्क्तयः, भ्रुकुटीः = भ्रकुटीः, भ्रूभङ्गानिति यावत्। वहद्भिः = दधद्भिः, भल्लनिकृत्तकण्ठैः = भल्लाख्यशस्त्रविशेषेण छिन्नगलैः, हुंकारगर्भैः = ंकारपूर्णैः, हुंकुर्वद्भिरिति यावत्। द्विषतां = शत्रूणां, शिरोभिः = उत्तमाङ्गैः, गां = पृथिवीं, सङ्ग्रामस्थलमिति यावत्। तस्तार = छादयामास॥ ५८॥

कोशः—'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः। 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' इति मेदिनी॥ ५८॥

समासादि—अधिकाश्च ते लोहिता इत्यधिकलोहिताः (क०धा०), रोषेण दष्टा अधिकलोहिता ओष्ठा येषां तानीति रोषदष्टाधिकलोहितोष्ठानि तैः रोषदष्टाधिकलोहितोष्ठैः (ब० व्री०)। ऊर्ध्वाश्च ताः रेखा इत्यूर्ध्वरेखाः ( क० धा० ), व्यक्ता ऊर्ध्वरेखा यासां ता व्यक्तोर्ध्वरेखाः ( ब० व्री० )। भ्रुवः कुटिरिति ताः भ्रुकुटीः। वहन्तीति वहन्तस्तैर्वहद्भिः। भल्लैर्निकृत्ताः कण्ठा येषां ते भल्लनिकृत्तकण्ठास्तैर्भल्लनिकृत्तकण्ठैः ( ब० व्री० )। हुं क्रियत इति हुंकारः, स गर्भे येषां ते हुंकारगर्भास्तैर्हुंकारगर्भैः ( ब० व्री० )॥ ५८॥

व्याकरणम्—दष्टा = दंश् + क्तः। वहद्भिः = वह् + शतृ। तस्तार = स्तृञ् + लिट्। निकृत्त = नि + कृत् + क्तः॥ ५८॥

वाच्यपरिवर्तनम्—तेन, रोषदष्टाधिकलोहितोष्ठैः, व्यक्तोर्ध्वरेखाः, भ्रुकुटीः, वहद्भिः, भल्लनिकृत्तकण्ठैः, हुंकारगर्भैः, द्विषतां, शिरोभिः, गौः, तस्तरे॥ ५८॥

तात्पर्यार्थः—स अजः क्रोधचर्विताधिकरक्तोष्ठैः स्फुटोर्ध्वरेखाः भ्रुकुटीर्दधद्भिर्भल्लच्छिन्नगलैर्हुंकुर्वद्भिः शत्रूणां शिरोभिर्युद्धस्थलं छादयामास॥ ५८॥

भाषाऽर्थः—उस ( अज ) ने गुस्से से दांतों को चबाते हुये अधिक लाल ओठोंसे स्फुट ऊंची रेखा सहित भ्रुकुटिको धारण किये, ( और ) हुंकार शब्द करते हुये भालों से गला-कटे शत्रुओंके शिरोंसे पृथिवी ( युद्ध स्थल ) को ढक दिया॥ ५८॥

अथ युद्धे सर्वे नृपाः अजं प्रहृतवन्त इत्याह—

**सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च।**
**सर्वप्रयत्नेन च भूमिपालास्तस्मिन्प्रजह्रुर्युधि सर्व एव॥ ५९॥**

सञ्जीविनी—सर्वैरिति। द्विरदप्रधानैर्गजमुख्यैः सर्वैर्बलाङ्गैः सेनाङ्गैः, 'हस्त्यश्वरथपा-

दातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः। कङ्कटभेदिभिः कवचभेदिभिः, 'उरच्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः। सर्वायुधैश्च बाह्यबलमुक्त्वान्तरमाह–सर्वप्रयत्नेन च सर्व एव भूमिपाला युधि तस्मिन्नजे प्रजह्रुः, तं प्रजह्रुरित्यर्थः। सर्वत्र सर्वकारकशक्तिसम्भवात्कर्मणोऽप्यधिकरणविवक्षायां सप्तमी। तदुक्तम्–"अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः। सर्वदा सर्वथाभावात्क्वचित्किञ्चिद्विवक्ष्यते॥" इति॥ ५९॥

अन्वयः—सर्वे, एव, भूमिपालाः, द्विरदप्रधानैः, सर्वैः, बलाङ्गैः, कङ्कटभेदिभिः, सर्वायुधैः, च, सर्वप्रयत्नेन, च, युधि, तस्मिन्, प्रजह्रुः॥ ५९॥

सुधा—सर्वे = सकलाः, एव, भूमिपालाः = पृथ्वीरक्षकाः, राजान इति यावत्। द्विरदप्रधानैः = गजमुख्यैः, सर्वैः = निखिलैः, बलाङ्गैः = सेनाङ्गैः, हस्त्यश्वरथपदातिभिरिति यावत्। कङ्कटभेदिभिः = कवचच्छेदिभिः, सर्वायुधैः = सम्पूर्णशस्त्रैः, च, सर्वप्रयत्नेन, = सकलव्यापारेण, च, युधि = संग्रामे, तस्मिन् = पूर्वोक्ते, अज इति यावत्। प्रजह्रुः = प्रहृतवन्तः, अजं प्रजह्रुरित्यर्थः॥ ५९॥

कोशः—'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इति, 'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इति चामरः॥ ५९॥

समासादि—बलस्याङ्गानीति बलाङ्गानि तैर्बलाङ्गैः (त० पु०)। द्विरदः प्रधानं येषां तानि द्विरदप्रधानानि तैर्द्विरदप्रधानैः (ब० व्री०)। सर्वाणि च तान्यायुधानीति सर्वायुधानि तैः सर्वायुधैः (क० धा०)। कं देहं कटतीति कङ्कटः, तं भिन्दन्तीति तैः कङ्कटभेदिभिः। सर्वश्चासौ प्रयत्न इति सर्वप्रयत्नस्तेन सर्वप्रयत्नेन (क० धा०)। भूमिं पालयन्तीति भूमिपालाः॥ ५९॥

व्याकरणम्—कङ्कट = क + कटे (वर्षावरणयोः), अच् + मुम्। प्रजह्रुः = प्र + हृ + लिट्॥ ५९॥

वाच्यपरिवर्तनम्—सर्वैः, एव, भूमिपालैः, द्विरदप्रधानैः, सर्वैः, बलाङ्गैः, कङ्कटभेदिभिः, सर्वायुधैः, च, सर्वप्रयत्नेन, च, युधि, तस्मिन्, प्रजह्रे॥ ५९॥

तात्पर्यार्थः—सर्वे नृपाः गजमुख्यैर्निखिलैः हस्त्यश्वरथपदातिरूपसेनाङ्गैः कवचच्छेदिभिः सर्वशस्त्रैः सकलव्यापारेण च युद्धे तमजं प्रजह्रुः॥ ५९॥

भाषार्थः—सब राजाओंने गजप्रधानवाली सभी सेनाओं के अंगोंसे, और कवच भेदन करने वाले अस्त्रोंसे, (तथा) सब यत्नोंसे संग्राममें उस (अज) को प्रहार किया॥ ५९॥

अथ शत्रूणां शस्त्रसमूहैश्छन्नस्यन्दनोऽजः ध्वजाग्रमात्रेण किञ्चिदलक्ष्यतेत्याह—

**सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः।**
**नीहारमग्नो दिनपूर्वभागः किञ्चित्प्रकाशेन विवस्वतेव॥ ६०॥**

सञ्जीविनी—स इति। परेषां द्विषामस्त्रव्रजैः शस्त्रसमुदायैश्छन्नरथः सोऽजः नीहारैर्हिमैर्मग्नो दिनपूर्वभागः प्रातःकालः किञ्चित्प्रकाशेनेषल्लक्ष्येण विवस्वतेव आच्छादितरथः ध्वजाग्रमात्रेण लक्ष्यो बभूव, ध्वजाग्रादन्यन्न किञ्चिल्लक्ष्यते स्मेत्यर्थः॥ ६०॥

अन्वयः—परेषाम्, अस्त्रव्रजैः, छन्नरथः, सः, नीहारमग्नः, दिनपूर्वभागः, किञ्चित्प्रकाशेन, विवस्वता, इव, ध्वजाग्रमात्रेण, लक्ष्यः, बभूव॥ ६०॥

सुधा—परेषां = शत्रूणाम्, अस्त्रव्रजैः = शस्त्रसमूहैः, छन्नरथः = आच्छादितस्यन्दनः, सः = अजः, नीहारमग्नः = हिममग्नः, दिनपूर्वभागः = दिवसप्रथमांशः, प्रातःकाल इत्यर्थः। किञ्चित्प्रकाशेन = किञ्चिदातपेन, ईषल्लक्ष्येणेत्यर्थः। विवस्वता = सूर्येण, इव = यथा, ध्वजाग्रमात्रेण = पताकाग्रेणैव, लक्ष्यः = दृश्यः, बभूव = अभूत्, अलक्ष्यदित्यर्थः॥ ६०॥

कोशः—'परो दूरान्यश्रेष्ठशत्रुषु। परं तु केवले' इत्यनेकार्थसंग्रहः। 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इति, 'प्रकाशो द्योत आतपः, इति चामरः॥ ६०॥

समासादि—अस्त्राणां व्रजा इत्यस्त्रव्रजास्तैरस्त्रव्रजैः (त० पु०)। ध्वजस्याग्रमिति ध्व-

जाग्रं, ध्वजाग्रमेवेति ध्वजाग्रमात्रं तेन ध्वजाग्रमात्रेण ( त० पु० ) । लक्षितुं योग्यो लक्ष्यः । नीहारैर्मग्न इति नीहारमग्नः ( त० पु० ) । पूर्वस्य भाग इति पूर्वभागः, दिनस्य पूर्वभाग इति दिनपूर्वभागः ( त० पु० ) । किञ्चित् प्रकाशो यस्य स किञ्चित्प्रकाशस्तेन किञ्चित्प्रकाशेन ( ब० व्री० ) ॥ ६० ॥

व्याकरणम्—छन्न = छद् + णिच् + क्तः । लक्ष्यः = लक्ष ( दर्शनाङ्कनयोः ), यत् ॥ ६० ॥

वाच्यपरिवर्तनम्—परेषाम् , अस्त्रव्रजैः, छन्नरथेन, तेन, नीहारमग्नेन, दिनपूर्वभागेन, किञ्चित्प्रकाशेन, विवस्वता, इव, ध्वजाग्रमात्रेण, लक्ष्येण, बभूवे ॥ ६० ॥

तात्पर्यार्थः—यथा ईषत्प्रकाशेन सूर्येण हिममग्नः प्रातःकालो लक्ष्यते, तथा शत्रूणां शरसमूहैराच्छादितस्यन्दनः सोऽजः ध्वजाग्रेणवालक्ष्यत ॥ ६० ॥

भाषार्थः—शत्रुओं के शस्त्र समूहों से छिपे हुये रथ वाला वह अज, जैसे हिम ( पाले ) में मग्न हुये प्रातःकाल थोड़े प्रकाश वाले सूर्यसे दिखाई पड़ता है, वैसे ध्वजा ( पताका ) के अग्र ( अगिले ) भाग से दिखाई पड़ा ॥ ६० ॥

अथाजः प्रियंवदात् प्राप्तं प्रस्वापनं नाम गान्धर्वशस्त्रं प्रयुक्तवानित्याह—

प्रियंवदात्प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः ।
गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥

सञ्जीविनी—प्रियंवदादिति । अधिराजसूनुर्महाराजपुत्रः कुसुमास्त्रकान्तो मदनसुन्दरः स्वप्ननिवृत्तलौल्यः स्वप्नवितृष्णः, जागरूक इत्यर्थः । असौ कुमारोऽजः प्रियंवदात्पूर्वोक्ताद्गन्धर्वात्प्राप्तं गन्धर्वं गन्धर्वदेवताकम् , "सास्य देवता" इत्यण् । प्रस्वापयतीति प्रस्वापनं निद्राजनकमस्त्रं राजसु प्रायुङ्क्त प्रयुक्तवान् ॥ ६१ ॥

अन्वयः—अधिराजसूनुः, कुसुमास्त्रकान्तः, स्वप्ननिवृत्तलौल्यः, असौ, कुमारः, प्रियंवदात् , प्राप्तं, प्रस्वापनं, गान्धर्वम् , अस्त्रं, राजसु, प्रायुङ्क्त ॥ ६१ ॥

सुधा—अधिराजसूनुः = महाराजसुतः, सम्राट्पुत्र इति यावत् । कुसुमास्त्रकान्तः = कामदेवसदृशसुन्दरः, स्वप्ननिवृत्तलौल्यः = शयनविगततृष्णः, जागरणशील इति यावत् । असौ = एषः, कुमारः = अजः, प्रियंवदात् = प्रियंवदनामगन्धर्वात् , प्राप्तं = लब्धं, प्रस्वापनं = निद्रोत्पादकं, गान्धर्वं = गन्धर्वदेवताकम् , अस्त्रं = शस्त्रं, राजसु = नृपेषु, प्रायुङ्क्त = प्रयुक्तवान् ॥ ६१ ॥

कोशः—'कान्तो रम्ये प्रिये प्राणिणि' इत्यनेकार्थसंग्रहः । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः ॥ ६१ ॥

समासादि—प्रियंवदतीति प्रियंवदस्तस्मात् प्रियंवदात् । अधिको राजा अधिराजस्तस्य सूनुरित्यधिराजसूनुः ( त० पु० ) । गन्धर्वो देवताऽस्येति गान्धर्वस्तं गान्धर्वम् । कुसुमम् अस्त्रं यस्य सः कुसुमास्त्रः ( ब० व्री० ), तद्वत् कान्त इति कुसुमास्त्रकान्तः । लोलस्य भावो लौल्यम् , स्वप्ने निवृत्तं लौल्यं येन सः स्वप्ननिवृत्तलौल्यः ( ब० व्री० ) ॥ ६१ ॥

व्याकरणम्—प्रायुङ्क्त = प्र + अ + युज् + लङ् । अधिराजसूनुः—इत्यत्र 'कुगतिप्रादयः' इति समासः । गान्धर्वं = गन्धर्व + अण् । प्रस्वापनं = प्र + ञिष्वप् ( शये—ञित् ), युच् । स्वप्न = स्वप् + 'स्वपो नन्' इत्यनेन नन् ॥ ६१ ॥

वाच्यपरिवर्तनम्—अधिराजसूनुना, कुसुमास्त्रकान्तेन, स्वप्ननिवृत्तलौल्येन, अनेन, कुमारेण, प्रियंवदात्, प्राप्तं, प्रस्वापनं, गान्धर्वम्, अस्त्रं, राजसु, प्रायुज्यत ॥ ६१ ॥

तात्पर्यार्थः—महाराजस्य रघोः पुत्रः कामदेवसदृशसुन्दरः जागरणशील एषोऽजः प्रियंवदनामकगन्धर्वाल्लब्धं गन्धर्वदेवताकं निद्रोत्पादकं शस्त्रं राजसु प्रयुक्तवान् ॥ ६१ ॥

भाषार्थः—महाराज ( रघु ) के पुत्र कामदेवके सदृश सुन्दर निद्रा की तृष्णा को छोड़े

हुये इस अजने प्रियंवद गंधर्व से प्राप्त गन्धर्वदेवता संबन्धी नींद को पैदा करने वाले अस्त्र का राजाओं पर प्रयोग किया ॥ ६१ ॥

अथ अजप्रयुक्तगांधर्वास्त्रप्रभावात् नृपसैन्यं निद्रितं बभूवेत्याह—

**ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।**
**तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥**

सञ्जीविनी—तत इति । ततो धनुष्कर्षणे चापकर्षणे मूढहस्तमव्यापृतहस्तम् , एकस्मिन्नंसे पर्यस्तं त्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूहो यस्य तत , ध्वजस्तम्भेषु निषण्णा अवष्टब्धा देहा यस्य तत् , नरदेवानां राज्ञां सेनव सैन्यं, चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । निद्राविधेयं निद्रापरतन्त्रं तस्थौ ॥ ६२ ॥

अन्वयः—ततः, धनुष्कर्षणमूढहस्तम् , एकांसपर्यस्तशिरस्त्रजालं, ध्वजस्तम्भनिषण्णदेहं, नरदेवसैन्यं, निद्राविधेयं 'सत्' तस्थौ ॥ ६२ ॥

सुधा—ततः = तदनन्तर, गान्धर्वप्रयोगानन्तरमिति यावत् । धनुष्कर्षणमूढहस्तं = चापकर्षणव्यापाररहितकरम् , एकांसपर्यस्तशिरस्त्रजालम् = एकस्कन्धस्रस्तशीर्षण्यसमूहं, ध्वजस्तम्भनिषण्णदेहं = पताकास्थूणाऽवष्टब्धशरीरं, नरदेवसैन्यं = पार्थिवानीकं, निद्राविधेयं = शयनपरतन्त्रं, सदिति शेषः । तस्थौ = अतिष्ठत् ॥ ६२ ॥

कोशः—'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । 'अंसं स्कन्धे विभागे स्यात्' इत्यनेकार्थसंग्रहः । 'अथ शीर्षकम् । शीर्षण्यं च शिरस्त्रे' इत्यमरः । 'स्तम्भोऽङ्गजाड्ये स्थूणायाम्' इत्यनेकार्थसंग्रहः ॥ ६२ ॥

समासादि—धनुषो कर्षणमिति धनुष्कर्षणं ( त० पु० ), तस्मिन् मूढा हस्ता यस्य तद् धनुष्कर्षणमूढहस्तम् ( ब० व्री० ) । शिरस्त्रायत इति शिरस्त्रं, शिरस्त्राणां जालमिति शिरस्त्रजालं ( त० पु० ), एकश्चासावंस इत्येकांसः ( क० धा० ), तस्मिन् पर्यस्तं शिरस्त्रजालं यस्य तदेकांसपर्यस्तशिरस्त्रजालम् ( ब०व्री० ) । ध्वजानां स्तम्भा इति ध्वजस्तम्भास्तेषु निषण्णा देहा यस्य तद्ध्वजस्तम्भनिषण्णदेहम् ( ब० व्री० ) । निद्राया विधेयमिति निद्राविधेयम् ( त० पु० ) । नराणां देवा नरदेवास्तेषां सैन्यमिति नरदेवसैन्यम् ( त० पु० ) ॥ ६२ ॥

व्याकरणम्—पर्यस्त = परि + अस + क्तः । शिरस्त्र = शिरः + त्रैङ् ( पालने—ङित् ), 'आतोऽनुपसर्गे कः' इत्यनेन कः । तस्थौ = ष्ठा + लिट् । निषण्ण = नि + षणु + क्तः ॥ ६२ ॥

वाच्यपरिवर्तनम्—ततः, धनुष्कर्षणमूढहस्तेन, एकांसपर्यस्तशिरस्त्रजालेन, ध्वजस्तम्भनिषण्णदेहेन, नरदेवसैन्येन, निद्राविधेयेन, 'सता' तस्थे ॥ ६२ ॥

तात्पर्यार्थः—गान्धर्वास्त्रप्रयोगानन्तरं चापकर्षणे व्यापाररहितकरम् एकस्मिन्स्कन्धे स्रस्तशीर्षण्यसमूह ध्वजस्तम्भेष्ववष्टब्धदेहं राज्ञां सैन्यं निद्रापरवशं सत्तस्थौ ॥ ६२ ॥

भाषाऽर्थः—उसके बाद धनुषको खींचने से थके हुये हाथ वाली, एक कंधे पर गिरे हुये टोप के समूह ( और ) ध्वजाओं के खंभे में स्थित शरीर वाली नृपों की सेना, निद्रा के वश होती हुई रुक गई ॥ ६२ ॥

अथाजः शङ्खनादं कृतवानित्याह—

**ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः ।**
**तेन स्वहस्तार्जितमेकवीरः पिबन्यशो मूर्तमिवाबभासे ॥ ६३ ॥**

सञ्जीविनी—तत इति । ततः कुमारोऽजः प्रिययेन्दुमत्योपात्तरसे आस्वादितमाधुर्ये अतिश्लाघ्य इति भावः । अधरोष्ठे जलजं शङ्खं निवेश्य, 'जलजं शङ्खपद्मयोः' इति विश्वः । दध्मौ मुखमारुतेन पूरयामास । तेनौष्ठनिविष्टेन शंखेनैकवीरः स स्वहस्तार्जितं मूर्तं मूर्तिमद्यशः पिबन्निवाबभासे, यशसः शुभ्रत्वादिति भावः ॥ ६३ ॥

अन्वयः—ततः, कुमारः, प्रियोपात्तरसे, अधरोष्ठे, जलजं, निवेश्य, दध्मौ, तेन, एकवीरः, स्वहस्तार्जितं, मूर्तं, यशः, पिबन्, इव, आबभासे ॥ ६३ ॥

सुधा—ततः = तदनन्तरं, सैन्यानां निद्रावशीभवनानन्तरमिति यावत् । कुमारः = युवराजः, अज इति यावत् । प्रियोपात्तरसे = इन्दुमत्यास्वादितमाधुर्ये, अधरोष्ठे = अधश्छदे, जलजं = शङ्खं, निवेश्य = धृत्वा, दध्मौ = मुखवायुना पूरितवान्, तेन = शङ्खेन, एकवीरः = असहाययोधः, एकाकी अज इति यावत् । स्वहस्तार्जितं = निजभुजलब्धं, मूर्तं = मूर्तिमत्, यशः = विजयरूपयशः, पिबन् = पानं कुर्वन्, इव, आबभासे = शुशुभे ॥ ६३ ॥

कोशः—'जलजं कमले शङ्खे' इत्यनेकार्थसंग्रहः ॥ ६३ ॥

समासादि—प्रियया उपात्तः रसो यस्य स प्रियोपात्तरसस्तस्मिन् प्रियोपात्तरसे ( ब० व्री० ) । अधरश्चासावोष्ठ इत्यधरोष्ठस्तस्मिन्नधरोष्ठे ( क० धा० )। जले जायते इति जलजस्तं जलजम् । स्वस्य हस्ताविति स्वहस्तौ स्वहस्ताभ्यामर्जितमिति तत् स्वहस्तार्जितम् ( त० पु० ) । एकश्चासौ वीर इत्येकवीरः ॥ ६३ ॥

व्याकरणम्—दध्मौ = ध्मा + लिट् । जलजं = जल + जनी ( प्रादुर्भावे ), डः । अर्जित = अर्ज ( अर्जने ), क्तः + इट् । आबभासे = आ + भास् + लिट् ॥ ६३ ॥

वाच्यपरिवर्तनम्—ततः, कुमारेण, प्रियोपात्तरसे, अधरोष्ठे, जलजं, निवेश्य, दध्मे, तेन, एकवीरेण, स्वहस्तार्जितं, मूर्तं, यशः, पिबता, इव, आबभासे ॥ ६३ ॥

तात्पर्यार्थः—सैन्यानां निद्रावशीभवनानन्तरमजः इन्दुमत्यास्वादितमाधुर्येऽधरोष्ठे शंखं धृत्वा मुखवायुना पूरयामास, तेन शंखेनैकाकी स अजः निजभुजार्जितं मूर्तिमद्विजयरूपयशः पिबन्निव शुशुभे ॥ ६३ ॥

भाषार्थः—तब कुमार ( अज ) ने, प्रिया ( इन्दुमती ) से चखे हुये रस वाले अधरोष्ठ पर शंख रख कर बजाया, उस ( शंख ) से एक वीर ( अज ) अपने हाथों से अरजा हुआ मानो मूर्तिमान् यश का पान करता हुआ शोभित हुआ ॥ ६३ ॥

अथाजस्य योधा युधि स्थितमजं कथमिव ददृशुरित्याह—

**शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः ।**
**निमीलितानामिव पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥**

सञ्जीविनी—शङ्खस्वनेति । शङ्खस्वनस्याजशङ्खध्वनेरभिज्ञतया प्रत्यभिज्ञातत्वान्निवृत्ताः प्राक्पलाय्य सम्प्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तमजं निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रमिव ददृशुः ॥ ६४ ॥

अन्वयः—स्वयोधाः, शंखस्वनाभिज्ञतया, निवृत्ताः, 'सन्तः' निमीलितानां, पङ्कजानां, मध्ये, स्फुरन्तं, प्रतिमाशशाङ्कम्, इव, सन्नशत्रुं, तं, ददृशुः ॥ ६४ ॥

सुधा—स्वयोधाः = निजभटाः, अजवीरा इति यावत् । शङ्खस्वनाभिज्ञतया = जलजध्वनिप्रत्यभिज्ञातत्वेन, निवृत्ताः = प्रत्यागताः, पलायमानानन्तरप्रत्यागता इत्यर्थः । सन्त इति शेषः । निमीलितानां = मुकुलितानां, पङ्कजानां = कमलानां, मध्ये = आभ्यन्तरे, मध्यप्रदेश इति यावत् । स्फुरन्तं = द्युतिमन्तं, प्रतिमाशशाङ्कं = प्रतिबिम्बचन्द्रम्, इव = यथा, सन्नशत्रुं = निद्रितरिपुं, तं = पूर्वोक्तम्, अजमिति यावत् । ददृशुः = दृष्टवन्तः ॥ ६४ ॥

कोशः—'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इति, 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया' इति चामरः ॥ ६४ ॥

समासादि—अभिजानातीति अभिज्ञस्तस्य भावोऽभिज्ञता, शङ्खस्य स्वन इति शङ्खस्वनस्तस्याभिज्ञता तया शङ्खस्वनाभिज्ञतया ( त०पु० ) । सन्नाः शत्रवो यस्य स सन्नशत्रुस्तं

सन्नशत्रुम् ( ब० व्री० )। स्वस्य योधा इति स्वयोधाः ( त० पु० )। पङ्काज्जायन्ते इति पङ्कजानि तेषां पङ्कजानाम्। प्रतिमा चासौ शशाङ्कश्चेति प्रतिमाशशाङ्कस्तं प्रतिमाशशाङ्कम् ( क० धा० ) ॥ ६४ ॥

व्याकरणम्—अभिज्ञतया = अभि + ज्ञा + 'आतश्चोपसर्गे' इत्यनेन कः + तल् + टाप्। निमीलितानां = नि + मील ( निमेषणे ), क्तः + इट्। स्फुरन्तं = स्फुर + शतृ। प्रतिमा = प्रति + मा + कः ॥ ६४ ॥

वाच्यपरिवर्तनम्—स्वयोधैः, शङ्खस्वनाभिज्ञतया, निवृत्तैः, 'सद्भिः' निमीलितानां, पङ्कजानां, मध्ये, स्फुरन्, प्रतिमाशशाङ्कः, इव, सन्नशत्रुः, सः, ददृशे ॥ ६४ ॥

तात्पर्यार्थः—आत्मभटाः शङ्खध्वनेः प्रत्यभिज्ञाततया पलायमानानन्तरप्रत्यागताः सन्तः मुकुलितानां कमलानां मध्ये द्युतिमन्तं प्रतिबिम्बचन्द्रमिव निद्रितशत्रुं तमजं दृष्टवन्तः ॥ ६४ ॥

भाषाऽर्थः—अपने ( अजके ) योद्धाओं ने शंख के शब्द की पहिचान से लौटे हुये, मुकुलित कमल के मध्य में प्रकाशमान चन्द्रमाके प्रतिबिम्ब के समान निद्रित शत्रुवाले उस ( अज ) को देखा ॥ ६४ ॥

अथ अजो दयया शत्रूणां यश एव हृतवान्न तु जीवितमित्याह—

सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम्।
यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥

सञ्जीविनी—सशोणितैरिति। संप्रति राघवेण रघुपुत्रेण, पूर्वं रघुणेति भावः। हे राजानः! वो युष्माकं यशो हृतम्, जीवितं तु कृपया न हृतम्, न त्वशक्त्येति भावः। इत्येवंरूपा वर्णा एतदर्थप्रतिपादकं वाक्यमित्यर्थः। सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैर्बाणाग्रैः साधनैस्तेनाजेन प्रयोजककर्त्रा पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैरन्यैर्निवेशिताः लेखिता इत्यर्थः। क्षिपतेर्ण्यन्तात्कर्मणि क्तः ॥ ६५ ॥

अन्वयः—'हे राजनः' सम्प्रति, राघवेण, वः, यशः, हृतं, कृपया, जीवितं, तु, न, इति, वर्णाः, तेन, सशोणितैः, शिलीमुखाग्रैः, पार्थिवानां, केतुषु, निक्षेपिताः ॥ ६५ ॥

सुधा—'हे राजानः!' सम्प्रति = अधुना, राघवेण = रघुसुतेन, अजेनेति यावत्। वः = युष्माकं, यशः = कीर्तिः, हृतं = गृहीतं, कृपया = अनुकम्पया, जीवितं = प्राणाः,तु, न, हृतमिति शेषः। इति = इत्थं, वर्णाः = एतदर्थप्रतिपादकवचनानि, तेन = अजेन, सशोणितैः = सरुधिरैः, शिलीमुखाग्रैः = बाणाग्रैः,पार्थिवानां = राज्ञां, केतुषु = ध्वजस्तम्भेषु, निक्षेपिताः = लेखिताः ॥ ६५ ॥

कोशः—'रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्' इत्यमरः। 'शिलीमुखोऽलौ बाणे च' इत्यनेकार्थसंग्रहः। 'ग्रहभेदे ध्वजे केतुः' इति, 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इति चामरः ॥ ६५ ॥

समासादि—शोणितेन सह विद्यमाना इति सशोणितास्तैः सशोणितैः,। शिली (शल्यं) मुखे यस्य स शिलीमुखः ( ब० व्री० ), तस्याग्राणीति शिलीमुखाग्राणि तैः शिलीमुखाग्रैः ( त० पु० ) ॥ ६५ ॥

व्याकरणम्—निक्षेपिताः = नि + क्षिप + णिच् + कर्मणि क्तः। पार्थिवानाम् = पृथिवी + अण्। हृतं = हृञ् = क्तः। राघवेण = रघु + अण्। वर्णाः = वर्ण + घञ् ॥ ६५ ॥

वाच्यपरिवर्तनम्—'हे राजान!' सम्प्रति, राघवः, वः, यशः, हृतवान्, जीवितं, तु, न, इति, कृपया, वर्णान्, सशोणितैः, शिलीमुखाग्रैः, पार्थिवानां, केतुषु, निक्षेपितवान् ॥ ६५ ॥

तात्पर्यार्थः—हे राजानः! "अधुना रघुसुतेन युष्माकं यशो गृहीतं जीवितं तु कृपया न गृहीतम्" इत्येतदर्थप्रतिपादकं वाक्यं तेन अजेन (प्रयोजककर्त्रा) रुधिरलग्नैर्बाणाग्रैः (प्रयोज्यैः) राज्ञां ध्वजस्तम्भेषु लेखितम् ॥ ६५ ॥

भाषाऽर्थः—'हे राजाओं !' अभी रघुपुत्र ( अज ) ने तुम सबोंका यश तो हरण किया, किन्तु कृपा करके प्राण नहीं (हरण किये) इस प्रकार वर्णोंको, रुधिर लगे हुये बाणोंके नोकोंसे राजाओं की ध्वजाओं पर लिख दिया ॥ ६५ ॥

अथाजो धृतधनुष्कोटिरेव इन्दुमतीं प्रति जगादेत्याह—

स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ।
ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥

सञ्जीविनी—स इति । चापकोट्यां निहित एकबाहुर्येन सः, शिरस्त्रस्य निष्कर्षणेनापनयनेन भिन्नमौलिः श्लथकेशबन्धः, 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । ललाटे बद्धाः श्रमवारिबिन्दवो यस्य सः, सोऽजो भीतां प्रियामिन्दुमतीमेत्यासाद्य वचो बभाषे ॥६६॥

अन्वयः—चापकोटीनिहितैकबाहुः, शिरस्त्रनिष्कर्षणभिन्नमौलिः, ललाटबद्धश्रमवारिबिन्दुः, सः, भीतां, प्रियाम्, एत्य, वचः, बभासे ॥ ६६ ॥

सुधा—चापकोटीनिहितैकबाहुः = धनुरग्रभागे स्थापितैकभुजः, शिरस्त्रनिष्कर्षणभिन्नमौलिः = शीर्षण्यापनयनश्लथकेशबन्धः, ललाटबद्धश्रमवारिबिन्दुः = भालश्रमजन्यजलकणयुक्तः, सः = पूर्वोक्तः, अज इति यावत् । भीतां = त्रस्तां, प्रियां = वल्लभाम्, इन्दुमतीमिति यावत् । एत्य = प्राप्य, वचः = वचनं, बभाषे = उवाच ॥ ६६ ॥

कोशः—'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति, 'शीर्षण्यं च शिरस्त्रे च' इति चामरः । 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्द्धसु' इत्यनेकार्थसंग्रहः ॥ ६६ ॥

समासादि—चापस्य कोटी इति चापकोटी ( त० पु० ), तस्यां निहितः एको बाहुर्येन स चापकोटीनिहितैकबाहुः ( ब० व्री० ) । शिरस्त्रायतेऽनेनेति शिरस्त्रं, तस्य निष्कर्षणमिति शिरस्त्रनिष्कर्षणम् ( त० पु० ), तेन भिन्ना मौलयो यस्य स शिरस्त्रनिष्कर्षणभिन्नमौलिः ( ब० व्री० ) । श्रमेण वारिरिति श्रमवारिस्तस्य बिन्दव इति श्रमवारिबिन्दवः ( त० पु० ), ललाटे बद्धाः श्रमवारिबिन्दवो यस्य स ललाटबद्धश्रमवारिबिन्दुः ( त० पु० ) ॥ ६६ ॥

व्याकरणम्—कोटी = कुट + अच् + ङीप् । भीतां = ञिभी ( भये-जित ), क्तः + टाप् । एत्य = आ + इण् + ल्यप् । बभाषे = भाष ( व्यक्तायां वाचि ), लिट् ॥ ६६ ॥

वाच्यपरिवर्तनम्—चापकोटीनिहितैकबाहुना, शिरस्त्रनिष्कर्षणभिन्नमौलिना, ललाटबद्धश्रमवारिबिन्दुना, तेन, भीतां, प्रियाम्, एत्य, वचः, बभाषे ॥ ६६ ॥

तात्पर्यार्थः—धनुरग्रभागे स्थापितैकभुजः शीर्षण्यस्यापनयनेन श्लथकेशबन्धो मस्तके श्रमजन्यजलकणयुक्तः सोऽजः भयमापन्नामिन्दुमतीमेत्य वचनमुवाच ॥ ६६ ॥

भाषाऽर्थः—धनुष के आगे एक हाथ को रखनेवाला, टोपके हटानेसे ढीले केशबन्धन और मस्तक पर परिश्रमके जलके बिंदु वाला वह ( अज ), डरी हुई प्यारी ( इंदुमती ) के पास जाकर बोला ॥ ६६ ॥

अथ हे इन्दुमति ! त्वमेभिर्नृपैर्निद्रितैरपि प्रार्थ्यसे इति तामप्राहेत्याह—

इतः परानर्भकहार्यशस्त्रान्वैदर्भि पश्यानुमता मयाऽसि ।
एवं विधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥

सञ्जीविनी—किम्? इत्याह—इत इति । हे वैदर्भि ! इन्दुमति ! इत इदानीमर्भकहार्यशस्त्रान्बालकापहार्यायुधान्पराञ्छत्रून्पश्य मयाऽनुमताऽसि, द्रष्टुमिति शेषः । एभिर्नृपैरेवंविधेन निद्रारूपेणाहवचेष्टितेन रणकर्मणा मम हस्तगता, हस्तगतवद्दुर्ग्रहेत्यर्थः । त्वं प्रार्थ्यसे, अपजिहीर्ष्यस इत्यर्थः । एवंविधेनेत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति द्रष्टव्यम् ॥ ६७ ॥

अन्वयः—हे वैदर्भि !, 'त्वम्' इतः, अर्भकहार्यशस्त्रान्, परान्, पश्य, मया, 'द्रष्टुम्-त्वम्' अनुमता, असि, एभिः, एवंविधेन, आहवचेष्टितेन, मम, हस्तगता, त्वं, प्रार्थ्यसे ॥ ६७ ॥

सुधा-हे वैदर्भि ! = हे इन्दुमति !, इतः—इदानीम्, अर्भकहार्यशस्त्रान् = बालकापहार्यास्त्रान्, परान् = शत्रून्, पश्य = अवलोकय, त्वमिति शेषः । मया = अजेन, 'द्रष्टुं - त्वम्' अनुमता = आज्ञापिता, असि = विद्यसे, एभिः = नृपैः, एवंविधेन = निद्रारूपेण, आहवचेष्टितेन = सङ्ग्रामकर्मणा, मम = अजस्य, हस्तगता = भुजप्राप्ता, करगतवद्दुर्ग्रहेति यावत् । त्वं, प्रार्थ्यसे = अपजिहीर्ष्यसे ॥ ६७ ॥

कोशः—'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च' ।इति मेदिनी ।' 'अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः' इत्यमरः ॥ ६७ ॥

समासादि—अर्भकहार्याणि शस्त्राणि येषां तेऽर्भकहार्यशस्त्रास्तानर्भकहार्यशस्त्रान् (ब० व्री०) । विदर्भस्य गोत्रापत्यं स्त्री वैदर्भी तत्सम्बुद्धौ हे वैदर्भि ! । एवं विधा ( प्रकारः ) यस्य स एवंविधस्तेन एवंविधेन ( ब० व्री० ) । आहवस्य चेष्टा सञ्जाताऽस्येत्याहवचेष्टितस्तेनाहवचेष्टितेन । हस्तं गतेति हस्तगता ( त० पु० ) ॥ ६७ ॥

व्याकरणम्—हार्य = हृ + 'ऋहलोर्ण्यत्' इत्यनेन ण्यत् । चेष्टितेन = चेष्टा + 'तदस्य सञ्जातं तारकादिभ्य इतच्' इत्यनेन इतच् । प्रार्थ्यसे = प्र + अर्थ (उपयाच्ञायाम्), कर्मणि लट् ॥६७॥

वाच्यपरिवर्तनम्—हे वैदर्भि !, 'त्वया' इतः, अर्भकहार्यशस्त्राः, पराः, दृश्यन्ताम्, मया, 'द्रष्टुम्-त्वया' अनुमतया, भूयते, एभिः, एवंविधेन, आहवचेष्टितेन, मम, हस्तगतां, त्वां, प्रार्थ्यन्ते, ॥ ६७ ॥

तात्पर्यार्थः—हे इन्दुमति ! इदानीं बालकापहार्यायुधान् शत्रूनवलोकय मया द्रष्टुं त्वमनुमताऽसि, एभिर्नृपैर्निद्रितरूपेण समरकर्मणा मम भुजलब्धाऽपि त्वमपजिहीर्ष्यसे ॥ ६७ ॥

भाषाऽर्थः—हे इन्दुमति ! इस समय ( तू ) लड़कोंसे छीनने योग्य अस्त्रवाले शत्रुओंको देख, मैंने ( देखने को तुम्हें ) आज्ञा दी है, ये इस प्रकारकी युद्ध चेष्टासे मेरे हाथमें आई हुई ( भी ) तुझे लेने की इच्छा करते हैं ॥ ६७॥

अथ शत्रोर्विषादात् विमुक्तमिन्दुमत्या मुखं प्रसन्नं बभूवेत्याह—

**तस्याः प्रतिद्वन्द्विभवाद्विषादात्सद्यो विमुक्तं मुखमाबभासे ।**
**निःश्वासबाष्पापगमात्प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥**

सञ्जीविनी—तस्या इति । प्रतिद्वन्द्विभवाद्रिपूत्थाद्विषादाद्दैन्यात्सद्यो विमुक्तं तस्या मुखं निःश्वासस्य यो बाष्प ऊष्मा, 'बाष्पो नेत्रजलोष्मणोः' इति विश्वः । तस्यापगमाद्धेतोरात्मीयं प्रसादं नैर्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यतेऽनेनेत्यात्मदर्शो दर्पण इव आबभासे ॥ ६८ ॥

अन्वयः—प्रतिद्वन्द्विभवात्, विषादात्, सद्यः, विमुक्तं, तस्याः,मुखं, निःश्वासबाष्पापगमात्, आत्मीयं, प्रसादं, प्रपन्नः, आत्मदर्शः, इव, आबभासे ॥ ६८ ॥

सुधा—प्रतिद्वन्द्विभवात् = शत्रूत्पन्नात्, विषादात् = शोकात्, मनोभङ्गादित्यर्थः । तदुक्तं-"विषादश्चेतसोभङ्ग उपायाभावनाशयोः" इति । सद्यः = सपदि, विमुक्तं = त्यक्तं, तस्याः = इन्दुमत्याः, मुखम् = आननं, निःश्वासबाष्पापगमात् = निःश्वासोष्माश्रुपरिमार्जनात्, आत्मीयं = स्वीयं, प्रसादं = नैर्मल्यम्, उज्ज्वलतामिति यावत् । प्रपन्नः = प्राप्तः, आत्मदर्शः = दर्पणः, इव = यथा, आबभासे = चकासे ॥ ६८ ॥

कोशः—'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । 'बाष्प ऊष्मणि नाऽस्त्रे' इति मेदिनी ॥ ६८ ॥

समासादि—प्रतिद्वन्द्वमस्यास्तीति प्रतिद्वन्द्वी तस्माद् भवतीति प्रतिद्वन्द्विभवस्तस्मात् प्रतिद्वन्द्विभवात् । निःश्वसनं निःश्वासस्तस्य बाष्प इति निःश्वासबाष्पस्तस्यापगमस्तस्मात् निःश्वासबाष्पापगमात् ( त० पु० ) । आत्मन इदमात्मीयम् । आत्मा ( स्वरूपं ) दृश्यतेऽनेनेत्यात्मदर्शः ॥ ६८ ॥

व्याकरणम्—आबभासे = आ + भास् + लिट् । निःश्वास = निर् + श्वस् ( प्राणने ), घञ् । प्रपन्नः = प्र + पद् + क्तः । प्रसादं = प्र + षद्लृ ( विशरणगत्यवसादनेषु = लृदित् ), भावे घञ् ।। ६८ ॥

वाच्यपरिवर्तनम्—प्रतिद्वन्द्विभवात्, विषादात्, सद्यः, विमुक्तेन, तस्याः, मुखेन, निःश्वासबाष्पापगमात्, आत्मीयं, प्रसादं, प्रपन्नेन, आत्मदर्शेन, इव, आबभासे ॥ ६८ ॥

तात्पर्यार्थः—यथा नैर्मल्यं प्राप्तो दर्पणः शोभते, तथैव शत्रूत्पन्नाद्दैन्यात्तत्क्षणे त्यक्तमिन्दुमत्या मुखं निःश्वासोष्माश्रुमार्जनात् शुशोभ ॥ ६८ ॥

भाषाऽर्थः—शत्रुओंसे उत्पन्न हुये विषादसे उसी क्षण में छुटा हुआ उस ( इंदुमती ) का मुख, श्वास की भाफ के पोंछने से निर्मलता पाये हुये दर्पण ( सीसे ) के तुल्य शोभित हुआ ॥ ६८ ॥

अथेन्दुमती अजस्य प्रशंसां स्वयं न कृतवती, किन्तु सखीद्वारैवेत्याह—

**हृष्टाऽपि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् ।**
**स्थली नवाम्भःपृषताभिवृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९ ॥**

सञ्जीविनी—हृष्टाऽपीति । सेन्दुमती हृष्टाऽपि पत्युः पौरुषेण प्रमुदिताऽपि ह्रिया विजिता यतोऽतः प्रियमजं साक्षात्स्वयं नाभ्यनन्दन्न प्रशशंस, किन्तु नवैरम्भःपृषतैः पयोबिन्दुभिरभिवृष्टाऽभिषिक्ता स्थल्यकृत्रिमाभूमिः, "जानपदकुण्डगोणस्थल" इत्यादिनाऽकृत्रिमार्थे ङीप् । अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिरिव सखीनां वाग्भिरभ्यनन्दत् ॥ ६९ ॥

अन्वयः—सा, हृष्टा, अपि, ह्रीविजिता, 'सती' प्रियं, साक्षात्, स्वयं, न, अभ्यनन्दत्, 'किन्तु' नवाम्भःपृषताभिवृष्टा, स्थली, अभ्रवृन्दं, मयूरकेकाभिः, इव, सखीनां, वाग्भिः, 'अभ्यनन्दत्' ॥ ६९ ॥

सुधा—सा = पूर्वोक्ता, इन्दुमतीति यावत् । हृष्टा = संतुष्टा, स्वामिनः पुरुषार्थेन प्रमुदितेत्यर्थः । अपि, ह्रीविजिता = लज्जापराजिता, सतीति शेषः । प्रियं = वल्लभम्, अजमिति यावत् । साक्षात् = प्रत्यक्षं, स्वयं, न अभ्यनन्दत् = न प्रशशंस, 'किन्तु' नवाम्भःपृषताभिवृष्टा = नूतनजलबिन्दुभिषिक्ता, स्थली = अकृत्रिमाभूमिः, अभ्रवृन्दं = मेघसमूहं, मयूरकेकाभिः = बर्हिवाणीभिः, इव = यथा, सखीनां = वयस्यानां, वाग्भिः = वाणीभिः, अभ्यनन्ददिति शेषः ॥ ६९ ॥

कोशः—'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इति, 'केका वाणी मयूरस्य' इति चामरः ॥ ६९ ॥

समासादि—ह्रिया विजितेति ह्रीविजिता ( त० पु० ) । अम्भसां पृषता इत्यम्भःपृषताः, नवाश्च तेऽम्भःपृषता इति नवाम्भःपृषताः ( क० धा० ), तैरभिवृष्टेति नवाम्भःपृषताभिवृष्टा ( त० पु० ) । मयूराणां केका इति मयूरकेकास्ताभिर्मयूरकेकाभिः ( त० पु० ) । अभ्रस्य वृन्दमित्यभ्रवृन्दम् ( त० पु० ) ॥ ६९ ॥

व्याकरणम्—हृष्टा = हृष ( तुष्टौ ), क्तः + टाप् । विजिता = वि + जि + क्तः + टाप् । अभ्यनन्दत् = अभि + अ + टुनदि ( समृद्धौ—टु इकारश्चेत् ), लङ् । अभिवृष्टा = अभि + वृष् + क्तः + टाप् ॥ ६९ ॥

वाच्यपरिवर्तनम्—तया, हृष्टया, अपि, ह्रीविजितया, 'सत्या' प्रियः, साक्षात्, स्वयं, न, अभ्यनन्द्यत, 'किन्तु' नवाम्भःपृषताभिवृष्टया, स्थल्या, अभ्रवृन्दं, मयूरकेकाभिः, इव, सखीनां, वाग्भिः, 'अभ्यनन्द्यत' ॥६९॥

तात्पर्यार्थः—यथा नवीनैर्जलबिन्दुभिः अभिषिक्ताऽकृत्रिमाभूमिर्मेघसमूहं मयूरशब्दैः प्रशंसति, तथा सा इन्दुमती पत्युः पौरुषेण प्रमुदिताऽपि लज्जया विजिता सत्यजं साक्षात् स्वयं न प्रशशंस, किन्तु सखीनां वचोभिरेव प्रशशंस ॥ ६९ ॥

भाषाऽर्थः—उस ( इन्दुमती ) ने, ( अजके पुरुषार्थसे ) खुशी हुई भी लज्जा से पराजित-

होकर प्रिय ( अज ) को प्रत्यक्ष अपने से प्रशंसा नहीं की, किंतु जैसे नवीन जल के बूंदों से सींची हुई भूमि मेघसमूहको मोरोंकी वाणी द्वारा सराहना करती है, वैसे सहेलियोंके वाणी द्वारा सराहना की ॥ ६९ ॥

अथ रघुपुत्रस्येन्दुमती एव विजयलक्ष्मीर्बभूवेत्याह—

**इति शिरसि स वामं पादमाधाय राज्ञामुदवहदनवद्यां तामवद्यादपेतः ।**
**रथतुरगरजोभिस्तस्य रूक्षालकाग्रा समरविजयलक्ष्मीः सैव मूर्ता बभूव ॥ ७० ॥**

सञ्जीविनी—इतीति । नोद्यते नोच्यत इत्यवद्यं गर्ह्यम्, "अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" इत्यनेन निपातः, 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः। तस्मादपेतः, निर्दोष इत्यर्थः । सोऽज इति राज्ञां शिरसि वामं पादमाधायानवद्यामदोषां तामिन्दुमतीमुदवहदुपानयत्, आत्मसाच्चकारेत्यर्थः । अयमर्थः 'तमुद्वहन्तं पथि भोजकन्याम्' इत्यत्र न श्लिष्टः । तस्याजस्य रथतुरगाणां रजोभी रूक्षाणि परुषाण्यलकाग्राणि यस्याः सा, सेन्दुमत्येव मूर्ता मूर्तिमती समरविजयलक्ष्मीर्बभूव, एतल्लाभादन्यः को विजयलक्ष्मीलाभ इत्यर्थः ॥ ७० ॥

अन्वयः—अवद्यात्, अपेतः, सः, इति, राज्ञां, शिरसि, वामं, पादम्, आधाय, अनवद्यां, ताम्, उदवहत्, रथतुरगरजोभिः, रूक्षालकाग्रा, सा, एव, तस्य, मूर्ता, समरविजयलक्ष्मीः, बभूव ॥ ७० ॥

सुधा—अवद्यात् = गर्ह्यात्, अपेतः = रहितः, दोषशून्य इत्यर्थः । सः = पूर्वोक्तः, अज इति यावत् । इति = एवं, राज्ञां = नृपाणां, शिरसि = मस्तके, वामं = सव्यं, पादं = चरणम्, आधाय = आक्षिप्य, स्वाधीनं कृत्वेत्यर्थः । अनवद्यां = दोषशून्यां, ताम् = इन्दुमतीम्, उदवहत् = उपानयत्, रथतुरगरजोभिः = स्यन्दनाश्वधूलिभिः, रूक्षालकाग्रा = परुषचूर्णकुन्तलाग्रा, सा = इन्दुमती, एव, तस्य = पूर्वोक्तस्य, अजस्येति यावत् । मूर्ता = मूर्तिमती, समरविजयलक्ष्मीः = रणविजयश्रीः, बभूव = अभूत, एतत् मालिनीच्छन्दस्तल्लक्षणं च—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥ ७० ॥

कोशः—'पादा रश्मिं तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' इति मेदिनी । 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इत्यमरः ॥ ७० ॥

समासादि—न उद्यते यया साऽनवद्या तामनवद्याम् ( ब० व्री० ) । रथाश्च तुरगाश्चेति रथतुरगाः ( द्व० ), तेषां रजांसीति रथतुरगरजांसि तैः रथतुरगरजोभिः ( त० पु० ) । अलकानामग्रमित्यलकाग्रं ( त० पु० ), रूक्षमलकाग्रं यस्याः सा रूक्षालकाग्रा ( ब० व्री० ) । समरस्य विजय इति समरविजयस्तस्य लक्ष्मीरिति समरविजयलक्ष्मीः ( त० पु० ) ॥ ७० ॥

व्याकरणम्—उदवहत् = उत् + अ + वह ( प्रापणे ), लङ् । तुरग = तुर + गम् + 'गमेश्च' इत्यनेन डः ॥ ७० ॥

वाच्यपरिवर्तनम्—अवद्यात्, अपेतेन, तेन, इति, राज्ञां, शिरसि, वामं, पादम्, आधाय, अनवद्या, सा, उदौह्यत, रथतुरगरजोभिः, रूक्षालकाग्रया, तया, एव, तस्य, मूर्तया, समरविजयलक्ष्म्या, बभूवे ॥ ७० ॥

तात्पर्यार्थः—निर्दोषः सोऽजः एवं राज्ञः स्वाधीनं कृत्वा निर्दोषां तामिन्दुमतीमुपानयत्, स्यन्दनाश्वधूलिभिः परुषचूर्णकुन्तलाग्रा इन्दुमत्येव रणविजयलक्ष्मीर्बभूव ॥ ७० ॥

भावार्थः—निर्दोष वह ( अज ) इस प्रकार राजाओंके माथे पर बाएं पैर को रख कर निर्दोष उस ( इन्दुमती ) को ले आया, रथ और घोड़ोंकी धूलिसे रूखे बालों वाली वही ( इंदुमती ) उस ( अज ) की शरीर वाली समर की विजय लक्ष्मी हुई ॥ ७० ॥

अथाजस्य विजयेन प्रसन्नो रघुस्तस्मिन् न्यस्तभारः सन् मोक्षमार्गाभिलाषी बभूवेत्याह—

**प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।**

तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभून्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ७१

सञ्जीविनी—प्रथमेति । प्रथममजागमनात्प्रागेव परिगतो ज्ञातोऽर्थो विवाहविजयरूपो येन सः, प्रथमपरिगतार्थो रघुर्विजयिनं विजययुक्तं श्लाघ्यजायासमेतं संनिवृत्तं प्रत्यागतं तमजमभिनन्द्य तस्मिन्नजे उपहितकुटुम्बः सन् , "सुतविन्यस्तपत्नीकः" इति याज्ञवल्क्यस्मरणादिति भावः । शान्तिमार्गे मोक्षमार्गे उत्सुकोऽभूत् । तथाहि—कुलधुर्ये कुलधुरन्धरे सति सूर्यवंश्या गृहाय गृहस्थाश्रमाय न भवन्ति ॥ ७१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजपाणिग्रहणो नाम सप्तमः सर्गः ॥ ७ ॥

---

अन्वयः--प्रथमपरिगतार्थः, रघुः, विजयिनं, श्लाघ्यजायासमेतं, संनिवृत्तं, तम् , अभिनन्द्य, तदुपहितकुटुम्बः, सन् , शान्तिमार्गोत्सुकः, अभूत् , हि, कुलधुर्ये, सति, सूर्यवंश्याः, गृहाय, न, 'भवन्ति' ॥ ७१ ॥

सुधा--प्रथमपरिगतार्थः = पूर्वमेव ज्ञातविवाहविजयरूपवृत्तान्तः, रघुः = दिलीपसुतः, विजयिनं = विजययुक्तं, श्लाघ्यजायासमेतं = प्रशंसनीयभार्याऽन्वितं, संनिवृत्तं = प्रत्यागतं, तम् = अजम् , अभिनन्द्य = प्रशंस्य, तदुपहितकुटुम्बः = अजन्यस्तकुटुम्बभारः, सन्निति शेषः । शान्तिमार्गोत्सुकः = मोक्षवर्त्मोत्कण्ठितः, अभूत् = बभूव, हि = यतः, कुलधुर्ये = वंशधुरन्धरे, पुत्र इति शेषः । सति = भवति, सूर्यवंश्याः = सूर्यवंशोद्भवा राजानः, गृहाय = गृहस्थाश्रमाय, न, भवन्तीति शेषः ॥ ७१ ॥

कोशः--'भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः । 'कुलं कुल्यगणे गेहे देहे जनपदेऽन्वये' इत्यनेकार्थसंग्रहः । 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः' इत्यमरः ॥७१॥

समासादि—प्रथमं परिगतोऽर्थो येन सः प्रथमपरिगतार्थः ( ब० व्री० ) । विजयः अस्यास्तीति तं विजयिनम् । श्लाघ्या चासौ जायेति श्लाघ्यजाया ( क० धा० ), तया समेत इति श्लाघ्यजायासमेतस्तं श्लाघ्यजायासमेतम ( त० पु० ) । तस्मिन् उपहितः कुटुम्बो येन स तदुपहितकुटुम्बः ( ब० व्री० ) । शान्तेर्मार्ग इति शान्तिमार्गस्तस्मिन् उत्सुक इति शान्तिमार्गोत्सुकः ( त० पु० ) । धुरं वहतीति धुर्यः, कुलस्य धुर्य इति कुलधुर्यस्तस्मिन् कुलधुर्ये ( त० पु० ) । सूर्यस्य वंशे भवाः सूर्यवंश्याः ( त० पु० ) ॥ ७१ ॥

व्याकरणम्—परिगत = परि + गम् + क्तः । संनिवृत्तं = सम् + नि + वृतु ( वर्तने—उकारेत् ), क्तः । विजयिनं = विजय + इनिः । अभिनन्द्य = अभि + टुनदि ( समृद्धौ—टु इकारश्चेत् ), क्त्वा, ल्यबादेशः । श्लाघ्य = श्लाघ + ण्यत् । जाया = जनी + यक् + आत्वम् । धुर्यं = धुर + 'धुरो यड्ढकौ' इत्यनेन यत् ॥ ७१ ॥

वाच्यपरिवर्तनम्—प्रथमपरिगतार्थेन, रघुणा, विजयिनं, श्लाघ्यजायासमेतं, संनिवृत्तं, तम् , अभिनन्द्य, तदुपहितकुटुम्बेन, 'सता' शान्तिमार्गोत्सुकेन, अभावि, हि, कुलधुर्ये, सति, सूर्यवंश्यैः, गृहाय, न, 'भूयते' ॥ ७१ ॥

तात्पर्यार्थः—अजस्यागमनात् प्रागेव ज्ञातविवाहविजयरूपवृत्तान्तो रघुर्विजययुक्तं प्रशंसनीयभार्याऽन्वितं प्रत्यागतं तमजं प्रशंस्य तस्मिन्नजे न्यस्तकुटुम्बभारः सन् मोक्षमार्गे उत्कण्ठितोऽभूत् , तथा हि वंशधुरन्धरे सुतोत्पन्ने सति सूर्यवंश्याः राजानः गृहस्थाश्रमाय न भवन्ति ॥ ७१ ॥

भावार्थः—पहले ही ( विवाह के विजयरूप ) वृत्तान्तको जानने वाले रघुने समर

विजयी, उत्तम भार्या ( इन्दुमती ) के साथ आये हुये उस ( अज ) की प्रशंसा कर ( और ) उसे कुटुम्बका भार सौंप मोक्षमार्ग की अभिलाषा की, क्यों कि कुलका भार धारण करने वाले ( पुत्रके ) होने पर सूर्यवंशी ( राजा लोग ) घरमें नहीं रहते ॥ ७१ ॥

इति श्रीमहाकविकालिदासविरचिते रघुवंशमहाकाव्ये पण्डितश्रीकपिलदेव-
मिश्रसूनुना मिश्रोपनामकश्रीसुदामाशर्मणा विरचितया सुधा-
ऽऽख्यया व्याख्यया समुल्लसितः अजपाणिग्रहणो नाम
सप्तमः सर्गः समाप्तः ॥ ७ ॥

---

## अथ अष्टमः सर्गः ॥

हेरम्बमवलम्बेऽहं यस्मिन्पातालकेलिषु
दन्तेनोद्धृस्यति क्षोणीं विश्राम्यन्ति फणीश्वराः ॥

अथ रघुर्विवाहसूत्रं धारयतोऽजस्य पृथिवीं हस्तगामिनीमकरोदित्याह—

**अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।**
**वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥ १ ॥**

सञ्जीविनी--अथेति । अथ पार्थिवो रघुर्ललितं सुभगं विवाहकौतुकं विवाहमङ्गलं विवाहहस्तसूत्रं वा बिभ्रत एव, 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । तस्याजस्य अपरामिन्दुमतीमिव वसुधामपि हस्तगामिनीमकरोत् , राज्ये तमभ्यषिञ्चदित्यर्थः । अस्मिन्सर्गे वैतालीयं छन्दः ॥ १ ॥

अन्वयः—अथ, पार्थिवः, ललितं, विवाहकौतुकं, बिभ्रतः, एव, तस्य, अपराम् , इन्दुमतीम् , इव, वसुधाम् , अपि, हस्तगामिनीम् , अकरोत् ॥ १ ॥

सुधा—अथ =अनन्तरं, मोक्षमार्गोत्सुकानन्तरमिति यावत् । पार्थिवः =भूमिपतिः, रघुरिति यावत् । ललितं =सुभगं, सुन्दरमिति यावत् । विवाहकौतुकम् =उद्वाहमङ्गलं, पाणिग्रहणहस्तसूत्रमित्यर्थो वा । बिभ्रतः=धारयतः, एव, तस्य =पूर्वोक्तस्य, अजस्येति यावत् । अपराम् =अन्याम्, इन्दुमतीं = वैदर्भीम्, इव, वसुधां = वसुन्धराम् , अपि, पृथ्वीमपीति यावत् । हस्तगामिनीं =पाणिगन्त्रीम् , अकरोत् = चकार, विवाहानन्तरं रघुरजं राज्येऽभिषिक्तवानित्यर्थः । अस्मिन् सर्गे वियोगिनीच्छन्दस्तल्लक्षणं च "विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी ।" इति ॥ १ ॥

कोशः—' विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ' इत्यमरः । 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके पुमान् ' इत्यनेकार्थसंग्रहः । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले ' इति शाश्वतश्च । सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा' इत्यमरः ॥ १ ॥

समासादि--विवाहस्य कौतुकमिति तं विवाहकौतुकम् ( त० पु० ) । पृथिव्या अयं पार्थिवः । हस्ते गन्तुं शीलमस्याः सा तां हस्तगामिनीम् ॥ १ ॥

व्याकरणम्--बिभ्रतः = डुभृञ् ( धारणपोषणयोः-डुञित् ), शतृ । पार्थिवः= पृथिवी+'तस्येदम्' इत्यनेन अण् । गामिनीम् = गम्+णिनिः ॥ १ ॥

वाच्यपरिवर्तनम्--अथ, पार्थिवेन, ललितं, विवाहकौतुकं, बिभ्रतः, एव, तस्य, अपरा, इन्दुमती, इव, वसुधा, अपि, हस्तगामिनी, अक्रियत ॥ १ ॥

तात्पर्यार्थः--मोक्षमार्गोत्सुकानन्तरं राजा रघुर्विवाहस्य हस्तसूत्रं धारयत एव तस्या-जस्य अन्याम् इन्दुमतीमिव पृथिवीमपि हस्तगामिनीञ्चकार ॥ १ ॥

भाषार्थः--इसके बाद रघुने सुन्दर विवाह का कंकण धारण किये हुये ही उस ( अज ) को, दूसरी इन्दुमती के समान पृथ्वी भी हाथ में सौंप दी। ( अर्थात् रघुने अज का राज्याभिषेक किया ) ॥ १ ॥

अथ अजो राज्यं पितुराज्ञयैव जग्राह न तु भोगेच्छयेत्याह--

**दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।**
**तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २ ॥**

सञ्जीविनी--दुरितैरिति । नृपसूनवो राजपुत्रा यद्राज्यं दुरितैरपि विषप्रयोगादिनिषिद्धोपायैरप्यात्मसात्स्वाधीनम्, "तदधीनवचने" इति सातिप्रत्ययः । कर्तुं प्रयतन्ते हि, प्रवर्तन्त एवेत्यर्थः । तथाहि--"राजपुत्रा मदोद्वृत्ता गजा इव निरङ्कुशाः । भ्रातरं पितरं वाऽपि निघ्नन्त्येवाभिमानिनः ॥" हिशब्दोऽवधारणे 'हि हेतावधारणे' इत्यमरः । उपस्थितं स्वतः प्राप्तं तद्राज्यमजः पितुराज्ञेति हेतोरग्रहीत्स्वीचकार, भोगतृष्णया तु नाग्रहीत् ॥ २ ॥

अन्वयः--नृपसूनवः, यत्, दुरितैः, अपि, आत्मसात्, कर्तुं, प्रयतन्ते, हि, 'किन्तु' अजः, उपस्थितं, तद्, पितुः, आज्ञा, इति, 'बुद्ध्वा' अग्रहीत्, भोगतृष्णया, न 'अग्रहीत्' ॥ २ ॥

सुधा--नृपसूनवः = राजसुताः, यत् = राज्यं, दुरितैः = दुष्कृतैः, अपि, विषप्रयोगादिनिषिद्धोपचारैरपीति यावत् । आत्मसात् = स्वाधीनं, कर्तुं = विधातुं, प्रयतन्ते = प्रवर्तन्ते, हि, 'किन्तु' अजः = रघुसूनुः, उपस्थितं = प्राप्तं, तत् = पूर्वोक्तं, राज्यमिति यावत् । पितुः = रघोः, आज्ञा = शासनम्, इति = एवं, बुद्ध्वेति शेषः । अग्रहीत् = स्वीकृतवान्, भोगतृष्णया = सुखस्पृहया, न, अग्रहीदिति शेषः ॥ २ ॥

कोशः--'कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम्' इति, 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति चामरः । 'भोगः सुखे धने चाहेः शरीरफणयोर्मतः । पालनेऽभ्यवहारे च योषिदादिभृतावपि' इति मेदिनी ॥ २ ॥

समासादि--आत्माधीनमित्यात्मसात् । नृपाणां सूनव इति नृपसूनवः ( त० पु० ) । भोगस्य तृष्णा इति भोगतृष्णा तया भोगतृष्णया ( त० पु० ) ॥ २ ॥

व्याकरणम्--कर्तुं = कृ + तुमुन् । प्रयतन्ते = प्र + यति (प्रयत्ने), लट् । उपस्थित = उप + स्था + क्तः + इत्वम् । अग्रहीत् = अ + ग्रह ( उपादाने ), लुङ् ॥ २ ॥

वाच्यपरिवर्तनम्--नृपसूनुभिः, यत्, दुरितैः, अपि, आत्मसात्, कर्तुं, प्रयत्यते, हि, 'किन्तु' अजेन, उपस्थितं, तद्, पितुः, आज्ञा, इति, 'बुद्ध्वा' अग्राहि, भोगतृष्णया, न 'अग्राहि'॥ २ ॥

तात्पर्यार्थः--नृपात्मजाः यद् राज्यं विषप्रयोगादिभिर्निषिद्धोपचारैरपि स्वाधीनं कर्तुं प्रवर्तन्ते हि, किन्तु अजः स्वतः प्राप्तं तद्राज्यं 'पितुः आज्ञा' इति ज्ञात्वा स्वीचकार ॥ २ ॥

भाषार्थः--राजाओं के लड़के जिस राज्य को अनुचित उपायों से भी ( अपने ) अधीन करने के लिये यत्न करते हैं, ( किन्तु ) अजने ( स्वतः ) प्राप्त उस राज्य को पिता की आज्ञा ( जानकर ) ग्रहण किया, भोग ( सुख आदि ) की इच्छा से नहीं ग्रहण किया ॥ २ ॥

अथ मेदिनी अजेन सहाभिषेचनमनुभूय स्फुटमुद्बृंहणेन साफल्यं जगादेवेत्याह--

**अनुभूय वसिष्ठसंभृतैः सलिलैस्तेन सहाभिषेचनम् ।**
**विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३ ॥**

सञ्जीविनी--अनुभूयेति । मेदिनी भूमिः महिषी च ध्वन्यते, वसिष्ठेन संभृतैः सलिलैस्तेनाजेन सहाभिषेचनमनुभूय विशदोच्छ्वसितेन स्फुटमुद्बृंहणेन आनन्दनिर्मलोच्छ्वसितेन

चेति ध्वन्यते, कृतार्थतां गुणवद्भर्तृलाभकृतं साफल्यं कथयामासेव। न चैतावता पूर्वश्लोकप्रकर्षः, प्रशंसापरत्वात्, "सर्वत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्" इत्यङ्गीकृतत्वाच्च ॥ ३ ॥

अन्वयः—मेदिनी, वसिष्ठसम्भृतैः, सलिलैः, तेन, सह, अभिषेचनम्, अनुभूय, विशदोच्छ्वसितेन, कृतार्थतां, कथयामास, इव ॥ ३ ॥

सुधा—मेदिनी = पृथिवी, अत्र मेदिनीपदेन देवीन्दुमती च ध्वन्यते। वसिष्ठसम्भृतैः = वसिष्ठप्रक्षिप्तैः, महर्षिवसिष्ठेन समन्त्रं प्रक्षिप्तैरिति यावत्। सलिलैः = जलैः, तेन = अजेन, सह = साकम्, अभिषेचनं = स्नपनम्, अनुभूय = अनुभवं कृत्वा, प्राप्येति यावत्। विशदोच्छ्वसितेन = व्यक्तमुद्बृंहणेन, स्फुटमानन्दोच्छ्वसितेन चेति ध्वन्यते। कृतार्थतां = गुणवद्भर्तृलाभकृतसाफल्यं, कथयामास = वदति स्म, इव ॥ ३ ॥

कोशः—'सलिलं कमलं जलम्' इत्यमरः। 'विशदः पाण्डरे व्यक्ते' इति हैमः। 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही' इत्यमरः ॥ ३ ॥

समासादि—वसिष्ठेन सम्भृतानीति वसिष्ठसम्भृतानि तैर्वसिष्ठसम्भृतैः (त० पु०)। विशदञ्च तदुच्छ्वसितमिति विशदोच्छ्वसितं तेन विशदोच्छ्वसितेन (क० धा०)। कृतोऽर्थो येन स कृतार्थस्तस्य भावः कृतार्थता तां कृतार्थताम् (त० पु०) ॥ ३ ॥

व्याकरणम्—अभिषेचनम् = अभि + षिच (क्षरणे), ल्युट्। उच्छ्वसितेन = उत् + श्वस (प्राणने), क्तः + इट्। मेदिनी = ञिमिदा (स्नेहने-र्णात्), ग्रह्यादित्वादिनिः + ङीप्। कथयामास = कथ + णिच् + आम् + अस + लिट् ॥ ३ ॥

वाच्यपरिवर्तनम्—मेदिन्या, वसिष्ठसम्भृतैः, सलिलैः, तेन, सह, अभिषेचनम्, अनुभूय, विशदोच्छ्वसितेन, कृतार्थता, कथयामासे, इव ॥ ३ ॥

तात्पर्यार्थः—पृथिवी वसिष्ठेन समन्त्रं प्रक्षिप्तैर्जलैस्तेन अजेन सममभिषेचनमनुभूय स्फुटमुद्बृंहणेन गुणवद्भर्तृलाभकृतं साफल्यं वदति स्म इव ॥ ३ ॥

भाषाऽर्थः—पृथ्वीने वसिष्ठ ऋषि के (मंत्र पूर्वक) छिड़के हुये जलों से उस (अज) के साथ अभिषेकका अनुभव कर साफ भाफसे मानो (अपनी) कृतार्थता (सफलता) बतलाई ॥ ३ ॥

अथाजः शत्रुभिर्दुर्धर्षो बभूवेत्याह—

> स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः।
> पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥

सञ्जीविनी—स इति। अथर्वविदाऽथर्ववेदाभिज्ञेन गुरुणा वसिष्ठेन कृतक्रियः, अथर्वोक्तविधिना कृताभिषेकसंस्कार इत्यर्थः। सोऽजः परैः शत्रुभिर्दुरासदो दुर्धर्षो बभूव। तथाहि-अस्त्रतेजसा क्षत्रतेजसा सहितं युक्तं यद् ब्रह्म ब्रह्मतेजोऽयं पवनाग्निसमागमो हि, तत्कल्प इत्यर्थः। पवनाग्नीत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात्, "द्वन्द्वे घि" इति नाग्निशब्दस्य पूर्वनिपातः। तथा च काशिकायाम्—"अयमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्" इति। क्षात्रेणैवायं दुर्धर्षः किमयं पुनर्वसिष्ठमन्त्रप्रभावे सतीत्यर्थः। अत्र मनुः—"नाक्षत्रं ब्रह्म भवति क्षत्रं नाब्रह्म वर्धते। ब्रह्मक्षत्रे तु संयुक्ते इहामुत्र च वर्धते ॥" इति ॥ ४ ॥

अन्वयः—सः, अथर्वविदा, गुरुणा, कृतक्रियः, 'सन्' परैः, दुरासदः, बभूव, हि, अस्त्रतेजसा, सहितं, यत्, ब्रह्म, अयं, पवनाग्निसमागमः, 'अस्ति' ॥ ४ ॥

सुधा—सः = पूर्वोक्तः, अज इति यावत्। अथर्वविदा = अथर्ववेदाभिज्ञेन, गुरुणा = वसिष्ठेन, कृतक्रियः = विहितकर्मा, अथर्ववेदोक्तविधिना कृताभिषेकसंस्कार इति यावत्। सन्निति शेषः। परैः = शत्रुभिः, दुरासदः = दुस्सहः, बभूव = अभूत्, हि = यतः, अस्त्रतेजसा = क्षत्रतेजसा, सहितं = युतं, यत्, ब्रह्म = विप्रतेजः, अयम् = एषः, पवनाग्निसमागमः = मरुत्वह्निसंयोगः, वाय्वग्नितुल्य इत्यर्थः। अस्तीति शेषः ॥ ४ ॥

कोशः--'क्रिया कर्मणि चेष्टायां करणे सम्प्रधारणे । आरम्भोपायशिक्षार्थचिकित्सा निष्कृतिष्वपि ' इति विश्वः । ' ब्रह्म तत्व तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदो- र्विप्रे ' इति मेदिनी ॥ ४ ॥

समासादि—दुःखेनासद्यत इति दुरासदः । अथर्वं वेत्तीत्यथर्ववित्तेनाथर्वविदा । कृता क्रिया यस्य सः कृतक्रियः ( ब० व्री० ) । पवनश्चाग्निश्चेति पवनाग्नी ( द्व० ), तयोः समागम इति पवनाग्निसमागमः ( त० पु० ) । अस्त्रं तेजो यस्य स अस्त्रतेजा तेनास्त्रतेजसा ( ब० व्री० ) ॥ ४ ॥

व्याकरणम्—दुरासदः = दुर् + आ + षद्लृ ( विशरणादौ—लृदित् ), 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनेन खल् । अथर्वविदा = अथर्व + विद् ( ज्ञाने ), क्विप् । 'पवनाग्नी' इत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् 'द्विन्द्वे घि' इत्यनेन न 'अग्नि' शब्दस्य पूर्वनिपातः ॥ ४ ॥

वाच्यपरिवर्तनम्—तेन, अथर्वविदा, गुरुणा, कृतक्रियेण, 'सता' परैः, दुरासदेन, बभूवे, हि, अस्त्रतेजसा, सहितं, येन, ब्रह्मणा, अनेन, पवनाग्निसमागमेन, 'भूयते' ॥ ४ ॥

तात्पर्यार्थः—सोऽजो अथर्ववेदाभिज्ञेन वसिष्ठेन अथर्ववेदोक्तविधिना कृताभिषेकसंस्कारः सन् शत्रुभिर्दुस्सहो बभूव, यतः क्षत्रतेजसा सहितं यत् ब्रह्मतेजः तत्पवनाग्नितुल्यं भवति ॥४॥

भाषार्थः—वह ( अज ) अथर्ववेद को जानने वाले गुरु ( वसिष्ठ ) से अभिषेक को प्राप्त होकर शत्रुओं से दुस्सह हो गया, क्यों कि क्षत्रिय तेजसे सहित जो ब्रह्मतेज है ( वह ) अग्नि और वायु का समागम ( संयोग ) 'है' ॥ ४ ॥

अथ प्रजाः अजं निवृत्तयौवनं रघुमेवामन्यन्तेत्याह—

रघुमेव निवृत्तयौवनं तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान्गुणानपि ॥ ५ ॥

सञ्जीविनी--रघुमिति । प्रजा नवेश्वरं तमजं निवृत्तयौवनं प्रत्यावृत्तयौवनं रघुमेवामन्यन्त, न किञ्चिद्भेदकमस्तीत्यर्थः । कुतः ? हि यस्मात्सोऽजस्तस्य रघोः केवलामेकां श्रियं न प्रतिपेदे, किन्तु सकलान्गुणाञ्छौर्यदाक्षिण्यादीनपि प्रतिपेदे, अतस्तद्गुणयोगात्तद्बुद्धिर्युक्तेत्यर्थः ॥ ५ ॥

अन्वयः—प्रजाः, नवेश्वरं, तं, निवृत्तयौवनं, रघुम, एव, अमन्यन्त, हि, सः, तस्य, केवलां, श्रियं, न, प्रतिपेदे, 'किन्तु' सकलान्, गुणान्, अपि, 'प्रतिपेदे' ॥ ५ ॥

सुधा—प्रजाः = जनाः, प्रकृतय इति यावत् । नवेश्वरं = नूतनस्वामिनं, तं = पूर्वोक्तम्, अजमिति यावत् । निवृत्तयौवनं = प्रत्यावृत्ततारुण्यं, रघुम्, एव, अमन्यन्त = मन्यन्ते स्म, हि = यतः, सः = अजः, तस्य = पूर्वोक्तस्य, रघोरिति यावत् । केवलाम् = एकां, श्रियं = लक्ष्मीं, न प्रतिपेदे = न प्राप्तवान्, 'किन्तु' सकलान् = सर्वान्, गुणान् = शौर्यदाक्षिण्यादीन्, अपि, प्रतिपेद इति शेषः ॥ ५ ॥

कोशः—'तारुण्यं यौवनं समे' इति, 'प्रजा स्यात्सन्ततौ जने' इति, 'एके मुख्यान्यकेवलाः' इति चामरः । 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु । शुक्लादावपि बुद्ध्यां च' इति मेदिनी ॥ ५ ॥

समासादि—यूनोर्भावो यौवनं, निवृत्तं यौवनं यस्य तन्निवृत्तयौवनम् ( ब० व्री० ) । नवश्चासावीश्वर इति नवेश्वरस्तं नवेश्वरम् ( क० धा० ) । प्रकर्षेण जायन्त इति प्रजाः ॥ ५ ॥

व्याकरणम्—निवृत्त = नि + वृतु ( वर्तने—उकारेत् ), क्तः । यौवनं = युवन् + 'हायनान्तयुवादिभ्योऽण्' इत्यनेन अण्, 'अन्' इत्यनेन प्रकृतिभावः । अमन्यन्त = अ + मन् + लङ् । प्रजाः = प्र + जनी ( प्रादुर्भावे-ईकारेत् ), डः । प्रतिपेदे = प्रति + पद् + लिट् ॥ ५ ॥

वाच्यपरिवर्तनम्—प्रजाभिः, नवेश्वरः, सः, निवृत्तयौवनः, रघुः, एव, मेने, हि, तेन, तस्य, केवला, श्रीः, न, प्रतिपेदे, 'किन्तु' सकलाः, गुणाः, अपि, 'प्रतिपेदिरे' ॥ ५ ॥

तात्पर्यार्थः—जनाः नूतनस्वामिनं तमजं प्रत्यावृत्ततारुण्यं रघुमेव मन्यन्ते स्म, यस्मात् सः अजस्तस्य रघोरेकां लक्ष्मीं न प्राप्तवान्, किन्तु सर्वान् शौर्यदाक्षिण्यादिगुणानपि प्राप्तवान् ॥ ५ ॥

भाषाऽर्थः—प्रजाने नवीन राजा उस ( अज ) को लौटे हुये यौवन वाला रघु ही माना, क्यों कि उस ( अज ) ने उस ( रघु ) की केवल लक्ष्मी ही को नहीं, ( किन्तु रघुके ) सब ( शौर्य आदि ) गुण को भी प्राप्त किया ॥ ५ ॥

अथ पितुरागतं राज्यमजेन, तस्य यौवनमिन्द्रियजयेन च, इत्युभाभ्यां सङ्गतमुभयं शुशुभ इत्याह—

**अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव सङ्गतम् ।**
**पदमृद्धमजेन पैतृकं विनयेनास्य नवं च यौवनम् ॥ ६ ॥**

सञ्जीविनी—अधिकमिति । द्वयमेव शुभंयुना शुभवता, 'शुभंयुस्तु शुभान्वितः' इत्यमरः। "अहंशुभमोर्युस्" इति युस्प्रत्ययः । द्वितयेन सङ्गतं युतं सदधिकं शुशुभे । किं केनेत्याह—पदमिति । पैतृकं पितुरागतम्, "ऋतष्ठञ्" इति ठञ्प्रत्ययः । ऋद्धं समृद्धं पदं राज्यमजेन अस्याजस्य नवं यौवनं विनयेनेन्द्रियजयेन च "विजयो हीन्द्रियजयस्तद्युक्तः शास्त्रमर्हति" इति कामन्दकः । राज्यस्थोऽपि प्राकृतवन्न दृप्तोऽभूदित्यर्थः ॥ ६ ॥

अन्वयः—द्वयम्, एव, शुभंयुना, द्वितयेन, सङ्गतं, 'सत्' अधिकं, शुशुभे, पैतृकम्, ऋद्धं, पदम्, अजेन, अस्य, नवं, यौवनं, विनयेन, च 'शुशुभे' ॥ ६ ॥

सुधा—द्वयम् = उभयम्, एव, शुभंयुना = शुभवता, द्वितयेन = द्वयेन, सङ्गतं = युक्तं, सदिति शेषः । अधिकं = बहुलं, शुशुभे = शोभते स्म, 'तथा हि'—पैतृकं = पितृसम्बन्धि, ऋद्धं = समृद्धं, पदं = राज्यम्, अजेन, 'सङ्गतं—सत्—शुशुभे' इति शेषः । अस्य = अजस्य, नवं = नूतनं, यौवनं = तारुण्यं, विनयेन = इन्द्रियजयेन, च, 'संगतं-सत्-शुशुभे' इति शेषः ॥६॥

कोशः 'ऋद्धं सम्पन्नधान्ये च सुसमृद्धे तु वाच्यवत्' इति विश्वः । 'नवीनो नूतनो नवः' इत्यमर ॥ ६ ॥

समासादि—शुभमस्तीति शुभंयुस्तेन शुभंयुना । द्वाववयवौ यस्य तत् द्वितयं तेन द्वितयेन । पितुरागतं पैतृकम् । यूनोर्भावो यौवनम् ॥ ६ ॥

व्याकरणम्—शुभंयुना = शुभम् + 'अहं शुभमोर्युस्' इत्यनेन युस् । द्वितयेन = द्वि + 'संख्याया अवयवे तयप्' इत्यनेन तयप् । द्वयं = द्वि + तयप् + 'द्वित्रिभ्यां तयस्यायज्वा' इति तयस्यायजादेशः । सङ्गतं = सम् + गम् + क्तः । ऋद्धम् = ऋधु (वृद्धौ), क्तः । पैतृकं = पितृ + 'ऋतष्ठञ्, इति ठञ् ॥ ६ ॥

वाच्यपरिवर्तनम्—द्वयेन एव, शुभंयुना, द्वितयेन, सङ्गतेन, 'सता' अधिकेन, शुशुभे, पैतृकेन, ऋद्धेन, पदेन, अजेन, अस्य, नवेन यौवनेन, विनयेन, च, 'शुशुभे' ॥ ६ ॥

तात्पर्यार्थः—पितृसंबन्धि समृद्धं राज्यमजेन, अस्य नवीनं यौवनमिन्द्रियजयेन च, सङ्गतं सदधिकं शुशुभे, एवञ्चोभयमेव शुभवता द्वयेन युक्तं सदधिकं शोभते स्म ॥ ६ ॥

भाषाऽर्थः—ये दोनों ही शुभ युक्त दोनों के संग से अधिक शोभित हुये, ( अर्थात् ) पिता से आया हुआ समृद्ध राज्य अज से ( शोभित हुआ ), और नवीन युवा अवस्था इन्द्रियों को जीतने से शोभित हुई ॥ ६ ॥

अथाजः नवविवाहितां नारीमिव पृथिवीं बलात्कारेण न भुक्तवानित्याह—

**सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।**
**अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ७ ॥**

सञ्जीविनी—सदयमिति । महाभुजः सोऽजोऽचिरोपनतां नवोपगतां मेदिनीं भुवं नवं पाणिग्रहणं विवाहो यस्यास्तां नवोढां वधूमिव, उक्तं च रतिरहस्ये—"सौम्यैरालिङ्गनैर्वाक्यैश्चुम्बनैश्चापि सांत्वयेत्" । सहसा बलात्कारेण चेत् , 'सहो बलं सहा मार्गः' इत्यमरः । इयं मेदिनी वधूर्वोद्वेगं भयं व्रजेदिति हेतोः सदयं सकृपं बुभुजे भुक्तवान् , "भुजोऽनवने" इत्यात्मनेपदम् ॥ ७ ॥

अन्वयः--महाभुजः, सः, अचिरोपनतां, मेदिनीं, नवपाणिग्रहणां, वधूम् , इव, सहसा, इयम् , उद्वेगं, व्रजेत् , इति, सदयं, बुभुजे ॥ ७ ॥

सुधा--महाभुजः = महाबाहुः, सः = पूर्वोक्तः, अज इति यावत् । अचिरोपनताम् = अविलम्बितोपगतां, नवप्रापितामिति यावत् । मेदिनीं = पृथ्वीं, नवपाणिग्रहणां = नूतनपरिणीतां, नवविवाहितामिति यावत् । वधूं = नारीम् , इव = यथा, सहसा = हठात् , इयं = पृथ्वी, इयमित्यनेन वधूरिन्दुमती अपि ध्वन्यते । उद्वेगं = भयं, व्रजेत् = प्राप्नुयात् , इति = एवं, ज्ञात्वेति शेषः । सदयं = सानुकम्पं, बुभुजे = भुक्तवान् ॥ ७ ॥

कोशः--'भुजबाहू प्रवेष्टो दोः' इति, 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही' इति, 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इति चामरः ॥ ७ ॥

समासादि--महान्तौ भुजौ यस्य स महाभुजः ( ब० व्री० ) । अचिरेणोपनतेत्यचिरोपनता तामचिरोपनताम् ( त० पु० ) । नवं पाणिग्रहणं यस्याः सा नवपाणिग्रहणा तां नवपाणिग्रहणाम् ( ब० व्री० ) ॥ ७ ॥

व्याकरणम्--बुभुजे = भुज ( पालनाभ्यवहारयोः ), लिट् । व्रजेत् = व्रज ( गतौ ), विधिलिङ् । उपनताम् = उप + णम् ( प्रह्वत्वे शब्दे ), क्तः + टाप् ॥ ७ ॥

वाच्यपरिवर्तनम्—महाभुजेन, तेन, अचिरोपनता, मेदिनी, नवपाणिग्रहणा, वधूः, इव, सहसा, इयम्, उद्वेगं, न, व्रजेत् , इति, सदयं, बुभुजे ॥ ७ ॥

तात्पर्यार्थः—यथा जनः नवविवाहितां नारीं बलात्कारेण कदाचित् भयं प्राप्नुयादिति हेतोस्तां सकृपं भुङ्क्ते, तथा महाबाहुः स अजः नवप्रापितां पृथिवीं सकृपं भुक्तवान् ॥ ७ ॥

भाषाऽर्थः—महाबाहु उस ( अज ) ने नवीन प्राप्त हुई ( उस ) पृथ्वी को नवविवाहित बहू की नाईं 'बलात्कार से डर जायगी' ऐसा ( समझ कर ) दया सहित भोगा ॥ ७ ॥

अथाजः प्रजासु मध्ये एकमपि जनं न तिरस्कृतवानित्याह--

**अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।**
**उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥**

सञ्जीविनी—अहमिति । प्रकृतिषु प्रजासु मध्ये सर्वोऽपि जनः, अथ वा प्रकृतिष्वित्यस्याहमित्यनेनान्वयः, व्यवधानं तु सह्यम् । सर्वोऽपि जनः प्रकृतिष्वहमेव महीपतेर्मतो महीपतिनामन्यमानः, "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः, "क्तस्य च वर्तमाने" इति षष्ठी । इत्यचिन्तयदमन्यत, उदधेर्निम्नगाशतेष्विवास्य नृपस्य कर्तुः, "कर्तृकर्मणोः कृति" इति कर्तरि षष्ठी। क्वचिदपि जनविषये विमाननाऽवगणना तिरस्कारो नाभवत् , यतो न कञ्चिदवमन्यतेऽतः सर्वोऽप्यहमेवास्य मत इत्यमन्यतेत्यर्थः ॥ ८ ॥

अन्वयः--प्रकृतिषु, सर्वः, अहम् , एव, महीपतेः, मतः, इति, अचिन्तयत् , उदधेः, निम्नगाशतेषु, इव, अस्य, विमानना, क्वचित् , न, अभवत् ॥ ८ ॥

सुधा--प्रकृतिषु = प्रजासु, मध्ये इति शेषः । सर्वः = सकलः, सर्वोऽपि जन इति यावत् । अहम् = जनः, एव, महीपतेः = भूमिपतेः, मतः = इष्टः, महीपतिना मन्यमान इति यावत् । इति = एवम् , अचिन्तयत् = अमन्यत, उदधेः = समुद्रस्य, निम्नगाशतेषु = आपगाशतेषु,

नदीशतेष्विति यावत्। इव, अस्य = नृपस्य, अजस्येति यावत् । विमानना = अवगणना, तिरस्कार इति यावत् । क्वचित् = कुत्रचित्, कुत्रापीति यावत्। नाभवत् = न बभूव ॥ ८ ॥

कोशः—'प्रकृतिर्योनिशिल्पिनोः । पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः' इत्यनेकार्थसंग्रहः । 'स्रवन्ती निम्नगापगा' इत्यमरः ॥ ८ ॥

समासादि—पातीति पतिः, मह्याः पतिरिति महीपतिस्तस्य महीपतेः ( त० पु० ) । उदकानि धीयन्तेऽत्रेत्युदधिस्तस्योदधेः ( त० पु० )। निम्नं गच्छति या सा निम्नगा, तस्याः शतानीति निम्नगाशतानि तेषु निम्नगाशतेषु ( त० पु० ) ॥ ८ ॥

व्याकरणम्—मतः = मन् 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनेन वर्तमाने क्तः, 'क्तस्य च वर्तमाने' इति 'महीपतेः' इत्यत्र षष्ठी । अचिन्तयत् = अ + चिति ( स्मृत्याम् ), णिच् + नुम् + लङ् । उदधेः = उदक + धा + 'कर्मण्यधिकरणे च' इत्यनेन किः, 'उदकस्योदः संज्ञायाम्' इत्यनेनोदादेशः । निम्नगा = निम्न + गम्लृ ( गतौ—लृदित् ), 'अन्येभ्योऽपि दृश्यन्ते' इति वार्तिकेन डः । विमानना = वि + मान + युच् ॥ ८ ॥

वाच्यपरिवर्तनम्—प्रकृतिषु, सर्वेण, अहम्, एव, महीपतेः, मतः, इति, अचिन्त्यत, उदधेः, निम्नगाशतेषु, इव, अस्य, क्वचित् विमाननया, न, अभूयत ॥ ८ ॥

तात्पर्यार्थः—प्रजासु मध्ये सर्वोऽपि जनः " अहमेव राज्ञा मन्यमानः " इत्येवममन्यत, यथा समुद्रस्य नदीशतेषु तिरस्कारो न भवति, तथाऽजकर्तृकः प्रजासु तिरस्कारो न बभूव ॥८॥

भाषाऽर्थः—प्रजाओं में सभी ( मनुष्य ) 'मैं ही राजा ( अज ) का प्रिय हूँ' ऐसा समझे, जैसे सैकड़ों नदियों में समुद्र का तिरस्कार नहीं है, वैसे इस ( अज ) से तिरस्कार कहीं भी नहीं हुआ ॥ ८ ॥

अथाजः राज्ञोऽनुत्पाटयन्नेव नमयामासेत्याह—

**न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।**
**स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ ९ ॥**

सञ्जीविनी—नेति । स नृपो भूयसा बाहुल्येन खरस्तीक्ष्णो न, भूयसा मृदुरतिमृदुरपि न, किन्तु पुरस्कृतमध्यमक्रमः सन् , मध्यमपरिपाटीमवलम्ब्येत्यर्थः । पवमानो वायुः पृथिवीरुहांस्तरूनिव नृपाननुद्धरन्ननुत्पाटयन्नेव नमयामास । अत्र कामन्दकः-"मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः । तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च संमतः ॥" ॥ ९ ॥

अन्वयः—सः, भूयसा, खरः, न, मृदुः, च, न, 'बभूव', 'किन्तु' पुरस्कृतमध्यमक्रमः, 'सन्' पवमानः, पृथिवीरुहान्, इव, नृपान्, अनुद्धरन्, नमयामास ॥ ९ ॥

सुधा—सः = अजः, भूयसा = बाहुल्येन, खरः = तीक्ष्णः, न, मृदुः = कोमलः, न, 'बभूव' 'किन्तु' पुरस्कृतमध्यमक्रमः = मध्यमपरिपाटीमुपगतः, सन्निति शेषः । पवमानः = वातः, वायुरिति यावत् । पृथिवीरुहान् = वृक्षान्, इव = यथा, नृपान् = राज्ञः, अनुद्धरन् = अनुत्पाटयन्, नमयामास = स्ववशगाँश्चकार । अत्र कामन्दकः—"मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः । तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च सम्मतः" इति ॥ ९ ॥

कोशः—'खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च' इत्यनेकार्थसंग्रहः । 'सुकुमारं तु कोमलं मृदुलं मृदु' इति, 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इति चामरः ॥ ९ ॥

समासादि—पवतेऽसौ पवमानः । पृथिव्यां रोहन्तीति पृथिवीरुहास्तान् पृथिवीरुहान् । मध्यमश्चासौ क्रम इति मध्यमक्रमः ( क० धा० ), पुरस्कृतो मध्यमक्रमो येन सः पुरस्कृतमध्यमक्रमः ( ब० व्री० ) । उद्धरतीत्युद्धरन् न उद्धरन्नित्यनुद्धरन् ॥ ९ ॥

व्याकरणम्—पवमानः = पूङ् ( पवने-ङकारेत् ), 'पूङ्यजोः शानन्' इत्यनेन शानन्, 'आने मुक्' इत्यनेन मुगागमः । रुहान् = रुह ( बीजजन्मनि प्रादुर्भावे च ), 'इगुपधज्ञाप्री-

किरः कः' इत्यनेन कः । नमयामास=णम ( प्रह्वत्वे शब्दे च ), णिच्+लिट् । अनुद्धरन् =न +उत् +हृ +शतृ ॥ ९ ॥

वाच्यपरिवर्तनम्--तेन, भूयसा, खरेण, न, मृदुना, च, न, 'बभूवे' 'किन्तु' पुरस्कृत-मध्यमक्रमेण, 'सता' पवमानेन, पृथिवीरुहाः, इव, नृपाः, अनुद्धरता, नमयामासिरे ॥ ९ ॥

तात्पर्यार्थः--यथा वायुः वृक्षाननुत्पाटयन् नमयति, तथा स अजो बाहुल्येन तीक्ष्णः कोमलश्च न बभूव, किन्तु मध्यमपरिपाटीमवलम्ब्य शत्रुभूतान्नृपाननुद्धरन् स्ववशगांश्चकार ॥ ९ ॥

भाषाऽर्थः--वह ( अज ) न बहुत तीक्ष्ण और न कोमल ( हुआ, किन्तु ) मध्यम क्रम-को अवलंबन किये हुये, जैसे हवा वृक्षों को उखाड़े बिना ही नमा देती है, वैसे राजाओं को उखाड़े बिना ही नमा दिया ( याने वशमें कर लिया ) ॥ ९ ॥

अथ रघुः अजस्य राज्यकार्यनैपुण्यमवलोक्य स्वर्गस्थेष्वपि वस्तुषु निःस्पृहोऽभूदित्याह-

**अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।**
**विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥ १० ॥**

सञ्जीविनी—अथेति । अथ रघुरात्मजं पुत्रमात्मवत्तया, निर्विकारमनस्कतयेत्यर्थः । "उद्-यादिष्वविकृतिर्मनसः सत्त्वमुच्यते । आत्मवान्सत्त्ववानुक्तः" इत्युत्पलमालायाम् । प्रकृति-ष्वमात्यादिषु प्रतिष्ठितं रूढमूलं वीक्ष्य ज्ञात्वा विनाशो धर्मो येषां तेषु विनाशधर्मसु, अनि-त्येष्वित्यर्थः । "धर्मादनिच्केवलात्" इत्यनिच् प्रत्ययः समासान्तः । त्रिदिवस्थेषु स्वर्गस्थेष्व-पि वि षयेषु शब्दादिषु निःस्पृहो निर्गतेच्छोऽभवत् ॥ १० ॥

अन्वयः--अथ, रघुः, आत्मजम् , आत्मवत्तया, प्रकृतिषु, प्रतिष्ठितं, वीक्ष्य, विनाशधर्मसु, त्रिदिवस्थेषु, अपि, विषयेषु, निःस्पृहः, अभवत् ॥ १० ॥

सुधा--अथ=अनन्तरं, शत्रुभूतनृपनम्रीकरणानन्तरमिति यावत् । रघुः=अजपिता, आत्मजं=सुतम् , अजमिति यावत् । आत्मवत्तया=बुद्धिमत्तया, विकाररहितमनस्कतयेति यावत् । (१)प्रकृतिषु=अमात्यादिषु, प्रतिष्ठितम्=अवस्थितं, रूढबलमिति यावत् । वीक्ष्य = अवलोक्य, विनाशधर्मसु=परिणामिधर्मसु, अनित्येष्वित्यर्थः, । त्रिदिवस्थेषु=स्वर्गस्थेषु, अपि, विषयेषु=शब्दादिषु, निःस्पृहः=निराकाङ्क्षः, अभवत्=अभूत् ॥ १० ॥

कोशः—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः । 'विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि' इति, 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इति चामरः ॥ १० ॥

समासादि—आत्मनो जात आत्मजस्तमात्मजम् । आत्माऽस्त्यस्मिन्निति आत्मवान् , तस्य भाव आत्मवत्ता तया आत्मवत्तया । विनाशो धर्मो येषां ते विनाशधर्माणस्तेषु विना-शधर्मसु ( ब० व्री० ) । तिसृष्वप्यवस्थासु, त्रयो ( ब्रह्मविष्णुरुद्रा ) वाः, दीव्यन्त्यत्रेति त्रिदिवस्तत्र तिष्ठन्तीति त्रिदिवस्थास्तेषु त्रिदिवस्थेषु । निर्गता स्पृहा यस्य स निःस्पृहः ( ब० व्री० ) ॥ १० ॥

व्याकरणम्—वीक्ष्य=वि+ईक्ष ( दर्शने ), क्त्वा, ल्यबादेशः । प्रतिष्ठितं=प्रति+ष्ठा

( १ ) अमरे—"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः" इति प्रकृति-शब्देनोक्तम् ॥

कामन्दकीये तु—"स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमु-च्यते । पौरश्रेणिभिः सहाष्टाङ्गमपि राज्यम्" इति विशेषः प्रदर्शितः ।

( गतिनिवृत्तौ ), क्तः + इत्वम् । त्रिदिवस्थेषु = त्रि + दिवु ( क्रीडादिषु ), 'हलश्च' इत्यनेन घञ्, संज्ञापूर्वकत्वान्न गुणः, तस्मात्–स्था + कः ॥ १० ॥

वाच्यपरिवर्तनम्—अथ, रघुणा, आत्मजम्, आत्मवत्तया, प्रकृतिषु, प्रतिष्ठितं, वीक्ष्य, विनाशधर्मसु, त्रिदिवस्थेषु, अपि, विषयेषु, निःस्पृहेण, अभूयत ॥ १० ॥

तात्पर्यार्थः—अनन्तरं रघुस्तनयमजं निर्विकारमनस्कतयाऽमात्यादिषु प्रतिष्ठितमवलोक्य अनित्येष्वपि स्वर्गस्थेषु वस्तुषु निराकाङ्क्षोऽभवत् ॥ १० ॥

भाषाऽर्थः—इसके बाद रघुपुत्र ( अज ) को बुद्धिमत्ता से मंत्रियों में प्रतिष्ठित देखकर स्वर्गमें रहने वाले भी विनाशी शब्द आदि विषयों में इच्छा रहित हुआ ॥ १० ॥

अथ दिलीपवंशजानां राज्ञां वार्द्धके मुनिवृत्तिग्रहणरूपकुलधर्ममाह—

**गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।**
**पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥**

सञ्जीविनी—कुलधर्मश्चायमेवेत्याह--गुणवदिति । दिलीपवंशजाः परिणामे वार्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः तरुवल्कान्येव वासांसि येषां तेषां संयमिनां यतीनां पदवीं प्रपेदिरे, यस्मात्तस्मादस्यापीदमुचितमित्यर्थः ॥ ११ ॥

अन्वयः—दिलीपवंशजाः, परिणामे, गुणवत्सुतरोपितश्रियः, प्रयताः, 'सन्तः' तरुवल्कवाससां, संयमिनां, पदवीं, प्रपेदिरे ॥ ११ ॥

सुधा—दिलीपवंशजाः = दिलीपकुलोत्पन्ननृपाः, परिणामे = विकारे, वार्द्धक इति यावत् । गुणवत्सुतरोपितश्रियः = शौर्यादिगुणवत्पुत्रस्थापितलक्ष्मीकाः, प्रयताः = नियमिताः, सन्त इति शेषः । तरुवल्कवाससां = वृक्षवल्कलरूपवस्त्राणां, संयमिनां = मुनीनां, संन्यासिनामित्यर्थः । पदवीं = गतिं, वृत्तिमिति यावत् । प्रपेदिरे = प्राप्तवन्तः ॥ ११ ॥

कोशः—'परिमाणो विकारो द्वे समे विकृतिविक्रिये' इति, 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इति, 'त्वक् स्त्री, वल्कं वल्कलमस्त्रियाम्' इति चामरः ॥ ११ ॥

समासादि—गुणवन्तश्च ते सुता इति गुणवत्सुताः ( क० धा० ), तेषु रोपिता श्रीर्यैस्ते गुणवत्सुतरोपितश्रियः ( ब० व्री० ) । परिणमनं परिणामस्तस्मिन् परिणामे । दिलीपस्य वंश इति दिलीपवंशस्तस्माज्जाता दिलीपवंशजाः ( त० पु० ) । पद्यतेऽनयेति पदवी तां पदवीम् । तरूणां वल्कानीति तरुवल्कानि (त० पु०), तान्येव वासांसि येषां ते तरुवल्कवाससस्तेषां तरुवल्कवाससाम् ( ब० व्री० ) । संयम एषां सन्तीति संयमिनस्तेषां संयमिनाम्॥११॥

व्याकरणम्—परिणामे = परि + णम + घञ् । पदवीं = पद् + 'पद्यटिभ्यामविः' इत्यनेन अविः, 'कृदिकारादक्तिनः' इति ङीप् । प्रयताः = प्र + यम् + क्तः । प्रपेदिरे = प्र + पद् + लिट्, ॥ ११ ॥

वाच्यपरिवर्तनम्—दिलीपवंशजैः, परिणामे, गुणवत्सुतरोपितश्रीभिः, प्रयतैः, 'सद्भिः' तरुवल्कवाससां, संयमिनां, पदवी, प्रपेदे ॥ ११ ॥

तात्पर्यार्थः—दिलीपकुलोत्पन्नाः राजानः वृद्धावस्थायां शौर्यादिगुणयुक्तपुत्रेषु स्थापितलक्ष्मीकाः नियमिताः सन्तो वृक्षवल्कलरूपवस्त्राणां यतीनां वृत्तिं प्राप्तवन्तः ॥ ११ ॥

भाषाऽर्थः—दिलीपके वंशमें उत्पन्न ( राजा लोग ) बुढ़ापे में गुणवान् पुत्रोंमें लक्ष्मी को सौंप कर नियम धारण करते हुये वृक्षों की छाल के वस्त्र वाले मुनियों की पदवी ( गति ) को पाते थे ॥ ११ ॥

अथाजो वनवासोद्यतं पितरं प्रणम्य 'मां परित्यज्य न गन्तव्यम्' इति प्रार्थितवानित्याह—

**तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः ।**
**पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ १२ ॥**

सञ्जीविनी—तमिति। अरण्यसमाश्रयोन्मुखं वनवासोत्सुकम्। अत्र मनुः "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। सापत्यो निरपत्यो वा तदाऽरण्यं समाश्रयेत्॥" पितरं तं रघुं सुतोऽजः वेष्टनशोभिनोष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य आत्मनोऽपरित्यागमयाचत, मां परित्यज्य न गन्तव्यमिति प्रार्थितवानित्यर्थः॥ १२॥

अन्वयः—सुतः, अरण्यसमाश्रयोन्मुखं, पितरं, तं, वेष्टनशोभिना, शिरसा, पादयोः, प्रणिपत्य, आत्मनः, अपरित्यागम्, अयाचत॥ १२॥

सुधा—सुतः = पुत्रः, अज इति यावत्। अरण्यसमाश्रयोन्मुखं = वनवासोद्यतं, पितरं = जनकं, तं = पूर्वोक्तं, रघुमिति यावत्। वेष्टनशोभिना = उष्णीषसुन्दरेण, शिरसा = मस्तकेन, पादयोः = चरणयोः, प्रणिपत्य = प्रणम्य, आत्मनः = स्वस्य, अपरित्यागम् = अविसर्जनं, मां परित्यज्य न गन्तव्यमित्यर्थः। अयाचत = याचते स्म, प्रार्थितवानित्यर्थः॥ १२॥

कोशः—'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः। 'वेष्टनं मुकुटे कर्णशष्कुल्युष्णीषयोर्वृतौ' इत्यनेकार्थसंग्रहः। 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः॥ १२॥

समासादि—समाश्रयत इति समाश्रयः, अरण्ये समाश्रय इत्यरण्यसमाश्रयस्तस्योन्मुखमित्यरण्यसमाश्रयोन्मुखम् (त० पु०)। वेष्टनेन शोभत इति वेष्टनशोभी तेन वेष्टनशोभिना। परित्यजनं परित्यागः, न परित्याग इत्यपरित्यागस्तमपरित्यागम्॥ १२॥

व्याकरणम्—समाश्रय = सम् + आ + श्रिञ् ( सेवायाम् ), 'एरच्' इत्यनेन अच्। प्रणिपत्य = प्र + नि + पत् + क्त्वा, ल्यबादेशः। अपरित्यागम् = अ + परि + त्यज + 'भावे' इत्यनेन घञ्। अयाचत = अ + याचृ ( याञ्चायाम्-ऋकारेत् ), लङ्॥ १२॥

वाच्यपरिवर्तनम्—सुतेन, अरण्यसमाश्रयो मुखं, पितरं, तं, वेष्टनशोभिना, शिरसा, पादयोः, प्रणिपत्य, आत्मनः, अपरित्यागः, अयाच्यत॥ १२॥

तात्पर्यार्थः—पुत्रोऽजः वनवासोद्यतं पितरं तं रघुं उष्णीषमनोहरेण मस्तकेन चरणयोः प्रणिपत्य 'मां परित्यज्य न गन्तव्यम्' इति प्रार्थितवान्॥ १२॥

भाषाऽर्थः—पुत्र ( अज ) ने वनके वासके लिये तत्पर उस पिता ( रघु ) को पगड़ी के बांधने से शोभायमान शिरसे चरणोंमें प्रणाम कर अपने ( अज ) को न छोड़नेकी प्रार्थना की॥ १२॥

अथ रघुः अजप्रार्थनामङ्गीचकार त्यक्तां राजलक्ष्मीं तु नाङ्गीचकारेत्याह—

**रघुरश्रुमुखस्य तस्य तत्कृतवानीप्सितमात्मजप्रियः।**
**न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम्॥ १३॥**

सञ्जीविनी—रघुरिति। आत्मजप्रियः पुत्रवत्सलो रघुः अश्रूणि मुखे यस्य तस्याश्रुमुखस्याजस्य तदपरित्यागरूपमीप्सितमभिलषितं कृतवान्, किन्तु सर्पस्त्वचमिव व्यपवर्जितां त्यक्तां श्रियं पुनर्न प्रतिपेदे न प्राप॥ १३॥

अन्वयः—आत्मजप्रियः, रघुः, अश्रुमुखस्य, तस्य, तत्, ईप्सितं, कृतवान्, तु, सर्पः, त्वचम्, इव, व्यपवर्जितां, श्रियं, पुनः, न, प्रतिपेदे॥ १३॥

सुधा—आत्मजप्रियः = पुत्रवल्लभः, रघुः = दिलीपसुतः, अश्रुमुखस्य = नेत्राम्बुवदनस्य, शोकाकुलस्येत्यर्थः। तस्य = अजस्य, तत् = पूर्वोक्तम्, अपरित्यागरूपप्रार्थनमिति यावत्। ईप्सितम् = अभीष्टं, कृतवान् = स्वीचकार, तु = किन्तु, सर्पः = भुजगः, त्वचं = चर्म, कञ्चुक इति यावत्। इव = यथा, व्यपवर्जितां = त्यक्तां, श्रियं = लक्ष्मीं, पुनः = भूयः, न प्रतिपेदे = न प्राप्तवान्, न स्वीचकारेत्यर्थः॥ १३॥

कोशः—'अस्रु नेत्राम्बु रोदनं चास्रमश्रु च' इति, 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति, 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इति, सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्ग-

मः' इति चामरः ॥ १३ ॥

समासादि—अश्रूणि मुखे यस्य सोऽश्रुमुखस्तस्याश्रुमुखस्य ( ब० व्री० ) । आप्तुमिष्यते स्म ईप्सितस्तमीप्सितम् । आत्मजस्य प्रिय इत्यात्मजप्रियः ( त० पु० ) ॥ १३ ॥

व्याकरणम्—ईप्सितम् = आप्लृ ( व्याप्तौ-लृदित् ), सन् + 'आप्ज्ञप्यृधामीत्' इत्यनेनाकारस्येकारः + क्तः + इट् । व्यपवर्जितां = वि + अप + वर्ज + क्तः + इट् + टाप् ॥ १३ ॥

वाच्यपरिवर्तनम्—आत्मजप्रियेण, रघुणा, अश्रुमुखस्य, तस्य, तत्, ईप्सितं, कृतं, तु, सर्पेण, त्वग्, इव, व्यपवर्जिता, श्रीः, पुनः, न, प्रतिपेदे ॥ १३ ॥

तात्पर्यार्थः—पुत्रवत्सलो रघुर्नेत्राम्बुमुखस्य अजस्य अपरित्यागरूपमभिलषितं स्वीकृतवान्, किन्तु यथा सर्पः त्यक्तं कञ्चुकं पुनर्नाङ्गीकरोति, तथा त्यक्तां लक्ष्मीं भूयो नाङ्गीकृतवान् ॥ १३ ॥

भाषाऽर्थः—पुत्रप्रिय रघुने आंसू भरे मुख वाले ( अपने ) उस ( अज ) की इच्छा पूरी की, किन्तु ( उसने ) सांप की केंचुली की भांति त्यागी हुई लक्ष्मीको फिर स्वीकार नहीं किया ॥ १३ ॥

अथ संन्यासाश्रममाश्रितस्य रघोर्लक्ष्म्याऽपि वध्वेव शुश्रूषा कृतेत्याह—

**स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।**
**समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥**

सञ्जीविनी—स इति । स रघुः किलान्त्यमाश्रमं प्रव्रज्यामाश्रितः पुरान्नगराद्बहिरावसथे स्थाने निवसन्नविकृतेन्द्रियः, जितेन्द्रियः सन्नित्यर्थः । अत एव स्नुषयेव वध्वेव पुत्रभोग्यया न स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः, जितेन्द्रियस्य तस्य स्नुषयेव श्रियाऽपि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किञ्चिदपेक्षितमासीदित्यर्थः । अत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः, "आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्" इति मनुस्मरणात्, "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते ॥" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुः । तथापि "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात्, "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात्, 'ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद् गृहात्' इति स्मरणात्, "मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च, कुत्रचिद् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रतिपेदिरे । तथा सति 'स किलाश्रममन्त्यमाश्रितः' इत्यत्रापि कविनाऽप्ययमेव पक्षो विवक्षित इति प्रतीमः । अन्यथा वानप्रस्थाश्रमतया व्याख्याते, "विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्" इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात्, अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥ १४ ॥

अन्वयः—सः, अन्त्यम्, आश्रमम्, आश्रितः, पुरात्, बहिः, आवसथे, निवसन्, अविकृतेन्द्रियः, 'सन्', स्नुषया, इव, पुत्रभोग्यया, श्रिया, समुपास्यत, किल ॥ १४ ॥

सुधा—सः = पूर्वोक्तः, रघुरिति यावत् । अन्त्यं = चरमम्, आश्रमं = (१)संन्यासाश्र

---

( १ ) यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः, "आत्मन्यग्नीन समारोप्य ब्राह्मणः प्रव्रजेत गृहात्" इति मनुस्मरणात्, अन्यत्र क्षत्रियादेर्निषेधाच्च ब्राह्मणस्यैव संन्यासाश्रमः, न क्षत्रियादेरित्याहु । तथाऽपि "यदहरेव विरजेत तदहरेव प्रव्रजेत" इत्यादिश्रुतेः, 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' "ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेत गृहात" इत्यादिवचनाच्च त्रैवर्णिकाधिकारो लभ्यते ।

क्वचिच्च ब्राह्मणपदस्योपलक्षणं मन्यमानाः केचित् त्रैवर्णिकाधिकारं कथयन्ति । एवं सति 'स किलाश्रम-

मम्, आश्रितः = अधिष्ठितः, पुरात् = नगरात्, बहिः = बाह्ये, आवसथे = स्थाने, निवसन् = तिष्ठन्, अविकृतेन्द्रियः, विकाररहितेन्द्रियः, जितेन्द्रिय इति यावत्। सन्निति शेषः। स्नुषया = वध्वा, इव = यथा, पुत्रभोग्यया = सुतभोग्यया, श्रिया = लक्ष्म्या, समुपास्यत = शुश्रूषितः, किल ॥ १४ ॥

कोशः—'आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे। अस्त्रियाम्' इति मेदिनी। 'पुरं शरीरे नगरे गृहपाटलिपुत्रयोः' इत्यनेकार्थसंग्रहः। 'समास्नुषा जनीवध्वः' इत्यमरः॥ १४ ॥

समासादि—अन्ते भवमन्त्यम्। भोक्तुं योग्या भोग्या, पुत्रस्य भोग्येति पुत्रभोग्या तया पुत्रभोग्यया। न विकृतमित्यविकृतम्, अविकृतमिन्द्रियं यस्य स अविकृतेन्द्रियः ( ब० व्रो० ) ॥ १४ ॥

व्याकरणम्—अन्त्यम् = अन्त + दिगादित्वाद्यत्। आश्रितः = आ + श्रिञ् (सेवायाम्—जित्), क्तः। निवसन् = नि + वस ( निवासे ), शतृ। समुपास्यत = सम् + उप + आ + अस + लङ् + कर्मणि यक् ॥ १४ ॥

वाच्यपरिवर्तनम्—तम्, अन्त्यम्, आश्रमम्, आश्रितं, पुरात्, बहिः, आवसथे, निवसन्तं, अविकृतेन्द्रियं, 'सन्तं' स्नुषा, इव, पुत्रभोग्या, श्रीः, अपि, समुपास्त, किल ॥ १४ ॥

तात्पर्यार्थः—स रघुः संन्यासाश्रममाश्रितः नगराद्बहिः स्थाने निवसन् जितेन्द्रियः सन् पुत्रवध्वा इव सुतभोग्यया लक्ष्म्याऽपि शुश्रूषितः किल ॥ १४ ॥

भाषाऽर्थः—संन्यास आश्रमको ग्रहण कर नगरके बाहर स्थानमें निवास करते हुये जितेन्द्रिय उस ( रघु ) को पुत्रभोग्या लक्ष्मीने पुत्र बहूकी नाईं सेवा की ॥ १४ ॥

अथ रघोः संन्यस्तत्वादजस्य नवराज्याधिपतित्वाच्च दिलीपकुलं शुशोभेत्याह—

**प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम्।**
**नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥ १५ ॥**

सञ्जीविनी—प्रशमेति। स्थितः पूर्वपार्थिवो रघुर्यस्य तत् अभ्युद्यतोऽभ्युदितो नूतनेश्वरोऽजो यस्य तत् प्रसिद्धं कुलं निभृतेन्दुनाऽस्तमयासन्नचन्द्रेणोदितार्केण प्रकटितसूर्येण च नभसा तुलां सादृश्यं समारुरोह प्राप। न च नभसा तुलामित्यत्र "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इत्यनेन प्रतिषेधस्तृतीयायाः, तस्य सदृशवाचितुलाशब्दविषयत्वात्, 'कृष्णस्य तुला नास्ति' इति प्रयोगात् अस्य च सादृश्यवाचित्वात् ॥ १५ ॥

अन्वयः—प्रशमस्थितपूर्वपार्थिवम्, अभ्युद्यतनूतनेश्वरं, तत्, कुलं, निभृतेन्दुना, उदितार्केण, च, नभसा, तुलां, समारुरोह ॥ १५ ॥

सुधा—प्रशमस्थितपूर्वपार्थिवं = शान्त्यवस्थितपूर्वनृपं, मनःशान्तिमार्गेऽवस्थितरघुमिति यावत्। अभ्युद्यतनूतनेश्वरम् = अभ्युदितनवपतिम्, अभ्युदययुक्तमजमित्यर्थः। तत = पूर्वोक्तं, कुलं = वंशः, निभृतेन्दुना = अस्तमयासन्नशशिना, उदितार्केण = प्रकाशितसूर्येण, च, नभसा = व्योम्ना, आकाशेनेति यावत्। तुलां = सादृश्यं, समारुरोह = प्राप ॥ १५ ॥

कोशः—'शमथस्तु शमः शान्तिः' इत्यमरः। 'नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च नभाः स्मृतः' इति विश्वः। 'अर्को द्रुभेदे स्फटिके ताम्रे सूर्ये विडौजसि' इत्यनेकार्थसंग्रहः ॥ १५ ॥

समासादि—पूर्वश्चासौ पार्थिव इति पूर्वपार्थिवः ( क० धा० ), प्रशमनं प्रशमः, प्रशमे

मन्त्यमाश्रितः' इति प्रस्तुतश्लोके कविकुलशिरोमणिना कालिदासेनाप्ययमेव पक्षो विवक्षित इति विश्वासिमः। अन्यथा 'अन्त्यमाश्रमम्' इत्यस्य 'वानप्रस्थाश्रमम्' इति व्याख्याते, 'विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित्' इति वक्ष्यमाणेन पञ्चविंशतिश्लोकेन विरोधः स्यादिति संक्षेपः ॥

स्थितः पूर्वपार्थिवो यस्य तत् प्रशमस्थितपूर्वपार्थिवम् ( ब० व्री० )। नूतनश्चासावीश्वर इति नूतनेश्वरः ( क० धा० ), अभ्युद्यतो नूतनेश्वरो ( अजः ) यस्य तदभ्युद्यतनूतनेश्वरम् ( ब० व्री० )। निभृतः इन्दुर्यस्मिन् तन्निभृतेन्दु तेन निभृतेन्दुना ( ब० व्री० ) । उदितो ऽर्को यस्मिन् तत्तेनोदितार्केण ( ब० व्री० ) ॥ १९ ॥

व्याकरणम्—प्रशम = प्र + शमु ( उपशमे-उकारेत् ), 'भावे' इत्यनेन घञ् । 'नोदात्तोपदेश' इत्यादिना वृद्ध्यभावः । अभ्युद्यत = अभि + उत् + यम् ( उपरमे ), क्तः । निभृत = नि + भृ + क्तः । उदित = उत् + इण् ( गतौ-णकारेत् ), क्तः । समारुरोह = सम् + आ + रुह + लिट् ॥ २९ ॥

वाच्यपरिवर्तनम्—प्रशमस्थितपूर्वपार्थिवेन, अभ्युद्यतनूतनेश्वरेण, तेन, कुलेन, निभृतेन्दुना, उदितार्केण, च, नभसा, तुला, समारुरुहे ॥ १९ ॥

तात्पर्यार्थः—यथा चन्द्रस्यास्तङ्गतत्वात् सूर्यस्योदितत्वाच्चाकाशः शोभते, तथा रघोः मनःप्रशमे स्थितत्वात् अजस्य नवराज्याधिपतित्वाच्च दिलीपकुलं शुशोभ ॥ १९ ॥

भाषाऽर्थः—मनकी शान्तिमें स्थित पूर्व राजा ( रघु ), और ( ऐश्वर्यमें ) उद्यत नवीन राजा ( अज ) वाला वह कुल, अस्त होते हुये चन्द्रमा और उदय होते हुये सूर्य वाले आकाश की तुलनाको प्राप्त हुआ ॥ १९ ॥

अथ जना धृतसंन्यासचिह्नं रघुं, धृतराजचिह्नमजं च भूलोकगतमंशमिव ददृशुरित्याह—

यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥ १६ ॥

सञ्जीविनी—यतीति । यतिर्भिक्षुः पार्थिवो राजा तयोर्लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोर्मोक्षाभ्युदयफलयोर्धर्मयोः, निवर्तकप्रवर्तकरूपयोरित्यर्थः । भुवं गतौ भूलोकमवतीर्णावंशाविव जनैर्ददृशाते दृष्टौ ॥ १६ ॥

अन्वयः—जनैः, यतिपार्थिवलिङ्गधारिणौ, रघुराघवौ, अपवर्गमहोदयार्थयोः, धर्मयोः, भुवं, गतौ, अंशौ, इव, ददृशाते ॥ १६ ॥

सुधा—जनैः = मनुष्यैः, यतिपार्थिवलिङ्गधारिणौ = जितेन्द्रियराजचिह्नावलम्बिनौ, रघुराघवौ = रघ्वजौ, अपवर्गमहोदयार्थयोः = मोक्षाभ्युदयफलयोः, धर्मयोः = (१) निवर्तकप्रवर्तकरूपधर्मयोः, भुवं = पृथ्वीं, भूलोकमिति यावत् । गतौ = आगतौ, अवतीर्णाविति यावत् = अंशौ = भागौ, इव, ददृशाते = अवलोकितौ, ॥ १६ ॥

कोशः—'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । 'लिङ्गं मेहनचिह्नयोः' इति, 'अपवर्गस्त्यागमोक्षयोः' इति चानेकार्थसंग्रहः । 'अंशभागौ तु वण्टके' इत्यमरः ॥ १६ ॥

समासादि—यतिश्च पार्थिवश्चेति यतिपार्थिवौ ( क० धा० ), तयोर्लिङ्गं धरत इति यतिपार्थिवलिङ्गधारिणौ ( त० पु० )। रघोरपत्यं पुमान् राघवः, रघुश्च राघवश्चेति तौ रघुराघवौ ( द्वं० )। महांश्चासावुदय इति महोदयः ( क० धा० ), अपवर्गश्च महोदयश्चेत्यपवर्गमहोदयौ ( द्वं० ), अपवर्गमहोदयावर्थौ ययोस्तौ तयोरपवर्गमहोदयार्थयोः ( ब० व्री० )।

व्याकरणम्—ददृशाते = दृश् + लिट् । राघवौ = रघु + अण् ॥ १६ ॥

वाच्यपरिवर्तनम्—जनाः, यतिपार्थिवलिङ्गधारिणौ, रघुराघवौ, अपवर्गमहोदयार्थयोः, धर्मयोः, भुवं, गतौ, अंशौ, इव, ददृशुः ॥ १६ ॥

तात्पर्यार्थः—प्रजाः धृतसन्यासचिह्नं रघुं, धृतराजचिह्नमजं च निवर्तकप्रवर्तकरूपधर्मयोर्भूलोकमवतीर्णमंशमिव ददृशुः ॥ १६ ॥

---

( १ ) मोक्षदायको निवर्तकधर्मः, वैभवदायकश्च प्रवर्तकधर्मः ॥

भाषाऽर्थः—जनोंने संन्यासी और राजाके चिह्न धारण किये रघु और अजको, मोक्ष तथा वैभव फलोंको देने वाले ( निवर्तक प्रवर्तक रूप ) धर्मोंके भूलोकमें आये हुये ( दो ) अंशके समान देखा ॥ १६ ॥

अथ अजो मन्त्रिभिः, रघुः योगिभिश्च सङ्गतो बभूवेत्याह—

**अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः।**
**अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः॥ १७॥**

सञ्जीविनी—अजेति। अजोऽजिताधिगमायाजितपदलाभाय नीतिविशारदैर्नीतिज्ञैर्मन्त्रिभिर्युयुजे सङ्गतः। रघुरप्यनपायिपदस्योपलब्धये मोक्षस्य प्राप्तये यथार्थदर्शिनो यथार्थवादिनश्चाप्ताः तैर्योगिभिः समियाय सङ्गतः। उभयत्राप्युपायचिन्ताऽर्थमिति शेषः॥ १७॥

अन्वयः—अजः,अजिताधिगमाय, नीतिविशारदैः, मन्त्रिभिः, युयुजे, रघुः, अनपायिपदोपलब्धये, आप्तैः, योगिभिः, समियाय॥ १७॥

सुधा—अजः = रघुसुतः, अजिताधिगमाय = अनिर्जितपदप्राप्तये, नीतिविशारदैः = नयपण्डितैः, मन्त्रिभिः = सचिवैः, युयुजे = सङ्गतः उपायपरिज्ञानार्थमिति शेषः। रघुः = दिलीपपुत्रः, अनपायिपदोपलब्धये = अविनाशिस्थानप्राप्तये, मोक्षपदप्राप्तये इति यावत्। आप्तैः = प्रत्ययितैः, यथार्थदर्शिभिर्यथार्थवादिभिश्चेति यावत्। योगिभिः = ब्रह्मविद्भिः, समियाय = सङ्गतः। अत्रापि उपायपरिज्ञानार्थमिति शेषः॥ १७॥

कोशः—'अजितस्तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते' इत्यनेकार्थसंग्रहः। 'मन्त्री सहायः सचिवौ' इत्यमरः। 'नीतिर्नये प्रापणे च' इत्यनेकार्थसंग्रहः। 'विशारदः पण्डिते च धृष्टे' इति मेदिनी॥ १७॥

समासादि—अजितस्याधिगम इत्यजिताधिगमस्तस्मै अजिताधिगमाय ( त० पु० )। नीतेर्विशारदा इति नीतिविशारदास्तैर्नीतिविशारदैः ( त० पु० )। न अपाय इत्यनपायः, अनपायोऽस्यास्तीति अनपायी तस्य पदमित्यनपायिपदं तस्योपलब्धिस्तस्मै अनपायिपदोपलब्धये ( त० पु० )॥ १७॥

व्याकरणम्—अजित = न + जि (अभिभवे), क्तः। युयुजे = युज् + लिट्। आप्तैः = आप्लृ ( व्याप्तौ–लृदित् ), क्तः। समियाय = सम् + इण् + लिट्। योगिभिः = योग + विनुण्॥ १७॥

वाच्यपरिवर्तनम् = अजेन, अजिताधिगमाय, नीतिविशारदैः, मन्त्रिभिः, युयुजे, रघुणा, अनपायिपदोपलब्धये, आप्तैः, योगिभिः, समीये॥ १७॥

तात्पर्यार्थः—अजोऽनिर्जितपदप्राप्तये नीतिपण्डितैः सचिवैः, रघुः मोक्षपदप्राप्तये यथार्थदर्शियथार्थवादिभिर्योगिभिश्च सङ्गतो बभूव॥ १७॥

भाषाऽर्थः—अज अजित पद की प्राप्तिके लिये नीति शास्त्रमें निपुण मंत्रियों से, ( और ) रघु मोक्षपद की प्राप्ति के लिये अच्छे योगियों से मिले॥ १७॥

किञ्च अजो धर्मासनं, रघुः कुशासनं च गृहीतवानित्याह—

**नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।**
**परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्॥ १८॥**

सञ्जीविनी—नृपतिरिति। युवा नृपतिरजः प्रकृतीः प्रजाः कार्यार्थिनीरवेक्षितुं दुष्टादुष्टपरिज्ञानार्थमित्यर्थः। व्यवहारासनं धर्मासनमाददे स्वीचकार, "व्यवहारान्नृपः पश्येत्" इति याज्ञवल्क्यस्मरणात्। प्रवयाः स्थविरो नृपती रघुस्तु, 'प्रवयाः स्थविरो वृद्धः' इत्यमरः। धारणां चित्तस्यैकाग्रतां परिचेतुमभ्यसितुमुपांशु विजने, 'उपांशु विजने प्रोक्तम्' इति हलायुधः। कुशैः पूतं विष्टरमासनमाददे। "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते

सद्भिर्योगशास्त्रविशारदैः" इति वसिष्ठः ॥ १८ ॥

अन्वयः—युवा, नृपतिः, प्रकृतीः, अवेक्षितुं, व्यवहारासनम्, आददे, प्रवयाः, तु, धारणां, परिचेतुम्, उपांशु, कुशपूतं, विष्टरम्, 'आददे' ॥ १८ ॥

सुधा—युवा = तरुणः, नृपतिः = राजा, अज इति यावत्। प्रकृतीः = कार्यार्थिनी प्रजाः, अवेक्षितुम् = अवलोकितुं, दुष्टादुष्टपरिज्ञानार्थमित्यर्थः। (१) व्यवहारासनं = विवादासनं, धर्मासनमिति यावत्। आददे = स्वीचकार, प्रवयाः = वृद्धः, तु, धारणां = चित्तैकाग्रतां, परिचेतुम् = अभ्यसितुम्, उपांशु = विजने, एकान्त इति यावत्। कुशपूतं = दर्भपवित्रं, विष्टरम् = आसनम्, आददे इति शेषः। धारणा च "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इति वशिष्ठेनोक्ता ॥ १८ ॥

कोशः—'विवादो व्यवहारः स्यात्' इत्यमरः। 'उपांशुर्जपभेदे स्यात् उपांशुर्विजनेऽव्ययम्' इति, 'कुशो रामसुते द्वीपे पापिष्ठे योक्त्रमत्तयोः। कुशी काले कुशो दर्भे कुशा वल्गा कुशं जले' इति चानेकार्थसंग्रहः। 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इति, 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इति चामरः ॥ १८ ॥

समासादि—व्यवहरणं व्यवहारस्तस्यासनमिति व्यवहारासनम् (त० पु०)। धारयतीति धारणा तां धारणाम्। कुशैः पूतमिति कुशपूतम् (त० पु०)। प्रगतं वयोऽस्येति प्रवयाः। विस्तीर्यत इति विष्टरस्तं विष्टरम् ॥ १८ ॥

व्याकरणम्—अवेक्षितुम् = अव + ईक्ष + तुमुन्। व्यवहार = वि + अव + हृ + घञ्। परिचेतुं = परि + चिञ् + तुमुन्। धारणा = धृ + णिच् + नन्द्यादित्वाल्ल्युः + टाप्। पूतं = पूञ् + क्तः। विष्टरं = वि + स्तृञ् (आच्छादने—ञकारेत्), 'वृक्षासनयोर्विष्टरः' इति निपातनात्साधुः॥१८॥

वाच्यपरिवर्तनम्—यूना, नृपतिना, प्रकृतीः, अवेक्षितुं, व्यवहारासनम्, आददे, प्रवयसा, तु, धारणां, परिचेतुम्, उपांशु, कुशपूतः, विष्टरः, 'आददे' ॥ १८ ॥

तात्पर्यार्थः—युवा राजा अजः कार्यार्थिनीप्रजाः अवेक्षितुं धर्मासनं स्वीचकार, वृद्धो रघुस्तु चित्तस्यैकाग्रतामभ्यसितुं विजने दर्भपवित्रमासनं स्वीचकार ॥ १८ ॥

भाषाऽर्थः—युवा राजा (अज) ने प्रजाओं को देखने के लिये व्यवहार का आसन ग्रहण किया, और बूढ़े (रघु) ने चित्त की एकाग्रता के अभ्यास के लिये एकान्त में कुशों से पवित्र आसन को (ग्रहण किया) ॥ १८ ॥

अथाजः समीपस्थान्राज्ञः, रघुः शरीरस्थपञ्चवायूंश्च स्ववशं व्यधादित्याह—

**अनयत् प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान्।**
**अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥ १९ ॥**

सञ्जीविनी—अनयदिति। एकोऽन्यतरः, अज इत्यर्थः। अनन्तरान्स्वभूम्यनन्तरान्नृपतीन्यातव्यपार्ष्णिग्राहादीन्प्रभुशक्तिसंपदा कोशदण्डमहिम्ना वशं स्वायत्ततामनयत्, "कोशो दण्डो बलं चैव प्रभुशक्तिः प्रकीर्तिता" इति मिताक्षरायाम्। अपरो रघुः प्रणिधानयोग्यया समाध्यभ्यासेन, 'योग्यभ्यासार्कयोषितोः' इति विश्वः। शरीरगोचरान्देहाश्रयान्पञ्च मरुतः प्राणादीन्वशमनयत्, 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः। शरीरस्थाः' इत्यमरः॥१९॥

अन्वयः—एकः, अनन्तरान्, नृपतीन्, प्रभुशक्तिसम्पदा, वशम्, अनयत्, अपरः, शरीरगोचरान्, पञ्च, मरुतः, प्रणिधानयोग्यया, 'वशम्—अनयत्' ॥ १९ ॥

सुधा—एकः = अन्यतरः, अज इति यावत्। अनन्तरान् = स्वभूमिसमीपस्थान्, नृपतीन् =

(१) 'वि नानाऽर्थेऽव संदेह हरणं हार उच्यते। नाना संदेहहरणाद् व्यवहार इति स्मृतः॥' इति कात्यायनः।

राज्ञः, यातव्यपार्ष्णिग्राहादीनिति यावत् । प्रभुशक्तिसम्पदा = राजशक्त्युत्कर्षेण, कोशदण्डादिमहिम्नेति यावत् । वशं = स्वायत्तताम्, अनयत् = निनाय, अपरः = अन्यः, रघुरिति यावत् । शरीरगोचरान् = वर्ष्मविषयान्, देहाश्रयानिति यावत् । पञ्च = पञ्चसंख्याविशिष्टान्, मरुतः = वायून्, (१) प्राणापानादिपञ्चवायूनिति यावत् । प्रणिधानयोग्यया = समाध्यभ्यासेन, 'वशम्—अनयत्' इति शेषः ॥ १९ ॥

कोशः—'सम्पद्वृद्धौ गुणोत्कर्षे' इत्यनेकार्थसंग्रहः । 'वशमायत्ततायां स्याद् वशमिच्छाप्रभुत्वयोः' इति विश्वः । 'प्रणिधानं प्रयत्ने स्यात्समाधौ च प्रवेशने' इति मेदिनी । 'योग्याऽर्कयोषित्यभ्यासे' इत्यनेकार्थसंग्रहः ॥ १९ ॥

समासादि—शक्यतेऽनयेति शक्तिः, प्रभोः शक्तिरिति प्रभुशक्तिस्तस्य सम्पत् तेन प्रभुशक्तिसम्पदा ( त० पु० ) । पान्तीति पतयः, नृणां पतय इति नृपतयस्तान् नृपतीन् । प्रणिधानस्य योग्येति प्रणिधानयोग्या तया प्रणिधानयोग्यया ( त० पु० ) । शरीरस्य गोचरा इति शरीरगोचरास्तान् शरीरगोचरान् ( त० पु० ) ॥ १९ ॥

व्याकरणम्—अनयत् = अ + णीञ् ( प्रापणे—अकारेत् ), लङ् । शक्ति = शक्लृ (शक्लौ-लृकारेत्), क्तिन् ॥ १९ ॥

वाच्यपरिवर्तनम्—एकेन, अनन्तराः, नृपतयः, प्रभुशक्तिसम्पदा, वशम्, अनीयन्त, अपरेण, शरीरगोचराः, पञ्च, मरुतः, प्रणिधानयोग्यया, 'वशम्—अनीयन्त' ॥ १९ ॥

तात्पर्यार्थः—अजः स्वभूमिसमीपस्थान् यातव्यपार्ष्णिग्राहादीन् राज्ञः कोशदण्डबलप्रभावेण वशीचकार, रघुर्देहाश्रयान् पञ्चप्राणादिवायून् समाध्यभ्यासेन वशीचकार ॥ १९ ॥

भाषाऽर्थः—एक ( अज ) ने समीपी राजाओं को प्रभुशक्ति ( कोश, दण्ड, बल ) की महिमा से वश में किया, अपर ( रघु ) ने शरीरमें रहने वाले पांच ( प्राण, अपान, आदि ) वायुओंको समाधिके अभ्याससे वशमें किया ॥ १९ ॥

किञ्चाजः शत्रुकर्मफलानि, रघुः स्वकर्मफलानि च दग्धवानित्याह—

**अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।**
**इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥ २० ॥**

सञ्जीविनी—अकरोदिति । अचिरेश्वरोऽजः क्षितौ द्विषतामारम्भाः कर्माणि तेषां फलानि भस्मसादकरोत्कार्त्स्न्येन भस्मीकृतवान्, "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः । इतरो रघुर्ज्ञानमयेन तत्त्वज्ञानप्रचुरेण वह्निना पावकेन करणेन स्वकर्मणां भवबीजभूतानां दहने भस्मीकरणे ववृते, स्वकर्माणि दग्धुं प्रवृत्त इत्यर्थः । "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति गीतावचनात् ॥ २० ॥

अन्वयः—अचिरेश्वरः, क्षितौ, द्विषदारम्भफलानि, भस्मसात्, अकरोत्, इतरः, ज्ञानमयेन, वह्निना, स्वकर्मणां, दहने, ववृते ॥ २० ॥

सुधा—अचिरेश्वरः = नवस्वामी, अज इति यावत् । क्षितौ = पृथिव्यां, द्विषदारम्भफलानि = शत्रुकर्मफलानि, भस्मसात् = कार्त्स्न्येन भस्मानि, अकरोत् = कृतवान्, कार्त्स्न्येन-भस्मीकृतवानित्यर्थः । इतरः = अन्यः, रघुरिति यावत् । ज्ञानमयेन = ज्ञानप्रचुरेण, तत्त्वज्ञानजन्येनेति यावत् । वह्निना = अग्निना, स्वकर्मणाम् = भवबीजभूतानां निजकर्मणाम्, दहने = भस्मीकरणे, ववृते = प्रवृत्तः, स्वकर्माणि दग्धुं प्रवृत्त इत्यर्थः । कुत ? 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति श्रीमद्भगवद्गीतास्मरणात् ॥ २० ॥

---

( १ ) 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । शरीरस्था इमे ॥' इति । 'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशे स्यात् व्यानः सर्वशरीरगः ॥' इति । 'अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्न विपाचनम् । भाषणादिनिमेषादि तद्व्यापाराः क्रमादमी' ॥ इति ॥

कोशः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'आरम्भस्तु त्वरायां स्यादुद्यमे वध-दर्पयोः' इति मेदिनी। 'फलं हेतुसमुत्थे स्यात् फलके व्युष्टिलाभयोः' इति विश्वः॥ २०॥

समासादि—अचिरश्चासावीश्वर इत्यचिरेश्वरः (क० धा०)। द्विषदामारम्भा इति द्विषदारम्भास्तेषां फलानीति द्विषदारम्भफलानि (त० पु०)। कृत्स्नं (द्विषतं) भस्म सम्पद्यते इति भस्मसात्। स्वस्य कर्माणीति स्वकर्माणि तेषां स्वकर्मणाम् (त० पु०)। ज्ञानस्य प्रचुरो ज्ञानमयस्तेन ज्ञानमयेन॥ २०॥

व्याकरणम्—भस्मसात् = भस्म + 'विभाषा साति कार्त्स्न्ये' इत्यनेन कार्त्स्न्यार्थे सातिः। ववृते = वृतु + लिट्। ज्ञानमयेन = ज्ञान + 'तत्प्रकृतिवचने मयट्' इत्यनेन मयट्॥ २०॥

वाच्यपरिवर्तनम्—अचिरेश्वरेण, क्षितौ, द्विषदारम्भफलानि, भस्मसात्, अक्रियन्त, इतरेण, ज्ञानमयेन, वह्निना, स्वकर्मणां, दहने, ववृते॥ २०॥

तात्पर्यार्थः—नवनृपोऽजः पृथिव्यां शत्रूणामुद्योगफलानि कार्त्स्न्येन भस्मीकृतवान्, रघुः तत्वज्ञानप्रचुरेण पावकेन भवबीजभूतानामात्मकर्मणां भस्मीकरणे प्रवृत्तोऽभूत्॥ २०॥

भाषाऽर्थः—नवीन राजा (अज) ने भूमिमें शत्रुओं के आरम्भ (उद्योग) के फल को भस्म (नाश) कर दिया, इतर (रघु) ज्ञानमय अग्नि से अपने कर्मको जलानेमें प्रवृत्त हुआ॥ २०॥

किञ्चाजः सन्धिविग्रहादिगुणषट्कं, रघुः सत्वादिगुणत्रयं चाजयदित्याह—

**पणबन्धमुखान्गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।**
**रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः॥ २१॥**

सञ्जीविनी—पणबन्धेति। "पणबन्धः सन्धिः" इति कौटिल्यः। अजः पणबन्धमुखान्सन्ध्या-दीन्षड्गुणान्, 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः' इत्यमरः। तेषां गुणानां फलं समीक्ष्यालोच्योपायुङ्क्त, फलिष्यन्तमेव गुणं प्रायुङ्क्तेत्यर्थः। "प्रोपाभ्यां युजेरयज्ञपात्रेषु" इत्यात्मनेपदम्। समस्तुल्यतया भावितो लोष्टो मृत्पिण्डः काञ्चनं सुवर्णं च यस्य स समलोष्टकाञ्चनः, निःस्पृह इत्यर्थः। 'लोष्टानि लेष्टवः पुंसि' इत्यमरः। रघुरपि गुणत्रयं सत्त्वादिकम्, 'गुणाः सत्त्वं रजस्तमः' इत्यमरः। प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथाऽजयत॥ २१॥

अन्वयः—अजः, पणबन्धमुखान्, षट्, गुणान्, तत्फलं, समीक्ष्य, उपायुङ्क्त, समलोष्ट-काञ्चनः, रघुः, अपि, गुणत्रयं, प्रकृतिस्थम्, अजयत्॥ २१॥

सुधा—अजः = रघुसुतः, पणबन्धमुखान् = सन्ध्यादिप्रमुखान्, षट् = षट्संख्याविशिष्टान्, गुणान् = सन्धिविग्रहयानासनद्वैधाश्रयान्, तत्फलं = सन्ध्यादिलाभं, समीक्ष्य = आलोच्य, उपायुङ्क्त = प्रयुक्तवान्, सन्ध्यादिमध्ये देशकालयात्रादिकमनतिक्रम्य फलिष्यन्तमेव गुणं प्रायुङ्क्तेत्यर्थः। समलोष्टकाञ्चनः = तुल्यभावितमृत्पिण्डसुवर्णः, 'समदृष्टिरिति यावत्, निःस्पृह इत्यर्थः। रघुः = दिलीपसुतः, अपि, गुणत्रयं = सत्वरजस्तमः, प्रकृतिस्थं = पुनर्विकारशून्यम्, (यथा तथा) अजयत् = जयति स्म। पुनर्विकारशून्यत्वेन रूपेण गुणत्रयमजयदित्यर्थः॥२१॥

कोशः—'पणबन्धः सन्धिः' इति कौटिल्यः। 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड् गुणाः' इति 'गुणाः सत्वं रजस्तमः' इति, 'लोष्टानि लेष्टवः पुंसि' इति चामरः॥ २१॥

समासादि—पणबन्धो मुखो येषां ते पणबन्धमुखास्तान् पणबन्धमुखान् (ब० व्री०)। तेषां फलमिति तत्फलम् (त० पु०)। त्रयोऽवयवाऽस्येति त्रयं, गुणानां त्रयमिति गुण-त्रयम्। प्रकृतौ तिष्ठतीति तत प्रकृतिस्थम्। लोष्टतीति लोष्टं, लोष्टञ्च काञ्चनञ्चेति लोष्टकाञ्चने, (द्व०), समे लोष्टकाञ्चने यस्य सः समलोष्टकाञ्चनः (ब० व्री०)॥ २१॥

व्याकरणम्—उपायुङ्क्त = उप + युजिर् (योगे—इरित्), लङ् + 'प्रोपाभ्यां युजेरज्ञपा-

त्रेषु' इत्यात्मनेपदम् । समीक्ष्य = सम् + ईक्ष ( दर्शने ), क्त्वा, ल्यबादेशः । अजयत् = अ + जि ( अभिभवे ), लङ् । प्रकृतिस्थं = प्रकृति + स्था + 'आतोऽनुपसर्गे कः' इति कः ( क्रियाविशेषणम् ) । लोष्ट = लोष्ट ( संघाते ), पचाद्यच् ॥ २१ ॥

वाच्यपरिवर्तनम्—अजेन, पणबन्धमुखाः,षट्, गुणाः, तत्फलं, समीक्ष्य, उपायुज्यन्त, समलोष्टकाञ्चनेन, रघुणा, अपि, गुणत्रयं, प्रकृतिस्थम्, अजीयत ॥ २१ ॥

तात्पर्यार्थः—अजः सन्धिविग्रहयानासनद्वैधाश्रयान् षट् गुणान् तत्फलञ्चालोच्य देशकालपात्रादिकमनतिक्रम्य फलिष्यन्तमेव गुणं प्रायुङ्क्त, समदर्शनो रघुः सत्वरजस्तमोरूपगुणत्रयं, पुनर्विकारशून्यत्वेन रूपेणाजयत् ॥ २१ ॥

भाषार्थः—अजने संधि आदि छ गुण ( मेल, युद्ध, चढाई, विश्राम, द्वैध-'बलीके साथ मेल और अबल के साथ विग्रह करना' आश्रय-'बलवान् राजाका आश्रयण' ) को और इनके फल को ( देश कालके अनुसार ) विचार कर प्रयोग किया, ढेले और सुवर्णको समान जानने वाले रघुने भी प्रकृतिके गुणों ( सत्व,रज, तम,) को जीत लिया ॥२१॥

किञ्चाजः कर्मारम्भात्, रघुः योगविधेश्च न निवृत्त इत्याह—

**न नवः प्रभुराफलोदयात्स्थिरकर्मा विरराम कर्मणः ।**

**न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥ २२ ॥**

सञ्जीविनी—नेति । स्थिरकर्मा आ फलोदयकर्मकारी नवः प्रभुरजः आ फलोदयात्फलसिद्धिपर्यन्तं कर्मण आरम्भाच्च विरराम न निवृत्तः, "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानात्पञ्चमी, "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । स्थिरधीर्निश्चलचित्तः, तदुक्तं गीतायां—"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते ॥" नवेतरो रघुश्चापरमात्मदर्शनात्परमात्मसाक्षात्कारपर्यन्तं योगविधेरैक्यानुसंधानाच्च विरराम ॥ २२ ॥

अन्वयः—स्थिरकर्मा, नवः, प्रभुः, आ फलोदयात्, कर्मणः, न, विरराम, स्थिरधीः, नवेतरः, च, आ परमात्मदर्शनात्, योगविधेः, न, 'विरराम' ॥ २२ ॥

सुधा—स्थिरकर्मा = आफलोदयकर्मकारी, नवः = नूतनः, युवेति यावत् । प्रभुः = स्वामी, अज इति यावत । आ फलोदयात् = फलसिद्धिपर्यन्तं, कर्मणः = क्रियायाः, उद्यमादिति यावत् । न विरराम = न निवृत्तः, ( १ ) स्थिरधीः = अचलबुद्धिः, निश्चलचित्त इति यावत् । नवेतरः = नूतनान्यः, वृद्धो रघुरिति यावत । आ परमात्मदर्शनात् = परमात्मनः साक्षात्कारपर्यन्तं, योगविधेः = योगानुष्ठानात्, ऐक्यानुसन्धानादिति यावत् । न विररामेति शेषः ॥ २२ ॥

कोशः—'स्वामी त्वीश्वरः पतिरीशिताः । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः । 'कर्म कारकभेदे स्यात् क्रियायां च शुभाऽशुभे' इत्यनेकार्थसंग्रहः ॥ २२ ॥

समासादि—फलस्योदय इति फलोदयः ( त० पु० ), फलोदयमभिव्याप्येत्याफलोदयं तस्मात् आफलोदयात् ( अ० भा० ) । स्थिरं कर्म यस्यासौ स्थिरकर्मा ( ब० व्री० ) । योगस्य विधिरिति योगविधिस्तस्मात् योगविधेः (त० पु०) । नवेनेतर इति नवेतरः (त०पु०) । स्थिरा धीर्यस्यासौ स्थिरधीः ( ब० व्री० ) । परमश्चासावात्मा इति परमात्मा (क० धा०), तस्य दर्शनमिति परमात्मदर्शनम् ( त० पु० ) । परमात्मदर्शनमभिव्याप्येत्यापरमात्मदर्शनं तस्मात् आ परमात्मदर्शनात् ( अ० भा० ) ॥ २२ ॥

व्याकरणम्—आफलोदयात्—अत्र'आङ्मर्यादाऽभिविध्योः' इत्यव्ययीभावसमासः । विरराम = वि + रमु ( क्रीडायाम्–उकारेत् ), लिट् + 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥२२॥

---

( १ ) "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते" इति श्रीमद्भगवद्गीता ।

वाच्यपरिवर्तनम्—स्थिरकर्मणा, नवेन, प्रभुणा, आ फलोदयात्, कर्मणः, न, विरेमे, स्थिरधिया, नवेतरेण, आ परमात्मदर्शनात्, योगविधेः, 'न-विरेमे' ॥ ९२ ॥

तात्पर्यार्थः—आ फलोदयकर्मकारी नवेश्वरो अजः फलसिद्धिपर्यन्तमुद्योगान्न निवृत्तः, निश्चलचित्तो रघुः परमात्मनः साक्षात्कारपर्यन्तं योगानुष्ठानान्न निवृत्तः ॥ २२ ॥

भावार्थः—स्थिर कर्म करने वाले नवीन प्रभु ( अज ) ने फलोंकी सिद्धि तक उद्योगको विराम नहीं किया, और निश्चल चित्त वाले वृद्ध ( रघु ) ने परमात्माके दर्शन तक योग के अनुष्ठान को ( विराम नहीं किया ) ॥ २२ ॥

अथ अजरघू क्रमशोऽभ्युदयमोक्षरूपं फलमवापतुरित्याह—

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥ २३ ॥

सञ्जीविनी—इतीति । इत्येवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिर्येषां तेषु शत्रुषु चेन्द्रियेषु च जाग्रतावप्रमत्तावुदयापवर्गयोरभ्युदयमोक्षयोः प्रसितावासक्तौ, 'तत्परे प्रसितासक्तौ' इत्यमरः । उभावजरघू उभयीं द्विविधामभ्युदयमोक्षरूपाम्, "उभादुदात्तो नित्यम्" इति तयप्प्रत्ययस्यायजादेशः, "टिड्ढाणञ्" इति ङीप् । सिद्धिं फलमवापतुः, उभावुभे सिद्धी यथासंख्यमवापतुरित्यर्थः ॥ २३ ॥

अन्वयः—इति, प्रतिषिद्धप्रसरेषु, शत्रुषु, च, इन्द्रियेषु, च, जाग्रतौ, उदयापवर्गयोः, प्रसितौ, उभौ, उभयीं, सिद्धिम्, अवापतुः ॥ २३ ॥

सुधा—इति = इत्थं, प्रतिषिद्धप्रसरेषु = निषिद्धस्वार्थवृत्तिषु, शत्रुषु = वैरिषु, च, इन्द्रियेषु = विषयिषु, चक्षुरादिष्विति यावत् । जाग्रतौ = अप्रमत्तौ, उदयापवर्गयोः = अभ्युदयमोक्षयोः, प्रसितौ = आसक्तौ, तत्पराविति यावत् । उभौ = द्वौ, अजरघ्विति यावत् । उभयीं = द्वयीं, द्विविधामिति यावत् । अभ्युदयमोक्षरूपामित्यर्थः । सिद्धिं = साधनां, फलमिति यावत् । अवापतुः = प्राप्तवन्तौ ॥ २३ ॥

कोशः—'हृषीकं विषयीन्द्रियम्' इत्यमरः । 'अपवर्गस्त्यागमोक्षयोः' इति, 'उदयः पर्वतोन्नत्योः' इति चानेकार्थसंग्रहः ॥ २३ ॥

समासादि—प्रतिषिद्धः प्रसरो येषां ते प्रतिषिद्धप्रसरास्तेषु प्रतिषिद्धप्रसरेषु (ब०व्री०) । उदयश्चापवर्गश्चेत्युदितापवर्गौ तयोरुदितापवर्गयोः ( द्व० ) । उभाववयवौ अस्या इत्युभयी तामुभयीम् ॥ २३ ॥

व्याकरणम्—प्रतिषिद्ध = प्रति + षिध ( गत्याम् ), क्तः । उभयीम् = उभ + तयप् + 'उभादुदात्तो नित्यम्' इति तयपोऽयजादेशः + ङीप् । सिद्धिं = षिधु ( संराद्धौ-उकारेत् ), क्तिच । अवापतुः = अव + आप्लृ ( व्याप्तौ-लृकारेत ), लिट् ॥ २३ ॥

वाच्यपरिवर्तनम्—इति, प्रतिषिद्धप्रसरेषु, शत्रुषु, च, इन्द्रियेषु, च, जाग्रद्भ्याम्, उदयापवर्गयोः, प्रसिताभ्याम्, उभाभ्याम्, उभयीः, सिद्धिः, अवापे ॥ २३ ॥

तात्पर्यार्थः—एवं निषिद्धासु स्वार्थवृत्तिषु शत्रुषु चक्षुरादिषु चाप्रमत्तौ अभ्युदयमोक्षयोरासक्तौ अजरघू अभ्युदयमोक्षरूपं फलमवापतुः ॥ २३ ॥

भावार्थः—इस प्रकार निषिद्ध स्वार्थ वृत्ति वाले शत्रु और ( चक्षु आदि ) इन्द्रियों में जागे हुए ( तथा ) अभ्युदय ) और मोक्ष में तत्पर दोनों ( अज और रघु ) ने दोनों सिद्धियों को पाया ॥ २३ ॥

अथ रघुः कियन्ति वर्षाणि संयाप्य योगसमाधिना सायुज्यं प्राप्तवानित्याह—

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः ।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥ २४ ॥

सञ्जीविनी—अथेति। अथ रघुः समदर्शनः सर्वभूतेषु समदृष्टिः सन् अजव्यपेक्षयाऽजाकाङ्क्षानुरोधेन काश्चित्समाः कतिचिद्वर्षाणि, 'समा वर्षं समं तुल्यम्' इति विश्वः। गमयित्वा नीत्वा योगसमाधिनैक्यानुसंधानेन, "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वसिष्ठः। अव्ययमविनाशिनं तमसः परमविद्यायाः परम्, मायातीतमित्यर्थः। "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मबुद्धिरविद्या" इति योगशास्त्रे। पुरुषं परमात्मानमाप्तवान्प्राप, सायुज्यं प्राप्त इत्यर्थः॥ २४॥

अन्वयः—अथ, रघुः, समदर्शनः, 'सन्' अजव्यपेक्षया, काश्चित्, समाः, गमयित्वा, योगसमाधिना, अव्ययं, तमसः, परं, पुरुषम्, आपत्॥ २४॥

सुधा—अथ=अनन्तरं, मोक्षरूपफलप्राप्तिप्रकरणानन्तरमिति यावत्। रघुः=दिलीपात्मजः, समदर्शनः=सर्वभूतेषु तुल्येक्षणः, सन्निति शेषः। अजव्यपेक्षया=अजस्पृहाऽनुरोधेन, काश्चित्=कतिचित्, समाः=वर्षाणि, गमयित्वा=संयाप्य, योगसमाधिना=योगानुष्ठानेन, ऐक्यानुसन्धानेनेति यावत्। अव्ययम्=अविनाशिनं, तमसः=अविद्यायाः, परम्=उत्कृष्टं, मायातीतमिति यावत्। पुरुषं=परमात्मानम्, आपत्=प्राप, सायुज्यं प्राप्त इत्यर्थः॥ २४॥

कोशः—'निवर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। 'समा वर्षं समं तुल्यम्' इति विश्वः। 'संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः' इति वसिष्ठः। 'समाधिः स्यात्समर्थने। चित्तैकाग्र्यनियमयोर्मौने' इत्यनेकार्थसंग्रहः॥ २४॥

समासादि—अजस्य व्यपेक्षेत्यजव्यपेक्षा तयाऽजव्यपेक्षया (त० पु०)। दृश्यत इति दर्शनं, समं दर्शनं यस्य स समदर्शनः (ब० व्री०)। न व्येतीति तम् अव्ययम्। समाधीयते इति समाधिः, योगस्य समाधिरिति योगसमाधिस्तेन योगसमाधिना (त० पु०)॥ २४॥

व्याकरणम्—गमयित्वा=गम्लृ (गतौ-लृकारेत्), णिच्+क्त्वा+इट्। आपत्=आट्+आप्लृ+लङ्। अव्यय=न+वि+इण् (गतौ—णकारेत्), 'एरच्' इत्यनेन अच्। समाधिना=सम्+आ+डुधाञ् (धारणपोषणयोः—डुजित्), 'उपसर्गे घोः किः' इत्यनेन किप्रत्ययः॥ २४॥

वाच्यपरिवर्तनम्—अथ, रघुणा, समदर्शनेन, 'सता' अजव्यपेक्षया, काश्चित्, समाः, गमयित्वा, योगसमाधिना, अव्ययः, तमसः, परः, पुरुषः, आप्यत॥ २४॥

तात्पर्यार्थः—मोक्षरूपफलप्राप्तिप्रकरणानन्तरं रघुः सर्वभूतेषु समदृष्टिः सन् अजस्य आकाङ्क्षाऽनुरोधेन कतिचित् वर्षाणि संयाप्य योगानुष्ठानेन अविनाशिनमविद्यायाः परं पुरुषं परमात्मानं प्राप॥ २४॥

भाषाऽर्थः—इसके बाद समदृष्टि वाले रघुने अज की इच्छाके अनुरोध से कुछ वर्ष बिता कर योगकी समाधि (अनुष्ठान) से अविनाशी अविद्या से रहित पुरुष (परमात्मा) को प्राप्त किया॥ २४॥

अथाजः पितुरन्त्येष्टिकर्म कृतवानित्याह—

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्॥ २५॥

सञ्जीविनी—श्रुतेति। अग्निचिदग्निं चितवानाहितवान्, "अग्नौ चेः" इति क्विप्प्रत्ययः राघवोऽजः पितुः श्रुतदेहविसर्जन आकर्णितपितृतनुत्यागः सन् चिरमश्रूणि बाष्पान्विमुच्य विसृज्यास्य पितुरनग्निम्, अग्निसंस्काररहितमित्यर्थः। नैष्ठिकं निष्ठायामन्ते भवं विधिमाचारमन्त्येष्टिं यतिभिः संन्यासिभिः सार्धं सह विदधे चक्रे। अनग्निं विधिमित्यत्र शौनकः—"सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया॥

निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम्। प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ॥" इति ॥ २५ ॥

अन्वयः—अग्निचित्, राघवः, पितुः, श्रुतदेहविसर्जनः, 'सन्' चिरम्, अश्रूणि, विमुच्य, अस्य, अनग्नि, नैष्ठिकं, विधिं, यतिभिः, सार्धं, विदधे ॥ २५ ॥

सुधा—अग्निचित्=वह्न्युपासकः,आहिताग्निरिति यावत्। राघवः=रघुसुतः, अज इति यावत्। पितुः=जनकस्य, रघोरिति यावत्। श्रुतदेहविसर्जनः=आकर्णितपितृशरीरत्यागः, सन्निति शेषः। चिरं=बहुकालपर्यन्तम्, अश्रूणि=बाष्पान्, नेत्राम्बूनिति यावत्। विमुच्य=विसृज्य, अस्य=रघोः, अनग्निम्=अवह्निम्, अग्निसंस्काररहितमिति यावत्। नैष्ठिकम्=अन्त्यं, विधिम्=आचारम्, अन्त्येष्टिकर्म इत्यर्थः। यतिभिः=संन्यासिभिः, सार्धं=सह, विदधे=कृतवान्, संन्यासिनां दहननिषेधमाह शौनकः—"सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम्। प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत् ॥" इति ॥ २५ ॥

कोशः—'त्यागो विहायितं दानमुत्सर्जनविसर्जने' इति, 'तातस्तु जनकः पिता' इति, 'अस्र नेत्राम्बु रोदनं चास्रमश्रु च' इति, 'चितवानग्निमग्निचित' इति चामरः ॥ २५ ॥

समासादि—देहस्य विसर्जनमिति देहविसर्जनम् (त० पु०), श्रुतं देहविसर्जनं येन स श्रुतदेहविसर्जनः ( ब० व्री० )। रघोरपत्यं पुमान् राघवः। निष्ठायां भवं नैष्ठिकम्। अग्निमचैषीदित्यग्निचित् ॥ २५ ॥

व्याकरणम्—विमुच्य=मुच्लृ ( मोचने-लृदित् ) क्त्वा, ल्यबादेशः। राघवः=रघु+अण्। विदधे=वि+दध ( धारणे ), लिट्। नैष्ठिकं=निष्ठा+ठक्+इगादेशः। अग्निचित्=अग्नि +चिञ् ( चयने-ञित् ), 'अग्नौ चेः' इत्यनेन क्विप्, 'ह्रस्वस्य पिति कृति तुक्' इति तुक् ॥ २५ ॥

वाच्यपरिवर्तनम्—अग्निचिता, राघवेण, पितुः, श्रुतदेहविसर्जनेन, 'सता' चिरम्, अश्रूणि, विमुच्य, अस्य, अनग्निः, नैष्ठिकः, विधिः, यतिभिः, सार्द्धं, विदधे ॥ २५ ॥

तात्पर्यार्थः—अग्न्युपासकोऽजः पितुः शरीरत्यागं श्रुत्वा बहुकालपर्यन्तमश्रूणि विसृज्य पितुः रघोरग्निसंस्काररहितमन्त्येष्टिकर्म संन्यासिभिः सह चक्रे ॥ २५ ॥

भाषाऽर्थः—अग्निहोत्रकरने वाले अजने पिता ( रघु ) का देह विसर्जन ( मरण ) सुन बहुत समय तक रोकर उस ( रघु ) की अग्निके बिना अन्त क्रिया यतियों ( संन्यासियों ) के सहित की ॥ ( अर्थात् रघु संन्यासी होगया था इस लिये अजने इसके शरीर को नहीं जलाया, क्योंकि शास्त्रों में संन्यासियों का अग्निसंस्कारका निषेध है, अतः भूमि में ही गाड़ दिया ) ॥ २५ ॥

अथाजः पितृभक्त्यैव श्राद्धादिकं कृतवानित्याह—

**अकरोत्स तदौर्ध्वदैहिकं पितृभक्त्या पितृकार्यकल्पवित्।**
**न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥ २६ ॥**

सञ्जीविनी—अकरोदिति। पितृकार्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञः सोऽजः पितृभक्त्या पितरि प्रेम्णा करणेन, न पितुः परलोकसुखापेक्षया, मुक्तत्वादिति भावः। तस्य रघोरौर्ध्वदैहिकं देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकमकरोत्, "ऊर्ध्वं देहाच्च" इति वक्तव्याट्ठक्प्रत्ययः, अनुशतिकादित्वादुभयपदवृद्धिः। ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्साऽपि कस्मान्नाभूदित्याशङ्क्याह-न हीति। तेन पथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषास्तनयेनावर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ता न हि भवन्ति ॥ २६ ॥

अन्वयः—पितृकार्यकल्पवित्, सः, पितृभक्त्या, तदौर्ध्वदैहिकम्, अकरोत्, हि, तेन, पथा,

तनुत्यजः, 'तनयावर्जितपिण्डकाङ्क्षिणः, न, 'भवन्ति' ॥ २६ ॥

सुधा—पितृकार्यकल्पवित् = जनकश्राद्धविधिज्ञः, सः = पूर्वोक्तः, अज इति यावत्। पितृभक्त्या = तातप्रेम्णा, रघुप्र'त्येति यावत्। न तु परलोकसुखार्थमिति भावः। तदौर्ध्वदैहिकं = रघोस्तिलोदकपिण्डदानादिकम्, अकरोत् = कृतवान्, हि = यतः, तेन = योगरूपेण, पथा = मार्गेण, तनुत्यजः = देहत्यागिनः पुरुषाः, तनयावर्जितपिण्डकाङ्क्षिणः = पुत्रदत्तपिण्डाभिलाषिणः, न, भवन्तीति शेषः ॥ २६ ॥

कोशः—'मृतार्थं तदहे दानं त्रिपु स्यादौर्ध्वदैहिकम्' इत्यमरः । 'कल्पो विकल्पे कल्पद्रौ सम्वर्तं ब्रह्मवासरे । शास्त्रे न्याये विधौ' इत्यनेकार्थसंग्रहः। 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः ॥ २६ ॥

समासादि—देहादूर्ध्वमित्यूर्ध्वदेहम् (राजदन्तादिः), ऊर्ध्वदेहे भवमौर्ध्वदैहिकम्। पितुर्भक्तिरिति पितृभक्तिस्तया पितृभक्त्या ( त० पु० )। पितुः कार्यमिति पितृकार्यं, तस्य कल्प इति पितृकार्यकल्पस्तं वेत्तीति पितृकार्यकल्पवित् ( त० पु० )। तनुं त्यजन्तीति ते तनुत्यजः। तनयेनावर्जित इति तनयावर्जितः ( त० पु० ), तनयावर्जितश्चासौ पिण्ड इति तनयावर्जितपिण्डः ( क० धा० ), तं काङ्क्षन्तीति ते तनयावर्जितपिण्डकाङ्क्षिणः ॥ २६ ॥

व्याकरणम्—और्ध्वदैहिकम् = ऊर्ध्वदेह + 'अध्यात्मादेष्ठञिष्यते' इति वार्तिकेन ठञ्, 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः। कल्पवित् + कल्प + विद् + क्विप् + तुक्। पिण्ड = पिडि ( संघाते ), अच् ॥ २६ ॥

वाच्यपरिवर्तनम्—पितृकार्यकल्पविदा, तेन, पितृभक्त्या, तदौर्ध्वदैहिकम्, अक्रियत, हि, तेन, पथा, तनुत्यग्भिः, तनयावर्जितपिण्डकाङ्क्षिभिः, न, 'भूयते' ॥ २६ ॥

तात्पर्यार्थः—पितृश्राद्धविधानज्ञः सः अजः पितुः प्रेम्णा रघोस्तिलोदकपिण्डदानादिकमकरोत, न तु पितुः परलोकसुखार्थमकरोत्तस्य मुक्तत्वात्, यतो योगमार्गेण शरीरत्यागिनः पुरुषाः पुत्रदत्तपिण्डाभिलाषिणो न भवन्ति ॥ २६ ॥

भाषाऽर्थः—पितृकार्य ( श्राद्ध ) के विधान जानने वाले उस ( अज ) ने पिता की भक्ति ( प्रेम ) से उस ( रघु ) के परलोक सम्बन्धी ( पिंडदान आदि ) कर्म को किया, क्यों कि उस ( योग ) मार्गसे शरीर त्यागने वाले ( पुरुष ), पुत्रोंसे दिये गये पिंडकी इच्छा नहीं करते हैं ॥ २६ ॥

अथाजो जगत् द्वितीयाज्ञारहितं चकारेत्याह—

**स परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।**
**शमिताधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥ २७ ॥**

सञ्जीविनी—स इति। परार्ध्यगतेः प्रशस्तगतेः प्राप्तमोक्षस्य पितुरशोच्यतामशोचनीयत्वमुद्दिश्याभिसंधाय, शोको न कर्तव्य इत्युपदिश्येत्यर्थः। "परिव्राजि विपन्ने तु पतिते चात्मवेश्मनि ॥ कार्यो न शोको ज्ञातीनामन्यथा दोषभागिनः॥" इति सुमन्तुस्मरणात्। सदर्थवेदिभिः परमार्थज्ञैर्विद्वद्भिः शमिताधिर्निवारितमनोव्यथः, 'पुंस्याधिर्मानसी व्यथा' इत्यमरः। सोऽजोऽधिज्यकार्मुकः अधिज्यमारोपितमौर्वीकं कार्मुकं यस्य स तथोक्तः सन् जगत्कर्मभूतमप्रतिशासनं द्वितीयाज्ञारहितम्, आत्माज्ञाविषयमित्यर्थः। कृतवान् चकार ॥ २७ ॥

अन्वयः—परार्ध्यगतेः, पितुः, अशोच्यताम्, उद्दिश्य, सदर्थवेदिभिः, शमिताधिः, सः, अधिज्यकार्मुकः, 'सन्' जगत्, अप्रतिशासनं, कृतवान् ॥ २७ ॥

सुधा—परार्ध्यगतेः = श्रेष्ठगतेः, प्राप्तमोक्षस्येति यावत्। पितुः = जनकस्य, रघोरिति यावत्। अशोच्यताम् = अशोचनीयत्वम्, उद्दिश्य = अभिसंधाय, 'मुक्तो न शोच्यः' इत्युपदिश्येति यावत्। सदर्थवेदिभिः = परमार्थज्ञैः, विद्वद्भिरिति यावत्। शमिताधिः = अपनो-

दितमनोव्यथः, सः = अजः, अधिज्यकार्मुकः = आरोपितमौर्वीकधनुः, गृहीतचाप इति यावत्। सन्निति शेषः। जगत् = भुवनं, अप्रतिशासनम् = अद्वितीयाज्ञं, निजाज्ञापरतन्त्रमिति यावत्। कृतवान् = व्यधात् ॥ २७ ॥

कोशः—'मुख्यवर्यवरेण्याश्च प्रवर्हानवरार्घ्यवत्। परार्घ्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' इत्यमरः। 'पुंस्याधिर्मानसी व्यथा' इति, 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति चामरः। 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु' इति मेदिनी ॥ २७ ॥

समासादि—गमनं गतिः, परार्घ्या गतिर्यस्य स परार्घ्यगतिस्तस्य परार्घ्यगतेः ( ब० व्री० )। शोचितुं योग्यः शोच्यो न शोच्य इत्यशोच्यस्तस्य भावोऽशोच्यता तामशोच्यताम्। सच्चासावर्थ इति सदर्थस्तं विदन्तीति सदर्थविदस्तैः सदर्थविद्भिः ( क० धा० )। शमितः आधिर्यस्य स शमिताधिः ( ब० व्री० )। ज्यायामधिगतमधिज्यम्, कर्मणे प्रभवति कार्मुकम्, अधिज्यं कार्मुकं यस्य स अधिज्यकार्मुकः ( ब० व्री० )। न प्रतिशासनं विद्यते यस्य तदप्रतिशासनम् ( ब० व्री० ) ॥ २७ ॥

व्याकरणम्—अशोच्यतां = न + शुच ( शोके ), यत् + तल् + टाप्। उद्दिश्य = उत् + दिश ( अतिसर्जने ), क्त्वा, ल्यबादेशः। कार्मुकं = कर्मन् + 'कर्मण उकञ्' इत्यनेन उकञ्। कृतवान् = कृ + क्तवतुः ॥ २७ ॥

वाच्यपरिवर्तनम्—परार्घ्यगतेः, पितुः, अशोच्यताम्, उद्दिश्य, सदर्थविद्भिः, शमिताधिना, तेन, अधिज्यकार्मुकेण, 'सता' जगत्, अप्रतिशासनं, कृतम् ॥ २७ ॥

तात्पर्यार्थः—प्राप्तमोक्षस्य रघोरशोचनीयत्वं 'मुक्तो न शोच्यः' इत्याद्युपदिश्य परमार्थज्ञैर्विद्वद्भिरपनोदितमनोव्यथः सः अजो धनुर्गृहीत्वा जगत् निजाज्ञापरतन्त्रं कृतवान् ॥ २७ ॥

भाषार्थः—परार्घ्यगति ( मोक्ष ) को पाये पिता ( रघु ) का शोक न करना बतला कर तत्वके जानने वाले विद्वानों से शान्त हुये मनोदुःख, ( और) प्रत्यंचा चढाये धनुष वाले उस अजने जगतको दूसरेकी आज्ञासे रहित कर दिया ॥ २७ ॥

अथाजं प्राप्य पृथ्वी रत्नप्रदाऽभूदिन्दुमती च बलिष्ठं सुतमजीजनदित्याह—

**क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम्।**
**प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत्सुतम् ॥ २८ ॥**

सञ्जीविनी—क्षितिरिति। क्षितिर्मही भामिनी कामिनीन्दुमती च, 'भामिनी कामिनी च' इति हलायुधः। अग्र्यपौरुषं महापराक्रममुत्कृष्टभोगशक्तिं च तमजं पतिमासाद्य प्राप्य तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूत इति बहुरत्नसूरभूत्, 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। अपरेन्दुमती वीरं विशेषेण शत्रून् ईरयति कम्पयतीति वीरस्तं सुतमजीजनज्जनयति स्म। जायतेर्णौ लुङिरूपम्, सहोक्त्या सादृश्यमुच्यते ॥ २८ ॥

अन्वयः—क्षितिः, भामिनी, इन्दुमती, च, अग्र्यपौरुषं, तं, पतिम्, आसाद्य, बहुरत्नसूः, अभूत्, अपरा, वीरं, सुतम्, अजीजनत् ॥ २८ ॥

सुधा—क्षितिः = पृथ्वी, भामिनी = दीप्तिमती, कामिनी वा, इन्दुमती = अजभार्या, च, अग्र्यपौरुषम् = उत्कृष्टपराक्रमं, तं = पूर्वोक्तं, पतिं = स्वामिनं, अजमिति यावत्। आसाद्य = प्राप्य, प्रथमा = आद्या, क्षितिरिति यावत्। बहुरत्नसूः = बहुश्रेष्ठवस्तुत्पादिनी, अभूत् = बभूव, अपरा = अन्या, इन्दुमतीति यावत्। वीरं = बलिष्ठं, सुतं = पुत्रम्, अजीजनत् = जनयामास ॥ २८ ॥

कोशः—'क्षितिर्गेहे भुवि क्षये' इति हैमः। 'भामः क्रोधे रवौ दीप्तौ' इति मेदिनी। 'भामिनी कामिनी च' इति हलायुधो वा। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः ॥ २८ ॥

समासादि—भामोऽस्या अस्तीति भामिनी। अग्रे भवमग्र्यं, पुरुषस्य भावः कर्म वा पौरुषम्,

अग्र्यं च तत्पौरुषमित्यग्र्यपौरुषम् ( क० धा० ) । बहूनि रत्नानि सूते इति बहुरत्नसूः ॥ २८ ॥

व्याकरणम्—भामिनी = भाम + 'अत इनिठनौ' इति इनिः, 'ऋन्नेभ्यो ङीप्' इत्यनेन ङीप् । आसाद्य = आ + पद्लृ ( विशरणादौ—लृदित् ) णिच + क्त्वा, ल्यबादेशः । अग्र्य = अग्र + यत् । पौरुष = पुरुष + अण् । रत्नसूः = षूङ् ( प्राणिगर्भविमोचने—ङित् ), 'सत्सूद्विषद्रुह' इत्यादिना क्विप् । अजीजनत् = अ + जनी ( प्रादुर्भावे—ईकारेत् ), णिच् + लुङ् ॥ २८ ॥

वाच्यपरिवर्तनम्—क्षित्या, भामिन्या, इन्दुमत्या, च, अग्र्यपौरुषं, तं, पतिम्, आसाद्य, प्रथमया, बहुरत्नसुवा, अभावि, अपरया, वीरः, सुतः, अजनि ॥ २८ ॥

तात्पर्यार्थः—पृथ्वी उत्कृष्टपराक्रमं तम् अजरूपस्वामिनं प्राप्य बहुश्रेष्ठवस्त्वुत्पादिनी बभूव, कामिनीन्दुमती च बलिष्ठं पुत्रं जनयामास ॥ २८ ॥

भाषार्थः—पृथिवी और कामिनी इन्दुमती महापराक्रमी उस ( अज ) को पति पाकर पहली ( पृथिवी ) ने बहुतरत्न, ( और ) दूसरी ( इन्दुमती ) ने वीर पुत्र पैदा किया ॥२८॥

अथ यमिन्दुमतीसुतं विद्वांसो दशरथनामानमाहुरित्याह—

**दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।**
**दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥**

सञ्जीविनी—किंनामकोऽसावत आह-दशेति । दश रश्मिशतानि यस्य स दशरश्मिशतः सूर्यः स उपमा यस्याः सा दशरश्मिशतोपमा द्युतिर्यस्य तम् , यशसा करणेन दशस्वपि दिक्ष्वाशासु श्रुतं प्रसिद्धम् , दशकण्ठारे रावणारे रामस्य गुरुं पितरं यं सुतम् , आख्यया नाम्ना दशपूर्वो दशशब्दपूर्वो रथो रथशब्दस्तम् , दशरथमित्यर्थः । बुधा विद्वांसो विदुर्विदन्ति । "विदो लटो वा" इति झेर्जुसादेशः ॥ २९ ॥

अन्वयः—बुधाः, दशरश्मिशतोपमद्युतिं, यशसा, दशसु, अपि, दिक्षु, श्रुतं, दशकण्ठारिगुरुं, यम् , आख्यया, दशपूर्वरथं, विदुः ॥ २९ ॥

सुधा—बुधाः = विद्वांसः, दशरश्मिशतोपमद्युतिं = सूर्यतुल्यकान्ति, यशसा = कीर्त्या, दशसु = दशसंख्याविशिष्टासु, अपि, दिक्षु = आशासु, पूर्वादिदिक्ष्विति यावत् । श्रुतं = प्रख्यातं, दशकण्ठारिगुरुं = रावणशत्रुतातं, रामचन्द्रपितरमिति यावत् । यं = सुतम्, आख्यया = नाम्ना, दशपूर्वरथं = दशशब्दपूर्वं रथशब्दं, दशरथमित्यर्थः । विदुः = विदन्ति ॥ २९ ॥

कोशः—'रश्मिः पुमान् दीधितौ स्यात् पक्ष्मप्रग्रहयोरपि' इति मेदिनी । 'शोभा कान्तिर्द्युतिश्छविः' इति, 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इति, 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इति चामरः । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके' इति हैमः ॥२९ ॥

समासादि—रश्मीनां शतानीति रश्मिशतानि ( त० पु० ), दश रश्मिशतानि यस्य स दशरश्मिशतः, दशरश्मिशतः उपमा यस्याः सा दशरश्मिशतोपमा, दशरश्मिशतोपमा द्युतिर्यस्य स दशरश्मिशतोपमद्युतिस्तं दशरश्मिशतोपमद्युतिम् ( ब० व्री० ) । दश शब्दः पूर्वं यस्य स दशपूर्वः, दशपूर्वः रथो यस्य स दशपूर्वरथस्तं दशपूर्वरथम् ( ब० व्री० ) । दश कण्ठा यस्य स दशकण्ठः (ब० व्री०), दशकण्ठस्यारिरिति दशकण्ठारिस्तस्य गुरुस्तं दशकण्ठारिगुरुम् ( त० पु० ) ॥ २९ ॥

व्याकरणम्—श्रुतम् = श्रु (श्रवणे), क्तः । विदुः = विद + लट् + झिः + 'विदो लटो वा' इति झेर्जुसादेशः ॥ २९ ॥

वाच्यपरिवर्तनम्—बुधैः, दशरश्मिशतोपमद्युतिः, यशसा, दशसु, अपि, दिक्षु, श्रुतः, दशकण्ठारिगुरुः, यः, आख्यया, दशपूर्वरथः, विविदे ॥ २९ ॥

तात्पर्यार्थः—पण्डिताः सूर्यतुल्यकान्ति यशसा दशस्वपि दिक्षु प्रसिद्धं रामचन्द्रस्य पितरं यं सुतं नाम्ना दशरथं वदन्ति ॥ २९ ॥

भाषाऽर्थः—विद्वान् लोग दश सौ किरण वाले ( सूर्य ) के तुल्य कान्तिमान् ( और ) यशसे दशो दिशाओं में विख्यात दशकण्ठ ( रावण ) के शत्रु ( रामचन्द्र ) के पिता जिस पुत्र को, नाम से रथ ( शब्द ) से पूर्व दश ( याने-दशरथ ) जानते हैं ॥ २९ ॥

अथ पित्रर्णान्मुक्तः स अजः शुशोभेत्याह—

**ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।**
**अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥**

सञ्जीविनी—ऋषीति । श्रुतयागप्रसवैरध्ययनयज्ञसंतानैः करणैः यथासंख्यमृषीणां देवगणानामिन्द्रादीनां स्वधाभुजां पितृणामनृणत्वमृणविमुक्तत्वमुपेयिवान्प्राप्तवान् , "ऋणं देवस्य यज्ञेन पितृणां दानकर्मणा । संतत्या पितृलोकानां धावयित्वा परिव्रजेत् ॥" "एष वा अनृणो यः पुत्रो यज्वा ब्रह्मचारी वा" इति श्रुतेः । स पार्थिवोऽजः परिधेः परिवेशात्, 'परिवेशस्तु परिधिः' इत्यमरः । मुक्तो निर्गतः कर्मकर्ता उष्णदीधितिः सूर्य इव बभौ दिदीपे, इत्युपमा ॥ ३० ॥

अन्वयः—श्रुतयागप्रसवैः, ऋषिदेवगणस्वधाभुजाम्, अनृणत्वम्, उपेयिवान्, सः, पार्थिवः, परिधेः, मुक्तः, उष्णदीधितिः, इव, बभौ ॥ ३० ॥

सुधा—श्रुतयागप्रसवैः = अध्ययनयज्ञपुत्रैः, ऋषिदेवगणस्वधाभुजां = ऋषीन्द्रादिदेवपितृणाम्, अध्ययनेन ऋषीणां, यज्ञेनेन्द्रादिदेवानां, पुत्रेण पितृणामिति यथासंख्यमित्यर्थः। अनृणत्वम् = ऋणविमुक्तत्वम्, उपेयिवान् = प्राप्तवान्, सः = पूर्वोक्तः, पार्थिवः = राजा, अज इति यावत् । परिधेः = मण्डलात्, मुक्तः = निर्गतः, उष्णदीधितिः = उष्णांशुः, सूर्य इति यावत् । इव = यथा, बभौ = शुशुभे ॥ ३० ॥

कोशः—'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः । 'प्रसवः पुष्पफलयोरपत्ये गर्भमोचने' इत्यनेकार्थसंग्रहः । 'परिवेशस्तु परिधिरुपसूर्यकमण्डले' इति, 'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः । भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इति चामरः॥ ३० ॥

समासादि—स्वधां भुञ्जन्तीति ते स्वधाभुजः, देवानां गण इति देवगणः ( त० पु० ), ऋषयश्च देवगणश्च स्वधाभुजश्चेति ते ऋषिदेवगणस्वधाभुजस्तेषां ऋषिदेवगणस्वधाभुजाम् ( द्व० ) । श्रुतश्च यागश्च प्रसवश्चेति ते श्रुतयागप्रसवास्तैः श्रुतयागप्रसवैः ( द्व० ) । न ऋणमनृणं तस्य भाव अनृणत्वम् । दीधीते दीप्यते इति दीधितिः, उष्णा दीधितिर्यस्य स उष्णदीधितिः ( ब० व्री० ) ॥ ३० ॥

व्याकरणम्—स्वधाभुजां = स्वधा + भुज + क्विप् । पार्थिवः + पृथिवी + अण् । उपेयिवान् = उप + इण् + क्वसुः । मुक्तः = मुच्लृ ( मोचने ), क्तः । दीधितिः = दीधीङ् ( दीप्तिदेवनयोः- ङित् ),'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्, 'यीवर्णयोर्दीधीवेव्योः' इतीकारलोपः + इट् ॥ ३० ॥

वाच्यपरिवर्तनम्—श्रुतयागप्रसवैः, ऋषिदेवगणस्वधाभुजाम् , अनृणत्वम् ,उपेयुषा, तेन, पार्थिवेन, परिधेः, मुक्तेन, उष्णदीधितिना, इव, बभे ॥ ३० ॥

तात्पर्यार्थः—ऋषीणामध्ययनेन, इन्द्रादिदेवानां यज्ञेन, पितॄणां पुत्रेण चानृणत्वं प्राप्तवान् स अजः, यथा मण्डलान्निर्गतः सूर्यः शोभते तथा पित्रर्णान्मुक्तः शुशुभे ॥ ३० ॥

भाषाऽर्थः—शास्त्रों के अध्ययन तथा यज्ञ और पुत्र से ( क्रमशः ) ऋषि, देवता, पितरों की अनृणपन को पाकर वह राजा ( अज ) मण्डल से मुक्त ( निकले ) हुये सूर्य के समान शोभायमान हुआ ॥ (मनुष्यों पर तीन ऋण रहते हैं, वे ऋण वेद पढ़ने से ऋषियों का, यज्ञ करनेसे देवताओं का, पुत्र पैदा करने से पितरों का दूर होते हैं ) ॥ ३० ॥

अथ अजस्य केवलं धनमेव परप्रयोजनकं न, किन्तु गुणवत्त्वमपीत्याह--

**बलमार्त्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।**
**वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ ३१ ॥**

सञ्जीविनी—बलमिति । तस्य विभोरजस्य केवलं वसु धनमेव परप्रयोजनं परोपकारकं नाभूत्, किन्तु गुणवत्ताऽपि गुणित्वमपि परप्रयोजना परेषामन्येषां प्रयोजनं यस्यां सा, विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणं वस्त्वित्यत्र तूहनीयम् । तथा हि—बलं पौरुषमार्त्तानामापन्नानां भयस्योपशान्तये निषेधाय, न तु स्वार्थं परपीडनाय वा । बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय न तूत्सेकाय बभूव । तस्य धनं परोपयोगीति किं वक्तव्यम् ? बलश्रुतादयोऽपि गुणाः परोपयोगिन इत्यर्थः ॥ ३१ ॥

अन्वयः--तस्य, विभोः, बलम्, आर्त्तभयोपशान्तये, बहु, श्रुतं, विदुषां, सत्कृतये, 'अभूत्' 'अतः' केवलं, वसु, न, 'किन्तु' गुणवत्ता, अपि, परप्रयोजना, 'अभूत्' ॥ ३१ ॥

सुधा--तस्य = पूर्वोक्तस्य, विभोः = राज्ञः, अजस्येति यावत् । बलं = पौरुषम्, आर्त्तभयोपशान्तये = पीडितभीतिनिवारणाय, शरणागतरक्षणायेति यावत् । न तु परपीडनायेत्यर्थः । बहु = भूरि, श्रुतं = विद्या, विदुषां = पण्डितानां, सत्कृतये = सत्काराय, अभूदिति शेषः । न तु विवादायेत्यर्थः । 'अतः' केवलम् = एकं, वसु = धनम्, 'एव-परप्रयोजनं' न, 'किन्तु' गुणवत्ता = गुणशालिता, अपि, परप्रयोजना = अन्यफला, अभूदिति शेषः ॥ ३१ ॥

कोशः--'चतुर्दशदरस्त्रासो भीतिर्भीः साध्वसं भयम्' इति, 'विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः' इति चामरः । 'वसु मयूखाग्निजनाधिपेषु योक्त्रे सुरे स्याद्वसु हाटके च । वृद्ध्योषधस्थानधनेषु रत्ने वसु स्मृतं स्यान्मधुरेऽन्यत्रच्च' इति विश्वः ॥ ३१ ॥

समासादि—आर्त्तानां भयमित्यार्त्तभयं तस्योपशान्तिरित्यार्त्तभयोपशान्तिस्तस्मै आर्त्तभयोपशान्तये ( त० पु० ) । सत्करणं सत्कृतिस्तस्यै सत्कृतये । श्रूयते स्म इति श्रुतम् । गुणो विद्यते यस्यासौ गुणवान्, तस्य भावो गुणवत्ता । परेषां प्रयोजनं यस्यां सा परप्रयोजना ( ब० व्री० ) ॥ ३१ ॥

व्याकरणम्--उपशान्तये = उप + शमु ( उपशमे-उकारेत् ), 'स्त्रियां क्तिन्' इति क्तिन्, 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । सत्कृतये = सत् + कृ + क्तिन् । गुणवत्ता = गुण + मतुप् + तल् + टाप् ॥ ३१ ॥

वाच्यपरिवर्तनम्--तस्य, विभोः, बलेन, आर्त्तभयोपशान्तये, बहुना, श्रुतेन, विदुषां, सत्कृतये, 'अभावि' 'अतः' केवलेन, वसुना, न, 'किन्तु' गुणवत्तया, अपि, परप्रयोजनया, 'अभावि' ॥ ३१ ॥

तात्पर्यार्थः—तस्याजस्य पौरुषं पीडितानां भयनिवारणाय, विद्या च विदुषां सत्काराय अभूत्, अतः केवलं धनमेव परप्रयोजनं न, किन्तु गुणवत्त्वमप्यन्यप्रयोजनमभूत् ॥ ३१ ॥

भाषाऽर्थः—उस अज का पौरुष पीडितों के भय शान्त करने के लिये ( और ) शास्त्रज्ञान विद्वानों के सत्कार के लिये हुआ, ( इससे ) उसका केवल धन ही दूसरे के प्रयोजन वाला नहीं हुआ, किन्तु गुणवत्ता भी दूसरे के प्रयोजन वाली थी ॥ ३१ ॥

अथ कदाचित् अजः इन्दुमत्या सह नगरोपवने विजहारेत्याह—

**स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।**
**नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥ ३२ ॥**

सञ्जीविनी—स इति । अवेक्षितप्रजोऽकुतोभयत्वेनानुसंहितप्रजः, "नित्यमस्मिच्प्रजा-

मेधयोः" इत्यसिच्प्रत्ययः । न केवलं स्त्रैण इति भावः । शोभना प्रजा यस्यासौ सुप्रजाः सुपुत्रवान्, पुत्रन्यस्तभार इति भावः । सोऽजः कदाचिद् देव्या महिष्येन्दुमत्या सह नगरोपवने नन्दने 'नन्दनाख्येऽमरावत्युपकण्ठवने शचीसखः, शच्या सहेत्यर्थः । मरुतां देवानां पालयितेन्द्र इव विजहार चिक्रीड ॥ ३२ ॥

अन्वयः—अवेक्षितप्रजः, सुप्रजाः, सः, कदाचित, देव्या, सह, नगरोपवने, नन्दने, शचीसखः, मरुतां, पालयिता, इव, विजहार ॥ ३२ ॥

सुधा—अवेक्षितप्रजः = अनुसंहितजनः, सुप्रजाः = सुसन्तानवान्, सः = पूर्वोक्तः, अज इति यावत् । कदाचित् = जातु, देव्या = महिष्या, इन्दुमत्येति यावत् । समं = साकं, नगरोपवने = पुराऽऽरामे, नन्दने = इन्द्रोद्याने, अमरावतीनिकटवने, नन्दनाख्य इति वाऽर्थः । शचीसखः = इन्द्राणीमित्रः, शच्या सहेत्यर्थः । मरुतां = देवानां, पालयिता = पालकः, इन्द्र इति यावत् । इव = यथा, विजहार = चिक्रीड ॥ ३२ ॥

कोशः—'कदाचिज्जातु' इत्यमरः । 'देवी कृताभिषेकायां तेजनीपृक्कयोरपि' इति मेदिनी । 'आरामः स्यादुपवनम्' इति, 'शचीन्द्राणी' इति चामरः । 'मरुद् देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी ॥ ३२ ॥

समासादि—कदा च चिच्चानयोः समाहारः कदाचित् । अवेक्षिताः प्रजाः यस्य स अवेक्षितप्रजः (ब० व्री०) । शोभना प्रजा यस्य स सुप्रजाः (ब०व्री०) । उपगतं वनमित्युपवनम्, नगरस्योपवनमिति नगरोपवनं तस्मिन्नगरोपवने ( ब० व्री० ) । शच्याः सखा इति शचीसखः ( त० पु० ) नन्दयतीति नन्दनं तस्मिन्नन्दने ॥ ३२ ॥

व्याकरणम्—अवेक्षित = अव + ईक्ष ( दर्शने ) क्तः, इट् विजहार = वि + हृ + लिट् । सुप्रजाः = सु + प्रजा + 'नित्यमसिच्प्रजामेधयोः' इत्यनेन असिच्, उपवने-अत्र 'प्रादयो गताद्यर्थे प्रथमया' इति समासः । पालयिता = पाल ( रक्षणे ), तृच् + इट् । नन्दने = टुनदि ( समृद्धौ-दन्तात् ) 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति नन्द्यादित्वाल्ल्युः ॥ ३२ ॥

वाच्यपरिवर्तनम्—अवेक्षितप्रजेन, सुप्रजसा, तेन, कदाचित्, देव्या, सह, नगरोपवने, नन्दने, शचीसखेन, मरुतां, पालयित्रा, इव, विजह्रे ॥ ३२ ॥

तात्पर्यार्थः—अकुतोभयत्वेन अनुसंहितप्रजः पुत्रन्यस्तभारः स अजः, यथा देवानां पालयिता इन्द्रः शच्या सह नन्दने क्रीडति तथा कदाचित् इन्दुमत्या सह नगरोपवने चिक्रीड ॥ ३२ ॥

भावार्थः—प्रजाओं की खोज करने ( और ) अच्छे पुत्र वाले उस अजने एक समय देवी ( इन्दुमती ) के साथ नगर के उपवन में, जैसे नन्दन वन में इन्द्राणी के साथ देवताओं के पालक ( इन्द्र ) विहार करते हैं वैसे विहार किया ॥ ३२ ॥

अथ आकाशपथेन नारदो जगामेत्याह—

> अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।
> उपवीणयितुं ययौ रवेरुदयावृत्तिपथेन नारदः ॥ ३३ ॥

सञ्जीविनी—अथेति । अथ दक्षिणस्योदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतमधिष्ठितगोकर्णाख्यस्थानमीश्वरं शिवमुपवीणयितुं वीणयोप समीपं गातुम्, "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्" इत्यनेन वीणाशब्दादुपगानार्थे णिच्प्रत्ययः, ततस्तुमुन् । नारदः नराणां समूहो नारं तद् द्यति खण्डयति कलहदानात् इति नारदः देवर्षी रवेः सूर्यस्य सम्बन्धिनोदयावृत्तिपथेनाकाशमार्गेण ययौ जगाम । सूर्योपमानेनास्यातितेजस्त्वमुच्यते ॥ ३३ ॥

अन्वयः—अथ, दक्षिणोदधेः, रोधसि, श्रितगोकर्णनिकेतम्, ईश्वरम्, उपवीणयितुं, रवेः, उदयावृत्तिपथेन, ययौ ॥ ३३ ॥

सुधा—अथ = अनन्तरं, दक्षिणोदधेः = दक्षिणदिग्वर्तिसागरस्य, रोधसि = तीरे, श्रितगोकर्णनिकेतम् = अधिष्ठितगोकर्णाख्यस्थानम्, ईश्वरं = शङ्करम्, उपवीणयितुं = वीणया गातुं, नारदः = देवर्षिः, ब्रह्मपुत्र इति यावत् । रवेः = सूर्यस्य, 'सम्बन्धिना' उदयावृत्तिपथेन = उदयावर्तनवर्त्मना, आकाशमार्गेणेति यावत् । ययौ = जगाम ।

क्वचित् 'उदयावृत्तिपथेन' इत्यत्र 'उदगावृत्तिपथेन' इति पाठो दृश्यते, तस्यैवं व्याख्या–उदगावृत्तिपथेन = उत्तरदिङ्निवर्तनमार्गेण । समासश्च–उदीचः आवृत्तिरित्युदगावृत्तिस्तस्याः पन्था इत्युदगावृत्तिपथस्तेनोदगावृत्तिपथेन इति । तात्पर्यार्थश्च–यथा सूर्यः उत्तरस्या दिशो व्यावृत्य दक्षिणायनमार्गं गच्छति, तथा नारदो ययौ इति ॥ ३३ ॥

कोशः—'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इति, 'ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः' इति चामरः ॥ ३३ ॥

समासादि—उदकानि धीयन्तेऽस्मिन्नित्युदधिः, दक्षिणस्योदधिरिति दक्षिणोदधिस्तस्य दक्षिणोदधेः ( त० पु० )। गोकर्णस्य निकेत इति गोकर्णनिकेतः ( त० पु० ), श्रितो गोकर्णनिकेतो येन सः श्रितगोकर्णनिकेतस्तं श्रितगोकर्णनिकेतम् ( ब० व्री० )। वीणयोपगातुमित्युपवीणयितुम् ( कुगतिप्रादयः )। उदयस्यावृत्तिरित्युदयावृत्तिस्तस्याः पन्था इत्युदयावृत्तिपथस्तेनोदयावृत्तिपथेन ( त० पु० )। नराणां समूहो नारं, नारं द्यति खण्डयति कलहेनेति नारदः । अथवा—नरस्य धर्म्यं नारं, नारं ददातीति नारदः । (१) यद्वा—नारं पानीयं ददातीति नारदः, अथवा—नुरिदं नारम् अज्ञानं, तद्द्यति ज्ञानोपदेशेनेति नारदः ॥ ३३ ॥

व्याकरणम्—उदधेः = उद + धा + 'कर्मण्यधिकरणे च' इति किः + इत्वम्, 'उदकस्योदः संज्ञायाम्' इत्युदादेशः । उपवीणयितुं = उप + वीणा 'सत्यापपाशरूपवीणा' इत्यादिना णिच्, ततस्तुमुन् । ययौ = या ( प्रापणे ), लिट् । नारदः = नर + अण् , नारस्तस्मात्–दो ( अवखण्डने ), 'आतोऽनुपसर्गे कः' इत्यनेन कः ॥ ३३ ॥

वाच्यपरिवर्तनम्—अथ, दक्षिणोदधेः, रोधसि, श्रितगोकर्णनिकेतः, ईश्वरः, उपवीणयितुं, नारदेन, रवेः, उदयावृत्तिपथेन, ययै ॥ ३३ ॥

तात्पर्यार्थः—अथ नारदः दक्षिणदिग्वर्तिसमुद्रस्य तीरे अधिष्ठितगोकर्णाख्यस्थानमीश्वरमुपवीणयितुं सूर्यस्याकाशमार्गेण जगाम ॥ ३३ ॥

भाषाऽर्थः—इसके बाद दक्षिण समुद्र के तीर पर गोकर्ण स्थान निवासी शंकर को वीणा से गाना सुनाने को नारद आकाश मार्ग से होकर गये ॥ ३३ ॥

अथ नारदस्य वीणाग्रभागस्थितां दिव्यपुष्पमालां वायुर्हृतवानित्याह—

**कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम् ।**

**अहरत्किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४ ॥**

सञ्जीविनी—कुसुमैरिति । अपार्थिवैरभौमैः, दिव्यैरित्यर्थः । कुसुमैर्ग्रथितां रचितां तस्य नारदस्यातोद्यस्य वाद्यस्य वीणायाः शिरस्यग्रे निवेशिताम्, 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः । स्रजं मालां वेगवान्मारुतः अधिवासे वासनायां स्पृहयेव, स्रजा स्वाङ्गं संस्कर्तुमित्यर्थः । 'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' इत्यमरः । अहरत्किल, किलेत्यैतिह्ये ॥ ३४ ॥

अन्वयः—अपार्थिवैः, कुसुमैः, ग्रथितां, तस्य, आतोद्यशिरोनिवेशितां, स्रजं, वेगवान्, मारुतः, अधिवासस्पृहया, इव, अहरत्, किल ॥ ३४ ॥

---

( १ ) उक्तञ्च 'नारं पानीयमित्युक्तं तत् पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यति' इति ।

सुधा—अपार्थिवैः = अभौमैः, दिव्यैरित्यर्थः । कुसुमैः = पुष्पैः, ग्रन्थितां = गुम्फितां, रचितामिति यावत्। तस्य = पूर्वोक्तस्य, नारदस्येति यावत् । आतोद्यशिरोनिवेशितां = वाद्यमस्तकस्थितां, वीणाग्रभागस्थापितामिति यावत्। स्रजं = मालां, वेगवान् = जववान्, शीघ्रगामीति यावत् । मारुतः = वायुः, अधिवासस्पृहया = वासनेच्छया, स्वशरीरसंस्करणेच्छयेत्यर्थः । इव = यथा, अहरत् = हृतवान्, किल ॥ ३४ ॥

कोशः—'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इत्यनेकार्थसंग्रहः । 'माल्यं मालास्रजौ मूर्ध्नि' इति, 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इति चामरः । 'शिरःप्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' इति, 'वेगो जवे प्रवाहे च महाकालफलेऽपि च' इति च मेदिनी। 'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' इति, 'इच्छा काङ्क्षा स्पृहेहा तृड्' इति चामरः ॥ ३४ ॥

समासादि—पृथिव्या इमे पार्थिवाः, न पार्थिवा इत्यपार्थिवास्तैरपार्थिवैः । आसमन्तात्तुद्यत इत्यातोद्यं, तस्य शिर इत्यातोद्यशिरस्तस्मिन् निवेशितेत्यातोद्यशिरोनिवेशिता तामातोद्यशिरनिवेशिताम् ( त० पु० ) । वेगो विद्यतेऽस्येति वेगवान् । अधिकं वासयतीत्यधिवासः, तस्य स्पृहेत्यधिवासस्पृहा तयाऽधिवासस्पृहया ( त० पु० ) ॥ ३४ ॥

व्याकरणम्—ग्रथितां = ग्रन्थ + क्तः + टाप् । आतोद्य = आ + तुद ( व्यथने ), 'ऋहलोर्ण्यत्' इत्यनेन ण्यत् । निवेशितां = नि + विश + क्तः + टाप् । अहरत् = अ + हृ + लङ् । अधिवास = अधि + वास ( उपसेवायाम् ), अच् ॥ ३४ ॥

वाच्यपरिवर्तनम्—अपार्थिवैः, कुसुमैः, ग्रथिता, तस्य, आतोद्यशिरःनिवेशिता, स्रक्, वेगवता, मारुतेन, अधिवासस्पृहया, इव, अह्रियत, किल ॥ ३४ ॥

तात्पर्यार्थः—दिव्यैः पुष्पैः रचितां नारदस्य वीणाया अग्रभागे स्थापितां मालां वेगवान् वायुः स्वशरीसंस्करणेच्छया इव हृतवान् किल ॥ ३४ ॥

भाषाऽर्थः—पृथिवीमें नहीं उत्पन्न हुये (दिव्य) फूलोंसे गुथी गयी उस (नारद) की वीणाके अगिले भागमें रक्खी हुई माला को वेगवान् वायुने मानों अपने शरीरके संस्कार की इच्छा से हरन किया ॥ ३४ ॥

अथ जनैर्नारदस्य भ्रमरव्याप्ता वीणा कज्जलाविलमश्रु मुञ्चतीव ददृश इत्याह—

**भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।**
**ददृशे पवनावलेपजं सृजती बाष्पमिवाञ्जनाविलम् ॥ ३५ ॥**

सञ्जीविनी—भ्रमरैरिति । कुसुमानुसारिभिः पुष्पानुयायिभिर्भ्रमरैरलिभिः परिकीर्णा व्याप्ता मुनेर्नारदस्य परिवादिनी वीणा, 'वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ।' इत्यमरः । पवनस्य वायोरवलेपोऽधिक्षेपस्तज्जमञ्जनेन कज्जलेनाविलं कलुषं बाष्पमश्रु सृजती मुञ्चतीव ददृशे दृष्टा, भ्रमराणां साञ्जनबाष्पबिन्दुसादृश्यं विवक्षितम् । "वा नपुंसकस्य" इति वर्तमाने "आच्छीनद्योर्नुम्" इति नुम्विकल्पः ॥ ३५ ॥

अन्वयः—'जनैः' कुसुमानुसारिभिः, भ्रमरैः, परिकीर्णा, मुनेः, परिवादिनी, पवनावलेपजम्, अञ्जनाविलं, बाष्पं, सृजती, इव, ददृशे ॥ ३५ ॥

सुधा—कुसुमानुसारिभिः = पुष्पानुयायिभिः, भ्रमरैः = द्विरेफैः, परिकीर्णा = व्याप्ता, मुनेः = देवर्षेः, नारदस्येति यावत्। परिवादिनी = वीणा, पवनावलेपजं = मारुताधिक्षेपजं, वायुतिरस्कारोद्भूतमिति यावत् । अञ्जनाविलं = कज्जलकलुषं, बाष्पं = अश्रु, सृजती = मुञ्चती, इव = यथा, ददृशे = दृष्टा, जनैरिति शेषः ॥ ३५ ॥

कोशः—'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति, 'वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इति चामरः ॥ ३५ ॥

समासादि--अनु ( पश्चात् ) सर्तुं शीलमेषां तेऽनुसारिणः, कुसुमस्यानुसारिण इति कुसुमानुसारिणस्तैः कुसुमानुसारिभिः (त० पु०) । परिकीर्यते स्मेति परिकीर्णा । परिवदति (स्वरान् ) इति परिवादिनी । पवनस्यावलेप इति पवनावलेपस्तस्माज्जात इति तत् पवनावलेपजम् , ( त० पु० ) अञ्जनेनाविलमिति तदञ्जनाविलम् ( त० पु० ) ॥ ३५ ॥

व्याकरणम्--अनुसारिभिः = अनु + सृ ( गतौ ), णिनिः । परिकीर्णा = परि + कॄ ( विक्षेपे ), क्तः + इत्वं + रपरत्वं + दीर्घः + तकारस्य नकारः + णत्वं + टाप् । परिवादिनी = परि + वद ( व्यक्तायां वाचि ), 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः + ङीप् । सृजतीं = सृज + शतृ + ङीप् ॥ ३५ ॥

वाच्यपरिवर्तनम्--'जनाः' कुसुमानुसारिभिः, भ्रमरैः, परिकीर्णां , मुनेः, परिवादिनीं, पवनावलेपजम् , अञ्जनाविल, वाष्पं, सृजतीम् , इव, ददृशुः ॥ ३५ ॥

तात्पर्यार्थः--जनैः पुष्पानुयायिभिर्भ्रमरैर्व्याप्ता नारदस्य वीणा वायोरधिक्षेपोत्पन्नं कज्जलेन कलुषमश्रु मुञ्चतीव ददृशे ॥ ३५ ॥

भाषाऽर्थः--फूलोंके पीछे चलने वाले भौंरोंसे युत मुनि ( नारद ) की वीणाको, मानो वायुके झकोरोंसे उत्पन्न कज्जलसे काले आंसु विसर्जन करती हुई ( जनोंने ) देखा ॥ ३५ ॥

अथ नारदस्य वीणायाः स्रक् इन्दुमतीस्तनोपर्यापतदित्याह--

**अभिभूय विभूतिमार्तवीं मधुगन्धातिशयेन वीरुधाम् ।**
**नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम् ॥ ३६ ॥**

सञ्जीविनी—अभिभूयेति । साऽमरस्रग्दिव्यमाला मधुगन्धयोर्मकरन्दसौरभयोरतिशयेनाधिक्येन वीरुधां लतानाम् , 'लता प्रतानिनी वीरुत्' इत्यमरः। ऋतोः प्राप्तामार्तवीमृतुसम्बन्धिनीं विभूतिं समृद्धिमभिभूय तिरस्कृत्य नृपतेरजस्य दयिताया इन्दुमत्या ऊर्वोर्विशालयोः स्तनयोर्ये कोटी चूचुकौ तयोः सुस्थितिं गोप्यस्थाने पतितत्वात्प्रशस्तां स्थितिं स्थानमाप प्राप्ता ॥ ३६ ॥

अन्वयः—सा, अमरस्रक्, मधुगन्धातिशयेन, वीरुधाम् , आर्तवीं, विभूतिम् , अभिभूय, नृपतेः, दयितोरुस्तनकोटिसुस्थितिम् , आप ॥ ३६ ॥

सुधा—सा = पूर्वोक्ता, अमरस्रक् = दिव्यमाला, मधुगन्धातिशयेन = पुष्परससौरभाधिक्येन, वीरुधां = लतानाम्, आर्तवीं = ऋतुसम्बन्धिनीं, विभूतिं = समृद्धिम्, अभिभूय = तिरस्कृत्य, नृपतेः = भूपतेः, अजस्येति यावत् । दयितोरुस्तनकोटिसुस्थितिं = प्रियाविशालचूचुकश्रेष्ठस्थानम् , आप = प्राप्ता, कुचाग्रयोरापतदित्यर्थः ॥ ३६ ॥

कोशः—'मधु क्षीरे जले मद्ये क्षौद्रे पुष्परसेऽपि च' इति हैमः । 'लता प्रतानिनी वीरुत्' इति, 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इति चामरः ॥ ३६ ॥

समासादि—विभवनं विभूतिस्तां विभूतिम् । ऋतोरियमार्त्तवी तामार्तवीम्। मधुश्च गन्धश्चेति मधुगन्धौ ( द्व० ), मधुगन्धयोरतिशयस्तेन मधुगन्धातिशयेन ( त० पु० ) । विरुन्धन्तीति ता वीरुधस्तासां वीरुधाम् । अमराणां स्रक् इत्यमरस्रक् ( त० पु० ) । ऊरू च तौ स्तनावित्युरुस्तनौ ( क० धा० ), उरुस्तनयोः कोटीत्यूरुस्तनकोटी, दयिताया उरुस्तनकोटी तयोः सुस्थितिस्तां दयितोरुस्तनकोटिसुस्थितिम् ( त०पु० ) ॥ ३६ ॥

व्याकरणम्—अभिभूय = अभि + भू + क्त्वा, ल्यबादेशः । विभूतिं = वि + भू + 'स्त्रियां क्तिन्' इति क्तिन् । आर्त्तवीम् = ऋतु + अण् + ङीप् । वीरुधां = वि + रुधिर् ( आवरणे--इरित् ), क्विप् + 'अन्येषामपि' इति दीर्घः ॥ ३६ ॥

वाच्यपरिवर्तनम्—तया, अमरस्रजा, मधुगन्धातिशयेन, वीरुधाम् , आर्तवीं, विभूतिम्, अभिभूय, नृपतेः, दयितोरुस्तनकोटिसुस्थितिः, आपे ॥ ३६ ॥

तात्पर्यार्थः—सा दिव्यमाला मकरन्दसौरभातिशयेन लतानामृतुसम्बन्धिनीं समृद्धिं तिरस्कृत्य अजस्य दयिताया इन्दुमत्या विशालयोः कुचयोरग्रभागे पपात ॥ ३६ ॥

भावार्थः—वह दिव्यमाला पुष्परस और गन्धके आधिक्यसे लताओंमें ऋतु सम्बन्ध विभूति (ऐश्वर्य) को तिरस्कार कर इन्दुमतीके विशाल स्तनोंके अग्रभाग पर गिर पड़ी॥३६

अथेन्दुमती तां दिव्यमालां विलोक्य विह्वला सती प्राणं जहावित्याह—

**क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।**
**निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ३७ ॥**

सञ्जीविनी—क्षणमात्रेति । सुजातयोः सुजन्मनोः, सुन्दरयोरित्यर्थः । स्तनयोः क्षणमात्रं सखीं सखीमिव स्थितां, सुजातत्वसाधर्म्यात्स्रजः स्तनसखीत्वमिति भावः । तां स्रजमवलोक्य दृष्ट्वा विह्वला परवशा नरोत्तमप्रियेन्दुमती तमसा राहुणा, 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । हृतचन्द्रा कौमुदी चन्द्रिकेव निमिमील मुमोह, ममारेत्यर्थः । 'निमीलो दीर्घनिद्रा च' इति हलायुधः । कौमुद्या निमीलनं प्रतिसंहारः ॥ ३७ ॥

अन्वयः—सुजातयोः, स्तनयोः, क्षणमात्रसखीं, ताम्, अवलोक्य, विह्वला, नरोत्तमप्रिया, तमसा, हृतचन्द्रा, कौमुदी, इव, निमिमील ॥ ३७ ॥

सुधा—सुजातयोः = सुजन्मनोः, मनोहरयोरित्यर्थः । स्तनयोः = कुचयोः, क्षणमात्रसखीं = क्षणिकवयस्यां, किञ्चित्कालपर्यन्तं सखीमिव स्थितामिति यावत् । तां = पूर्वोक्तां, स्रजं = मालां, अवलोक्य = दृष्ट्वा, विह्वला = व्याकुला, नरोत्तमप्रिया = जनश्रेष्ठदयिता, इन्दुमतीति यावत् । तमसा = राहुणा, हृतचन्द्रा = ग्रसितेन्दुः, कौमुदी = चन्द्रिका, इव = यथा, निमिमील = दीर्घं निद्रितवती, मृतेत्यर्थः ॥ ३७ ॥

कोशः—'अथ मित्रं सखा सुहृत्' इत्यमरः । 'निमीलो दीर्घनिद्रा च' इति हलायुधः । 'तमो राहौ गुणे पापे ध्वान्ते' इत्यनेकार्थसंग्रहः । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः ॥ ३७ ॥

समासादि—क्षणमेव क्षणमात्रं, क्षणमात्रं सखीति क्षणमात्रसखी तां क्षणमात्रसखीम् ( त० पु० ) । शोभने जाते ययोस्तौ सुजातौ तयोः सुजातयोः ( ब० व्री० ) । विह्वलतीति विह्वला । नरेषूत्तम इति नरोत्तमस्तस्य प्रियेति नरोत्तमप्रिया ( त० पु० ) । हृतश्चन्द्रो यस्याः सा हृतचन्द्रा ( ब० व्री० ) । कौ पृथिव्यां मोदन्ते जना अनेनेति कुमुदश्चन्द्रः, कुमुदस्येयं कौमुदी ॥ ३७ ॥

व्याकरणम्—विह्वला = वि + ह्वल ( चलने ), अच् + टाप् । निमिमील = नि + मील ( निमेषणे ), लिट् । कौमुदी = कु + मुद ( हर्षे ), कः + कुमुदः, तस्मात् 'तस्येदम्' इत्यण्, 'टिड्ढाणञ्' इत्यादिना ङीप् ॥ ३७ ॥

वाच्यपरिवर्तनम्—सुजातयोः, स्तनयोः, क्षणमात्रसखीं, ताम्, अवलोक्य, विह्वलया, नरोत्तमप्रियया, तमसा, हृतचन्द्रया, कौमुद्या, इव, निमिमीले ॥ ३७ ॥

तात्पर्यार्थः—सुन्दरयोः कुचयोः किञ्चित्कालपर्यन्तं सखीमिव स्थितां दिव्यमालां विलोक्य व्याकुला नरश्रेष्ठप्रियेन्दुमती राहुणा ग्रसितचन्द्रा चन्द्रिका इव ममार ॥ ३७ ॥

भावार्थः—सुन्दर स्तनोंकी थोड़े क्षण की सखी उस दिव्यमाला को देख कर व्याकुल हुई नरोत्तम ( अज ) की प्रिया ( इन्दुमती ) ने, राहुसे ग्रसे गये चन्द्रमाकी चांदनी की भांति घोर निद्रामें पड़ गयी । ( अर्थात् वह मर गयी ) ॥ ३७ ॥

अथेन्दुमती स्वयं पतन्ती पतिमप्यपातयदित्याह—

**वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।**
**ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ ३८ ॥**

सञ्जीविनी—वपुषेति । करणैरिन्द्रियैरुज्झितेन मुक्तेन, 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः । वपुषा निपतन्ती सेन्दुमती पतिमजमप्यपातयत्पातयति स्म । तथा हि निषिच्यत इति निषेकः, तैलस्य निषेकस्तैलनिषेकः, क्षरत्तैलमित्यर्थः । तस्य बिन्दुना सह दीपार्चिर्दीपज्वाला मेदिनीं भुवमुपैति ननूपैत्येव, नन्वत्रावधारणे । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । इन्दुमत्यौ दीपार्चिरुपमानम् , अजस्य तैलबिन्दुः, तत एव तस्या जीवितसमाप्तिस्तस्य जीवितशेषश्च सूच्यते ॥ ३८ ॥

अन्वयः—सा, करणोज्झितेन, वपुषा, निपतन्ती, पतिम्, अपि, अपातयत्, दीपार्चिः, तैलनिषेकबिन्दुना, सह, मेदिनीम् , उपैति, ननु ॥ ३८ ॥

सुधा—सा = मृत्युमापन्ना, इन्दुमतीति यावत् । करणोज्झितेन = इन्द्रियत्यक्तेन,वपुषा = शरीरेण, निपतन्ती = पतन्ती, पतिं = स्वामिनम् , अजमिति यावत् । अपि, अपातयत् = पातयति स्म, दीपार्चिः = दीपज्वाला, तैलनिषेकबिन्दुना = क्षरत्तैलविप्रुषा, सह = साकं, मेदिनीं = पृथिवीम् , उपैति = प्राप्नोति, ननु = उपैत्येव, अत्रननुशब्दोऽवधारणाऽर्थकः ॥ ३८ ॥

कोशः—'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति, 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इति, 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिताः' इति, 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इति, 'वह्निर्द्वयोर्ज्वालकीलावर्चिर्हेतुःशिखा स्त्रियाम्' इति चामरः ॥३८॥

समासादि—करणैरुज्झित इति करणोज्झितस्तेन करणोज्झितेन ( त० पु० ) । निषिच्यत इति निषेकस्तैलस्य निषेक इति तैलनिषेकस्तस्य बिन्दुस्तेन तैलनिषेकबिन्दुना ( त० पु० ) । दीपस्यार्चिरिति दीपार्चिः ( त० पु० ) ॥ ३८ ॥

व्याकरणम्—उज्झितेन = उज्झ ( उत्सर्गे ), क्तः + इट् । निपतन्ती = नि + पत्लृ ( पतने—लृदित् ), शतृ + 'उगितश्च' इति ङीप् । अपातयत् = अ + पत् + णिच् + लङ् । निषेक = नि + षिचिर् ( क्षरणे—इरित् ), घञ् । उपैति = उप + इण् ( गतौ--णकारेत् ), लट् ॥३८॥

वाच्यपरिवर्तनम्--तया, करणोज्झितेन, वपुषा, निपतन्त्या, पतिः, अपि, अपात्यत, दीपार्चिषा, तैलनिषेकबिन्दुना, सह, मेदिनी, उपेयते, ननु ॥ ३८ ॥

तात्पर्यार्थः--यथा दीपज्वाला क्षरत्तैलबिन्दुना सह भुवमुपैति, तथेन्दुमती इन्द्रियैस्त्यक्तेन शरीरेण निपतन्ती भर्तारमप्यपातयत् ॥ ३८ ॥

भाषाऽर्थः—वह ( इन्दुमती ) इन्द्रियोंके छोड़े हुये शरीरसे गिरती हुई, पति ( अज ) को भी गिराई, जैसे दीप की ज्वाला टपकते हुये तेल की बूंद के संग ( अपने भी ) पृथ्वी पर गिर जाती है ॥ ३८ ॥

अथ सेवकवर्गाणामार्त्तशब्देन भीताः पक्षिणोऽपि क्रोशन्ति स्मेत्याह--

उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः ।
विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥ ३९ ॥

सञ्जीविनी—उभयोरिति । उभयोर्दम्पत्योः पार्श्ववर्तिनां परिजनानां तुमुलेन संकुलेनार्तरवेण करुणस्वनेन वेजिता भीताः कमलाकरालयाः सरःस्थिता विहगा हंसादयोऽपि तत्रोपवने समदुःखा इव तत्पार्श्ववर्तिनां समानशोका इव चुक्रुशुः क्रोशन्ति स्म ॥ ३९ ॥

अन्वयः--उभयोः, पार्श्ववर्त्तिनां, तुमुलेन, आर्त्तरवेण, वेजिताः, कमलाकरालयाः, विहगाः, अपि, तत्र, समदुःखाः, इव, चुक्रुशुः ॥ ३९ ॥

सुधा--उभयो = द्वयोः, दम्पत्योरिति यावत् । पार्श्ववर्त्तिनां = समीपस्थानां, सेवकवर्गाणामिति यावत् । तुमुलेन = सङ्कुलेन, आर्त्तरवेण = करुणशब्देन, वेजिताः = भीताः, कमलाकरालयाः = पद्माकरस्थानाः, सरःस्थिता इति यावत् । विहगाः = हंसादयः खगाः, अपि, तत्र = उपवने, समदुःखाः = तुल्यशोकाः, इव = यथा, चुक्रुशुः = शुशुचुः, रुरुदुरित्यर्थः ॥ ३९ ॥

कोशः—'तुमुलं रणसङ्कुले । तुमुलो विभीतकद्रौ' इति हैमः । 'शब्दे निनादनिनदध्वनि-ध्वानरवस्वनाः' इति, 'खगे विहङ्गविहगविहङ्गमविहायसः' इति चामरः ॥ ३९ ॥

समासादि—पार्श्वयोर्वर्तन्त इति पार्श्ववर्त्तिनस्तेषां पार्श्ववर्त्तिनाम् । आर्त्तश्चासौ रव इत्यार्त्तरवस्तेन आर्त्तरवेण ( क० धा० ) । कमलानामाकर इति कमलाकरः ( त० पु० ), कमलाकर आलयो येषां ते कमलाकरालयाः ( ब० व्री० ) । समं दुःखं येषां ते समदुःखाः ( ब० व्री० ) ॥ ३९ ॥

व्याकरणम्—वेजिताः = ओविजी ( भयचलनयोः—ओकार इकारश्चेत ), क्तः + इट् । चुक्रुशुः = क्रुश ( आह्वाने रोदने च ), लिट् ॥ ३९ ॥

वाच्यपरिवर्तनम्—उभयोः, पार्श्ववर्त्तिनां, तुमुलेन, आर्तरवेण, वेजितैः, कमलाकरालयैः, विहगैः, अपि, तत्र, समदुःखैः, इव, चुक्रुशे ॥ ३९ ॥

तात्पर्यार्थः—पतितयोरुभयोरजेन्दुमत्योः सेवकवर्गाणां संकुलेन करुणशब्देन भीताः सरःस्थिता हंसादयः पक्षिणोऽपि तत्रोपवने समानशोका इव रुरुदुः ॥ ३९ ॥

भाषाऽर्थः—दोनों ( अज और इन्दुमती ) के सेवकों के बहुत रुदनसे डरे हुये सरोवर में रहने वाले ( हंस आदि ) पक्षी, उस ( उपवन ) में समान दुःख वाले की नाईं रोने लगे ॥ ३९ ॥

अथ व्यजनादिसेवितोऽजश्चेतन्यं प्रापेत्याह—

**नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता ।**
**प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ४० ॥**

सञ्जीविनी—नृपतेरिति । नृपतेरजस्य तमोऽज्ञानं व्यजनादिभिः साधनैर्नुनुदेऽपसारितम् । आदिशब्देन जलसेककर्पूरक्षोदादयो गृह्यन्ते । सा त्विन्दुमती तथैव संस्थिता मृता । तथा हि प्रतिकारविधानं चिकित्साकरणं आयुषो जीवितकालस्य शेषे सति विद्यमाने, 'आयुर्जीवितकालो ना' इत्यमरः । फलाय सिद्धये कल्पते आरोग्याय भवति, "क्लृपि संपद्यमाने च" इति चतुर्थी । नान्यथा । नृपतेरायुःशेषसद्भावात्प्रतीकारस्य साफल्यं, तस्यास्तु तदभावाद्वैफल्यमित्यर्थः ॥ ४० ॥

अन्वयः—'सेवकैः' नृपतेः, तमः, व्यजनादिभिः, नुनुदे, सा, तु, तथा, एव, संस्थिता, हि, प्रतिकारविधानम्, आयुषः, शेषे, सति, फलाय, कल्पते ॥ ४० ॥

सुधा—'सेवकैः' नृपतेः = राज्ञः, अजस्येति यावत् । तमः = मोहः, मूर्च्छेति यावत् । व्यजनादिभिः = तालवृन्तादिभिः, आदिशब्देन जलसिञ्चनादिकं ग्राह्यम् । नुनुदे = अपनोदितम्, सा = इन्दुमती, तु, तथा = तदवस्था, एव । संस्थिता = मृता, हि = यस्मात्, प्रतिकारविधानं = दूरीकरणोपायः, चिकित्सेत्यर्थः । आयुषः = जीवितकालस्य, शेषे = अवशिष्टे, सति = विद्यमाने, फलाय = सिद्धये, कल्पते = ऊहते, आरोग्याय भवतीत्यर्थः ॥ ४० ॥

कोशः—'व्यजनं तालवृन्तकम्' इति, 'आयुर्जीवितकालो ना' इति चामरः ॥ ४० ॥

समासादि—पातीति पतिर्नृणां पतिरिति नृपतिस्तस्य नृपतेः ( त० पु० ) । व्यजन्त्यनेनेति व्यजनम्, तदादिर्येषां ते व्यजनादयस्तैर्व्यजनादिभिः ( ब० व्री० ) । प्रतिकरोतीति प्रतिकारस्तस्य विधानमिति प्रतिकारविधानम् ( त० पु० ) ॥ ४० ॥

व्याकरणम्—व्यजन = वि + अज ( गतिक्षेपणयोः ), करणे ल्युट् । नुनुदे = णुद (प्रेरणे), कर्मणि लिट् । प्रतिकार = प्रति + कृ + अण् । कल्पते = कृपू ( सामर्थ्ये—ऊकारेत् ), लट् + 'कृपो रोलः' इत्यनेन रस्य लकारः ॥ ४० ॥

वाच्यपरिवर्तनम्—'सेवकाः' नृपतेः, तमः, व्यजनादिभिः, नुनुदुः, तया, तु, तथा, एव, समस्थायि, हि, प्रतिकारविधानेन, आयुषः, शेषे, सति, फलाय, कल्प्यते ॥ ४० ॥

तात्पर्यार्थः—सेवकाः राज्ञोऽजस्य मूर्च्छां व्यजनजलसेकादिभिः साधनैरपसारितवन्तः, इन्दुमती तु तथैव संस्थिता, यतः—चिकित्सा जीवितकालस्य शेषे सति आरोग्याय भवति ॥ ४० ॥

भाषाऽर्थः—( सेवकों से ) राजा ( अज ) की मूर्च्छा पंखे आदि से हटा दी गयी, इन्दुमती तो उसी प्रकार स्थित रही ( याने मृत पड़ी रही ), क्यों कि दवा आयुके शेष रहने पर ही फल ( आरोग्य ) के लिये होती है ॥ ४० ॥

अथ दयालुरजः इन्दुमतीमङ्कं निनायेत्याह

**प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।**
**स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥ ४१ ॥**

सञ्जीविनी—प्रतीति । अथ सत्त्वस्य चैतन्यस्य विप्लवाद्विनाशाद्धेतोः, 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः। प्रतियोजयितव्या तन्त्रीभिर्योजनीया, न तु योजिततन्त्रीत्यर्थः। या वल्लकी वीणा तस्याः समावस्था दशा यस्यास्तामङ्गनां वनितां नितान्तवत्सलोऽतिप्रेमवान्सोऽजः परिगृह्य हस्ताभ्यां गृहीत्वोचितं परिचितमङ्कमुत्सङ्गं निनाय नीतवान् । वल्लकीपक्षे तु सत्त्वं तन्त्रीणामवष्टम्भकः शलाकाविशेषः ॥ ४१ ॥

अन्वयः—अथ, नितान्तवत्सलः, सः, सत्वविप्लवात्, प्रतियोजयितव्यवल्लकीसमवस्थाम्, अङ्गनां, परिगृह्य, उचितम्, अङ्कं, निनाय ॥ ४१ ॥

सुधा—अथ = अनन्तरं, मूर्च्छापगमानन्तरमिति यावत्। नितान्तवत्सलः = अतिप्रेमी, दयालुरिति यावत्। सः = पूर्वोक्तः, अज इति यावत् । सत्वविप्लवात् = चैतन्यविनाशकारणात्, प्रतियोजयितव्यवल्लकीसमवस्थां = तन्त्रीयोजनीयवीणातुल्यदशाम्, अङ्गनां = वनिताम्, इन्दुमतीमिति यावत्। परिगृह्य = गृहीत्वा, हस्ताभ्यामिति शेषः। उचितं = परिचितम्, अङ्कम् = क्रोडं, निनाय = नीतवान् । वीणापक्षे–नितान्तवत्सलः = वीणाया अतिप्रेमी, सः = कश्चित्पुरुषः, सत्वविप्लवात् = तन्त्रीणामवष्टम्भकशलाकाविशेषस्य नाशात्, प्रतियोजयितव्यवल्लकीं = तन्त्रीभिर्योजनीयवीणां, परिगृह्य = गृहीत्वा, उचितं = परिचितं, अङ्कम् = उत्सङ्गं, निनाय = नीतवान् ॥ ४१ ॥

कोशः—'वीणा तु वल्लकी। विपञ्ची' इत्यमरः। 'अङ्कं दुःखाघयोरङ्को भूषारूपकलक्ष्मसु। चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः' इत्यनेकार्थसंग्रहः ॥ ४१ ॥

समासादि—प्रतियोजयितव्या चासौ (न तु तन्त्रीभिर्योजिता) वल्लकीति प्रतियोजयितव्यवल्लकी (क०धा०), प्रतियोजयितव्यवल्लक्याः समा अवस्था यस्याः सा तां प्रतियोजयितव्यवल्लकीसमवस्थाम् ( ब० व्री० )। सत्वस्य विप्लव इति सत्वविप्लवस्तस्मात् सत्वविप्लवात् ( त० पु० ) । निताम्यति स्म नितान्तं, वत्से पुत्रादावभिलापोऽस्यास्तीति वत्सलः, नितान्तश्चासौ वत्सल इति नितान्तवत्सलः ( क०धा० ) ॥ ४१ ॥

व्याकरणम्—समवस्थाम् = सम + अव + ष्ठा ( गतिनिवृत्तौ ), 'आतश्चोपसर्गे' इत्यङ् + टाप् + 'अव' इत्युपसर्गस्थस्य अकारस्य लोपः, तदुक्तं–'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति । निनाय = णीञ् (प्रापणे–ञित्), लिट् । नितान्त = नि + तमु + क्तः + 'अनुनासिकस्य क्विझलोः' इति दीर्घः । वत्सलः = वत्स + 'वत्सांसाभ्यां कामबले' इति लच् । परिगृह्य = परि + ग्रह + क्त्वा,ल्यबादेशः + सम्प्रसारणम् ॥ ४१ ॥

वाच्यपरिवर्तनम्—अथ, नितान्तवत्सलेन, तेन, सत्वविप्लवात्, प्रतियोजयितव्यवल्लकीसमवस्थाम्, अङ्गनां, परिगृह्य, उचितः, अङ्कः, निन्ये ॥ ४१ ॥

तात्पर्यार्थः—अनन्तरमतिप्रेमी सोऽजः चैतन्यस्य विनाशात् तन्त्रीभिर्योजनीयायाः वीणायास्तुल्यदशां तामिन्दुमतीं हस्ताभ्यां गृहीत्वा क्रोडं नीतवान् ॥ वीणापक्षे–वीणायाः प्रेमी-

कश्चित् पुरुषः तन्त्रीणामवष्टम्भकशलाकाविशेषस्य भङ्गात् तन्त्रीभिर्योजनीयां वीणां परिगृह्य उत्सङ्गं नीतवान् ॥ ४१ ॥

भाषाऽर्थः—इसके बाद अत्यन्तप्रेमी उस ( अज ) ने चेतना दूर हो जानेसे तार चढ़ाने योग्य वीणाके समान इन्दुमतीको उठाकर ( गोद ) में रक्खा ॥ वीणापक्षमें—वीणा का प्रेमी किसी पुरुषने खूंटी के नाश हो जानेसे तार चढ़ाने योग्य वीणा को लेकर गोदमें रक्खा ॥४१॥

अथ जना इन्दुमतीं बिभ्रन्तमजं ददृशुरित्याह—

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥ ४२ ॥

सञ्जीविनी—पतिरिति । पतिरजोऽङ्कनिषण्णयोत्सङ्गस्थितया करणानामिन्द्रियाणां तदुपलक्षितस्य चैतन्यस्य वा अपायेनापगमेन हेतुना विभिन्नवर्णया विच्छायया तया, "इत्थंभूतलक्षणे" इत्यनेन तृतीया । उषसि प्रातःकाले आविलां मृगलेखां लाञ्छनं मृगरेखारूपं बिभ्राणश्चन्द्रमा इव समलक्ष्यतादृश्यत, इत्युपमा ॥ ४२ ॥

अन्वयः—'जनैः' पतिः, अङ्कनिषण्णया, करणापायविभिन्नवर्णया, तया, उषसि, आविलां, मृगलेखां, बिभ्रत्, चन्द्रमाः, इव, समलक्ष्यत ॥ ४२ ॥

सुधा—'जनैः' पतिः = स्वामी, अज इति यावत् । अङ्कनिषण्णया = उत्सङ्गस्थितया, करणापायविभिन्नवर्णया = इन्द्रियापगमविपरीतवर्णया, तया = इन्दुमत्या, उषसि = प्रातःकाले, आविलां = कलुषां, मलिनामिति यावत् । मृगलेखां = हरिणराजिं, मृगरेखारूपलाञ्छनमिति यावत् । बिभ्रत् = धारयन्, चन्द्रमाः = इन्दुः, इव = यथा, समलक्ष्यत = अदृश्यत ॥ ४२ ॥

कोशः—'करणं हेतुकर्मणोः । वणिजादौ हस्तलेपे नृत्यगीतप्रभेदयोः । क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च' इति मेदिनी । 'कलुषोऽनच्छ आविलः' इति, 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इति, 'श्रेणीलेखास्तु राजयः' इति चामरः ॥ ४२ ॥

समासादि—अङ्के निषण्णेत्यङ्कनिषण्णा तयाऽङ्कनिषण्णया ( त० पु० ) । करणानामपाय इति करणापायः ( त० पु० ), करणापायेन विभिन्नो वर्णो यस्याः सा करणापायविभिन्नवर्णा तया करणापायविभिन्नवर्णया ( ब० व्री० ) । मृगस्य लेखेति मृगलेखा तां मृगलेखाम् ( त० पु० ) ॥ ४२ ॥

व्याकरणम्—निषण्णया = नि + षणु + क्तः + टाप् । समलक्ष्यत = सम् + अ + लक्ष ( दर्शनाङ्कनयोः ), कर्मणि लङ् + यक् ॥ ४२ ॥

वाच्यपरिवर्तनम्—'जनाः' पतिम्, अङ्कनिषण्णया, करणापायविभिन्नवर्णया, तया, उषसि, आविलां, मृगलेखां, बिभ्रन्तं, चन्द्रमसम्, इव समलक्षयन् ॥ ४२ ॥

तात्पर्यार्थः—यथा जनैः प्रातःकाले मलिनां मृगलाञ्छनं धारयंश्चन्द्रमा दृश्यते, तथा जनैः उत्सङ्गस्थितया इन्द्रियाणामपगमेन विभिन्नवर्णया तयेन्दुमत्या साकमजोऽदृश्यत ॥ ४२ ॥

भाषाऽर्थः—( जनोंने ) पति ( अज ) को, गोदमें स्थित इन्द्रियोंके विनाश से भिन्नवर्णवाली उस ( इन्दुमती ) के साथ, जैसे प्रातःकालमें मलिन मृगकी लेखा ( चिह्न ) को धारण किये चन्द्रमा दिखाई पड़ते हैं, वैसे देखा ॥ ४२ ॥

अथाजः स्वाभाविकीं धीरतामपहाय विललापेत्याह—

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ ४३ ॥

सञ्जीविनी—विललापेति । सोऽजः सहजां स्वाभाविकीमपि धीरतां धैर्यमपहाय [illegible] बाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा तथा ध्वनिमात्रानुकारि[illegible] परिदेवितवान्, 'विलापः परिदेवनम्' इत्यमरः । धीरस्य कुतः शोक इति [illegible] आह-अभितप्तम-

ग्निना सन्तप्तमयो लोहमचेतनमपि मार्दवं मृदुत्वमवैरत्वं च भजते प्राप्नोति, शरीरिषु अभिसं-तप्तेष्विति शेषः। विषये कैव कथा वार्ता, अनुक्तसिद्धमित्यर्थः ॥ ४३ ॥

अन्वयः--सः, सहजाम्, अपि, धीरताम्, अपहाय, बाष्पगद्गदं, विललाप, अभि-तप्तम्, अयः, अपि, मार्दवं, भजते, शरीरिषु, का, एव, कथा, 'अस्ति' ॥ ४३ ॥

सुधा--सः = अजः, सहजां = स्वाभाविकीम्, अपि, धीरतां = विद्वत्तां, धैर्यमिति यावत्। अपहाय = त्यक्त्वा, बाष्पगद्गदं = कण्ठगताश्रुणा विशीर्णाक्षरं, (क्रियाविशेषणम्) विललाप = परिदेवितवान्, कथनपूर्वकं रुदितवानित्यर्थः। अभितप्तं = अग्निना सन्तप्तम्, अयः = लोहम्, अपि, मार्दवं = मृदुत्वं कोमलतामिति यावत्। भजते = प्राप्नोति, शरीरिषु = देहिषु, कैव, कथा = वार्ता, अस्तीति शेषः ॥४३॥

कोशः--'विलापः परिदेवनम्' इति, 'बाष्पावुष्माश्रु' इति, 'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसमायसी' इति, 'कोमलं मृदुलं मृदु' इति चामरः ॥ ४३ ॥

समासादि--बाष्पेण गद्गदमिति बाष्पगद्गदम् (त० पु०)। धीरस्य भावो धीरता तां धीरताम्। मृदोर्भावो मार्दवम्। शरीरमेषां सन्तीति शरीरिणस्तेषु शरीरिषु ॥४३॥

व्याकरणम्--विललाप = वि + लप (व्यक्तायां वाचि), लिट्। अपहाय = अप + हा + ल्यप्। धीरतां = धीर + तल् + टाप्। अभितप्तम् = अभि + तप (संतापे), क्तः। मार्दवं = मृदु + अण् ॥ ४३ ॥

वाच्यपरिवर्तनम्--तेन, सहजाम्, अपि, धीरताम्, अपहाय, बाष्पगद्गदं, विलेपे, अभि तप्तेन, अयसा, अपि, मार्दवं, भज्यते शरीरिषु, कया, एव, कथया, 'भूयते' ॥ ४३ ॥

तात्पर्यार्थः--सोऽजः स्वभाविकीमपि धीरतां कण्ठगताश्रुणा ध्वनिमात्रानुकारिगद्गदशब्दैर्विलपितवान्, अग्निना सन्तप्तमचेतनं लोहमपि मृदुत्वं प्राप्नोति, चेतनेषु शोकादिना सन्तप्तेषु कैव कथाऽस्ति ॥४३॥

भाषाऽर्थः--वह अज स्वाभाविक धैर्यको त्यागकर गद्गद कंठसे कथन पूर्वक रुदन करने लगा, तपाया हुआ लोहा भी मृदुपने को पा जाता है, शरीर धारियों की कथा ही क्या है॥४३॥

अथ दैवस्य पुष्पमपि प्राणवियोजकं चेत्तदा तदतिरिक्तं वस्तु कथं नेत्याह--

कुसुमान्यपि गात्रसङ्गमात्प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥ ४४ ॥

सञ्जीविनी--कुसुमानीति। कुसुमानि पुष्पाण्यपि, अपिशब्दो नितान्तमार्दवद्योतनार्थः। गात्रसङ्गमाद्देहसंसर्गादायुरपोहितुमपहर्तुं प्रभवन्ति यदि हन्त विषादे, 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः। प्रहरिष्यता हन्तुमिच्छता विधेर्दैवस्यान्यत्कुसुमातिरिक्तं किमिव वस्तु, इवशब्दो वाक्यालङ्कारे, कीदृशमित्यर्थः। साधनं प्रहरणं न भविष्यति न भवेत्, सर्वमपि साधनं भविष्यत्येवेत्यर्थः ॥ ४४ ॥

अन्वयः--कुसुमानि, अपि, गात्रसङ्गमात्, आयुः, अपोहितुं, प्रभवन्ति, यदि, हन्त!, प्रहरिष्यतः, विधेः, अन्यत्, किम्, इव, साधनं, न, भविष्यति ॥ ४४ ॥

सुधा--कुसुमानि = पुष्पाणि, अपि, अपिशब्दः अतिमृदुत्वं द्योतनाय। गात्रसङ्गमात् = देहसंसर्गात्, आयुः = जीवितकालम्, अपोहितुम् = अपहर्तुं, प्रभवन्ति = समर्थानि सन्ति, यदि = चेत्, हन्त! = विषादे, प्रहरिष्यतः = हन्तुमिच्छतः, विधेः = दैवस्य, अन्यत् = अपरं, कुसुमातिरिक्तमिति यावत्। किम् = कथम्, इव, साधनं = प्रहरणं, न भविष्यति, अपि तु सर्वं साधनं भविष्यत्येवेत्यर्थः ॥ ४४ ॥

कोशः--'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इति, 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति चामरः। 'हन्त दानेऽनुकम्पायां वाक्यारम्भविषादयोः' इति, 'विधिर्ब्रह्म-विधानयोः। विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः' इति चानेकार्थसंग्रहः ॥ ४४ ॥

समासादि—गात्रस्य सङ्गम इति गात्रसङ्गमस्तस्मात् गात्रसङ्गमात् ( त० पु० )। साध्यते ऽनेनेति तत्साधनं । प्रहरिष्यतीति प्रहरिष्यन् तस्य प्रहरिष्यतः ।। ४४ ।।

व्याकरणम्—अपोहितुम् = अप + ऊह ( वितर्के ), तुमुन् + इट् । साधनं = साध ( संसिद्धौ ), करणे ल्युट् । प्रहरिष्यतः = प्र + हञ् ( हरणे-ञित् ), लट् , स्यादेशः + शतृ ।।४४।।

वाच्यपरिवर्तनम्—कुसुमैः, अपि, गात्रसङ्गमात् , आयुः, अपोहितुं, प्रभूयते, यदि, हन्त !, प्रहरिष्यतः, विधेः, अन्येन, केन, इव, साधनेन, न, भविष्यते ।। ४४ ।।

तात्पर्यार्थः—पुष्पाण्यपि देहसंसर्गात् आयुरपहर्तुं प्रभवन्ति चेन्नहि हन्त ! हन्तुमिच्छतो दैवस्य पुष्पातिरिक्तं किमिव वस्तु प्रहारसाधनं न भविष्यति, किन्तु सर्वमपि साधनं भविष्यत्येव ।।४४।।

भाषार्थः—फूल भी देहके संगसे आयुके नाश करने को समर्थ है तो खेद है कि मारनेकी इच्छा करने वाले दैवका साधन और कौन सी ( चीज ) न होगी ।। ४४ ।।

अथ मृदुना मृदुनो हिंसनं भवतीत्याशयेनाह—

अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजाऽन्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ४५ ॥

सञ्जीविनी—अथवेति । अथवा पक्षान्तरे प्रजाऽन्तकः कालो मृदु कोमलं वस्तु मृदुनैव वस्तुना हिंसितुं हन्तुमारभत उपक्रमते, अत्रार्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिर्मृत्युर्यस्याः सा तथा नलिनी पद्मिनी मे पूर्वं प्रथमं निदर्शनमुदाहरणं मता, द्वितीयं निदर्शनं पुष्पमृत्युरिन्दुमतीति भावः ॥ ४५ ॥

अन्वयः—अथवा, प्रजाऽन्तकः, मृदु, वस्तु, मृदुना, एव, हिंसितुम् , आरभते, अत्र, हिमसेकविपत्तिः, नलिनी, मे, पूर्वनिदर्शनं, मता, 'अस्ति' ॥ ४५ ॥

सुधा—अथवा = पक्षान्तरे, प्रजान्तकः = जनविनाशकर्ता, काल इत्यर्थः । मृदु = कोमलं, वस्तु = द्रव्यं, मृदुना = कोमलेन, वस्तुनेत्यर्थः । एव, हिंसितुं = हन्तुम् , आरभते = उपक्रमते, अत्र = अस्मिन्नर्थे, हिमसेकविपत्तिः = तुषारनिष्यन्दमृत्युः, नलिनी = पद्मिनी, मे = मम, अजस्येत्यर्थः । पूर्वनिदर्शनं = प्रथमोदाहरणं, मता = अनुमता, अस्तीति शेषः । द्वितीयमुदाहरणं पुष्पमृत्युरिन्दुमतीति भावः ॥ ४५ ॥

कोशः—'प्रजा स्यात्सन्ततौ जने' इति, 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' इति, 'तुषारस्तुहिनं हिमम्' इति, 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्' इति चामरः ॥ ४५ ॥

समासादि—प्रकर्षेण जायन्त इति प्रजास्तासामन्तक इति प्रजाऽन्तकः ( त० पु० )। हिमस्य सेक इति हिमसेकः ( त० पु० ), विपद्यतेऽनयेति विपत्तिः, हिमसेकेन विपत्तिर्यस्याः सा हिमसेकविपत्तिः ( ब० व्री० ) । नडाः सन्त्यत्रेति नलिनी । पूर्वञ्च तन्निदर्शनमिति पूर्वनिदर्शनम् ( क० धा० ) ॥ ४५ ॥

व्याकरणम्—हिंसितुं = हिसि (हिंसायाम्-इदित् ), तुमुन् + नुम् । आरभते = आ + रभ (राभस्ये), लट् + तादेशः । प्रजा = प्र + जनी (प्रादुर्भावे-ईकारेत् ), 'उपसर्गे च संज्ञायाम्' इत्यनेन डः + टाप् । विपत्तिः = वि + पद् + 'सम्पदादित्वात्क्विप् + 'स्त्रियां क्तिन्' इति क्तिन् । नलिनी = नड + 'पुष्करादिभ्यो देशे' इति इनिः + ङीप् + ( डलयोरैक्यम् )॥४५॥

वाच्यपरिवर्तनम्—अथवा, प्रजान्तकेन, मृदु, वस्तु, मृदुना, एव, हिंसितुम् , आरभ्यते, अत्र, हिमसेकविपत्त्या, नलिन्या, मे, पूर्वनिदर्शनं, मतया, 'भूयते' ॥ ४५ ॥

तात्पर्यार्थः—अथवा प्रजानां कालः कोमलं वस्तु कोमलेनैव वस्तुना हन्तुमुपक्रमते, अस्मिन्नर्थे तुषारनिष्यन्देन मृत्युः कमलिनी मे प्रथममुदाहरणम् , द्वितीयं च पुष्पमृत्युरिन्दुमती अस्ति ॥ ४५ ॥

भाषाऽर्थः—अथवा प्रजाओं का काल कोमल वस्तु को कोमल वस्तु से ही मारने का आरम्भ करता है, इसमें हिम (पाले) के गिरने से नाश होने वाली कमलिनी को मैं पहला उदाहरण मानता हूँ। ( दूसरे उदाहरण में इस इन्दुमती को ) ॥ ४५ ॥

अथ क्वापीश्वरेच्छया विषमप्यमृतम् अमृतमपि विषं भवतीत्याह—

**स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।**
**विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥**

सञ्जीविनी—स्रगिति । इयं स्रग्जीवितमपहन्तीति जीवितापहा यदि हृदये वक्षसि, 'हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । निहिता सती मां किं न हन्ति ईश्वरेच्छया क्वचित्प्रदेशे विषमप्यमृतं भवेत्क्वचिदमृतं वा विषं भवेत्, दैवमेवात्र कारणमित्यर्थः ॥ ४६ ॥

अन्वयः—इयं, स्रक्, यदि, जीवितापहा, 'अस्ति' हृदये, निहिता, 'सती' मां, किं, न, हन्ति, ईश्वरेच्छया, क्वचित्, विषम्, अपि, अमृतं, भवेत्, 'क्वचित्' अमृतं, वा, विषं, 'भवेत्' ॥ ४६ ॥

सुधा—इयम् = एषा, स्रक् = माला, यदि = चेत्, जीवितापहा = आयुरपहारिणी, अस्तीति शेषः । हृदये = वक्षसि, निहिता = अर्पिता, सतीति शेषः । माम् = अजं, किं न = कथं न, हन्ति = हिनस्ति, ईश्वरेच्छया = दैवाकाङ्क्षया, क्वचित् = कुत्रचित्प्रदेशे, विषं = गरलम्, अपि, अमृतं = पीयूषं, भवेत् = स्यात्, 'क्वचित्' अमृतं = सुधा, वा = एव, विषं, भवेदिति शेषः ॥ ४६ ॥

कोशः—'हृदयं वक्षसि स्वान्ते बुक्कायाम्' इत्यनेकार्थसंग्रहः । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः । अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः' इति मेदिनी । 'वा स्याद् विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः ॥ ४६ ॥

समासादि—जीवितम् अपहन्तीति जीवितापहा । वेवेष्टि कायमिति विषम् । ईश्वरस्य इच्छेतीश्वरेच्छा तयेश्वरेच्छया ( त० पु० ) ॥ ४६ ॥

व्याकरणम्—अपहा = अप + हन ( हिंसागत्योः ), 'अपे क्लेशतमसोः' इति डप्रत्ययः + टाप् । निहिता = नि + हा + क्तः + इत्वं + टाप् । विषम् = विष्लृ ( व्याप्तौ-लृदित् ), 'इगुपधज्ञा' इति कः ॥ ४६ ॥

वाच्यपरिवर्तनम्—अनया, स्रजा, यदि, जीवितापहया, 'भूयते' हृदये, निहितया, अहं, किं, न, हन्ये, ईश्वरेच्छया, क्वचित्, विषेण, अपि, अमृतेन, भूयेत, 'क्वचित्' अमृतेन, वा, विषेण, 'भूयेत' ॥ ४६ ॥

तात्पर्यार्थः—इयं माला यदि चेज्जीवितमपहारिणी विद्यते, तर्हि वक्षःस्थलेऽर्पिता सती मामजं कथं न हन्ति, ईश्वरेच्छया कुत्रचित् प्रदेशे गरलमपि पीयूषं भवेत, क्वचित् पीयूषमेव गरलं भवेत् ॥ ४६ ॥

भाषाऽर्थः—यह माला यदि जीवन को नाश करने वाली (है) तो वक्षःस्थल पर पड़ी हुई मुझे क्यों नहीं मारती है ?, ईश्वर की इच्छा से कहीं पर विष भी अमृत हो जाता है (और ) कहीं अमृत ही विष ( हो जाता है ) ॥ ४६ ॥

अथ नेयं पुष्पमाला किन्तु मद्भाग्यविप्लवात् ब्रह्मणा वज्रं कल्पितमित्याह—

**अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।**
**यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ४७ ॥**

सञ्जीविनी—अथवेति । अथवा मम भाग्यस्य विप्लवाद्विपर्ययादेषः, स्रगित्यर्थः । विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । वेधसा विधात्राऽशनिर्वज्रतोऽग्निः कल्पितः, 'दम्भोलिरशनिर्द्वयोः' इत्यमरः । यद्यस्मादनेनाप्यशनिना प्रसिद्धाशनिनेव तरुस्तरुस्थानीयः स्वयमेव न पातितः

किन्तु तस्य तरोर्विटपाश्रिता लता वल्ली क्षपिता नाशिता ॥ ४७ ॥

अन्वयः—अथवा, मम, भाग्यविप्लवात्, वेधसा, एषः, अशनिः, कल्पितः, यत्, अनेन, तरुः, न, पातितः, 'किन्तु' तद्विटपाश्रिता, लता, क्षपिता ॥ ४७ ॥

सुधा—अथवा, मम = अजस्य, भाग्यविप्लवात् = नियतिविपर्ययात्, दैवदोषादिति यावत्। वेधसा = ब्रह्मणा, एषः = असौ, विधेयप्राधान्यात् पुंलिङ्ग निर्देशः। अशनिः = पविः, वद्युतोऽग्निरित्यर्थः। कल्पितः = रचितः, यत् = यस्मात्, अनेन = पुरोवर्तिनाऽशनिना, पुष्परूपाशनिनेत्यर्थः। (विख्याताशनिना इव) तरुः = वृक्षः, तरुस्थानीयः अज इत्यर्थः। न पातितः = न विनाशितः, 'किन्तु' तद्विटपाश्रिता = वृक्षशाखाश्रिता, लता = वल्ली, मदाश्रिता इन्दुमतीत्यर्थः। क्षपिता = नाशिता ॥ ४७ ॥

कोशः—'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इति, 'ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः। शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः' इति, 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इति चामरः ॥ ४७ ॥

समासादि—भाग्यस्य विप्लव इति भाग्यविप्लवस्तस्मात्भाग्यविप्लवात् (त०पु०)। तस्य विटप इति तद्विटपस्तस्याश्रितेति तद्विटपाश्रिता (त० पु०) ॥ ४७ ॥

व्याकरणम्—कल्पितः = कृप् (सामर्थ्ये-ऊकारेत्), क्तः + 'कृपो रोलः' इत्यनेन लकारः। पातितः = पत्लृ (पतने-लृकारेत्), णिच् + क्तः। क्षपिता = क्षप (प्रेरणे), क्तः + इट्। आश्रिता = आ + श्रिञ् (सेवायाम्—ञित्), क्तः + टाप् ॥ ४७ ॥

वाच्यपरिवर्तनम्—अथवा, मम, भाग्यविप्लवात्, वेधाः, अमुम्, अशनिं, कल्पितवान्, यत्, असौ, तरुं, न, पातितवान्, 'किंतु' तद्विटपाश्रितां, लतां, क्षपितवान् ॥ ४७ ॥

तात्पर्यार्थः—अथवा मम भाग्यदोषात् ब्रह्मणा इयं पुष्पमाला वैद्युतोऽग्निः कल्पितः, यस्मात् अनेन पुष्पाशनिना प्रसिद्धाशनिना इव तरुः (अहम्) स्वयमेव न पातितः, किन्तु मदाश्रितेन्दुमती नाशिता ॥ ४७ ॥

भावार्थः—अथवा मेरे भाग्य के उलट पुलट हो जाने से ब्रह्मा ने इस (माला) को वज्र बना दिया है, क्यों कि जिस (वज्र) ने वृक्ष को (अज को) नहीं नाश किया, किन्तु उसके आश्रित लता को (इन्दुमती को) नाश किया ॥ ४७ ॥

अथ हे इन्दुमति! अपराधविहीनमिमं जनं सम्भाष्यं कथं न मन्यसे इत्याह—

**कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि।**
**कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ४८ ॥**

सञ्जीविनी—कृतवतीति। मयि चिरं भूरिशोऽपराद्धेऽप्यपराधं कृतवत्यपि, राधेः कर्तरि क्तः। यदा यस्माद्धेतोः, यदेति हेत्वर्थः। 'स्वरादौ पठ्यते यदेति हेतौ' इति गणव्याख्यानात्। अवधीरणामवज्ञां न कृतवत्यसि नाकार्षीः, तत्कथमेकपदे तत्क्षणे, 'स्यात्तत्क्षणे एकपदम्' इति विश्वः। निरागसं नितरामनपराधमिमं जनम्, इममिति स्वात्मनिर्देशः, मामित्यर्थः। आभाष्यं सम्भाष्यं न मन्यसे न चिन्तयसि ॥ ४८ ॥

अन्वयः—मयि, चिरम्, अपराद्धे, अपि, यदा, 'त्वम्' अवधीरणां, न, कृतवती, असि, 'तत्' कथम्, एकपदे, निरागसम्, इमं, जनम्, आभाष्यं, न, मन्यसे ॥ ४८ ॥

सुधा—मयि = अजे, चिरं = बहुशः, अपराद्धे = अपराधं कृतवति, अपि, यदा = यस्माद्धेतोः, 'यदा' इति हेत्वर्थः। अवधीरणाम् = अवहेलनाम्, अवज्ञामिति यावत्। न कृतवती = न विहितवती, असि - विद्यसे, नाकार्षीरित्यर्थः। त्वमिति शेषः। 'तत्' कथं = कस्मात्, एकपदे = तत्क्षणे, निरागसं = नितरामनपराधिनम्, इमम् = अमुम्, जनम् = अजम् आभाष्यं = सम्भाष्यं, न मन्यसे = न चिन्तयसि ॥ ४८ ॥

कोशः—'स्यात्तत्क्षणे एकपदम्' इति विश्वः। 'आगोऽपराधो मन्तुश्च' इत्यमरः। 'जनो लोके, जगद्भेदे पृथग्जने' इत्यनेकार्थसंग्रहः॥ ४८॥

समासादि—अवधीरणमवधीरणा आगसो निष्क्रांत इति निरागसस्तं निरागसम् ( त० पु० )। आभाषितुं योग्यमित्याभाष्यम्॥ ४८॥

व्याकरणम्—अवधीरणा = अव + डुधाञ् ( धारणादौ-डुञित ), 'सुसूधाञ्' इत्यौणादिकः क्रन्, 'घुमास्थागापा' इतीत्वम् + युच् + टाप्। अपराद्धे = अप + राध ( संसिद्धौ ), कर्तरि क्तः। निरागसं--अत्र 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। आभाष्यम् = आ + भाष ( व्यक्तायां वाचि ), ण्यत्॥ ४८॥

वाच्यपरिवर्तनम्—मयि, विरम्, अपराद्धे, अपि, यदा, 'त्वया' अवधारणा, न, कृतवत्या, भूयते, 'तत्' कथम्, एकपदे, निरागसः, अयं, जनः, आभाष्यः, न, मन्यसे॥ ४८॥

तात्पर्यार्थः—मां बहुशोऽपराधं कृतवन्तमपि यस्मात्त्वमवज्ञां नाकार्षीः, तत्कथमस्मिंस्तत्क्षणेऽपराधरहितमिमं जनम् सम्भाष्यं न चिन्तयसि॥ ४८॥

भाषाऽर्थः—मेरे बहुत अपराध करने पर भी जिस कारण ( तूने ) तिरस्कार नहीं किया, फिर क्यों एका एकी निरपराधी इस जन ( अज ) को भाषण के योग्य नहीं समझती है॥ ४८॥

अथ हे इन्दुमति! त्वं मां कपटप्रियं ज्ञातवतीत्याह--

**ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव।**
**परलोकमसंनिवृत्तये यदनापृच्छ्य गताऽसि मामितः॥ ४९॥**

सञ्जीविनी—ध्रुवमिति। हे शुचिस्मिते! धवलहसिते! शठो गूढविप्रियकारी कैतवेन कपटेन वत्सलः कैतवस्निग्ध इति ध्रुवं सत्यं तव विदितस्त्वया विज्ञातोऽस्मि, "मतिबुद्धिपूजार्थेभ्यश्च" इत्यनेन कर्तरि क्तः, "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। कुतः? यद्यस्मान्मामनापृच्छ्यानामन्त्र्येतोऽस्माल्लोकात्परलोकमसंनिवृत्तये अपुनरावृत्तये गताऽसि॥ ४९॥

अन्वयः—हे शुचिस्मिते!, कैतववत्सलः, शठः, 'इति' ध्रुवं, तव, विदितः, अस्मि, यत्, माम्, अनापृच्छ्य, असन्निवृत्तये, इतः, परलोकं, गता, असि॥ ४९॥

सुधा—हे शुचिस्मिते! = हे धवलहसिते!, उक्तं च—'ईषद् विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितैः। अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत्' इति। कैतववत्सलः = कपटस्निग्धः, शठः = गूढविप्रियकारी, वक्राशय इति यावत्। 'इति' तव = भवत्याः, इन्दुमत्या इति यावत्। ध्रुवं = सत्यं, ( यथा तथा ) विदितः = विज्ञातः, अस्मि = विद्ये, यत् = यस्मात्, माम् = अजम्, अनापृच्छ्य = अनामन्त्र्य, अपृष्ट्वेत्यर्थः। असन्निवृत्तये = अपुनरावृत्तये, इतः = अस्माल्लोकात्, परलोकम् = अन्यलोकं, गता = प्राप्ता, असि = विद्यसे॥ ४९॥

कोशः—'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः। अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः' इति। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे' इति चामरः॥ ४९॥

समासादि—शुचि स्मितं यस्याः सा शुचिस्मिता तत्सम्बुद्धौ हे शुचिस्मिते! ( ब० व्री० )। कैतवेन वत्सल इति कैतववत्सलः ( त० पु० )। परश्चासौ लोक इति परलोकस्तं परलोकम् ( क० धा० )। न सन्निवृत्तिरित्यसन्निवृत्तिस्तस्यै असन्निवृत्तये (न०त०पु०)॥४९॥

व्याकरणम्—स्मिते = ष्मिङ् ( ईषद्धसने-ङित् ), भावे क्तः + टाप्। विदितः = विद् + 'मतिबुद्धिपूजार्थेभ्यश्च' इति क्तः। तव-अत्र 'क्तस्य च वर्तमाने' इत्यनेन 'त्वया' इत्यस्य स्थाने षष्ठी। अनापृच्छ्य = न + आ + प्रच्छ ( ज्ञीप्सायाम् ), क्त्वा + ल्यबादेशः + सम्प्रसारणम्॥ ४९॥

वाच्यपरिवर्तनम्—हे शुचिस्मिते!, कैतववत्सलं, शठं, 'इति' त्वं, ध्रुवं, विदितवती,

यत्, माम्, अनापृच्छ्य, अपुनिवृत्तये, इतः, परलोकं, गतया, भूयते ॥ ४९ ॥

तात्पर्यार्थः—हे इन्दुमति ! कपटेन स्निग्धः वक्राशयः इति त्वया सत्यं विज्ञातोऽस्मि, कुतः ? यस्मात् कारणात् मामनापृच्छ्य त्वम् अपुनरावृत्तयेऽस्माल्लोकात्परलोकं प्राप्ताऽसि॥४९॥

भावार्थः—हे उज्वल हासवाली ! (इन्दुमती ?) कपट से प्यार करने वाला कपटी ऐसा तूं ने निश्चय ही जाना, क्यों कि मुझसे बिना पूछे फिर न आने के लिये इस ( लोक ) से परलोक को चली गई ॥ ४९ ॥

अथेदं मम जीवितं यद्यन्वगात्तर्हि आत्मकृतेन प्रबलां वेदनां सहतामित्याह—

**दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना ।**
**सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥**

सञ्जीविनी—दयितामिति । इदं मम हतजीवितं कुत्सितं जीवितं तावदादौ दयितामिन्दुमतीमन्वगादन्वगच्छद्यदि अन्वगादेव, यद्यत्रावधारणे । पूर्वं मूर्च्छितत्वादिति भावः । तर्हि तया दयितया विना किं किमर्थं विनिवृत्तं, प्रत्यागमनं न युक्तमित्यर्थः । अत एवात्मकृतेन स्वदुश्चेष्टितेन निवृत्तिरूपेण प्रबलामधिकां वेदनां दुःखं सहतां क्षमताम्, स्वयंकृतापराधेषु सहिष्णुत्वं शरणमिति भावः ॥ ५० ॥

अन्वयः—इदं, मम, हतजीवितं, तावत्, दयिताम्, अन्वगात्, यदि, 'तर्हि' तया, विना, किं, विनिवृत्तम्, 'अत एव' आत्मकृतेन, प्रबलां, वेदनां, सहताम् ॥५० ॥

सुधा—इदम् = एतत्, मम = अजस्य, हतजीवितं = कुत्सितजीवितं, तावत् = आदौ, दयितां = प्रियाम्, इन्दुमतीमिति यावत् । अन्वगात् = अन्वगच्छत्, यदि = एव, अत्रावधारणार्थकयदिशब्दः । 'तर्हि' तया = दयितया, इन्दुमत्येति यावत् । विना = ऋते, किं = किमर्थं, विनिवृत्तं = प्रत्यागतम्, प्रत्यागमनं न युक्तमित्यर्थः । 'अत एव' आत्मकृतेन = स्वविहितेन,स्वदुश्चेष्टितेन निवृत्तरूपेणेत्यर्थः। प्रबलां = महतीं, वेदनां = पीडां,दुःखमिति यावत् । सहतां = क्षमताम् ॥ ५० ॥

कोशः—'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इत्यमरः । 'वेदना ज्ञाने पीडायाम्' इत्यनेकार्थसंग्रहः ॥ ५० ॥

समासादि—हतञ्च तज्जीवितमिति हतजीवितम् ( क० धा० ) । आत्मना कृत इत्यात्मकृतस्तेनात्मकृतेन ( त० पु० ) ॥ ५० ॥

व्याकरणम्—दयिता = दय ( दानादौ ), क्तः = टाप् । अन्वगात् = अनु + अ + इण् ( गतौ—णकारेत् ), 'इणो गा लुङि' इतीणो गादेशः + लुङ् । विनिवृत्तं = वि + नि + वृतु ( वर्तने-उकारेत् ), क्तः । सहतां = षह + लोट् । जीवितं = जीव (प्राणधारणे), क्तः + इट् । वेदना = विद (चेतनाख्याननिवासेषु),'घट्टिवन्दिविदिभ्यश्च' इति वार्तिकेन युच् + टाप् ॥५०॥

वाच्यपरिवर्तनम्—अनेन, मम, हतजीवितेन, तावत्, दयिता, अन्वगायि, यदि, 'तर्हि' तया, विना, किं, विनिवृत्तेन, 'भूयते' 'अत एव' आत्मकृतेन, प्रबला, वेदना, सह्यताम् ॥५०॥

तात्पर्यार्थः—ममेदं कुत्सितं जीवितमादौ प्रियामिन्दुमतीमन्वगच्छेदेव, तर्हि तया दयितयेन्दुमत्या विना किमर्थं प्रत्यागतमत एव स्वदुश्चेष्टितेन निवृत्तिरूपापराधेनाधिकं दुःखं क्षमताम्। स्वयं कृतापराधेषु सहिष्णुतैव शरणमिति ॥ ५० ॥

भावार्थः—यह मेरा अभागा जीवन प्यारी इन्दुमती के पीछे चला ही जाता था, तो उस ( इन्दुमती ) के बिना किस लिये लौट आया, ( यदि लौट आया तो ) अपने किये ( लौटने रूप अपराध ) का भारी दुःख सहे ॥ ५० ॥

अथ हे इन्दुमति ! शरीरिणामिमम् अस्थिरत्वं धिगित्याह—

**सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।**
**अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ॥ ५१ ॥**

सञ्जीविनी—सुरतश्रमेति । सुरतश्रमेण सम्भृतो जनितः स्वेदलवोद्गमोऽपि ते तव मुखे ध्रियते वर्तते, अथ च त्वमात्मना स्वरूपेणास्तं नाशमिता प्राप्ता, अतः कारणाद्देहभृतां प्राणिनामिमां प्रत्यक्षामसारतामस्थिरतां धिक् ॥ ५१ ॥

अन्वयः—सुरतश्रमसम्भृतः, स्वेदलवोद्गमः, अपि, ते, मुखे, ध्रियते, अथ च, त्वम्, आत्मना, अस्तम्, इता, 'असि' 'अतः' देहभृताम्, इमाम्, असारतां, धिक्, 'अस्ति' ॥५१॥

सुधा—सुरतश्रमसम्भृतः = निधुवनश्रमप्रादुर्भूतः, स्वेदलवोद्गमः = घर्मकणोत्पत्तिः, अपि, ते = तव, इन्दुमत्या इति यावत् । मुखे = आनने, ध्रियते = वर्तते, अथ च = किञ्च, त्वम् = इन्दुमती, आत्मना = स्वरूपेण, अस्तं = नाशम्, इता = प्राप्ता, असीति शेषः । 'अतः' देहभृतां = शरीरधारिणाम्, प्राणिनामिति यावत् । इमां = समक्षाम्, असारताम् = अस्थिरतां, धिक्, 'अस्तीति शेषः । अत्र निन्दार्थको धिग्शब्दः ॥ ५१ ॥

कोशः—'सुरतं स्यान्निधुवने देवत्वे सुरता स्मृता' इति मेदिनी । 'घर्मो निदाघः स्वेदः स्यात्' इत्यमरः । 'लवः कालभिदि छिदि । विलासे रामजे लेशे जपा किञ्जल्कपक्ष्मणोः । गोपुच्छलोमस्वपि च' इत्यनेकार्थसंग्रहः । 'धिग् भर्त्सने च निन्दायाम्' इति मेदिनी ॥ ५१ ॥

समासादि—सुरतस्य श्रम इति सुरतश्रमस्तेन सम्भृत इति सुरतश्रमसम्भृतः (त० पु०) । स्वेदस्य लव इति स्वेदलवस्तस्योद्गम इति स्वेदलवोद्गमः ( त० पु० ) । देहं बिभ्रतीति देहभृतस्तेषां देहभृताम् । न सारोऽसारस्तस्य भावोऽसारता तामसारताम् ॥५१॥

व्याकरणम्—सम्भृतः = सम् + भृ + क्तः । ध्रियते = धृङ् ( अवस्थाने—ङित् ), लट् । इता = इण् ( गतौ-णित् ), क्तः + टाप् । देहभृतां = देह + भृ + क्विप् + तुक् ॥ ५१ ॥

वाच्यपरिवर्तनम्—सुरतश्रमसम्भृतेन, स्वेदलवोद्गमेन, अपि, ते, मुखे, ध्रियते, अथ च, त्वया, आत्मना, अस्तम्, इतया, 'भूयते'.......... ॥ ५१ ॥

तात्पर्यार्थः—हे इन्दुमति !, इदानीमपि निधुवनश्रमेण जनितः स्वेदलेशोद्गमस्तव मुखे तिष्ठति, अथ च त्वं स्वरूपेण नाशं गताऽसि, अतः प्राणिनामिमां प्रत्यक्षामस्थिरतां धिगस्ति ॥ ५१ ॥

भावार्थः—हे इन्दुमति ! सुरतके परिश्रमसे निकले पसीने की बूंद ( अभी ) भी तेरे मुख पर वर्तमान है, और तू अपने ( स्वरूप ) से नाश को प्राप्त हुई, हा ! देहधारियों की इस ( प्रत्यक्ष ) असारता को धिक्कार है ॥ ५१ ॥

अथ हे इन्दुमति ! पूर्वं चेतसाऽपि तवाप्रियं न कृतम्, त्वं कथं मां त्यक्तवतीत्याह—

**मनसाऽपि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।**
**ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥ ५२ ॥**

सञ्जीविनी—मनसेति । मया मनसाऽपि तव विप्रियं न कृतपूर्वम्, पूर्वं न कृतमित्यर्थः । सुप्सुपेति समासः । किं केन निमित्तेन मां जहासि, नन्वहं क्षितेः शब्दपतिः शब्दत एव पतिः, नत्वर्थत इत्यर्थः । भावनिबन्धनाऽभिप्रायनिबन्धना स्वभावहेतुका मे रतिः प्रेम तु त्वय्येव, अस्तीति शेषः ॥ ५२ ॥

अन्वयः—मया, मनसा, अपि, तव, विप्रियं, न, कृतपूर्वं, 'त्वम्' मां, किं, जहासि, ननु, अहं, क्षितेः, शब्दपतिः, 'अस्मि' भावनिबन्धना, मे, रतिः, त्वयि, 'एव-अस्ति' ॥ ५२ ॥

सुधा—मया = अजेन, मनसा = चेतसा, अपि, तव = इन्दुमत्याः, विप्रियं = अनिष्टम्, असंतुष्टकरं कार्यमित्यर्थः । न कृतपूर्वं = पूर्वं न कृतं, 'त्वम्' माम् = अजं, किं = कथम्, जहासि = त्यजसि, ननु, अहम् = अजः, क्षितेः = धरायाः, पृथिव्या इति यावत् । शब्दपतिः = शब्दमात्रस्वामी, न तु अर्थतः पतिरित्यर्थः । अस्मीति शेषः । भावनिबन्धना = स्वभावहेतुका, मे = मम, रतिः = प्रीतिः, अनुराग इति यावत् । त्वयि = भवत्याम्, 'एव-अस्ति' इति शेषः ॥५२॥

कोशः—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति, । 'धरा धरित्री धरणी क्षोणि ज्या काश्यपी क्षितिः' इति, । 'भावः सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु' इति चामरः । 'रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः' इति मेदिनी ॥ ५२ ॥

समासादि—प्रियाद् विगतमिति विप्रियम् । पूर्वं कृतमिति कृतपूर्वम् ( सुप्सुपा ) । शब्दस्य पतिरिति शब्दपतिः ( त० पु० ) । भावः निबन्धनं यस्याः सा भावनिबन्धना ( ब० व्री० ) ॥ ५२ ॥

व्याकरणम्—जहासि = हा + लट् । निबन्धना = नि + बन्ध (बन्धने), ल्युट् + टाप् ॥५२॥

वाच्यपरिवर्तनम्—अहं, मनसा, अपि, तव, विप्रियं, न, कृतवान्, 'त्वया' अहं, किं, हीये, ननु, मया, क्षितेः, शब्दपतिना, 'भूयते' भावनिबन्धनया, मे, रत्या, त्वयि, 'एव-भूयते' ॥ ५२ ॥

तात्पर्यार्थः—हे इन्दुमति ! पूर्वं मया चेतसाऽपि तवाप्रियं न कृतं, त्वं केन कारणेन मामज्ञं त्यजसि, नन्वहं क्षितेः शब्दमात्रेणैव पतिर्नत्वर्थतः, अथ च स्वभावहेतुका मे प्रीतिस्त्वय्यवास्ति ॥ ५२ ॥

भाषाऽर्थः—मैंने (पहले) मनसे भी तुम्हारा अहित नहीं किया, ( फिर ) तू किस कारण मुझे छोड़ती है, मैं क्षिति ( पृथिवी ) का पति तो नाममात्र से हूं, परन्तु स्वाभाविक ( मन ) का प्रेम तुम में ही है ॥ ५२ ॥

अथ हे इन्दुमति ! चूर्णकुन्तलान् कम्पयन् वायुस्तव पुनरुज्जीवने शङ्कां कारयतीत्याह—

कुसुमोत्खचितान्वलीभृतश्चलयन्भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः ॥ ५३ ॥

सञ्जीविनी—कुसुमेति । कुसुमैरुत्खचितानुत्कर्षेण रचितान्वलीभृतो भङ्गीयुक्तान्, कुटिलानित्यर्थः । भृङ्गरुचो नीलांस्तवालकांश्चलयन्कम्पयन्मारुतः, हे करभोरु ! करभसदृशोरु !, 'मणिबन्धादाकनिष्ठं करस्य करभो वहिः' इत्यमरः । मनस्त्वदुपावर्तनशङ्कि तव पुनरागमने शङ्कावत्करोति, त्वदुज्जीवने शङ्कां कारयतीत्यर्थः ॥ ५३ ॥

अन्वयः—हे करभोरु ! मारुतः, कुसुमोत्खचितान्, वलीभृतः, भृङ्गरुचः, तव, अलकान्, चलयन्, 'सन्' मे, मनः, त्वदुपावर्तनशङ्कि, करोति ॥ ५३ ॥

सुधा—हे करभोरु ! = हे करभसदृशोरु !, मारुतः = वायुः, कुसुमोत्खचितान् = पुष्परचितान्, वलीभृतः = भङ्गीयुक्तान्, कुटिलानित्यर्थः । भृङ्गरुचः = भ्रमरशोभान्, नीलानित्यर्थः । तव = ते, इन्दुमत्या इति यावत् । अलकान् = चूर्णकुन्तलान्, चलयन् = कम्पयन्, सन्निति शेषः । मे = मम, अजस्येत्यर्थः । मनः = मानसं, त्वदुपावर्तनशङ्कि = त्वदीयपुनरागमनशङ्कावत्, त्वदुज्जीवनसंशयाति यावत् । करोति = विदधाति ॥ ५३ ॥

कोशः—'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इति, 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति, 'अलकाश्चूर्णकुन्तलाः' इति, 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति चामरः । 'शङ्का स्यात्संशये भये' इति हेमः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः इत्यमरः ॥ ५३ ॥

समासादि—कुसुमैरुत्खचिताः इति कुसुमोत्खचितास्तान् कुसुमोत्खचितान् (त० पु०) । वलीं बिभ्रतीति ते तान् वलीभृतः । भृङ्ग इव रुक् येषां ते तान् भृङ्गरुचः (ब० व्री०) । करभ इवोरू यस्याः सा करभोरूस्तत्सम्बुद्धौ हे करभोरु ! ( ब० व्री० ) । तवोपावर्तनमिति त्वदुपावर्तनं तस्मिन् शङ्का विद्यतेऽस्येति तत् त्वदुपावर्तनशङ्कि ( त० पु० ) ॥ ५३ ॥

व्याकरणम्—खचितान् = खच ( भूतप्रादुर्भावे ) क्तः + इट् । चलयन् = चल ( कम्पने ), णिच् + शतृ । उपावर्तन = उप + आ + वृतु ( वर्तने-उकारेत् ), 'करणाधिकरणयोश्च' इत्यनेन ल्युट् ॥ ५३ ॥

वाच्यपरिवर्तनम्—हे करभोरु ! मारुतेन, कुसुमोत्खचितान्, वलीभृतः, भृङ्गरुचः, तव, अलकान्, चलयता, 'सता' मे, मनसा, त्वदुपावर्तनशङ्किना, क्रियते ॥ ५३ ॥

तात्पर्यार्थः—हे करभसदृशोरु ! वायुः पुष्पैः रचितान् कुटिलान् नीलांस्तवचूर्णकुन्तलान् कम्पयन् सन् मे मनः त्वदुज्जीवने शङ्कां कारयति ॥ ५३ ॥

भाषाऽर्थः—हे करभ के समान जंघाओं वाली ( इन्दुमति ! ) वायु फूलों से रचित काले बालों को कँपाता हुआ मेरे मन को तेरे लौटने की शंका वाला कर रहा है ॥ ५३ ॥

अथ हे इन्दुमति ! त्वं स्वप्रतिबोधेन मे विषादं निरसितुमर्हसीत्याह—

**तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।**
**ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ५४ ॥**

सञ्जीविनी—तदिति । हे प्रिये ! तत्तस्मात्कारणादाशु मे विषादं दुःखं नक्तं रात्रावोषधिस्तृणज्योतिराख्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेर्हिमालयस्य गुहागतं तमोऽन्धकारमिव प्रतिबोधेन ज्ञानेनापोहितुं निरसितुमर्हसि ॥ ५४ ॥

अन्वयः—हे प्रिये, 'त्वम्' तत्, आशु, मे, विषादं, नक्तम्, ओषधिः, ज्वलितेन, तुहिनाद्रेः, गुहागतं, तमः, इव, प्रतिबोधेन, अपोहितुम्, अर्हसि ॥ ५४ ॥

सुधा—हे प्रिये ! = हे वल्लभे !, तत = तस्मात्कारणात्, त्वदुज्जीवनसंशयत्वादिति यावत् । आशु = शीघ्रं, मे = मम, अजस्येत्यर्थः । विषादं = मनोभङ्गं, दुःखमित्यर्थः । नक्तं = रात्रौ, ओषधिः = दीप्तिमत्तृणविशेषः, तृणज्योतिर्नाम्नी लतेति यावत् । ज्वलितेन = प्रकाशेन, तुहिनाद्रेः = हिमाचलस्य, गुहागतं = गह्वरस्थितं, तमः = तिमिरम्, इव = यथा, प्रतिबोधेन = उद्बोधनेन, उज्जीवनेनेति यावत्, अपोहितुं = निरसितुम्, अर्हसि = योग्योऽसि, त्वमिति शेषः ॥ ५४ ॥

कोशः—'दयितं वल्लभं प्रियम्' इति, 'दरी तु कन्दरो वाऽस्त्री देवखातबिले गुहा । गह्वरं' इति, 'तुषारस्तुहिनं हिमम्' इति, 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इति, 'नक्तं स्याद् रजनाविति' इति, 'ओषधिः ( ओषध्यः ) फलपाकान्ताः' इति चामरः ॥ ५४ ॥

समासादि—गुहायां गतमिति गुहागतम् ( त० पु० ) । तुहिनस्याद्रिरिति तुहिनाद्रिस्तस्य तुहिनाद्रेः ( त० पु० ) । ओषो दीप्तिर्धीयतेऽस्यामोषधिः ॥ ५४ ॥

व्याकरणम्—अपोहितुम् = उहिर् ( अर्दने-इरित ), तुमुन् । अर्हसि = अर्ह + लट् । ज्वलितेन = ज्वल ( दीप्तौ ), क्तः । ओषधिः = ओष + डुधाञ् ( धारणादौ-डुञित् ), 'कर्मण्यधिकरणे च' इत्यनेन किः ॥ ५४ ॥

वाच्यपरिवर्तनम्—हे प्रिये !, 'त्वया' तत्, आशु, मे, विषादं, नक्तम्, ओषधिना, ज्वलितेन, तुहिनाद्रेः, गुहागतं, तमः, इव, प्रतिबोधेन, अपोहितुम्, अर्ह्यते ॥ ५४ ॥

तात्पर्यार्थः—हे इन्दुमति ! यथा रात्रौ तृणज्योतिर्नाम्नी लता स्वकीयप्रकाशेन हिमाचलस्य गुहागतमन्धकारं निरस्यति, तथा त्वमपि स्वकीयप्रतिबोधेन मे मनोभङ्गरूपं विषादं शीघ्रं निरसितुमर्हसि ॥ ५४ ॥

भाषाऽर्थः—हे प्रिये ! इस ( जीने की शङ्का ) के कारण ( तू ) शीघ्र मेरे विषाद को, जैसे रात्रिमें ओषधि ( तृणज्योति नाम वाली लता ) अपने प्रकाश से हिमाचल की कंदरा के अन्धकार को ( हटाती है ), वैसे अपने ( जीवन ) से हटानेके योग्य हो ॥ ५४ ॥

अथ हे इन्दुमति ! सम्भाषणरहितं तव मुखं मां परितापयतीत्याह—

**इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।**
**निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥**

सञ्जीविनी—इदमिति । इदमुच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसं-

लापं तव मुखं निशि रात्रौ सुप्तं निमीलितं विरतोऽभ्यन्तराणामन्तर्वर्तिनां षट्पदानां स्वनो यत्र तत्, निःशब्दभृङ्गमित्यर्थः। एकपङ्कजमद्वितीयं पद्ममिव मां दुनोति परितापयति ॥५५॥

अन्वयः—इदम्, उच्छ्वसितालकं, विश्रान्तकथं, तव, मुखं, निशि, सुप्तं, विरताभ्यन्तरषट्पदस्वनम्, एकपङ्कजम्, इव, मां, दुनोति ॥ ५५ ॥

सुधा—इदम् = एतत्, उच्छ्वसितालकं = चलितचूर्णकुन्तलं, विश्रान्तकथं = निवृत्तसम्भाषणं, तव = ते, मुखम् = आननं, निशि = रात्रौ, सुप्तं = मुकुलितं, विरताभ्यन्तरषट्पदस्वनम् = अन्तर्गतभ्रमरशब्दरहितम्, एकपङ्कजम् = अद्वितीयकमलम्, इव = यथा, माम् = अजं, दुनोति = परितापयति ॥ ५५ ॥

कोशः—'अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' इति मेदिनी। 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति, 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इति चामरः ॥ ५५ ॥

समासादि—उच्छ्वसिता अलका यस्मिन् तत् उच्छ्वसितालकम् ( ब० व्री० )। विश्रान्ता कथा यस्मिन् तद् विश्रान्तकथम् ( ब० व्री० ) । पङ्काज्जातं पङ्कजम्, एकं च तत्पङ्कजमित्येकपङ्कजम् ( क० धा० ) । षट्पदान्यस्येति षट्पदः, अभ्यन्तराश्च ते षट्पदा इत्यभ्यन्तरषट्पदाः (क० धा०), विरत अभ्यन्तरषट्पदानां स्वनो यस्मिन् तद् विरताभ्यन्तरषट्पदस्वनम् ( ब० व्री० ) ॥ ५५ ॥

व्याकरणम्—उच्छ्वसित = उत् + श्वस ( प्राणने ), क्तः + इट् । विश्रान्त = वि + श्रमु ( तपसि खेदे च—उकारेत ), क्तः + दीर्घः । दुनोति = टुदु ( उपतापे—द्वित ), लट् + तिबादेशः + श्नुः। सुप्तम् = ञिष्वप् ( शये—ञीत् ), क्तः ॥ ५५ ॥

वाच्यपरिवर्तनम्—अनेन, उच्छ्वसितालकेन, विश्रान्तकथेन, तव, मुखेन, निशि, सुप्तेन, विरताभ्यन्तरषट्पदस्वनेन, एकपङ्कजेन, इव, अहं, दूये ॥ ५५ ॥

तात्पर्यार्थः—हे इन्दुमति ! इदं चलितचूर्णकुन्तलं सम्भाषणवर्जितं तव मुखं रात्रौ मुकुलितम् अन्तर्वर्तिभ्रमराणां शब्दविरामप्राप्तं ( निःशब्दम् ) एककमलमिव मां परितापयति ॥ ५५ ॥

भाषार्थः—( हे इन्दुमति ! ) चलायमान उड़े बालों वाला, बातों से रहित यह तेरा मुख रात्रिमें अविकसित हुये निकटवर्ति भौंरों के शब्द से रहित एक कमल की नाईं मुझे दुःखी कर रहा है ॥ ५५ ॥

अथ हे इन्दुमति ! अपुनरागमना त्वं मामवश्यं सन्तापयेः इत्याह—

**शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।**
**इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ५६ ॥**

सञ्जीविनी—शशिनमिति। शर्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति, द्वन्द्वीभूय चरतीति द्वन्द्वचरः तं पतत्रिणं चक्रवाकं दयिता चक्रवाकी पुनरेति, इति हेतोस्तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ विरहावधिसहौ, 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमरः। अत्यन्तगता पुनरावृत्तिरहिता त्वं तु कथं न मां दहेः सन्तापयेः, अपि तु दहेरेवेत्यर्थः ॥५६॥

अन्वयः—शर्वरी, शशिनं, पुनः, एति, दयिता, द्वन्द्वचरं, पतत्रिणं, 'पुनः—एति' इति, तौ, विरहान्तरक्षमौ, 'स्तः' अत्यन्तगता, 'त्वं–तु' मां, कथं, न, दहेः ॥ ५६ ॥

सुधा—शर्वरी = रात्रिः, शशिनं = चन्द्रं, पुनः = भूयः, एति = प्राप्नोति, दयिता = चक्रवाकी, द्वन्द्वचरं = युगलगामिनं, पतत्रिणं = पक्षिणं, चक्रवाकमित्यर्थः । 'पुनः–एति' इति = अस्मात्कारणात्, तौ = पूर्वोक्तौ, चन्द्रचक्रवाकौ, विरहान्तरक्षमौ = वियोगावधिसहौ, स्त इति शेषः । अत्यन्तगता = अपुनरागमना, पुनरावृत्तिरहितेति यावत्। 'त्वं–तु' माम् = अजं, कथं = किं, न दहेः? = न सन्तापयेः ?, अपि तु दहेरेवेत्यर्थः ॥ ५६ ॥

कोशः—'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्द्रो हिमद्युतिः' इति शब्दार्णवः। 'शर्वरी निशि

नार्यां च' इत्यनेकार्थसंग्रहः। 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः। नगौकोवाजिविकिरविविष्किरपतत्रयः' इत्यमरः॥ ५६॥

समासादि—द्वन्द्वीभूय चरतीति द्वन्द्वचरस्तं द्वन्द्वचरम्। विरहस्यान्तरमिति विरहान्तरं, विरहान्तरं क्षमेते इति विरहान्तरक्षमौ (त० पु०)। अत्यन्तं (यथा तथा) गतेत्यत्यन्तगता॥ ५६॥

व्याकरणम्—दयिता = दय (गतौ), क्तः + इट् + टाप्। द्वन्द्वचरं = द्वन्द्व + चर (गतिभक्षणयोः), 'चरेष्टः' इति टः। क्षमौ = क्षमू (सहने-ऊकारेत्), पचाद्यच्। दहेः = दह (भस्मीकरणे), विधिलिङ्॥ ५६॥

वाच्यपरिवर्तनम्—शर्वर्य्या, शशी, पुनः, ईयते, दयितया, द्वन्द्वचरः, पतत्री, 'पुनः-इयते' इति, ताभ्यां, विरहान्तरक्षमाभ्यां, 'भूयते' अत्यन्तगतया, 'त्वया-तु' अहं, कथं, न, दह्ये॥५६॥

तात्पर्यार्थः—हे इन्दुमति! रात्रिश्चन्द्रं पुनः प्राप्नोति, चक्रवाकी चक्रवाकं पुनः प्राप्नोति, इति हेतोस्तौ चन्द्रचक्रवाकौ विरहावधिसहौ स्तः, पुनरावृत्तिरहिता त्वं तु मां कथन्न सन्तापयेः, किन्तु सन्तापयेरेव॥ ५६॥

भाषाऽर्थः—रात्रि चन्द्रमा को फिर भी प्राप्त कर लेती है, चकई चकवे को (फिर प्राप्त होती है), इससे वे दोनों (चन्द्रमा और चकवा) वियोग का अन्तर सह सकते हैं, बराबर के लिये गयी हुई (तू तो) मुझे क्यों न भस्म करेगी॥ ५६॥

अथ हे सुन्दरजघने! तवेदं शरीरं चिताऽधिरोहणं कथं सहिष्यत इत्याह—

**नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम्।**
**तदिदं विषहिष्यते कथं वद वामोरु चिताऽधिरोहणम्॥ ५७॥**

सञ्जीविनी—नवेति। नवपल्लवसंस्तरे नूतनप्रवालास्तरणेऽप्यर्पितं स्थापितं मृदु ते तव यदङ्गं शरीरं दूयेत परितप्तं भवेत्, वामौ सुन्दरौ ऊरू यस्याः सा हे वामोरु! 'वामं स्यात्सुन्दरे सव्ये' इति केशवः। "संहितशफलक्षणवामादेश्च" इत्यादिनाङ्प्रत्ययः। तदिदमङ्गं चितायाः काष्ठसंचयस्याधिरोहणं कथं विषहिष्यते वद॥ ५७॥

अन्वयः—हे वामोरु!, नवपल्लवसंस्तरे, अपि, अर्पितं, मृदु, ते, यत्, अङ्गं, दूयेत, तत्, इदं, चिताऽधिरोहणं, कथं, विषहिष्यते, 'त्वं' वद॥ ५७॥

सुधा—हे वामोरु! = हे सुन्दरजघने!, नवपल्लवसंस्तरे = नूतनकिसलयास्तरणे, अपि, अर्पितं = स्थापितं, मृदु = कोमलं, ते = तव, यत् = वर्तमानम्, अङ्गं = शरीरं, दूयेत = परितप्तं भवेत्, तत् = पूर्वोक्तं, नवपल्लवास्तरणेऽपि परितपनशीलमिति यावत्। इदम् = एतच्छरीरं, चिताऽधिरोहणं = काष्ठसञ्चयाधिष्ठानं, कथं = केन प्रकारेण, विषहिष्यते = क्षमिष्यते, वद = ब्रूहि, त्वमिति शेषः॥ ५७॥

कोशः—'नवीनो नूतनो नवः' इत्यमरः। 'पल्लवोऽस्त्री किसलये विटपे विस्तरे वने' इति मेदिनी। 'मृदुतीक्ष्णे कोमले च' इत्यनेकार्थसंग्रहः। 'वामं स्यात्सुन्दरे सव्ये' इति केशवः॥५७॥

समासादि—नवाश्च ते पल्लवा इति नवपल्लवाः (क० धा०), नवपल्लवेषु संस्तर इति नवपल्लवसंस्तरस्तस्मिन्नवपल्लवसंस्तरे (त० पु०)। वामौ ऊरू यस्याः सा तत्सम्बुद्धौ हे वामोरु! (ब० व्री०)। चिताया अधिरोहणमिति चिताऽधिरोहणम् (त० पु०)॥ ५७॥

व्याकरणम्—संस्तरे = सम् + स्तृञ् (आच्छादने—ञित्), 'ऋदोरप्' इत्यनेनाप्। दूयेत = टुदु (उपतापे-ट्वित्), विधिलिङ्। विषहिष्यते = वि + षह (मर्षणे), लट्। आरोहणम् = आ + रुह (प्रादुर्भावे), करणे ल्युट्॥ ५७॥

वाच्यपरिवर्तनम्—हे वामोरु! नवपल्लवसंस्तरे, अपि, अर्पितेन, मृदुना, ते, येन, अङ्गेन, दूयेत, तेन, अनेन, चिताऽधिरोहणं, कथं, विषहिष्यते, 'त्वया' उद्यताम्॥ ५७॥

तात्पर्यार्थः--हे सुन्दरजघने ! नवप्रवालास्तरणेऽपि स्थापितं कोमलं तव शरीरं परितप्तं भवेत्, तदिदं शरीरं काष्ठसंचयस्याधिष्ठानं कथं क्षमिष्यते त्वं वद ॥ ५७ ॥

भाषाऽर्थः--हे सुन्दर जंघाओं वाली ! नवीन पल्लवों के बिछौने परभी रक्खा हुआ कोमल तेरा जो शरीर दुःख पाता था, वह ( शरीर ) चिता पर चढना कैसे सहन करेगा ( तू ) बोल ॥ ५७ ॥

अथ हे इन्दुमति ! गतप्राणया त्वया सह मेखला शोकेन मृतेव दृश्यत इत्याह--

**इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी ।**
**गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥ ५८ ॥**

सञ्जीविनी--इयमिति । इयं प्रथमाद्या रहःसखी, सुरतसमयेऽप्यनुयानादिति भावः । गतिविभ्रमसादेन नीरवा विलासोपरमेण निःशब्दा रशना मेखला अप्रतिबोधमपुनरुद्बोधं यथा तथा शायिनीं, मृतामित्यर्थः । त्वामनु त्वया सह, "तृतीयार्थे" इत्यनुशब्दस्य कर्मप्रवचनीयत्वात्, "कर्मप्रवचनीययुक्ते द्वितीया" इत्यनेन द्वितीया । शुचा शोकेन मृतेव न लक्ष्यत इति न, लक्ष्यत एवेत्यर्थः । सम्भाव्यनिषेधनिवर्तनाय द्वौ प्रतिषेधौ ॥ ५८ ॥

अन्वयः--इयं, प्रथमा, रहःसखी, गतिविभ्रमसादनीरवा, रशना, अप्रतिबोधशायिनीं, त्वाम्, अनु, शुचा, मृता, इव, 'मया' न लक्ष्यते, 'इति' न ॥ ५८ ॥

सुधा--इयम्--एषा, प्रथमा = आद्या, रहःसखी = विजनवयस्या, एकान्तसखीति यावत् । सुरतसमयेऽपि सहवर्तिनीति भावः । गतिविभ्रमसादनीरवा = गमनसम्बन्धिविलासोपरमनिःशब्दा, रशना = काञ्ची, अप्रतिबोधशायिनीं = अपुनरुद्बोधशयनशीलाम्, अत्यन्तसुप्तामिति यावत् । मृतामित्यर्थः । त्वाम् अनु = त्वया सह, अप्रतिबोधशायिन्या त्वया सहेत्यर्थः । शुचा = शोकेन, मृता = मृत्युं प्राप्ता, इव = यथा, न लक्ष्यते = न दृश्यते, 'इति' न अपि तु दृश्यत एव । मयेति शेषः ॥ ५८ ॥

कोशः--'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इति, 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इति, 'आलिः सखी वयस्याऽथ' इति, 'स्त्रीणां विलासविब्बोकविभ्रमाललितं तथा । हेला लीलेत्यमी हावाः क्रिया शृङ्गारभावजाः' इति, 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति चामरः ॥ ५८ ॥

समासादि--न प्रतिबोधमित्यप्रतिबोधम्, अप्रतिबोधं (यथा तथा) शयितुं शीलमस्याः सा अप्रतिबोधशायिनी तामप्रतिबोधशायिनीम् । रहसः सखीति रहःसखी ( त० पु० ) । गतेर्विभ्रम इति गतिविभ्रमस्तस्य साद इति गतिविभ्रमसादस्तेन नीरवेति गतिविभ्रमसादनीरवा ( त० पु० ) ॥ ५८ ॥

व्याकरणम्--शायिनीं = शीङ् (स्वप्ने-ङित्), णिनिः + ङीप् । त्वाम् अनु-इत्यत्र 'तृतीयार्थे' इति कर्मप्रवचनीयसंज्ञायाम् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । मृता = मृङ् ( प्राणत्यागे--ङित ), क्तः + टाप् । लक्ष्यते = लक्ष ( दर्शनाङ्कनयोः ), लट् + यक् ॥ ५८ ॥

वाच्यपरिवर्तनम्--इमां, प्रथमां, रहःसखीं, गतिविभ्रमसादनीरवां, रशनाम्, अप्रतिबोधशायिनीं, त्वाम्, अनु, मृताम्, इव, अहं, न, लक्षयामि, 'इति' न ॥ ५८ ॥

तात्पर्यार्थः--सुरतसमयेऽपि सहवर्तिनीयं रहःसखी गमनविलासोपरमेण निःशब्दा मेखला अपुनरुद्बोधशायिन्या त्वया सह शोकेन मृता इव मया न दृश्यते इति न अपि तु दृश्यत एव ॥ ५८ ॥

भाषाऽर्थः--यह पहली एकान्त की सखी गमन की क्रीडा के अवसान में चुप रहनेवाली रशना (करधनी) अत्यन्त सोती हुई ( याने मरी हुई ) तेरे साथ शोक से क्या मरी हुई की नाईं नहीं दीखती है ?, ( किन्तु दीखती ही है ) ॥ ५८ ॥

अथ त्वया मत्प्राणसंतोषाय कोकिलादिषु मधुरभाषणादिस्थापितेऽपि तव विरहेऽति-दुःखं मे हृदयं स्थापयितुमशक्ताः सन्तीति युग्मेनाह—

कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ ५९ ॥
त्रिदिवोत्सुकयाऽप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं नत्ववलम्बितुं क्षमाः ॥ ६० ॥

सञ्जीविनी—कलमिति । त्रिदिवेति । युग्मम् । उभयोरेकान्वयः । अन्यभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम्, कलहंसीषु विशिष्टहंसीषु मदालसं मन्थरं गतं गमनम्, पृषतीषु हरिणीषु विलोलमीक्षितं चञ्चला दृष्टिः, पवनेन वायुनाधूतलतास्वीषत्कम्पितलतासु विभ्रमा विलासाः । इत्यमी पूर्वोक्ताः कलभाषणादयो गुणाः, एषु कोकिलादिस्थानेष्विति शेषः । त्रिदिवोत्सुकयाऽपीह जीवन्त्येव स्वर्गं प्रति प्रस्थितयाऽपि त्वया मामवेक्ष्य विरहासहं विचार्य सत्यं निहिताः, मत्प्राणधारणोपायतया स्थापिता इत्यर्थः । तव विरहे गुरुव्यथमतिदुःखं मे हृदयं मनोऽवलम्बितुं स्थापयितुं न क्षमा न शक्ताः । ते तु त्वत्सङ्गम एव सुखकारिणः, नान्यथा । प्रत्युत प्राणानपहरन्तीति भावः ॥ ५९ ॥ ६० ॥

अन्वयः—अन्यभृतासु, कलं, भाषितं, कलहंसीसु, मदालसं, गतं, पृषतीषु, विलोलम्, ईक्षितं, पवनाधूतलतासु, विभ्रमाः । 'इति' अमी, गुणाः, त्रिदिवोत्सुकया, अपि, त्वया, माम्, अवेक्ष्य, सत्यं, निहिताः, 'तथाऽपि' तव, विरहे, गुरुव्यथं, मे, हृदयम्, अवलम्बितुं, न, क्षमाः, 'सन्ति' ॥ ५९ ॥ ६० ॥

सुधा—अन्यभृतासु = परपालितासु, कोकिलास्वित्यर्थः । कलं = मधुरं, भाषितं = भाषणं, मधुरशब्दमित्यर्थः । कलहंसीषु = विशिष्टहंसीषु, राजहंसीष्विति यावत् । मदालसं = मन्थरं, गतं = गमनं, मन्दगमनमित्यर्थः । पृषतीषु = मृगीषु, विलोलं = चञ्चलम्, ईक्षितं = विलोकितं, चञ्चलादृष्टिरिति यावत् । पवनाधूलतासु = वायुना ईषत्कम्पितवल्लीषु, विभ्रमाः = विलासाः।'इति' अमी = पूर्वोक्ताः. गुणाः = मधुरभाषणादयो गुणाः, एषु कोकिलादिस्थानेष्विति शेषः । त्रिदिवोत्सुकया = सुरलोकोत्कण्ठितया, स्वर्गं प्रति प्रस्थितयेति यावत् । अपि, त्वया = भवत्या, इन्दुमत्येति यावत् । माम् = अजम्, अवेक्ष्य = विलोक्य, वियोगासहं विचार्येति यावत्।सत्यं = तथ्यं, ध्रुवमिति यावत् । निहिताः = मत्प्राणरक्षणोपायतया स्थापिताः, 'तथाऽपि' तव = भवत्याः, विरहे = वियोगे, गुरुव्यथं = महापीडम्, अतिदुःखमिति यावत् । मे = मम, हृदयं = मनः, अवलम्बितुं = स्थापयितुं, = न क्षमाः, नसमर्थाः, सन्तीति शेषः ॥५९॥६०॥

कोशः—'कलं शुक्रे त्रिष्वजीर्णे चाव्यक्तमधुरध्वनौ' इति मेदिनी । 'कलहंसो राजहंसे कादम्बे नृपसत्तमे' इत्यनेकार्थसंग्रहः । 'पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेते बिन्दुयुक्तेऽप्युभाविमौ' इति कोशः ॥ 'स्वरव्यय स्वर्गनाकत्रिदिवत्रिदशालयाः' इति, 'सत्यं तथ्यमृतं सम्यग्' इति, 'पीडाबाधाव्यथा दुःखम्' इति चामरः ॥ ५९ ॥ ६० ॥

समासादि—अन्यैर्भृता इत्यन्यभृतास्तासु अन्यभृतासु ( त० पु० ) । मदेनालसमिति मदालसम् ( त० पु० ) । आधूताश्च ता लता इत्याधूतलताः ( क० धा० ), पवनेनाधूतलता इति पवनाधूतलतास्तासु पवनाधूतलतासु ( त० पु० ) ॥ त्रयो ब्रह्मविष्णुरुद्रा दीव्यन्त्यत्रेति त्रिदिवः, त्रिदिवं प्रत्युत्सुकेति त्रिदिवोत्सुका तया त्रिदिवोत्सुकया (त०पु०) । गुर्वी व्यथा यस्मिन् तत् गुरुव्यथम् (ब०व्री०) ॥ ५९ ॥ ६० ॥

व्याकरणम्—भृता = डुभृञ् ( धारणादौ-डुञित् ), क्तः + टाप् । भाषितं = भाष ( व्यक्तायां वाचि ), क्तः + इट् । ईक्षितम् = ईक्ष ( दर्शने ), क्तः + इट् । आधूत = आ + धूञ्

( कम्पने—जित् ), क्तः ॥ त्रिदिव = त्रि + दिवु ( क्रीडाविजिगीषादौ—उकारेत् ), 'हलश्च' इति घञ् । उत्सुकया = उत् + पू ( प्रेरणे ), मितद्र्वादित्वात् डुः + 'सत्सूद्विष' इत्यादिना क्विप् + कन् + 'केऽणः' इति ह्रस्वः + टाप् । अवलम्बितुम् = अव + लबि + तुमुन् + नुम् । क्षमाः = क्षमू ( सहने-ऊकारेत् ), पचाद्यच् ॥ ५९ ॥ ६० ॥

वाच्यपरिवर्तनम्—अन्यभृतासु, कलेन, भाषितेन, कलहंसीषु, मदालसेन, गतेन, पृषतीषु, विलोलेन, ईक्षितेन, पवनाधूतलतासु, विभ्रमैः । 'इति' एतान्, गुणान्, त्रिदिवोत्सुका, अपि, त्वं, माम्, अवेक्ष्य, सत्यं, निहितवती, 'तथाऽपि' तव, विरहे, गुरुव्यथं, मे, हृदयम्, अवलम्बितुं, न, क्षमैः, 'भूयते' ॥ ५९ ॥ ६० ॥

तात्पर्यार्थः—कोकिलासु मधुरभाषणं, राजहंसीसु मन्दगमनं, हरिणीषु चञ्चलादृष्टिः, ईषत्कम्पितलतासु विलासाः, इत्यमी मधुरभाषणादयो गुणाः एषु कोकिलादिस्थानेषु स्वर्गं प्रति प्रस्थितयाऽपि त्वया मां विरहासहिष्णुं विचार्य मत्प्राणधारणोपायतया स्थापिता-स्तथाऽपि तव विरहे अतिदुःखं मे हृदयं स्थापयितुं न शक्ताः सन्ति ॥ ५९ ॥ ६० ॥

भाषाऽर्थः—कोकिलाओं में मधुर बोली, कलहंसियों में धीमी चाल, हरिणियों में चञ्चल दृष्टि, हवा से हिलायी गई लताओं में विलास, ये सब गुण स्वर्ग में जानेवाली तूने मुझे देखकर ( याने विरह दुःख को नहीं सहने वाला समझ कर ) ठीक रख छोड़ा है, ( तो भी ) तेरे वियोग में भारी दुःखवाला मेरा हृदय ग्रहण करनेके लिये समर्थ नहीं है ॥ ५९ ॥ ६० ॥

अथ हे प्रिये ! आम्रफलिन्योर्विवाहमविधायैव तव गमनं न युक्तमित्याह—

**मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।**
**अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम् ॥ ६१ ॥**

सञ्जीविनी—मिथुनमिति । ननु हे प्रिये ! सहकारश्चूतविशेषः फलिनी प्रियङ्गुलता चेमौ त्वया मिथुनं परिकल्पितं मिथुनत्वेनाभ्यमानि, अनयोः फलिनीसहकारयोर्विवाहसत्क्रियां विवाहमङ्गलमविधायाकृत्वा गम्यत इत्यसाम्प्रतमयुक्तम् । मातृहीनानां न किञ्चित्सुखम-स्तीति भावः ॥ ६१ ॥

अन्वयः—ननु, हे प्रिये !, सहकारः, फलिनी, च, इमौ, त्वया, मिथुनं, परिकल्पितम्, अनयोः, विवाहसत्क्रियाम्, अविधाय, गम्यते, इति, असाम्प्रतम् 'अस्ति' ॥ ६१ ॥

सुधा—ननु, हे प्रिये ! = हे वल्लभे !, सहकारः = आम्रः, सौरभयुक्ताम्र इति यावत् । फ-लिनी = प्रियङ्गुलता, च, इमौ = एतौ, त्वया = भवत्या, मिथुनं = युग्मं, परिकल्पितम् = अङ्गी-कृतम्, अनयोः = मिथुनत्वेनाभिमतयोर्फलिनीसहकारयोः, विवाहसत्क्रियाम् = उद्वाहशुभकर्म, विवाहमङ्गलमिति यावत् । अविधाय = अकृत्वा, गम्यते = गमनं क्रियते, इति, असा-म्प्रतम् = अयुक्तम्, अस्तीति शेषः ॥ ६१ ॥

कोशः—'मिथुनं तु द्वयो राशिभेदे स्त्रीपुंसयुग्मके' इति मेदिनी । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इति, 'लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली' इति, 'विवाहोप-यमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इति, 'युक्ते द्वे साम्प्रतं स्थाने' इति चामरः ॥ ६१ ॥

समासादि—विवाहस्य सत्क्रियेति विवाहसत्क्रिया तां विवाहसत्क्रियाम् ( त० पु० ) । न साम्प्रतमित्यसाम्प्रतम् ( न० त० पु० ) ॥ ६१ ॥

व्याकरणम्—परिकल्पितं = परि + क्लृप् ( सामर्थ्ये-ऊकारेत् ), क्तः + इट् + लत्वम् । अविधाय = न + वि + धा + क्त्वा, ल्यबादेशः । गम्यते = गम् + कर्मणि लट् ॥ ६१ ॥

वाच्यपरिवर्तनम्—ननु, हे प्रिये ! सहकारः, फलिनी, च, इमौ, त्वं, मिथुनं, परिकल्पित-वती, अनयोः, विवाहसत्क्रियाम्, अविधाय, गच्छसि, इति, असाम्प्रतं, 'भूयते' ॥ ६१ ॥

तात्पर्यार्थः—हे प्रिये ! मिथुनत्वेनाभिमतयोराम्रप्रियङ्ग्वोर्विवाहमङ्गलमविधायैव त्वया

गम्यते इत्ययुक्तमस्ति। मातृविहीनानां न किञ्चित् सुखं विद्यते इति ॥ ६१ ॥

भाषाऽर्थः--हे प्रिये !, आम और प्रियंगुलता ( ककुनी ) इन दोनों को तूने जोड़ा माना था, इनका विवाह मङ्गल बिना किये तुम्हारा यह गमन युक्त नहीं है ॥ ६१ ॥

अथ हे प्रिये तव पादताडनेन विकसितस्याशोकस्य पुष्पेन दाहाञ्जल्यर्घं कथं नेष्यामीत्याह--

**कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति।**

**अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ ६२ ॥**

सञ्जीविनी--कुसुममिति। वृक्षादिपोषकं दोहदम्। त्वया कृतं दोहदं पादताडनरूपं यस्य सोऽयमशोको यत्कुसुममुदीरयिष्यति प्रसविष्यते तवालकानामाभरणमाभरणभूतं तत्कुसुमं कथं नु केन प्रकारेण निवापमाल्यतां दाहाञ्जलेरर्घ्यतां नेष्यामि, 'पितृदानं निवापः स्यात्' इत्यमरः ॥ ६२ ॥

अन्वयः--त्वया, कृतदोहदः, अयम्, अशोकः, यत्, कुसुमम्, उदीरयिष्यति, तव, अलकाभरणं, तत्, 'अहं' कथं नु, निवापमाल्यतां, नेष्यामि ॥ ६२ ॥

सुधा--त्वया = भवत्या, कृतदोहदः = कृतपादताडनरूपदोहदः, अयम् = एषः, अशोकः = वञ्जुलः, अशोकवृक्ष इत्यर्थः। यत्, कुसुमं = पुष्पम्, उदीरयिष्यति = प्रसविष्यते, तव = भवत्याः। अलकाभरणं = चूर्णकुन्तलमण्डनभूतं, तत् = पुष्पं, कथं नु = केन प्रकारेण, निवापमाल्यतां = दाहाञ्जल्यर्घतां, नेष्यामि = प्राप्स्यामि, अहमितिशेषः ॥ ६२ ॥

कोशः--'वञ्जुलोऽशोके' इति, 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्। मण्डनं च' इति चामरः।'नु स्यात्प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः' इति विश्वः। 'पितृदानं निवापः स्यात्' इत्यमरः। 'योग्ये शक्ते हिते क्षमम्' इति धरणिः ॥ ६२ ॥

समासादि--कृतं दोहदं यस्य सः कृतदोहदः ( ब० व्री० )। अलकानामाभरणमित्यलकाभरणम् ( त० पु० )। मालैव माल्यं तस्य भावो माल्यता, निवापस्य माल्यतेति निवापमाल्यता तां निवापमाल्यताम् ( त० पु० ) ॥ ६२ ॥

व्याकरणम्--उदीरयिष्यति = उत् + ईर (गतौ), णिच् + लृट्। नेष्यामि = णीञ् (प्रापणे-ञित्), लृट्। माल्यताम् = माला + चतुर्वर्णादित्वात् ष्यञ् माल्यमिति, तस्मात् तल् + टाप् ॥ ६२ ॥

वाच्यपरिवर्तनम्--त्वया, कृतदोहदेन, अनेन, अशोकेन, यत्, कुसुमम्, उदीरयिष्यते, तव, अलकाभरणं, तत्, 'मया' कथं नु, निवापमाल्यता, नेष्यते ॥ ६२ ॥

तात्पर्यार्थः--हे प्रिये ! त्वया कृतपादताडनरूपदोहदोऽयमशोकवृक्षो यत्पुष्पं प्रसविष्यते, तव मण्डनभूतं तत्पुष्पं केन प्रकारेण अहं दाहाञ्जलेरर्घ्यतां प्राप्स्यामि ॥ ६२ ॥

भाषाऽर्थः--( हे इन्दुमति !) तुझसे दोहद (पैर के प्रहार से प्रफुल्लित) किया हुआ यह अशोकवृक्ष जिस पुष्पको उत्पन्न करेगा, तेरे टेढ़े बालों के भूषण रूप उस ( पुष्प ) को किस प्रकार ( मैं ) दाहांजलि के अर्घ्य में प्राप्त करूंगा ॥ ( अशोकवृक्ष सौभाग्यवती स्त्री के पादप्रहार से फूलता है ) ॥ ६२ ॥

अथ हे सुगात्रि ! पादानुग्रहं स्मरताऽनेनाशोकेन त्वं शोच्यस इत्याह--

**स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम्।**

**अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ॥ ६३ ॥**

सञ्जीविनी--स्मरतेति। अन्यदुर्लभम्, किन्तु स्मर्तव्यमेवेत्यर्थः। सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं यस्य तं चरणेनानुग्रहं पादेन ताडनरूपं स्मरतेव चिन्तयतेव कुसुमान्येवाश्रूणि तद्वर्षिणाऽमुना पुरोवर्तिनाऽशोकेन हे सुगात्रि !, "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीप्। त्वं शोच्यसे ॥ ६३ ॥

अन्वयः—हे सुगात्रि ! अन्यदुर्लभं, सशब्दनूपुरं, चरणानुग्रहं, स्मरता, इव, कुसुमाश्रुवर्षिणा, अमुना, अशोकेन, त्वं, शोच्यसे ॥ ६३ ॥

सुधा—हे सुगात्रि ! = हे शोभनाङ्गि ! अन्यदुर्लभं = परदुष्प्रापं, सशब्दनूपुरं = ध्वनियुक्तमञ्जीरं, चरणानुग्रहं = पादप्रहाररूपानुग्रहम् , स्मरता = चिन्तयता, इव = यथा, कुसुमाश्रुवर्षिणा = पुष्परूपनेत्राम्बुपातिना, अमुना = अनेन, पुरोवर्त्तिनेति यावत् । अशोकेन = वञ्जुलेन, त्वं, शोच्यसे = चिन्त्यसे ॥ ६३ ॥

कोशः—'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति, 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इति चामरः । 'दुर्लभः कच्छुरे प्रिये । दुष्प्रापे' इति, 'अशोकौ कङ्केलिवञ्जुलौ । निःशोकपारदौ चापि' इति चानेकार्थसंग्रहः ॥ ६३ ॥

समासादि—शब्देन सह वर्तमान इति सशब्दः, सशब्दश्चासौ नूपुर इति सशब्दनूपुरस्तं सशब्दनूपुरम् ( क० धा० ) । अनुग्रहणमनुग्रहः, चरणस्यानुग्रहस्तं चरणानुग्रहम् (त० पु०) । अन्यैर्दुर्लभमित्यन्यदुर्लभम् ( त० पु० ) । कुसुमान्येवाश्रूणीति कुसुमाश्रूणि तानि वर्षतीति कुसुमाश्रुवर्षी तेन कुसुमाश्रुवर्षिणा ( क० धा० ) । शोभनं गात्रं यस्याः सा सुगात्री तत्सम्बुद्धौ हे सुगात्रि ! ( ब० व्री० ) ॥ ६३ ॥

व्याकरणम्—स्मरता = स्मृ ( चिन्तायाम् ), शतृ । अनुग्रहम् = अनु + ग्रह (उपादाने ), 'ग्रहवृदृनिश्चिगमश्च' इत्यनेनाप्प्रत्ययः । दुर्लभं = दुर् + डुलभष् ( प्राप्तौ–डु षकारश्चेत् ), 'ईषद्दुःसुषु' इति खल् , 'न सुदुर्भ्यां केवलाभ्याम्' इति नुम् निषेधः । वर्षिणा = वृषु (सेचने-उकारेत् ), इनिः । सुगात्रि ! = सु + गात्र + 'अङ्गगात्रकण्ठेभ्यः' इति ङीप् 'अम्बार्थ' इति ह्रस्वः । शोच्यसे = शुच ( शोके ), कर्मणि लट् + यक् ॥ ६३ ॥

वाच्यपरिवर्तनम्—हे सुगात्रि ! अन्यदुर्लभं, सशब्दनूपुरं, चरणानुग्रहं, स्मरन् , इव, कुसुमाश्रुवर्षी, असौ, अशोकः, त्वां, शोचति ॥ ६३ ॥

तात्पर्यार्थः—हे शोभनाङ्गि ! अन्यैः दुष्प्रापं ध्वनियुतं नूपुरं पादेन ताडनरूपानुग्रहं चिन्तयन्निव पुष्परूपाश्रुवर्षी असौ पुरोवर्ती अशोकस्त्वां शोचति ॥ ६३ ॥

भाषाऽर्थः—हे सुन्दरशरीरवाली ! दूसरोंसे दुर्लभ ध्वनियुक्त नूपुर ( पायजेब ) वाले तेरे चरण के ( पाद प्रहार रूप ) अनुग्रह का स्मरण करता हुआ पुष्प रूपी आंसुओं को गिराने वाला यह अशोक तेरा शोक कर रहा है ॥ ६३ ॥

अथ हे किन्नरकण्ठि ! मया सह बकुलपुष्पैरर्द्धरचितां विलासकाञ्चीमसमाप्य तव स्वपनमयुक्तमस्तीत्याह—

तव निश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि सुप्यते ॥ ६४ ॥

सञ्जीविनी—तवेति । तव निःश्वसितानुकारिभिर्बकुलैर्बकुलकुसुमैर्मया समं सार्धमर्धचितामर्धं यथा तथा रचितां विलासमेखलामसमाप्यापूरयित्वा किन्नरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्यास्तत्सम्बुद्धिर्हे किन्नरकण्ठि !, "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीप् । किमिदं सुप्यते निद्रा क्रियते, "वचिस्वपियजादीनां किति" इत्यनेन संप्रसारणम् । अनुचितमिदं स्वपनमित्यर्थः ॥ ६४ ॥

अन्वयः—हे किन्नरकण्ठि ! तव, निःश्वसितानुकारिभिः, बकुलैः, मया, समम् , अर्द्धचितां, विलासमेखलाम् , असमाप्य, 'त्वया' किमिदं, सुप्यते ॥ ६४ ॥

सुधा—हे किन्नरकण्ठि ! = हे किन्नरसदृशग्रीवे !, तव = भवत्याः, निःश्वसितानुकारिभिः = श्वासानुकरणकरैः, बकुलैः = केसरैः, बकुलपुष्पैरिति यावत् । मया = अजेन, समं = साकम् , अर्द्धचिताम् = अर्द्धरचितां, विलासमेखलां = विभ्रमरशनाम् , असमाप्य = अपूरयित्वा, किमिदं = कथं नु, सुप्यते = निद्रायते, त्वयेति शेषः ॥ ६४ ॥

कोशः--'अथ केसरे । बकुलः' इति, 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इति चामरः । 'कण्ठो ध्वनौ संनिधाने ग्रीवायां मदनद्रुमे' इत्यनेकार्थसंग्रहः ॥ ६४ ॥

समासादि--निःश्वसितमनुकुर्वन्तीति निःश्वसितानुकारिणस्तैर्निःश्वसितानुकारिभिः । अर्द्धं (यथा तथा ) चितेत्यर्द्धचिता तामर्द्धचिताम् (सुप्सुपा) । विलासस्य मेखलेति विलास-मेखला तां विलासमेखलाम् ( त० पु० ) । किन्नरस्य कण्ठ इव कण्ठो यस्याः सा किन्नरकण्ठी तत्सम्बुद्धौ हे किन्नरकण्ठि ! ( ब० व्री० ) ॥ ६४ ॥

व्याकरणम्—निःश्वसित = निर् + श्वस ( प्राणने ), क्तः + इट् । अनुकारिभिः = अनु + कृ + णिनिः । चितां = चिञ् ( चयने-ञित् ), क्तः + टाप् । असमाप्य = न + सम् + आप्लृ ( व्याप्तौ-लृदित् ), क्त्वा + ल्यबादेशः । किन्नरकण्ठि ! = किन्नर + कण्ठ + 'अङ्ग-गात्रकण्ठेभ्यः' इति ङीप्, 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । सुप्यते = ञिष्वप् (शये-ञित्), लट् + कर्मणि यक् + सम्प्रसारणम् ॥ ६४ ॥

वाच्यपरिवर्तनम्--हे किन्नरकण्ठि !, तव, निःश्वसितानुकारिभिः, बकुलैः, मया, समम्, अर्धचितां, विलासमेखलाम , असमाप्य, 'त्वम्' किमिदं, स्वपिषि, ॥ ६४ ॥

तात्पर्यार्थः--हे किन्नरसदृशकण्ठि ! तव श्वासानुकारिभिर्बकुलपुष्पैरर्धरचितां विलास-रशनामपूरयित्वा त्वया किमिदं सुप्यते ॥ ६४ ॥

भाषाऽर्थः--हे किन्नर के सदृश कंठवाली ! तेरे श्वास के अनुकरण करने वाले बकुल ( मवशली ) के फूलों से मेरे साथ आधी रचना ( शृंगार ) की गयी विलास की मेखला ( करधनी ) को पूरा किये बिना क्यों सोती है ॥ ६४ ॥

अथ हे प्रिये ! तव वियोगात् सर्वे दुःखिनो जाता इत्याह—

**समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।**
**अहमेकरसस्तथाऽपि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ६५ ॥**

सञ्जीविनी—समेति । सखीजनः समदुःखसुखः, त्वद्दुःखेन दुःखी त्वत्सुखेन सुखीत्यर्थः । अयमात्मजो बालः प्रतिपच्चन्द्रनिभः, दर्शनीयो वर्धिष्णुश्चेत्यर्थः । प्रतिपच्छब्देन द्वितीया लक्ष्य-ते, प्रतिपदि चन्द्रस्यादर्शनात् । अहमेकरसोऽभिन्नरागः, 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । तथाऽपि, जीवितसामग्रीसत्त्वेऽपीत्यर्थः । ते तव व्यवसायोऽस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन निष्ठुरः क्रूरः, 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च । प्राग-ल्भ्ये च प्रबोधे च' इति विश्वः । स्मर्तुं न शक्यः किमुताधिकर्तुमिति भावः ॥ ६५ ॥

अन्वयः—सखीजनः, समदुःखसुखः, अयम् , आत्मजः, प्रतिपच्चन्द्रनिभः, अहम् , एक-रसः, 'अस्मि' तथाऽपि, ते, व्यवसायः, प्रतिपत्तिनिष्ठुरः, 'अस्ति' ॥ ६५ ॥

सुधा—सखीजनः = आलिजनः, समदुःखसुखः = तुल्यदुःखसुखः, त्वद्दुःखेन दुःखी त्वत्सु-खेन सुखीत्यर्थः । अयम् = एषः, आत्मजः = सूनुः, बाल इति यावत् । प्रतिपच्चन्द्रनिभः = प्रतिपत्तिथीन्दुसदृशः, यथा प्रतिपच्चन्द्रो दर्शनीयो वर्धिष्णुश्च तद्वदित्यर्थः । अत्र प्रतिपच्छब्देन द्वितीया विवक्षिता, प्रतिपदि इन्दोरदर्शनात् । अहम् = अजः, एकरसः = अभिन्नरागः, समानप्रेमा इत्यर्थः । अस्मीति शेषः । तथाऽपि = जीवितसामग्रीविद्यमानेऽपि, ते = तव, व्यवसायः = व्यवहारः, अस्मत्परित्यागरूपो व्यापार इत्यर्थः । प्रतिपत्तिनिष्ठुरः = निश्चयकठिनः, अस्तीति शेषः ॥ ६५ ॥

कोशः—'आलिः सखी वयस्या च' इत्यमरः । 'निभस्तु कथितो व्याजे पुंल्लिङ्गः सदृशे त्रिषु' इति मेदिनी । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । 'प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे' इति हैमः । 'कक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्' इत्यमरः ॥ ६५ ॥

समासादि—दुःखञ्च सुखञ्चेति दुःखसुखौ ( द्व० ), समौ दुःखसुखौ यस्य स समदुःख-

सुखः (ब० व्रो०)। सखी एव जन इति सखीजनः (क० धा०)। प्रतिपदश्चन्द्र इति प्रतिपच्चन्द्रस्तस्य निभ इति प्रतिपच्चन्द्रनिभः (त० पु०)। आत्मनो जात इत्यात्मजः। एको रसो यस्य स एकरसः (ब० व्रो०)। प्रतिपत्त्या निष्ठुर इति प्रतिपत्तिनिष्ठुरः (त० पु०) ॥ ६९ ॥

व्याकरणम्—व्यवसायः = वि + अव + षो (अन्तकर्मणि),घञ् + आत्वम्। प्रति + पद् + 'स्त्रियां क्तिन्' इत्यनेन क्तिन् ॥ ६९ ॥

वाच्यपरिवर्तनम्—सखीजनेन, समदुःखसुखेन, आत्मजेन प्रतिपच्चन्द्रनिभेन, मया, एकरसेन, 'भूयते' तथाऽपि, ते, व्यवसायेन, प्रतिपत्तिनिष्ठुरेण 'भूयते' ॥ ६९ ॥

तात्पर्यार्थः—हे प्रिये! सखीजनस्त्वद्दुःखेन दुःखी त्वत्सुखेन सुखी, अयम्बालः (दशरथः) शुक्लपक्षप्रतिपत्तिथिचन्द्रस्य सदृशो दर्शनीयो वर्द्धिष्णुश्च,अहमभिन्नरागस्तथाऽपि तव आत्मपरित्यागरूपो व्यापारो निश्चयेन कठिनः अस्ति ॥ ६९ ॥

भावार्थः—(हे इन्दुमति!) सखीजन दुःखसुख के साथी हैं, यह पुत्र (दशरथ) प्रतिपत् (दूज) के चन्द्रमा के सदृश (देखने योग्य और बढनेवाला) है, मैं एक प्रेमी हूँ, तो भी तेरा व्यापार (हम लोगों को छोड़ देना) निश्चय कठिन है ॥ ६९ ॥

अथ हे प्रिये! त्वां विना मम धृत्यादयः सर्वे निष्फला इत्याह—

**धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।**
**गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ ६६ ॥**

सञ्जीविनी—धृतिरिति। अद्य मे धृतिर्धैर्यं प्रतीतिर्वाऽस्तं नाशमिता, रतिः क्रीडा च्युता गता गेयं गानं विरतम्, ऋतुर्वसन्तादिर्निरुत्सवः, आभरणानां प्रयोजनं गतमपगतम्, शेतेऽस्मिन्निति शयनीयं तल्पम्, "कृत्यल्युटो बहुलम्" इत्यधिकरणार्थेऽनीयर् प्रत्ययः। परिशून्यम्, त्वां विना सर्वमपि निष्फलमिति भावः ॥ ६६ ॥

अन्वयः—अद्य, मे, धृतिः, अस्तम्, इता, रतिः, च्युता, गेयं, विरतम्, ऋतुः, निरुत्सवः, आभरणप्रयोजनं, गतं, शयनीयं, परिशून्यम्, 'अभूत्' ॥ ६६ ॥

सुधा—अद्य = अस्मिन्नहनि,मे = मम,धृतिः = धैर्यं, अस्तं = नाशम्, इता = प्राप्ता, रतिः = क्रीड़ा, च्युता = गता, गेयं = गातव्यं, गानमित्यर्थः। विरतं = विरामतामुपगतम्, ऋतुः = वसन्तादिऋतुः, निरुत्सवः = निर्महः,उत्सवरहित इत्यर्थः। आभरणप्रयोजनम् = अलङ्कारफलं, गतं = विनष्टं,शयनीयं = तल्पं, शय्येति यावत्। परिशून्यं = मद्रहितम्, अभूदिति शेषः ॥६६॥

कोशः—'धृतिर्योगविशेषे स्याद् धारणाधैर्ययोः सुखे' इति, 'गेयौ गातव्यगायनौ' इति चानेकार्थसंग्रहः। 'मह उद्धव उत्सवः' इति, 'शय्यायां शयनीयवत्। शयनम्' इति चामरः ॥ ६६ ॥

समासादि—उत्सवेभ्यो निष्क्रान्त इति निरुत्सवः (त० पु०)। आभरणानां प्रयोजनमित्याभरणप्रयोजनम् (त० पु०)। परिशुने हितं परिशून्यम्। शेतेऽस्मिन्निति शयनीयम्। अस्मिन्नहनि अद्य ॥ ६६ ॥

व्याकरणम्—धृतिः = धृञ् (धारणे-ञित्), 'स्त्रियां क्तिन्' इति क्तिन्। च्युता = च्यु-(सहने), क्तः + टाप्। विरतं = वि + रमु (क्रीडायाम्—उकारेत्), क्तः + नलोपः। गेयं = गा (स्तुतौ), यत् + ईद्यति' इतीत्वं + गुणः। परिशून्यं = परि + श्वन् + 'शुनः सम्प्रसारणं वा च दीर्घः' इति गणसूत्रेण यत्, सम्प्रसारणम्, दीर्घश्च। शयनीयं = शीङ् (स्वप्ने—ङित्), 'कृत्यल्युटो बहुलम्' इत्यनीयर् ॥ ६६ ॥

वाच्यपरिवर्तनम्—अद्य, मे, धृत्या, अस्तम्, इतया, रत्या, च्युतया, गेयेन, विरतेन, ऋतुना, निरुत्सवेन, आभरणप्रयोजनेन, गतेन, शयनीयेन,परिशून्येन, 'अभावि' ॥ ६६ ॥

तात्पर्यार्थः--हे प्रिये ! अद्य मे धैर्यं विलुप्तं, क्रीडा गता, गानं विरतं, वसन्तादृर्तुः निरुत्सवो जातः, अलङ्काराणां प्रयोजनं गतं, शय्या शून्या जाता, किमधिकेन त्वां विना सर्वं निष्फलमभूत् ॥ ६६ ॥

भाषाऽर्थः—( हे इन्दुमति ! ) आज मेरा धैर्य नाशको प्राप्त हुआ, रतिक्रीडा मिट गयी, गाना विराम हो गया, ( वसन्त आदि ) ऋतु उत्सव से हीन हुई, अलंकारों का प्रयोजन चला गया, शय्या सूनी पड़ गई है ॥ ६६ ॥

अथ हे प्रिये ! त्वां हरता मृत्युना मम सर्वं वस्तु हृतमित्याह--

**गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।**
**करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ ६७ ॥**

सञ्जीविनी—गृहिणीति । त्वमेव गृहिणी दाराः, अनेन सर्वं कुटुम्बं त्वदाश्रयमिति भावः । सचिवा बुद्धिसहायो मन्त्री सर्वो हितोपदेशस्त्वदायत्त इत्यनेनोच्यते । मिथो रहसि सखी नर्मसचिवः, सर्वोपभोगस्त्वदाश्रय इत्यमुना प्रकटितम् । ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या, प्रियत्वं प्राज्ञत्वादित्यभिसन्धिः । सर्वानन्दोऽनेन त्वन्निबन्धन इत्युद्घाटितम् । अतस्त्वां समष्टिरूपां हरता अत एव करुणाविमुखेन कृपाशून्येन मृत्युना मे मत्सम्बन्धि किं वस्तु न हृतं वद, सर्वमपि हृतमित्यर्थः ॥ ६७ ॥

अन्वयः—'त्वम्' 'एव' गृहिणी, सचिवः, मिथः, सखी, ललिते, कलाविधौ, प्रियशिष्या, 'असि' 'अतः' त्वां, हरता, करुणाविमुखेन, मृत्युना, मे, किं, न हृतं, 'त्वं' वद ॥ ६७ ॥

सुधा—'त्वम्' 'एव' गृहिणी = भार्याः, सकलपरिवारस्त्वदाश्रय इति भावः । सचिवः = बुद्धिसहायो मन्त्री, सकलकल्याणकरोपदेशस्त्वदधीन इति भावः । मिथः सखी = रहआलिः, नर्मसचिव इति यावत् । सर्वोपभोगस्त्वदाश्रय इति भावः । ललिते = सुन्दरे, मनोहर इति यावत् । कलाविधौ = वाद्यादिचतुःषष्टिकलाप्रयोगे, प्रियशिष्या = हृद्यान्तेवासिनी, असीति शेषः । किं बहुना ? सर्वानन्दो त्वद्धेतुक इति भावः । 'अतः' त्वां = भवतीं, हरता = अपहरता, करुणाविमुखेन = कृपाशून्येन, मृत्युना = यमेन, मे = मम, मत्सम्बन्धीति यावत् । किं, न हृतम् = नापहृतम्, अपि तु सर्वं वस्तु हृतमित्यर्थः । वद = ब्रूहि, त्वमिति शेषः ॥ ६७ ॥

कोशः—'मन्त्री धीसचिवोऽमात्यः' इति, 'आलिः सखी वयस्या च' इति, 'मिथोऽन्योन्यं रहस्यपि' इति, 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इति, 'छात्रान्तेवासिनौ शिष्ये' इति चामरः । 'करुणा तु कृपायां स्यात्' इत्यनेकार्थसंग्रहः । 'मृत्युर्ना मरणे यमे' इति मेदिनी ॥ ६७ ॥

समासादि—प्रिया चासौ शिष्येति प्रियशिष्या ( क० धा० ) । कलाया विधिरिति कलाविधिस्तस्मिन् कलाविधौ ( त० पु० ) । करुणया विमुख इति करुणाविमुखस्तेन करुणाविमुखेन ( त० पु० ) ॥ ६७ ॥

व्याकरणम्—गृहिणी = गृह + इनिः + 'ऋन्नेभ्यो ङीप्' इति ङीप् । सखी-अत्र 'सख्यशिश्वीति भाषायाम्' इति ङीप् । हरता = हृ + शतृ ॥ ६७ ॥

वाच्यपरिवर्तनम्—'त्वया' 'एव' गृहिण्या, सचिवेन, मिथः, सख्या, ललिते, कलाविधौ, प्रियशिष्यया, 'भूयते' 'अतः' त्वां, हरन्, करुणाविमुखः, मृत्युः, मे, किं, न, हृतवान्, 'त्वया' उद्यताम् ॥ ६७ ॥

तात्पर्यार्थः—हे इन्दुमति ! त्वमेव दाराः, बुद्धिसहायो मन्त्री, मनोहरे वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या च असि, अतस्त्वां हरता कृपाशून्येन मृत्युना मत्सम्बन्धिकिं वस्तु न हृतमिति त्वं वद, अपि तु सर्वं वस्तु हृतम् ॥ ६७ ॥

भाषाऽर्थः—( हे इन्दुमति ! ) तू ही स्त्री, ( बुद्धि का सहायक), मन्त्री, एकांत की सखी, मनोहर ( गान आदि चौंसठ विद्या ) कलाविधि में प्यारी शिष्या हो, तुझे दयाशून्य मृत्यु ने

हर कर बता मेरी कौन ( वस्तु ) नहीं हर लिया । ( किन्तु सब हर लिया ) ॥ ६७ ॥

अथ हे मदिराक्षि ! अश्रुतप्तं परलोकप्राप्तं मे तिलोदकाञ्जलिं कथं पास्यसीत्याह—

**मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे ।**
**अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ ६८ ॥**

सञ्जीविनी—मदिराक्षीति । माद्यत्यनयेति मदिरा लोकप्रसिद्धा, तथाऽपि 'नार्यो मदिरलोचनाः' इत्यादिप्रयोगदर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्यास्तत्सम्बुद्धिर्हे मदिराक्षि ! मत्तलोचने ? मदाननेनार्पितं रसवत्स्वादुतरं मधु पीत्वा बाष्पदूषितमश्रुतप्तं परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं तिलोदकाञ्जलिं कथं नु अन्वनन्तरं पास्यसि, तदनन्तरमित्यर्थः । यथाऽऽह भट्टमल्लः—"अनुपानं हिमजलं यवगोधूमनिर्मिते । दधिन मद्ये विषे द्राक्षे पिष्टे पिष्टमयेऽपि च ॥" इति । तच्चैतेव युज्यते, इदं तूष्णं लोकान्तरोपयोगि चेत्यायुर्वेदविरोधात्कथमनुपास्यसीति भावः ॥ ६८ ॥

अन्वयः—हे मदिराक्षि !, मदाननार्पितं, रसवत्, मधु, पीत्वा, 'त्वं' परलोकोपनतं, मे, बाष्पदूषितं, जलाञ्जलिं, कथं नु, अनुपास्यसि ॥ ६८ ॥

सुधा—हे मदिराक्षि ! = हे मत्तलोचने !, मदाननार्पितं = मन्मुखदत्तं, रसवत् = स्वादुतरं, मधु = आसवं, पीत्वा = पानं कृत्वा, परलोकोपनतं = परलोकप्राप्तं, मे = मम, बाष्पदूषितम् = ऊष्माश्रुतप्तं, जलाञ्जलिं = तिलोदकाञ्जलिं, कथं नु = केन प्रकारेण, अनुपास्यसि = अनन्तरं पास्यसि, मद्यपानानन्तरं तिलोदकाञ्जलिपानमयोग्यमित्यर्थः ॥ ६८ ॥

कोशः—'मदिरा कश्यमद्येऽपि' इति, 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति, 'मध्वासवो माधवको मधु मार्द्वीकमद्वयोः' इति चामरः ॥ ६८ ॥

समासादि—अत्र माद्यत्याभ्यामिति मदिरे, "नार्यो मदिरलोचनाः" इत्यादिप्रयोगदर्शनात्, मदिरे अक्षिणी यस्याः सा मदिराक्षी तत्सम्बुद्धौ हे मदिराक्षि ! (ब० व्री०) । मम आननमिति मदाननं तेनार्पितमिति तन्मदाननार्पितम् (त०पु०) । रसो विद्यतेऽस्मिन् तत् रसवत् । बाष्पेण दूषितमिति बाष्पदूषितम् (त० पु०) परश्चासौ लोक इति परलोकः ( क० धा० ), तस्मिन्नुपनतस्तं परलोकोपनतम् ( त० पु० ) । जलस्याञ्जलिरिति जलाञ्जलिस्तं जलाञ्जलिम् ( त० पु० ) ॥ ६८ ॥

व्याकरणम्—पीत्वा = पा ( पाने ), क्त्वा + ईत्वम् । अनुपास्यसि = अनु + पा + लृट् । दूषितं = दुष ( वैकृत्ये ), क्तः + इट् + दीर्घः । उपनतं = उप + णम् + क्तः + मस्य लोपः ॥६८॥

वाच्यपरिवर्तनम्—हे मदिराक्षि !, मदाननार्पितं, रसवत, मधु, पीत्वा, 'त्वया' परलोकोपनतः, मे, बाष्पदूषितः, जलाञ्जलिः, कथं नु, अनुपास्यते ॥ ६८ ॥

तात्पर्यार्थः—हे मदिराक्षि ! मन्मुखेन दत्तं स्वादुतरं मद्यं पीत्वा परलोकप्राप्तमूष्माश्रुतप्तं मे तिलोदकाञ्जलिं केन प्रकारेणानन्तरं पास्यसि ॥ ६८ ॥

भाषाऽर्थः—हे उन्मत्त आंखों वाली ! मेरे मुखसे दिया हुआ रस वाला मद्य पीकर परलोक में प्राप्त होने वाली मेरे अश्रु ( गर्म आंसु ) से दूषित ( तपी हुई ) जलकी अंजली को पीछे ( तू ) कैसे पीयेगी ॥ ६८ ॥

अथ हे प्रिये ! ऐश्वर्ये सत्यपि त्वया विना ममायुपर्यन्तं सुखं गण्यतामित्याह—

**विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।**
**अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ ६९ ॥**

सञ्जीविनी—विभव इति । विभव ऐश्वर्ये सत्यपि त्वया विनाऽजस्यैतावदेवसुखं गण्यताम्, यावत्त्वया सह भुक्तं ततोऽन्यन्न किञ्चिन्नविष्यतीत्यर्थः । कुतः? विलोभनान्तरैर्विषयान्तरैरहृतस्यानाकृष्टस्य मम सर्वे विषया भोगादयस्त्वदाश्रयास्त्वदधीनाः, त्वां विना मे न किञ्चिद्रोचत इत्यर्थः ॥ ६९ ॥

अन्वयः—विभवे, सति, अपि, त्वया, विना, अजस्य, एतावत्, 'एव' सुखं, 'जनैः' गण्यतां, विलोभनान्तरैः, अहृतस्य, मम, सर्वं, विषयाः, त्वदाश्रयाः, 'सन्ति' ॥ ६९ ॥

सुधा—विभवे = ऐश्वर्ये, सति = विद्यमाने, अपि, त्वया = भवत्या, विना = ऋते, अजस्य = मम, एतावत् = एतत्परिमाणम्, 'एव' सुखम् = आनन्दः, गण्यतां = परिगण्यतां, जनैरिति शेषः । विलोभनान्तरैः = अन्यप्रलोभनैः, विषयान्तरैरित्यर्थः । अहृतस्य = अनाकृष्टस्य, मम = अजस्य, सर्वे = सकलाः, विषयाः = भोगादयः, त्वदाश्रयाः = त्वदधीनाः, सन्तीति शेषः । त्वया सह यावत्सुखमनुभूतं तावदेव पर्याप्तमधुना त्वया विना न किञ्चिद्रोचत इत्यर्थः ॥ ६९ ॥

कोशः—'स्यादानन्दथुरानन्दशर्मशातसुखानि च' इत्यमरः ॥ ६९ ॥

समासादि—एतत्परिमाणमस्येत्येतावत् । न हृतमित्यहृतं तस्याहृतस्य ( न०त०पु० ) । अन्यानि विलोभनानीति विलोभनान्तराणि तैर्विलोभनान्तरैः (मयूरव्यंसकादि समासः)॥६९॥

व्याकरणम्—एतावत् = एतत् + डावतुः, 'तद्धिताः' इति बहुवचनेनान्येषामनुक्तानामपि तद्धितानां ज्ञापितत्वात् । गण्यताम् = गण ( संख्याने ), लोट् + कर्मणि यक् ॥ ६९ ॥

वाच्यपरिवर्तनम्—विभवे, सति, अपि, त्वया, विना, अजस्य, एतावत्, 'एव' सुखं, 'जनाः' गणयन्तु, विलोभनान्तरैः, अहृतस्य, मम, सर्वैः, विषयैः, त्वदाश्रयैः, 'भूयते' ॥ ६९ ॥

तात्पर्यार्थः—हे इन्दुमति ! ऐश्वर्ये सत्यपि त्वया विनाऽजस्यैतावत्सुखं जनः परिगण्यतां, विषयान्तरैरनाकृष्टस्य मम सकलाः भोगादयस्त्वदधीनाः सन्ति ॥ ६९ ॥

भाषाऽर्थः—( हे इन्दुमति !) ऐश्वर्य के विद्यमान रहने पर भी तेरे विना अज का सुख ( जनलोग ) यहां तक गिनें, क्यों कि दूसरे विषयों को छोड़ मेरे सब भोग तेरे आधीन थे ॥ ६९ ॥

अथेत्थं विलपन्नजो वृक्षादीनपि व्यलापयदित्याह—

**विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।**
**अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान् ॥ ७० ॥**

सञ्जीविनी—विलपन्निति । कोसलाधिपोऽज इति करुणः शोकरसः स एवार्थस्तेन ग्रथितं सम्बद्धं यथा तथा प्रियां प्रतीन्दुमतीमुद्दिश्य विलपन्पृथिवीरुहान्वृक्षानपि स्रुताः शाखारसा मकरन्दा एव बाष्पास्तैर्दूषितानकरोत्, अचेतनानप्यरोदयदित्यर्थः ॥ ७० ॥

अन्वयः—कोसलाधिपः, प्रियां, प्रति, इति, करुणार्थग्रथितं, विलपन्, पृथिवीरुहान्, अपि, स्रुतशाखारसबाष्पदूषितान्, अकरोत् ॥ ७० ॥

सुधा—कोसलाधिपः = कोशलदेशपतिः, अज इत्यर्थः । प्रियां = दयितां, प्रति = आभिमुख्यम्, इन्दुमतीमुद्दिश्येति यावत् । इति = इत्थमुक्तप्रकारेण, करुणार्थग्रथितं = शोकरसार्थसम्बद्धं, ( यथा तथा ) विलपन् = विलापं कुर्वन्, पृथिवीरुहान् = महीप्रादुर्भवान्, वृक्षानित्यर्थः । अपि, स्रुतशाखारसबाष्पदूषितान् = निःसृतविटपनिर्यासाश्रुयुक्तान्, अकरोत् = कृतवान् ॥ ७० ॥

कोशः—'करुणो रसवृक्षयोः' इति, 'शाखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' इति हैमः ॥ ७० ॥

समासादि—विलपतीति विलपन् । अधिपातीत्यधिपः कोसलस्याधिप इति कोसलाधिपः ( त० पु० ) । करुण एवार्थ इति करुणार्थस्तेन ग्रथितमिति करुणार्थग्रथितम् (त०पु०) । पृथिव्यां रोहन्तीति पृथिवीरुहास्तान् पृथिवीरुहान् । शाखानां रसा इति शाखारसाः ( त० पु० ), स्रुताः शाखारसा एव बाष्पा इति स्रुतशाखारसबाष्पाः ( क० धा० ), तैर्दूषितास्तान् स्रुतशाखारसबाष्पदूषितान् ( त० पु० ) ॥ ७० ॥

व्याकरणम्—विलपन् = वि + लप-( व्यक्तायां वाचि ), शतृ । अकरोत् = अ + कृ +

लङ् । रुहान् = रुह ( बीजजन्मनि प्रादुर्भावे च ), 'इगुपधज्ञाप्रीकिरः कः' इति कः ॥ ७० ॥

वाच्यपरिवर्तनम्—कोसलाधिपेन, प्रियां, प्रति, इति, करुणार्थग्रथितं, विलपता, पृथिवीरुहाः, अपि, स्रुतशाखारसबाष्पदूषिताः, अक्रियन्त ॥ ७० ॥

तात्पर्यार्थः—कोसलपतिरजः इन्दुमतीमुद्दिश्य एवं शोकरसार्थसम्बद्धं विलपन् सन् वृक्षानपि निःसृतैः विटपनिर्यासरूपाश्रुभिर्युक्तान् कृतवान् ॥ ७० ॥

भाषार्थः—कोसल देश के स्वामी ( अज ) ने प्रिया ( इन्दुमती ) के प्रति इस प्रकार शोक रस से युक्त विलाप कर वृक्षों को भी शाखाओं से गिरते हुये रस रूपी आंसुओं से दूषित कराया, ( याने रुदन कराया ) ॥७० ॥

अथ बन्धुवर्ग इन्दुमतीमग्नये विसृष्टवानित्याह—

**अथ तस्य कथञ्चिदङ्कतः स्वजनस्तामपनीय सुन्दरीम् ।**
**विससर्ज तदन्त्यमण्डनामनलायागुरुचन्दनैधसे ॥ ७१ ॥**

सञ्जीविनी—अथेति । अथ स्वजनो बन्धुवर्गस्तस्याऽजस्याङ्कत उत्सङ्गात्कथञ्चिदपनीय तद्दिव्यकुसुममेवान्त्यं मण्डनमलङ्कारो यस्यास्तां तां सुन्दरीमगुरूणि चन्दनान्येधांसीन्धनानि यस्य तस्मै अनलायाग्नये विससर्ज विसृष्टवान् । "क्रियाग्रहणमपि कर्तव्यम्" इति क्रियामात्र प्रयोगे सम्प्रदानत्वाच्चतुर्थी ॥ ७१ ॥

अन्वयः—अथ, स्वजनः, तस्य, अङ्कतः, कथञ्चित्, अपनीय, तदन्त्यमण्डनां, तां, सुन्दरीम्, अगुरुचन्दनैधसे, अनलाय, विससर्ज ॥ ७१ ॥

सुधा—अथ = अनन्तरम्, अजविलपनानन्तरमिति यावत् । स्वजनः = सगोत्रः, बन्धुवर्ग इति यावत् । तस्य = अजस्य, अङ्कतः = उत्सङ्गतः, कथञ्चित् = केनापि प्रकारेण, अपनीय = नीत्वा, तदन्त्यमण्डनां = दिव्यपुष्पान्त्यालङ्कारां, तां = पूर्वोक्तां, सुन्दरीं = रमणीम्, इन्दुमतीमिति यावत् । अगुरुचन्दनैधसे = राजार्हमलयजेन्धने, अनलाय = अग्नये, विससर्ज = समर्पितवान् ॥ ७१ ॥

कोशः—'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इति, 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् । मण्डनञ्च' इति, 'वंशिकाऽगुरुराजार्हलोहक्रिमिजजोङ्गजम्' इति, 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इति, 'इन्धनं त्वेध, इध्ममेधः समित् स्त्रियाम्' इति चामरः ॥ ७१ ॥

समासादि—अङ्कादित्यङ्कतः । स्वश्चासौ जन इति स्वजनः ( क० धा० ) । अन्ते भवमन्त्यम्, अन्त्यं च तन्मण्डनमित्यन्त्यमण्डनम् ( क० धा० ), तद् (दिव्यकुसुमं) अन्त्यमण्डनं यस्याः सा तदन्त्यमण्डना तां तदन्त्यमण्डनाम् ( ब० व्री० ) । अगुरूणि च चन्दनानि चेत्यगुरुचन्दनानि ( द्व० ), अगुरुचन्दनान्येवैधांसि यस्य स अगुरुचन्दनैधास्तस्मै अगुरुचन्दनैधसे ( ब० व्री० ) ॥ ७१ ॥

व्याकरणम्—अङ्कतः = अङ्क + 'पञ्चम्यास्तसिल्' इति तसिल् । अपनीय = अप + णीञ् ( प्रापणे-ञित् ), क्त्वा + ल्यबादेशः । विससर्ज = वि + सृज ( विसर्गे ), लिट् ॥ ७१ ॥

वाच्यपरिवर्तनम्—अथ, स्वजनेन, तस्य, अङ्कतः, कथञ्चित्, अपनीय, तदन्त्यमण्डना, सा, सुन्दरी, अगुरुचन्दनैधसे, अनलाय, विससृजे ॥ ७१ ॥

तात्पर्यार्थः—अथ आत्मीयबन्धुवर्गः अजस्योत्सङ्गात् कथञ्चिन्नीत्वा दिव्यकुसुमान्त्यभूषणां तामिन्दुमतीमगुरुचन्दनेन्धनायाग्नये समर्पितवान् ॥ ७१ ॥

भाषार्थः—इसके बाद बन्धुवर्गों ने उस ( अज ) के गोद से किसी प्रकार लेकर उस (दिव्य माला) से आखिरी भूषण वाली उस सुन्दरी ( इन्दुमती ) को अगुरु और चंदन के लकड़ी वाले अग्नि के लिये समर्पण किया ॥ ७१ ॥

अथाजः स्वशरीरमिन्दुमत्या सह कथन्नाग्न्यधीनं कृतवानित्याशङ्कायामाह—

**प्रमदामनु संस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् ।**
**न चकार शरीरमग्निसात्सह देव्या न तु जीविताशया ॥ ७२ ॥**

सञ्जीविनी—प्रमदामिति । नृपतिरजः सन्नपि विद्वानपि शुचा शोकेन प्रमदामनु प्रमदया सह संस्थित मृत इति वाच्यदर्शनान्निन्दादर्शनाद्देव्येन्दुमत्या सह शरीरमग्निसादग्न्यधीनं न चकार, "तदधीनवचने" इति सातिप्रत्ययः । जीविताशया प्राणेच्छया तु नेति ॥ ७२ ॥

अन्वयः—नृपतिः, सन्, 'अपि', शुचा, प्रमदाम्, अनु, संस्थितः, इति, वाच्यदर्शनात्, देव्या, सह, शरीरम्, अग्निसात्, न, चकार, जीविताशया, तु, न, ॥ ७२ ॥

सुधा—नृपतिः = प्रजेशः, अज इति यावत् । सन् = विद्वान्, अपि, शुचा = शोकेन, प्रमदाम् अनु = प्रमदया सह, कान्तया सहेति यावत् । संस्थितः = प्रस्थितः, मृत इत्यर्थः । इति = एवं, वाच्यदर्शनात = निन्दाऽवलोकनात्, देव्या = महिष्या, इन्दुमत्येति यावत् । सह = सार्द्धं, शरीरं = देहम्, अग्निसात् = अग्न्यधीनं, न चकार = न कृतवान्, जीविताशया = प्राणतृष्णया, तु, न ॥ ७२ ॥

कोशः—'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इति, 'विद्वान् विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः' इति, 'देवी कृताभिषेका या' इति चामरः ॥ ७२ ॥

समासादि—वाच्यस्य दर्शनमिति वाच्यदर्शनं तस्मात् वाच्यदर्शनात् ( त० पु० ) । अग्नेरधीनं चकारेति, अग्निसात् चकार । जीवितस्याशेति जीविताशा तया जीविताशया ( त० पु० ) ॥ ७२ ॥

व्याकरणम्—प्रमदामनु—अत्र 'तृतीयार्थे' इति कर्मप्रवचनीयसंज्ञायाम्, 'कर्मप्रवचनी०' इति द्वितीया । संस्थितः = सम् + ष्ठा ( गतिनिवृत्तौ ), क्तः + इत्वम्, वाच्य = वच ( परिभाषणे ), ण्यत् + 'चजोः कु घिण्ण्यतोः' इति कुत्वे प्राप्ते 'वचोऽशब्दसंज्ञायाम्' इति तन्निषेधः ॥ ७२ ॥

वाच्यपरिवर्तनम्—नृपतिना, सता, 'अपि' शुचा, प्रमदाम्, अनु, संस्थितेन, 'बभूवे' इति, वाच्यदर्शनात, देव्या, सह, शरीरं, अग्निसात्, न, चक्रे, जीविताशया, तु, न ॥ ७२ ॥

तात्पर्यार्थः—प्रजेशोऽजः विद्वानपि शोकेन कान्तया सह मृत इत्येवं निन्दादर्शनादिन्दुमत्या सह शरीरमग्न्यधीनं न कृतवान्, प्राणतृष्णया तु न ॥ ७२ ॥

भाषाऽर्थः—राजा (अज) विद्वान होकर भी स्त्री के साथ मरगया, इस प्रकार की निन्दा के विचार से इन्दुमती के साथ ( अज ने ) अपने शरीर को अग्नि में नहीं जलाया, बल्कि जीने की आशा से नहीं ॥ ७२ ॥

अथाजः इन्दुमत्याः दशाहतः ऊर्ध्वक्रिया उपवने एव संपूरितवानित्याह—

**अथ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम् ।**
**विदुषा विधयो महर्धयः पुर एवोपवने समापिताः ॥ ७३ ॥**

सञ्जीविनी—अथेति । अथ विदुषा शास्त्रज्ञेन तेनाजेन गुणाः रूपादयो यस्यास्तां गुणशेषां भामिनीमिन्दुमतीमुपदिश्योद्दिश्य दशानामह्नां समाहारो दशाहः, "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासः, समाहारस्यैकत्वादेकवचनम्, "राजाहःसखिभ्यष्टच्" इति टच्, "रात्राह्नाहाः पुंसि" इति पुंवत्, ततस्तसिल् । तस्माद् दशाहतः पर ऊर्ध्वं कर्तव्या महर्धयो महासमृद्धयो विधयः क्रियाः पुरः पुर्या उपवन उद्यान एव समापिताः संपूर्णमनुष्ठिताः । 'दशाहतः' इत्यत्र 'विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः" इति मनुवचनविरोधो नाशङ्कनीयः, तस्य निर्गुणक्षत्रियविषयत्वात् । गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः—"क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः" इति । सूच्यतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन ॥ ७३ ॥

अन्वयः—अथ, विदुषा, तेन, गुणशेषां, भामिनीम्, उपदिश्य, दशाहतः, परे, महर्धयः,

विधयः, पुरः, उपवने, एव, समापिताः ॥ ७३ ॥

सुधा—अथ = अनन्तरम्, इन्दुमतीदाहकरणानन्तरमिति यावत् । विदुषा = दोषज्ञेन, शास्त्रज्ञेनेति यावत्। तेन = पूर्वोक्तेन, अजेनेति यावत् । गुणशेषां = रूपादिगुणावशिष्टां, भामिनीं = दीप्तिमतीम्, इन्दुमतीमिति यावत्। उपदिश्य = उद्दिश्य, दशाहतः = दशदिनात्, परे = ऊर्ध्वं, महर्धयः = महासमृद्धयः, विधयः = क्रियाः, पुरः = नगरस्य, उपवने = उद्याने, एव, समापिताः = सम्पूरिताः, सम्पूर्णमनुष्ठिता इत्यर्थः ॥ ७३ ॥

कोशः—'भामः क्रोधे रवौ दीप्तौ' इति, 'ऋद्धिः स्यादौषधीभेदे समृद्धावपि योषिति' इति च मेदिनी ॥ ७३ ॥

समासादि—दशानामह्नां समाहारो दशाहस्तस्मात् दशाहतः । गुणाः शेषा यस्याः सा गुणशेषा तां गुणशेषाम् ( ब० व्री० ) । भामो विद्यतेऽस्या इति भामिनी तां भामिनीम् । महत्यः ऋद्धयो येषु ते महर्द्धयः । उपगतं वनमित्युपवनं तस्मिन्नुपवने ( त० पु० ) ॥ ७३ ॥

व्याकरणम्—दशाहतः = अत्र 'तद्धितार्थोत्तर' इति समासः, 'राजाहःसखिभ्यष्टच्' इति टच्, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे दशाह इति,तस्मात्–तसिल् । उपवने–इत्यत्र 'प्रादयो गता' द्यर्थे प्रथमया' इति समासः । समापिताः = सम्+आप्लृ (व्याप्तौ-लृदित्), क्तः+इट् ॥ ७३॥

वाच्यपरिवर्तनम्—अथ, विद्वान्, सः, गुणशेषां, भामिनीम्, उपदिश्य, दशाहतः, परान्, महर्द्धीन्, विधीन्, पुरः, उपवने, एव, समापितवान् ॥ ७३ ॥

तात्पर्यार्थः—अथ शास्त्रज्ञेनाजेन रूपादिगुणशेषामिन्दुमतीमुद्दिश्य दशाहतः ऊर्ध्वा महासमृद्धयः क्रिया नगरस्योद्याने एव सम्पूर्णमनुष्ठिताः ॥ ७३ ॥

भाषाऽर्थः—इस के बाद शास्त्र के जानने वाले उस ( अज ) ने गुणमात्र बची हुई इन्दुमती के उद्देश से दशाह के आगे बड़े वैभव से कर्म को नगर के उपवन में ही पूरा किया ॥ ७३ ॥

अथाजः नगरीं विवेशेत्याह—

स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन्स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥

सञ्जीविनी—स इति । तयेन्दुमत्या विना क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कश्चन्द्रः स इव दृश्यत इति क्षणदापायशशाङ्कदर्शनः, प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः । दृश्यत इति कर्मार्थे ल्युट् । सोऽजः पौरवधूमुखाश्रुषु स्वशुचः,स्वशोकस्य परिवाहं जलोच्छ्वासमिवावलोकयन्,'जलोच्छ्वासाः परीवाहाः' इत्यमरः । स्वदुःखपूरातिशयमिव पश्यन्पुरीं विवेश । वधूग्रहणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखमूचकपरिवाहोक्तिर्निर्वहति ॥ ७४ ॥

अन्वयः—तया, विना, क्षणदापायशशाङ्कदर्शनः, सः, पौरवधूमुखाश्रुषु, स्वशुचः, परिवाहम्, इव, अवलोकयन्, पुरीं, विवेश ॥ ७४ ॥

सुधा—तया = पूर्वोक्तया, इन्दुमत्येति यावत् । विना = ऋते, क्षणदापायशशाङ्कदर्शनः = रात्र्यपगमचन्द्रावलोकनः, प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः । सः = पूर्वोक्तः, अज इति यावत् । पौरवधूमुखाश्रुषु = नागरिकस्त्रीवदननेत्राम्बुषु, स्वशुचः = निजशोकस्य, परिवाहं = जलोच्छ्वासम्, इव = यथा, अवलोकयन् = पश्यन्, पुरीं = नगरीं, विवेश = प्राविशत् ॥ ७४ ॥

कोशः—'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इति, 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इति चामरः । 'परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि' इति मेदिनी । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥ ७४ ॥

समासादि—क्षणदाया अपाय इति क्षणदापायस्तस्मिन् शशाङ्क इति क्षणदापायशशाङ्कः,

स इव दृश्यत इति क्षणदापायशशाङ्कदर्शनः ( त० पु० ) । परिवहनं परिवाहः । अवलोकयतीत्यवलोकयन् । स्वस्य शुक् इति स्वशुक् तस्य स्वशुचः ( त० पु० ) । पुरे भवाः पौराः, पौराश्च ता वध्व इति पौरवध्वः ( क० धा० ), तासां मुखानीति पौरवधूमुखानि तेषाम् अश्रूणीति पौरवधूमुखाश्रूणि तेषु पौरवधूमुखाश्रुषु ( त० पु० ) ॥ ७४ ॥

व्याकरणम्—विवेश = विश ( प्रवेशने ), लिट् । दर्शनः = कर्मार्थे ल्युट् । परिवाहम् = परि + वह ( प्रापणे ), 'हलश्च' इति घञ्, 'उपसर्गस्य घञि' इति वैकल्पिकदीर्घविधानादत्र तदभावः ॥ ७४ ॥

वाच्यपरिवर्तनम्—तया, विना, क्षणदापायशशाङ्कदर्शनेन, तेन, पौरवधूमुखाश्रुषु, स्वशुचः, परिवाहम्, इव, अवलोकयता, पुरी, विविशे ॥ ७४ ॥

तात्पर्यार्थः—प्रातःकालिकचन्द्र इव दृश्यमानः स अजः इन्दुमत्या विना नागरिकस्त्रीमुखाश्रुषु स्वदुःखस्य जलोच्छ्वासमिवावलोकयन्नगरीं विवेश ॥ ७४ ॥

भाषाऽर्थः—इन्दुमती के बिना रात्रि के बीत जाने पर ( सबेरे ) चन्द्रमा के समान ( प्रभा हीन ) दर्शन वाले उस ( अज ) ने नगर में रहने वाली स्त्रियों के मुखों के आँसुओं में अपने शोक का परिवाह ( नहर ) की नाईं देखते हुये नगर में प्रवेश किया ॥ ७४ ॥

अथ वसिष्ठो ध्यानात् अजं दुःखिनमवजानन् तं शिष्यद्वारा समबोधयदित्याह—

**अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमस्थितः ।**
**अभिषङ्गजडं विजज्ञिवानिति शिष्येण किलान्वबोधयत् ॥ ७५ ॥**

सञ्जीविनी—अथेति । अथ सवनाय यागाय दीक्षितो गुरुर्वसिष्ठ आश्रमे स्वकीयाश्रमे स्थितः सन् तमजमभिषङ्गजडं दुःखमोहितं प्रणिधानाच्चित्तैकाग्र्याद्विजज्ञिवाञ्ज्ञातवान्, "क्वसुश्च" इति क्वसुप्रत्ययः । इति वक्ष्यमाणप्रकारेण शिष्येणान्वबोधयत्किल, बुधेर्ण्यन्ताण्णिचि लङ् ॥ ७५ ॥

अन्वयः—अथ, सवनाय, दीक्षितः, गुरुः, आश्रमस्थितः, 'सन्' तम्, अभिषङ्गजडं, प्रणिधानात्, विजज्ञिवान्, इति, शिष्येण, अन्वबोधयत्, किल ॥ ७५ ॥

सुधा—अथ = अनन्तरं, नगरप्रवेशानन्तरमिति यावत् । सवनाय = यज्ञाय, सवनकर्तुमित्यर्थः । दीक्षितः = दीक्षायुक्तः, गुरुः = वसिष्ठः, आश्रमस्थितः = स्वनिवासस्थानोपविष्टः, सन्निति शेषः । तं = पूर्वोक्तम्, अजमिति यावत् । अभिषङ्गजडं = दुःखपराभवस्तब्धं, दुःखमोहितमिति यावत् । प्रणिधानात् = ध्यानबलात्, मन एकाग्र्यादिति यावत् । विजज्ञिवान् = जज्ञौ, इति = अतः, 'वक्ष्यमाणप्रकारेण' शिष्येण = छात्रेण, अन्वबोधयत् = समबोधयत्, किल ॥ ७५ ॥

कोशः—'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इति, 'छात्रान्तेवासिनौ शिष्ये' इति चामरः ॥ ७५ ॥

समासादि—दीक्षा सञ्जाताऽस्येति दीक्षितः । आश्रमे स्थित इत्याश्रमस्थितः ( स० पु० ) । अभिषञ्जनमभिषङ्गस्तेन जडस्तमभिषङ्गजडम् ( त० पु० ) ॥ ७५ ॥

व्याकरणम्—सवनाय = षुञ् (अभिषवे-ञित्), ल्युट् + 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । दीक्षितः = दीक्षा + इतच् । प्रणिधानात् = प्र + नि + डुधाञ् (धारणादौ-डुञित्), 'करणाधिकरण' इति ल्युट् । अभिषङ्ग = अभि + षञ्ज (सङ्गे), घञ् + 'उपसर्गात्सुनोति' इत्यादिना षकारः । विजज्ञिवान् = वि + ज्ञा (अवबोधने), लिट् + 'क्वसुश्च' इति क्वसुः । अन्वबोधयत् = अनु + अ + बुध + णिच् + लङ् ॥ ७५ ॥

वाच्यपरिवर्तनम्—अथ, सवनाय, दीक्षितेन, गुरुणा, आश्रमस्थितेन, 'सता' सः, अभिषङ्गजडः, प्रणिधानात्, विजज्ञुषा, इति, शिष्येण, अन्वबोधि, किल, ॥ ७५ ॥

तात्पर्यार्थः—अथ यज्ञाय दीक्षितो वसिष्ठः स्वकीयाश्रमे स्थितः सन् ध्यानबलात् तमजं

दुःखमाहितं ज्ञातवान्, अनन्तरमिति वक्ष्यमाणप्रकारेण शिष्यद्वारा समबोधयत् ॥ ७५ ॥

भाषाऽर्थः—इसके बाद यज्ञमें दीक्षित वसिष्ठ ने आश्रम में स्थित ध्यान के प्रताप से उस ( अज ) को दुःख से मोहित जानते हुये ( आगे कहे वचनों से ) इस प्रकार शिष्य के द्वारा समझाया ॥ ७५ ॥

अथ मुनिर्यज्ञस्यापूर्णतया दुःखिनं भवन्तं बोधयितुं स्वयं नोपस्थित इति शिष्येणोक्तमित्याह—

**असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।**
**न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६ ॥**

सञ्जीविनी—वसिष्ठशिष्य आह–असमाप्तेति । यतो हेतोर्मुनिरसमाप्तविधिरसमाप्तक्रतुस्तस्तव तापकारणं, दुःखहेतुं कलत्रनाशरूपं विद्वाञ्जानन्नपि,"विदेः शतुर्वसुः" इति वस्वादेशः, "न लोकाव्ययनिष्ठाखलर्थतृनाम्"इत्यनेन षष्ठीप्रतिषेधः । पथश्च्युतं स्वभावाद्भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुं, समाश्वासयितुमित्यर्थः । स्वयं नोपस्थितो नागतः ॥ ७६ ॥

अन्वयः—यतः, मुनिः, असमाप्तविधिः, 'सन्' तव, तापकारणं, विद्वान्, अपि, पथः, च्युतं, भवन्तं, प्रकृतौ, स्थापयितुं, स्वयं, न, उपस्थितः ॥ ७६ ॥

सुधा—यतः = यस्मात्कारणात्, मुनिः = वसिष्ठः, असमाप्तविधिः = असमाप्तक्रियः, अपूर्णयज्ञ इति यावत् । सन्निति शेषः । तव = भवतः, तापकारणं = सन्तापबीजं, स्त्रीमरणरूपदुःखहेतुमित्यर्थः । विद्वान् = जानन्, अपि, पथः = मार्गात्, स्वभावादिति यावत् । च्युतं = विचलितं, भ्रष्टमिति यावत् । भवन्तं = त्वां, प्रकृतौ = स्वभावे, स्थापयितुं = स्थिरीकर्तुं, समाश्वासयितुमित्यर्थः । स्वम् = आत्मशरीरेण, नोपस्थितः = नागतः, ॥ ७६ ॥

कोश—'मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी । 'तापः सन्तापे कृच्छ्रे च' इत्यनेकार्थसंग्रहः । 'हेतुर्ना कारणं बीजम्' इत्यमरः । 'प्रकृतिर्योनिशिल्पिनोः । पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः' इत्यनेकार्थसंग्रहः ॥ ७६ ॥

समासादि—न समाप्त इत्यसमाप्तः, असमाप्तो विधिर्यस्य स असमाप्तविधिः ( ब० व्री० ) । वेत्तीति विद्वान् । तापस्य कारणमिति तत्तापकारणम् ( त० पु० ) ॥ ७६ ॥

व्याकरणम्—असमाप्त = न + सम् + आप् + क्तः । यतः = यत् + 'पञ्चम्यास्तसिल्' इति तसिल् । विद्वान् = विद ( ज्ञाने ), शतृ + 'विदेः शतुर्वसुः' इति वस्वादेशः । स्थापयितुं = ष्ठा ( गतिनिवृत्तौ ), णिच् + पुक् + तुमुन् ॥ ७६ ॥

वाच्यपरिवर्तनम्—यतः, मुनिना, असमाप्तविधिना, 'सता' तव, तापकारणं, विदुषा, अपि, पथः, च्युतं, भवन्तं, प्रकृतौ, स्थापयितुं, स्वयं, न, उपस्थितम् ॥ ७६ ॥

तात्पर्यार्थः—यस्मात्कारणात् तपस्वी वसिष्ठोऽसम्पूर्णयज्ञः सन् तव स्त्रीनाशरूपं दुःखकारणं जानन्नपि स्वभावात् भ्रष्टं भवन्तं स्वभावे स्थापयितुं स्वयं न समागतः ॥ ७६ ॥

भाषाऽर्थः—क्यों कि मुनि ( वसिष्ठ ) यज्ञ समाप्त न होने से तुम्हारे दुःख का कारण जानते हुये भी स्वभाव से अलग हुये आप को स्वभाव में स्थिर करने के लिये नहीं आसके ॥ ७६ ॥

अथ हे सुवृत्त ! मुनेर्वाणीं श्रुत्वा मनसि धर्तुमर्हसीत्याह—

**मयि तस्य सुवृत्त वर्तते लघुसंदेशपदा सरस्वती ।**
**शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ॥ ७७ ॥**

सञ्जीविनी—मयीति । हे सुवृत्त ! सदाचार ! संदिश्यत इति संदेशः संदेष्टव्यार्थः तस्य पदानि वाचकानि लघूनि संक्षिप्तानि संदेशपदानि यस्यां सा लघुसंदेशपदा तस्य मुनेः सरस्वती वाङ् मयि वर्तते, हे विश्रुतसत्वसार ! प्रख्यातधैर्यातिशय ! तां सरस्वतीं शृणु, एनां वाचं हृद्युपधातुं धर्तुं चार्हसि ॥ ७७ ॥

अन्वयः—हे सुवृत्त !, लघुसंदेशपदा, तस्य, सरस्वती, मयि, वर्तते, हे विश्रुतसत्वसार !, तां, शृणु, एनां, च, 'त्वम्' हृदि, उपधातुम्, अर्हसि ॥ ७७ ॥

सुधा—हे सुवृत्त ! = हे सुचरित्र !, लघुसंदेशपदा = संक्षिप्तसंदिष्टव्यार्थशब्दा, अल्पवाचिकेति यावत्। तस्य = मुनेः, वसिष्ठस्येति यावत्। सरस्वती = वाणी, मयि = जने, शिष्ये इति यावत्। वर्तते = विद्यते, हे विश्रुतसत्वसार ! = हे प्रसिद्धस्वभावातिशय !, तां = सरस्वतीं, शृणु = कर्णविषयिणीं कुरु, एनां = वाणीम्, च, हृदि = मनसि, उपधातुं = ग्रहीतुं, धर्तुमिति यावत्। अर्हसि = योग्योऽसि, त्वमिति शेषः ॥ ७७ ॥

कोशः—'वृत्तं वृत्तौ दृढे मृते। चरित्रे वर्तुले छन्दस्यतीताधीतयोः' इति हैमः। 'त्रिषु ह्रस्वे लघुः' इति, 'सन्देशवाग्वाचिकं स्यात्' इति चामरः। 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः' इति विश्वः। 'ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती' इत्यमरः। 'सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति मेदिनी ॥ ७७ ॥

समासादि—शोभनं वृत्तं यस्य सः सुवृत्तस्तत्सम्बुद्धौ हे सुवृत्त ! ( ब० व्री० )। संदिश्यत इति संदेशः, सन्देशस्य पदानि इति संदेशपदानि ( त० पु० ), लघूनि सन्देशपदानि यस्यां सा लघुसन्देशपदा ( ब० व्री० )। सरोऽस्त्यस्या इति सरस्वती। सत्वस्य सार इति सत्वसारः ( त० पु० ), विश्रुतः सत्वसारो यस्य स विश्रुतसत्वसारस्तत्सम्बुद्धौ हे विश्रुतसत्वसार ! ( ब० व्री० ) ॥ ७७ ॥

व्याकरणम्—सुवृत्त ! = सु + वृतु ( वर्तने—उकारेत् ), क्तः। संदेश = सम् + दिश + 'भावे' इति घञ्। सरस्वती = सरस् + मतुप् + 'उगितश्च' इति ङीप्। शृणु = श्रु ( श्रवणे ), लोट् + 'श्रुवः शृ च' इति श्रादेशः श्नुः प्रत्ययश्च। उपधातुम् = उप + धा + तुमुन् ॥ ७७ ॥

वाच्यपरिवर्तनम्—हे सुवृत्त ! लघुसन्देशपदया, तस्य, सरस्वत्या, मयि, वृत्यते, हे विश्रुतसत्वसार ! सा, श्रूयताम्, एनां, च 'त्वया' हृदि, उपधातुम्, अर्ह्यते ॥ ७७ ॥

तात्पर्यार्थः—हे सदाचारशील ! अल्पवाचिका मुनेः सरस्वती मयि शिष्ये विद्यते, हे प्रसिद्धधैर्यातिशय ! तां वाणीं शृणु एनां वाणीं च त्वं हृदि धर्तुमर्हसि ॥ ७७ ॥

भाषाऽर्थः—हे सुंदर चरित्रवाले ! थोड़े अक्षर के संदेशवाली उस ( वसिष्ठ ) की वाणी मुझ में वर्तमान है, हे प्रसिद्ध धैर्यवाले ! उस ( वाणी ) को सुनो, और इस (वाणी) को तू मनमें धारण करने के लिये योग्य हो ॥ ७७ ॥

अथ स वसिष्ठर्षिस्त्रिकालज्ञ इति तदुक्तिषु न संशयितव्यमित्याशयेनाह—

**पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च।**
**स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥ ७८ ॥**

सञ्जीविनी—वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह-पुरुषस्येति। अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य पदेषु विक्रमेषु, त्रिभुवनेष्वपीत्यर्थः। समतीतं भूतं च भवद्वर्तमानं च भावि भविष्यच्चेति त्रितयं स मुनिर्निष्प्रतिघेनाप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि, अतस्तदुक्तिषु न संशयितव्यमित्यर्थः। लोकत्रये कालत्रयस्य वार्तां गुरुर्वसिष्ठो जानातीति भावः ॥ ७८ ॥

अन्वयः-हि, अजन्मनः, पुरुषस्य, पदेषु, समतीतं, च, भवत्, च, भावि, च, 'इति' त्रितयं, सः, निष्प्रतिघेन, ज्ञानमयेन, चक्षुषा, पश्यति, ॥ ७८ ॥

सुधा—हि = यतः, अजन्मनः = जन्मरहितस्य, अनादेरिति यावत्। पुरुषस्य = परमात्मनः, पुरातनपुरुषस्येति यावत्। भगवतस्त्रिविक्रमस्य विष्णोरित्यर्थः। पदेषु = स्थानेषु त्रिभुवनेष्विति यावत्। समतीतं = व्यतीतं, भूतमित्यर्थः। च, भवत् = वर्तमानं, च, भावि = भविष्यत्, च, 'इति' त्रितयं = त्रयं, त्रिकालमिति यावत्। सः = पूर्वोक्तः, वसिष्ठ इति यावत्। नि-

ष्प्रतिघेन = निष्प्रतीघातेन, प्रतिबन्धरहितेनेत्यर्थः। । ज्ञानमयेन = ज्ञानप्रचुरेण, चक्षुषा = अक्ष्णा, ज्ञानदृष्ट्येत्यर्थः । पश्यति = अवलोकयति ॥ ७८ ॥

कोशः—'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । 'प्रतिघौ रुट्प्रतीघातौ' इति हैमः ॥ ७८ ॥

समासादि—नास्ति जन्म यस्य स अजन्मा ,तस्याजन्मनः ( ब० व्रा० ) । प्रतिघेभ्यः निष्क्रान्त इति निष्प्रतिघस्तेन निष्प्रतिघेन ( त० पु० ) त्रयोऽवयवा अस्येति त्रितयम् । ज्ञानस्य प्रचुरं ज्ञानमयं तेन ज्ञानमयेन ॥ ७८ ॥

व्याकरणम्—निष्प्रतिघेन = निर् + प्रति + हन ( हिंसागत्योः ), 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति वार्तिकेन डः, 'न्यङ्क्वादीनां च' इति कुत्वम् । त्रितयं = त्रि + 'संख्याया अवयवे तयप्' इति तयप् । ज्ञानमयेन = ज्ञान + 'तत्प्रकृतिवचने मयट्' इति मयट् ॥ ७८ ॥

वाच्यपरिवर्तनम्—हि, अजन्मनः, पुरुषस्य, पदेषु, समतीते, च, भवत्, च, भावि, च, 'इति' त्रितयं, तेन, निष्प्रतिघेन, ज्ञानमयेन, चक्षुषा, दृश्यते, ॥ ७८ ॥

तात्पर्यार्थः—यतः पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य विष्णोः आक्रमणभूतेषु त्रिभुवनेषु भूतं वर्तमानं भविष्यच्चेति त्रितयं स वसिष्ठः प्रतिबन्धरहितया ज्ञानदृष्ट्याऽवलोकयति ॥७८॥

भाषाऽर्थः—पुराणपुरुष ( परमात्मा ) के तीनों लोक में भूत, भविष्य, और वर्तमान ( ये ) तीनों को वह ( ऋषि वसिष्ठ ) बिना रुकावट के ( निःसन्देह ) ज्ञान की दृष्टि से देखते हैं ॥ ७८ ॥

अथेन्द्रस्तृणबिन्दुनाम्नः ऋषेस्तपोविघाताय देवाङ्गनां प्रेरितवानित्याह—

**चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा ।**
**प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥ ७९ ॥**

सञ्जीविनी—चरत इति । पुरा किल दुश्चरं तीव्रं तपश्चरतस्तृणबिन्दोस्तृणबिन्दुनाम-कात्कस्माचिदृषेः परिशङ्कितो भीतः कर्तरि क्तः, "भीत्रार्थानां भयहेतुः" इत्यपादानात्पञ्चमी । हरिरिन्द्रः समाधिभेदिनीं तपोविघातिनीं हरिणीं नाम सुराङ्गनामस्मै तृणबिन्दवे प्रजिघाय प्रेरितवान् ॥ ७९ ॥

अन्वयः—पुरा, किल, दुश्चरं, तपः, चरतः, तृणबिन्दोः, परिशङ्कितः, हरिः, समाधिभेदिनीं, हरिणीं, सुराङ्गनाम्, अस्मै, प्रजिघाय ॥ ७९ ॥

सुधा—पुरा = पूर्वं, किल, किलेति प्रसिद्धौ । दुश्चरं = कठिनं, तपः = चरतः = अनुष्ठतः, तृणबिन्दोः = तृणबिन्दुनामकाहृषेः, परिशङ्कितः = भीतः, हरिः = शक्रः, इन्द्र इति यावत् । समाधिभेदिनीं = ध्यानभङ्गकारिणीं, तपोविनाशिनीमिति यावत् । हरिणीं = हरिणीनाम्नीं, सुराङ्गनां = देवाङ्गनाम्, अस्मै = एतस्मै, तृणबिन्दवे इति यावत् । प्रजिघाय = प्रेरयाञ्चकार ॥ ७९ ॥

कोशः—'पुरा पुराणे निकटे प्रबन्धातीतभाविषु' इति मेदिनी । 'समाधिर्ध्याननीवाक-नियमेषु समर्थने' इति विश्वः । हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान्' इति मेदिनी ॥ ७९ ॥

समासादि—समाधानं समाधिस्तं भिनत्तीति समाधिभेदिनी तां समाधिभेदिनीम् । सुराणामङ्गना इति सुराङ्गना तां सुराङ्गनाम् ( त० पु० ) ॥ ७९ ॥

व्याकरणम्—चरतः = चर (गतिभक्षणयोः), शतृ । दुश्चरं = दुर् + चर + 'चरेष्टः' इति टः । परिशङ्कितः = परि + शकि ( शङ्कायाम् ), क्तः + नुम् + इट् । प्रजिघाय = प्र + हि ( गतौ वृद्धौ च ) लिट्, 'हेरचङि' इति कुत्वम् । भेदिनीं = भिदिर् ( विदारणे—इरित् ), इनिः + ङीप् ॥ ७९ ॥

वाच्यपरिवर्तनम्—पुरा, किल, दुश्चरं, तपः, चरतः, तृणबिन्दोः, परिशङ्कितेन, हरिणा,

समाधिभेदिनी, हरिणी, सुराङ्गना, अस्मै, प्रजिघ्ये ॥ ७९ ॥

तात्पर्यार्थः—पुरा किल कठिनं तपश्चरतस्तृणबिन्दुनाम्नो महर्षेर्भीत इन्द्रस्तपोविघातिनीं हरिणानाम्नीं देवाङ्गनामस्मै राजर्षये प्रेषितवान् ॥ ७९ ॥

भाषाऽर्थः—पूर्व काल में कठिन तपस्या करते हुये तृणबिन्दु नामक ऋषिसे डरे हुये इन्द्र ने तपस्या को भंग करने वाली हरिणी नाम की अप्सरा को उस ( राजर्षि तृणबिन्दु ) के समीप भेजा ॥ ७९ ॥

अथ स राजर्षिस्तपोविघातिनीं ज्ञात्वा 'मानुषी भव' इति तां शशापेत्याह—

**स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।**
**अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ ८० ॥**

सञ्जीविनी—स इति । स मुनिः शमः शान्तिरेव वेला मर्यादा तस्याः प्रलयोर्मिणा प्रलयकालतरङ्गेण, शमविघातकेनेत्यर्थः । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः । तपसः प्रतिबन्धेन विघ्नेन यो मन्युः क्रोधस्तेन हेतुना प्रमुखेऽग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भवेत्यशपच्छशाप ॥ ८० ॥

अन्वयः—सः, शमवेलाप्रलयोर्म्मिणा, तपःप्रतिबन्धमन्युना, प्रमुखाविष्कृतचारुविभ्रमां, तां, भुवि, मानुषी, भव, इति, अशपत् ॥ ८० ॥

सुधा—सः = राजर्षिः, तृणबिन्दुरिति यावत् । शमवेलाप्रलयोर्म्मिणा = शान्तिमर्यादाकल्पान्तकालिकतरङ्गेण, तपःप्रतिबन्धमन्युना = तपोविघ्नकोपेन, प्रमुखाविष्कृतचारुविभ्रमां = पुरःप्रकटितमनोरमविलासां, तां = पूर्वोक्तां, हरिणीमिति यावत् । भुवि = पृथिव्यां, मर्त्यलोक इत्यर्थः । मानुषी = मानुषस्त्री, भव = भवतात्, इति = इत्थं, अशपत् = शपितवान् ॥ ८० ॥

कोशः—'मन्युर्दैन्ये क्रतौ क्रुधि' इति हैमः । 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्' इति, 'स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा' इति, 'शमथस्तु शमः शान्तिः' इति चामरः । 'प्रलयो मृत्युकल्पान्तमूर्च्छापायेषु पुंस्ययम्' इति मेदिनी ॥ ८० ॥

समासादिः—तपसः प्रतिबन्धः इति तपःप्रतिबन्धस्तेन मन्युरिति तपःप्रतिबन्धमन्युस्तेन तपःप्रतिबन्धमन्युना ( त० पु० ) । चारुश्चासौ विभ्रम इति चारुविभ्रमः (क० धा०), प्रमुखे आविष्कृतश्चारुविभ्रमो यया सा तां प्रमुखाविष्कृतचारुविभ्रमाम् ( ब० व्री० ) । प्रलयस्योर्मिरिति प्रलयोर्म्मिः ( त० पु० ), शम एव वेला इति शमवेला ( क० धा० ), शमवेलायाः प्रलयोर्म्मिस्तेन शमवेलाप्रलयोर्म्मिणा ( त० पु० ) ॥ ८० ॥

व्याकरणम्—आविष्कृतः = आविस् + डु कृञ् ( करणे—डुञित ), क्तः । अशपत् = अ + शप ( आक्रोशे ), लङ् । मानुषी = मानुष + 'पुंयोगादाख्यायाम्' इति ङीप् ॥ ८० ॥

वाच्यपरिवर्तनम्—तेन, शमवेलाप्रलयोर्म्मिणा, तपःप्रतिबन्धमन्युना, प्रमुखाविष्कृतचारुविभ्रमा, सा, भुवि, मानुष्या, भूयताम् , इति, अशप्यत ॥ ८० ॥

तात्पर्यार्थः—स राजर्षिस्तृणबिन्दुः शान्तिरूपमर्यादाया विघातकेन प्रलयकालिकतरङ्गेण तपोविघ्नोत्पन्नकोपहेतुना पुरःप्रकाशितमनोहरविलासां तां देवाङ्गनां 'भूलोके मनुष्यस्त्री भव' इति शशाप ॥ ८० ॥

भाषाऽर्थः—उस ( तृणबिन्दु मुनि ) ने शान्तिरूप मर्यादा को (नष्ट करने वाली) प्रलय काल की लहर से तपस्या भंग होने के कारण ( उत्पन्न हुये ) क्रोध से सामने विलास (हाव भाव) को प्रकाशित करती हुई उस (अप्सरा) को 'मृत्युलोक में मनुष्य की स्त्री हो' ऐसा शाप दिया ॥ ८० ॥

अथ राजर्षिः शरणागतामप्सरसं सुरपुष्पदर्शनपर्यन्तं मानुषीं कृतवानित्याह—

**भगवन्परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।**

इति चापनतां क्षितिस्पृशं कृतवानासुरपुष्पदर्शनात् ॥ ८१ ॥

सञ्जीविनी—भगवन्निति। हे भगवन्! महर्षे! अयं जनः परोऽस्यास्तीति स्वामित्वेन परवान्पराधीनः, इन्द्राधीन इत्यर्थः। अयमित्यात्मनिर्देशः,अहं पराधीनेत्यर्थः। मे मम प्रतिकूलाचरितमपराधं क्षमस्वेत्यनेन प्रकारेणोपनतां शरणागतां च हरिणीमासुरपुष्पदर्शनात्सुरपुष्पदर्शनपर्यन्तं क्षितिस्पृशतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवानकरोत्, दिव्य पुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ॥ ८१ ॥

अन्वयः—हे भगवन्, अयं, जनः, परवान् 'अस्ति', मे, प्रतिकूलाचरितं, क्षमस्व, इति, उपनतां, च, 'ऋषिः' आसुरपुष्पदर्शनात्, क्षितिस्पृशं, कृतवान् ॥ ८१ ॥

सुधा—हे भगवन्! = महर्षे!, अयम् = एषः, पुरोवर्त्तीति यावत्। जनः = अप्सराजनः, परवान् = परतन्त्रः, पराधीन इति यावत्। अस्तीति शेषः। अहमिन्द्राधीनाऽस्मीत्यर्थः। मे = मम, प्रतिकूलाचरितं = विपरीतकृतम्, अपराधमित्यर्थः। क्षमस्व = क्षमां कुरु, इति = एवम्, अनेन प्रकारेणेत्यर्थः। उपनतां = शरणागतां हरिणीं, च, 'ऋषिस्तृणबिन्दुः' आसुरपुष्पदर्शनात् = सुरपुष्पदर्शनपर्यन्तं, दिव्यपुष्पदर्शनावधि इति यावत्। क्षितिस्पृशं = महीस्पृशं, मानुषीमित्यर्थः। कृतवान् = चकार ॥ ८१ ॥

कोशः—'भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ' इति विश्वः। 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः ॥ ८१ ॥

समासादि—भगः (तपोरूपमैश्वर्यं वैराग्यं वा) अस्यास्तीति भगवान् तत्सम्बुद्धौ हे भगवन्!। परः स्वाम्यस्तीति परवान्। प्रतिकूलं (यथा तथा) आचरितमिति तत् प्रतिकूलाचरितम् (क० धा०)। क्षितिं स्पृशतीति क्षितिस्पृक् तां क्षितिस्पृशम्। सुराणां पुष्पमिति सुरपुष्पं तस्य दर्शनमिति सुरपुष्पदर्शनम् (त० पु०), सुरपुष्पदर्शनमभिव्याप्येत्यासुरपुष्पदर्शनं तस्मात् आसुरपुष्पदर्शनात् (अ० भा०) ॥ ८१ ॥

व्याकरणम्—परवान् = पर + मतुप् + वत्वम्। आचरितम् = आ + चर + क्तः + इट्। क्षमस्व = क्षमूष् (सहने—ऊदित्), लोट्। क्षितिस्पृशं = क्षिति + स्पृश (संस्पर्शने), क्विप् ॥ ८१ ॥

वाच्यपरिवर्तनम्—हे भगवन्, अनेन, जनेन, परवता, 'भूयते' मे, प्रतिकूलाचरितं, क्षम्यताम्, इति, उपनता, च, 'ऋषिणा' आसुरपुष्पदर्शनात्, क्षितिस्पृक्, कृता ॥ ८१ ॥

तात्पर्यार्थः—हे भगवन्! इन्द्रप्रेषिताऽहं भवतः प्रतिकूलमाचरितवती, अतो ममापराधं क्षन्तुमर्हसीत्युक्तवतीं हरिणीनाम्नीं देवाङ्गनां महर्षिस्तृणबिन्दुर्दिव्यपुष्पदर्शनपर्यन्तं शापस्य सङ्कोचनं अनुगृहीतवान् ॥ ८१ ॥

भाषाऽर्थः—हे ऋषि! यह जन (मैं) दूसरे के आधीन है (हूं), मेरे अपराध को क्षमा करो, इस प्रकार से शरण में आई हुई (हरिणी) को (तृण बिन्दु ऋषि ने) दिव्य पुष्प देखने तक मृत्युलोक में रहने वाली किया। (याने देवताओं के फूल जब देखेगी तब तू अपने लोक को पायेगी ऐसा उसने कहा) ॥ ८१ ॥

अथ सा तव महिषी शापनिवृत्तिहेतुकं दिवश्च्युतं दिव्यपुष्पमप्राप्य मृतेत्याह—

**क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा।**

**उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥**

सञ्जीविनी—क्रथेति। क्रथकैशिकानां राज्ञां वंशे सम्भवो यस्याः सा हरिणी तव महिष्यभिषिक्ता स्त्री, 'कृताभिषेका महिषी' इत्यमरः। भूत्वा चिराय दिवः स्वर्गाच्च्युतं पतितं शापनिवृत्तिकारणं सुरपुष्परूपमुपलब्धवती विवशा, अभूदिति शेषः। मृतेत्यर्थः ॥ ८२ ॥

अन्वयः—क्रथकैशिकवंशभवा, सा, तव, महिषी, भूत्वा, चिराय, दिवः, च्युतं, शापनिवृत्तिकारणम्, उपलब्धवती, 'सती' विवशा, 'अभूत्' ॥ ८२ ॥

सुधा--क्रथकैशिकवंशसम्भवा = विदर्भकुललब्धजन्मा, सा = पूर्वोक्ता, हरिणीति यावत् । तव = भवतः, महिषी = देवी, अभिषिक्ताभार्येति यावत् । भूत्वा = सम्भूय, चिराय = दीर्घकालेन, दिवः = स्वर्गात् , च्युतं = पतितं, शापनिवृत्तिकारणं = शापविनाशहेतुभूतं दिव्यकुसुमम् , उपलब्धवती = प्राप्तवती, सतीति शेषः । विवशा = अरिष्टदुष्टधीः, आसन्नमरणेति यावत् । 'अभूत्' मृतेत्यर्थः ॥ ८२ ॥

कोशः--'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः सन्तानः' इति, 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इति, 'स्याच्च विवशोऽरिष्टदुष्टधीः' इति चामरः ॥ ८२ ॥

समासादि--क्रथकैशिकानां वंश इति क्रथकैशिकवंशस्तस्मिन् सम्भवतीति क्रथकैशिकवंशसम्भवा ( त० पु० ) । शापस्य निवृत्तिरिति शापनिवृत्तिः, तस्याः कारणमिति तच्छापनिवृत्तिकारणम् ( त० पु० ) ॥ ८२ ॥

व्याकरणम्--सम्भवा = सम् + भू + 'ऋदोरप्' इत्यप् + टाप् । उपलब्धवती = उप + डुलभष् (प्राप्तौ-डुषित्), क्तवतुः + ङीप् । विवशा = वि + वश (कान्तौ), अच् + टाप् ॥८३॥

वाच्यपरिवर्तनम्--क्रथकैशिकवंशसम्भवया, तया, तव, महिष्या, भूत्वा, चिराय, दिवः, च्युतं, शापनिवृत्तिकारणम् , उपलब्धवत्या, 'सत्या' विवशया, 'अभावि' ॥ ८२ ॥

तात्पर्यार्थः--क्रथकैशिकनाम्नां नृपाणां वंशे लब्धजन्मा सा हरिणी भवत अभिषिक्ताऽस्त्री भूत्वा बहुकालेन स्वर्गात् पतितं शापनिवृत्तिकारणभूतं दिव्यपुष्पं प्राप्तवती सती मृता ॥ ८२ ॥

भाषाऽर्थः--विदर्भ के वंश में जन्मवाली वह ( हरिणी ) तुम्हारी रानी होकर बहुत समय के बाद स्वर्ग से गिरे हुये शाप की निवृत्ति के कारणभूत दिव्यपुष्पों को पाकर विवश होगयी है । ( याने मरगयी है ) ॥ ८२ ॥

अथ जन्मवतां मरणं सिद्धमेवात इन्दुमत्या मरणं न चिन्त्यमित्याह--

**तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।**

**वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥**

सञ्जीविनी—तदलमिति । तत्तस्मात्तस्या अपायचिन्तया अलं, तस्या मरणं न चिन्त्यमित्यर्थः । निषेधक्रियां प्रति करणत्वाच्चिन्तयेति तृतीया । कुतो न चिन्त्यमत आह--उत्पत्तिमतां जन्मवतां, विपद्विपत्तिरुपस्थिता सिद्धा । "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्ममृतस्य च" इत्यर्थः । तथाऽपि कलत्ररहितस्य किं जीवितेन ? तत्राह-त्वयेयं वसुधा भूमिरवेक्ष्यतां पाल्यताम् । हि यस्मान्नृपा वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः । अतो न शोचितव्यमित्यर्थः ॥ ८३ ॥

अन्वयः—तत् , तदपायचिन्तया, अलम् , उत्पत्तिमतां, विपत् , उपस्थिता, 'अस्ति' त्वया, इयं, वसुधा, अवेक्ष्यतां, हि, नृपाः, वसुमत्या, कलत्रिणः 'भवन्ति' ॥ ८३ ॥

सुधा—तत् = पूर्वोक्तकारणात् , तदपायचिन्तया = इन्दुमतीविनाशशोकेन, अलम् = इन्दुमत्या मरणं न चिन्त्यम् , उत्पत्तिमतां = जन्मवतां, विपत् = विपत्तिः, उपस्थिता = सिद्धा, अस्तीति शेषः । उक्तञ्च गीतायां-"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इति, त्वया = भवता, इयम् = एषा, वसुधा = वसुन्धरा, अवेक्ष्यताम् = अवलोक्यतां, पाल्यतामित्यर्थः । हि = यतः, नृपाः = राजानः, वसुमत्या = पृथिव्या, कलत्रिणः = कलत्रवन्तः, भार्यावन्त इति यावत् । भवन्तीति शेषः ॥ ८३ ॥

कोशः—'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इति, 'विपत्त्यां विपदापदौ' इति, 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इति चामरः । 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः' इति रभसः ॥ ८३ ॥

समासादि—चिन्तनं चिन्ता, तस्या अपाय इति तदपायस्तस्य चिन्तेति तदपायचिन्ता

तया तदपायचिन्तया ( त० पु० ) । वसु विद्यतेऽस्यामिति वसुमती तया वसुमत्या । कलत्र- मेषां सन्तीति ते कलत्रिणः ॥ ८३ ॥

व्याकरणम्—चिन्तया = चिति ( स्मृत्याम्–इदित् ), 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ् + टाप् । उत्पत्तिमताम् = उत् + पद + क्तिन् + मतुप् । अवेक्ष्यताम् = अव + ईक्ष ( दर्शने ), लाट् + कर्मणि यक् । कलत्रिणः = कलत्र + इनिः ॥ ८३ ॥

वाच्यपरिवर्तनम्—तत्, तदपायचिन्तया, अलम्, उत्पत्तिमतां, विपदा, उपस्थितया, 'भूयते', त्वम्, इमाम्, वसुधाम्, अवेक्षस्व, हि, नृपः, वसुमत्या, कलत्रिभिः, 'भूयते' ॥८३॥

तात्पर्यार्थः—पूर्वोक्तकारणात् तस्या मरणं न चिन्त्यम्, जन्मवतां विपत्तिः सिद्धैवास्ति, भवता पृथिवी पाल्यताम्, यस्मात् राजानः पृथिव्यैव कलत्रवन्तो भवन्ति, अतो न शोचितव्यम् ॥ ८३ ॥

भाषाऽर्थः—इस कारण उस ( इन्दुमती ) के मरण की चिन्ता मत करो, जन्म लेने वालों को विपत्ति उपस्थित रहती है, तुम इस पृथ्वी का पालन करो, क्यों कि राजा पृथ्वी से ( ही ) स्त्री वाले होते हैं ॥ ८३ ॥

अथ विदुषा सर्वास्ववस्थासु धैर्येण भवितव्यमित्याशयेनाह—

**उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया ।**
**मनसस्तदुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम् ॥ ८४ ॥**

सञ्जीविनी- उदय इति । उदयेऽभ्युदये सति मदेन यद्वाच्यं निन्दादुःखं तदुज्झता परिहरता, सत्यपि मदहेतावमाद्यता त्वया यदात्मवदध्यात्मप्रचुरं श्रुतं शास्त्रं तज्जनितं ज्ञानमिति यावत् । आविष्कृतं प्रकाशितं तच्छ्रुतं मनसो ज्वरे संतापे उपस्थिते प्राप्तेऽक्लीबतया धैर्येण लिङ्गेन पुनः प्रकाश्यताम्, विदुषा सर्वास्ववस्थास्वपि धैर्येण भवितव्यमित्यर्थः ॥ ८४ ॥

अन्वयः—उदये, 'सति' मदवाच्यम्, उज्झता, त्वया, यत्, आत्मवत्, श्रुतम्, आविष्कृतं, तत्, मनसः, ज्वरे, उपस्थिते, 'सति' अक्लीबतया, पुनः, प्रकाश्यताम् ॥ ८४ ॥

सुधा—उदये = अभ्युदये, सतीति शेषः। मदवाच्यं = अहङ्कारेण निन्दादुःखम्, उज्झता = त्यजता, परिहरतेति यावत् । त्वया = भवता, यत् = ईदृशम्, आत्मवत् = अध्यात्मप्रचुरं, श्रुतं = शास्त्रम्, आविष्कृतं = प्रकटितं, प्रकाशितमिति यावत् । तत् = श्रुतं, शास्त्रमिति यावत् । मनसः = चित्तस्य, ज्वरे = सन्तापे, उपस्थिते = प्राप्ते, सतीति शेषः । अक्लीबतया = अनपुंसकत्वेन, धैर्येणेत्यर्थः । पुनः = भूयः, प्रकाश्यतां = प्रकटयताम् ॥ ८४ ॥

कोशः—'मदो रेतस्यहङ्कारे मद्ये दर्पमदानयोः' इत्यनेकार्थसंग्रहः । 'श्रुतं शास्त्रावधृतयोः' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति चामरः ॥ ८४ ॥

समासादि—मदेन वाच्यमिति तत् मदवाच्यम् ( त० पु० ) । आत्मा विद्यतेऽस्येति तदात्मवत् । न क्लीबमित्यक्लीबं तस्य भाव अक्लीबता तयाऽक्लीबतया ॥ ८४ ॥

व्याकरणम्—वाच्यं = वच ( परिभाषणे ), 'ऋहलोर्ण्यत्' इति ण्यत्, 'वचोऽशब्दसंज्ञायाम्' इति कुत्वनिषेधः, उज्झता = उज्झ ( उत्सर्गे ), शतृ । आत्मवत् = आत्मन् + प्रचुरार्थे मतुप् + वत्वम् । प्रकाश्यतां = प्र + काश्ट ( दीप्तौ—ऋदित ), लोट् + कर्मणि यक् ॥ ८४ ॥

वाच्यपरिवर्तनम्—उदये, 'सति' मदवाच्यम्, उज्झन्, त्वम्, आत्मवत्, श्रुतम्, आविष्कृतवान्, तत्, मनसः, ज्वरे, उपस्थिते, 'सति' अक्लीबतया, पुनः, प्रकाशय ॥ ८४ ॥

तात्पर्यार्थः—अभ्युदये सति अहङ्कारेण निन्दादुःखं परिहरता अहङ्कारहेतौ सत्यपि अमाद्यता त्वया यादृशमध्यात्मप्रचुरं ज्ञानं प्रकाशितं, तच्छास्त्रं चित्तस्य सन्तापे प्राप्ते सति धैर्येण पुनः प्रकाश्यताम् ॥ ८४ ॥

भाषाऽर्थः—अभ्युदय ( ऐश्वर्य ) में मद ( अहंकार ) के अपवाद मिटाते हुये तूने

जैसा अध्यात्मज्ञान प्रकाश किया था, मन के संताप प्राप्त होने पर धैर्य पने से फिर प्रकाश करो ॥ ८४ ॥

अथ रुदन् म्रियमाणोऽपि भवान् पुनस्तां न लब्धुं शक्नोतीत्याह—

**रुदता कुत एव सा पुनर्भवता नानुमृताऽपि लभ्यते ।**
**परलोकजुषां स्वकर्मभिर्गतयः भिन्नपथा हि देहिनाम् ॥ ८५ ॥**

सञ्जीविनी—इतोऽपि न रोदितव्यमित्याह—रुदतेति । रुदता भवता सा कुत एव लभ्यते, न एव अनुम्रियत इत्यनुमृत् क्विप्, तेनानुमृताऽनुमृतवताऽपि भवता पुनर्न लभ्यते । कथं न लभ्यत इत्याह—परलोकजुषां लोकान्तरभाजां देहिनां गम्यन्त इति गतयो गम्यस्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गा हि । परत्रापि स्वस्वधर्मानुरूपफलभोगाय भिन्नदेहगमनान्मृतेनापि लभ्यत इत्यर्थः ॥ ८५ ॥

अन्वयः—रुदता, भवता, सा, कुतः, एव, लभ्यते, अनुमृता, अपि, पुनः, न, 'लभ्यते' हि, परलोकजुषां, देहिनां, गतयः, स्वकर्मभिः, भिन्नपथाः, 'भवन्ति' ॥ ८५ ॥

सुधा—रुदता = विलपता, भवता = त्वया, सा = पूर्वोक्ता, इन्दुमतीति यावत् । कुतः = कस्मात्, एव, लभ्यते ? = प्राप्यते ?, न प्राप्यते एवेत्यर्थः । अनुमृता = पश्चान्म्रियमाणेन, अपि, पुनः = भूयः, न, लभ्यते इति शेषः । हि = यतः, परलोकजुषां = लोकान्तरगामिनां, देहिनां = शरीरिणां, गतयः = गम्यस्थानानि, स्वकर्मभिः—आत्मसदसत्कर्मभिः, पूर्वाचरितपुण्यपापैरित्यर्थः । भिन्नपथाः = पृथक्कृतमार्गाः, भवन्तीति शेषः ॥ ८५ ॥

कोशः—'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इति, 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीबपुंसोः' इति चामरः ॥ ८५ ॥

समासादि—अनु (पश्चात्) म्रियते इत्यनुमृत् तेनानुमृता । परश्चासौ लोक इति परलोकस्तं जुषन्ते इति परलोकजुषस्तेषां परलोकजुषाम् (क०धा०)। स्वस्य कर्माणीति स्वकर्माणि तैः स्वकर्मभिः (त०पु०) । गम्यन्त इति ता गतयः । भिन्नाः पन्थानो यासां ता भिन्नपथाः ( ब० व्री० ) ॥ ८५ ॥

व्याकरणम्—रुदता = रुदिर् ( अश्रुविमोचने—इरित् ), शतृ । अनुमृता = अनु + मृङ् ( प्राणत्यागे-ङित ), क्विप् + 'ह्रस्वस्य पिति कृति तुक्' इति तुक् । लभ्यते = लभ् + लट् + कर्मणि यक् । परलोकजुषां = परलोक + जुषी ( प्रीतिसेवनयोः ), क्विप् । गतयः = गम् + कर्मणि क्तिन् ॥ ८५ ॥

वाच्यपरिवर्तनम्—रुदन्, भवान्, तां कुतः, एव, लभते, अनुमृत्, अपि, पुनः, न, 'लभते' हि, परलोकजुषां, देहिनां, स्वकर्मभिः, गतिभिः, भिन्नपथाभिः, 'भूयते' ॥ ८५ ॥

तात्पर्यार्थः—भवान् रुदन् सन् तामिन्दुमतीं न लब्धुं शक्नोति, अनुम्रियमाणोऽपि पुनर्न तां लभते, यतः लोकान्तरभाजां शरीरधारिणां गम्यस्थानानि पूर्वाचरितपुण्यपापैः पृथक्कृतमार्गाणि भवन्ति, लोकान्तरेऽपि स्वस्वकर्मानुसारेण फलभोगाय भिन्नशरीरगमनान्मृतेनापि भवता न लभ्यते इति ॥ ८५ ॥

भाषाऽर्थः—रोते हुये आप उसे कहां से पा सकते हैं, ( अर्थात् नहीं पा सकते ), मर कर भी फिर उसे नहीं प्राप्त कर सकते, क्योंकि दूसरे लोक में जाने वाले प्राणियों की गतियां अपने अपने कर्मों के अनुसार पृथक् पृथक् होती हैं ॥ ८५ ॥

अथ बन्धूनामश्रु मृतं दहतीति मन्वादयः प्रचक्षते इत्याह—

**अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः ।**
**स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥**

सञ्जीविनी—अपशोकमना इति । किन्त्वपशोकमना निर्दुःखचित्तः सन्कुटुम्बिनीं पत्नीं

निवापदत्तिभिः पिण्डोदकादिदानैरनुगृह्णीष्व, तर्पयेत्यर्थः। अन्यथा दोषमाह—अतिसंततमविच्छिन्नं स्वजनानां बन्धूनाम्, 'बन्धुस्वस्वजनाः समाः' इत्यमरः। अश्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते मन्वादयः किल। अत्र याज्ञवल्क्यः—"श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः॥" इति॥ ८६॥

अन्वयः—अपशोकमनाः, 'सन्' कुटुम्बिनीं, निवापदत्तिभिः, 'त्वम्' अनुगृह्णीष्व, अतिसंततं, स्वजनाश्रु, प्रेतं, दहति, इति, 'मन्वादयः' प्रचक्षते, किल॥ ८६॥

सुधा—अपशोकमनाः = निःशुक्चेताः, दुःखरहितमना इति यावत्। सन्निति शेषः। कुटुम्बिनीं = पुरंध्रीं, पतिपुत्रवतीभार्यामिति यावत्। निवापदत्तिभिः = पिण्डोदकादिदानैः, अनुगृह्णीष्व = प्रीणीष्व, तर्पयेति यावत्। त्वमिति शेषः। अतिसन्ततम् = अविरतं, नैरन्तर्यमिति यावत्। स्वजनाश्रु = सगोत्ररोदनं, प्रेतं = परेतं, मृतमिति यावत्। दहति = दुःखिनं करोति, इति = एवं, 'मन्वादयः' प्रचक्षते = कथयन्ति, उक्तं च याज्ञवल्क्येन—"श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः॥" इति॥ ८६॥

कोशः—'मन्युशोकौ तु शुक् स्त्रियाम्' इति, 'स्यात्तु कुटुम्बिनी। पुरंध्री' इति, 'पितृदानं निवापः स्यात्' इति, 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इति, 'अस्रु नेत्राम्बु रोदनं चास्रमश्रु च' इति, 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः' इति चामरः॥ ८६॥

समासादि—अपगतः शोको यस्मिन् तत् अपशोकम्, अपशोकं मनो यस्य स अपशोकमनाः (ब० व्री०)। कुटुम्बमस्त्यस्या इति कुटुम्बिनी तां कुटुम्बिनीम्। निवपनं निवापस्तस्य दत्तय इति निवापदत्तयस्ताभिर्निवापदत्तिभिः (त० पु०)। स्वजनस्याश्रु इति स्वजनाश्रु (त० पु०)॥ ८६॥

व्याकरणम्—अनुगृह्णीष्व = अनु + ग्रह (उपादाने), लोट् + 'ई हल्यघोः' इति ई त्वम्। निवाप = नि + डुवप् (बीजसन्ताने—ड्वित्), भावे घञ्। दत्तिभिः = दद् + क्तिन्। दहति = दह (भस्मीकरणे), लट्। प्रेतं = प्र + इण् (गतौ-णित्), क्तः। प्रचक्षते = प्र + चक्षिङ् (व्यक्तायां वाचि--इङित्), लट्॥ ८६॥

वाच्यपरिवर्तनम्—अपशोकमनसा, कुटुम्बिनी, निवापदत्तिभिः, 'त्वया' अनुगृह्यताम्, अतिसंतत, स्वजनाश्रुणा, प्रेतः, दह्यते, इति, 'मन्वादिभ्यः' प्रचक्ष्यते, किल॥ ८६॥

तात्पर्यार्थः—हे राजन्! त्वं निर्दुःखचित्तः सन् पतिपुत्रादिवतीं स्वभार्यां पिण्डोदकादिदानैः प्रीणीष्व अविच्छिन्नं बन्धूनाम् अश्रु मृतं दुःखिनं करोति, इति मन्वादयः प्रचक्षते॥८६॥

भाषार्थः—(हे राजन्!) तू शोक रहित मन से पति पुत्र वाली (अपनी) स्त्री को पिण्ड दान आदि से तृप्त करो, बन्धु जनों का निरन्तर रुदन मरे हुये प्राणी को दुःखी करता है, ऐसा (मनु आदि) कहते हैं॥ ८६॥

अथ जीवने सन्तोष्टव्यं मरणे तु न शोचितव्यमित्याह—

**मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।**
**क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ॥ ८७॥**

सञ्जीविनी—मरणमिति। शरीरिणां मरणं प्रकृतिः स्वभावः, ध्रुवमित्यर्थः। जीवितं विकृतिर्यादृच्छिकं बुधैरुच्यते, एवं स्थिते जन्तुः प्राणी क्षणमपि, अत्यन्तसंयोगे द्वितीया। श्वसञ्जीवन्नवतिष्ठते यद्यसौ क्षणजीवी लाभवान्ननु। जीवने यथालाभं संतोष्टव्यम्, अलभ्यलाभात्। मरणे तु न शोचितव्यम्, अस्य स्वाभाव्यादिति भावः। अत्र मरणशब्देन स्थूलशरीरत्यागोऽवगन्तव्यः॥ ८७॥

अन्वयः—शरीरिणां, मरणं, प्रकृतिः, जीवितं, विकृतिः, 'इति' बुधैः, उच्यते, जन्तुः, क्षणम्, अपि, श्वसन्, अवतिष्ठते, यदि, असौ, लाभवान्, 'अस्ति' ननु॥ ८७॥

सुधा—शरीरिणां = देहिनां, मरणं = निधनं, मृत्युरिति यावत्। प्रकृतिः = स्वभावः, जीवितम् = आयुः, विकृतिः = विकारः, 'इति' बुधैः = विद्वद्भिः, उच्यते = कथ्यते, जन्तुः = प्राणी, क्षणं = क्षणमात्रम्, अपि, श्वसन् = जीवन्, अवतिष्ठते = तिष्ठति, निवसतीति यावत्। यदि = चेत्, असौ = एषः, लाभवान् = लाभयुक्तः, ननु, अस्तीति शेषः। अत्र ननुशब्दो निश्चये॥ ८७॥

कोशः—'अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्' इत्यमरः। 'प्रकृतिर्योनिशिल्पिनोः। पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः' इति, 'विकृती रुजि। डिम्बे विकारे मद्यादौ' इति चानेकार्थसंग्रहः। 'प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः' इत्यमरः॥ ८७॥

समासादि—शरीरमेषां सन्तीति शरीरिणस्तेषां शरीरिणाम्। श्वसितीति श्वसन्। लाभो विद्यतेऽस्यासौ लाभवान्॥ ८७॥

व्याकरणम्—प्रकृतिः = प्र = कृ + क्तिन्। शरीरिणां = शरीर + इनिः। उच्यते = वच (परिभाषणे), लट् + कर्मणि यक् + सम्प्रसारणम्। अवतिष्ठते = अव + ष्ठा (गतिनिवृत्तौ), लट् + 'पाघ्राध्मास्था' इति तिष्ठादेशः। श्वसन् = श्वस (प्राणने), शतृ। लाभवान् = लाभ + मतुप् + वत्वम्॥ ८७॥

वाच्यपरिवर्तनम्—शरीरिणां, मरणं, प्रकृतिं, जीवितं, विकृतिम्, 'इति' बुधाः, ब्रुवन्ति, जन्तुना, क्षणम्, अपि, श्वसता, अवस्थीयते, यदि, अनेन, लाभवता, 'भूयते' ननु॥ ८७॥

तात्पर्यार्थः—देहधारिणां देहत्यागः स्वभावः, जीवितं विकारो विद्वद्भिरुच्यते, एवं स्थिते प्राणी क्षणमात्रमपि जीवन्नवतिष्ठते यदि असौ लाभवान् अस्ति॥८७॥

भाषाऽर्थः—शरीर धारण करने वालों का मरण स्वभाव है (और) जीवन विकृति है ऐसा विद्वान् कहते हैं, यदि प्राणी क्षणमात्र श्वांस लेते हुये ठहरते हैं (तो) यही निश्चय लाभ है॥ ८७॥

अथ मूर्खा विषयस्य लाभेन हितं, विनाशेन चाहितं मन्यन्ते, विद्वांसस्तु नेत्याह—

**अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्।**
**स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम्॥ ८८॥**

सञ्जीविनी—अवेति। मूढचेतनो भ्रान्तबुद्धिः प्रियनाशमिष्टनाशं हृद्यर्पितं निखातं शल्यं शङ्कुमवगच्छति मन्यते, स्थिरधीर्विद्वांस्तु तदेव शल्यं समुद्धृतमुत्खातं मन्यते, प्रियनाशे सतीति शेषः। कुतः? कुशलद्वारतया प्रियनाशस्य मोक्षोपायतयेत्यर्थः। विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणाम्, विपरीतं तु विपश्चितामिति भावः॥ ८८॥

अन्वयः—मूढचेतनः, प्रियनाशं, हृदि, अर्पितं, शल्यम्, अवगच्छति, तु, स्थिरधीः, तत्, एव, कुशलद्वारतया, समुद्धृतं मन्यते॥ ८८॥

सुधा—मूढचेतनः = भ्रान्तबुद्धिः, प्रियनाशम् = अभीप्सितविनाशं, हृदि = हृदये, अर्पितं = विद्धं, शल्यं = शङ्कुम्, अवगच्छति = जानाति, मन्यते इति यावत्। तु = किन्तु, स्थिरधीः = निश्चलबुद्धिः, विद्वानिति यावत्। 'प्रियनाशे सति' तत् = शल्यम्, एव, कुशलद्वारतया = निपुणमार्गतया, ईप्सितनाशस्य मोक्षोपायतयेत्यर्थः। समुद्धृतं = समुत्खातं, मन्यते = अङ्गीकरोति,॥ ८८॥

कोशः—'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः। प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः' इति, 'वा पुंसि शल्यं शङ्कुर्ना' इति चामरः। 'कुशलः शिक्षिते त्रिषु। क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्' इति विश्वः।॥ ८८॥

समासादि—मूढा चेतना यस्य स मूढचेतनः (ब० व्री०)। प्रियस्य नाश इति प्रियनाशस्तं प्रियनाशम् (त० पु०)। शलतीति शल्यम्। स्थिरा धीर्यस्य स स्थिरधीः (ब० व्री०)। कुशलस्य द्वारमिति कुशलद्वारं तस्य भावः कुशलद्वारता तया कुशलद्वारतया॥८८॥

व्याकरणम्—शल्यं = शल ( गतौ ), अघ्न्यादित्वात् यः । समुद्धृतं = सम् + उत् + धृ + क्तः ॥ ८८ ॥

वाच्यपरिवर्तनम्—मूढचेतनेन, प्रियनाशः, हृदि, अर्पितं शल्यं, अवगम्यते, तु, स्थिरधिया, तत्, एव कुशलद्वारतया, समुद्धृतं, मन्यते ॥ ८८ ॥

तात्पर्यार्थः—भ्रान्तबुद्धीनां विषयस्य लाभेन हितसाधनत्वस्य, विनाशेन अहितसाधनत्वस्य चाभिमानो भवति, विदुषां तु विषयलाभेऽहितसाधनत्वस्य, विनाशेन अहितसाधनत्वस्य चाभिमानो भवति ॥ ८८ ॥

भावार्थः—भ्रान्त बुद्धि वाले प्रिय के नाशको हृदय में गड़ा हुआ भाला समझते हैं किन्तु विद्वान् उसी ( भाले ) को प्रवीणता के द्वारा, निकला हुआ मानते हैं ॥ ८८ ॥

अथ विदुषां पुत्रमित्रकलत्रादिवियोगो न सन्तापजनक इत्याह—

**स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।**
**विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ ८९ ॥**

सञ्जीविनी—स्वशरीरेति । स्वस्य शरीरशरीरिणौ देहात्मानावपि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्ययौ संयोगवियोगयौ ययोस्तौ तथोक्तौ तदा बाह्यैर्विषयैः पुत्रमित्रकलत्रादिभिर्विरहो विपश्चितं विद्वांसं किमिवानुतापयेत्त्वं वद, न किञ्चिदित्यर्थः । अथवा स्वशब्दस्य शरीरेणैव संबन्धः ॥ ८९ ॥

अन्वयः—यदा, स्वशरीरशरीरिणौ, अपि, श्रुतसंयोगविपर्ययौ, 'स्तः' तदा, बाह्यैः, विषयैः, विरहः, विपश्चितं, किम्, इव, अनुतापयेत, 'त्वम्' वद ॥ ८९ ॥

सुधा—यदा = यर्हि, स्वशरीरशरीरिणौ = निजदेहदेहिनौ, स्वदेहात्मानाविति यावत् । अपि, श्रुतसंयोगविपर्ययौ = आकर्णितसंयोगवियोगौ, स्त इति शेषः । तदा = तर्हि, बाह्यैः = बहिर्गतैः, विषयैः = पुत्रमित्रकलत्रादिभिः, विरहः = वियोगः, विपश्चितं = विद्वांसं, किमिव = कथम्, अनुतापयेत् = सन्तापयेत्, वद = ब्रूहि, न किञ्चिदित्यर्थः ॥ ८९ ॥

कोशः—'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः । कायो देहः क्लीबपुंसोः' इति, 'विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः, इति चामरः ॥ ८९ ॥

समासादि—शरीरमस्यास्तीति शरीरी. स्वश्चासौ शरीर इति स्वशरीरः, ( क० धा० ), स्वशरीरश्च शरीरी चेति स्वशरीरशरीरिणौ (द्व०) । विपर्ययनं विपर्ययः, संयोगश्च विपर्ययश्चेति संयोगविपर्ययौ ( द्व० ), श्रुतौ संयोगविपर्ययौ ययोस्तौ श्रुतसंयोगविपर्ययौ ( ब० व्री० ) । बहिर्भवा बाह्यास्तैर्बाह्यैः ॥ ८९ ॥

व्याकरणम्—विपर्ययः = वि + परि + इण् ( गतौ-णित् ), 'एरच्' इत्यच् । अनुतापयेत् = अनु + तप ( सन्तापे ), णिच् + लङ् । बाह्यैः = बहि + यत् ॥ ८९ ॥

वाच्यपरिवर्तनम्—यदा, स्वशरीरशरीरिभ्याम्, अपि, श्रुतसंयोगविपर्ययाभ्यां, 'भूयते' तदा, बाह्यैः, विषयैः, विरहेण, विपश्चित , किम्, इव, अनुताप्येत , 'त्वया' उच्यताम् ॥८९॥

तात्पर्यार्थः—स्वशरीरात्मानावपि आकर्णितसंयोगवियोगौ स्तः, तदा पुत्रमित्रकलत्रादिवियोगो विद्वांसं किमिवानुतापयेत्, न किञ्चिदिति ॥ ८९ ॥

भावार्थः—जब अपना देह और आत्मा भी संयोग वियोग वाले सुने गये हैं, तब बाह्य विषयों ( पुत्र स्त्री आदि ) से वियोग होना विद्वानों को कैसे संताप दे सकता है ॥ ८९ ॥

अथ हे जितेन्द्रियवर्य ! पामरजनवच्छोकस्याधीनं गन्तुं त्वं न योग्योऽसीत्याह—

**न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि ।**
**द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ॥ ९० ॥**

सञ्जीविनी—नेति । हे वशिनामुत्तम ! जितेन्द्रियवर्य ! पृथग्जनवत्पामरजनवच्छुचः

शोकस्य वशं गन्तुं नार्हसि, तथा हि द्रुमसानुमतां तरुशिखरिणां किमन्तरं को विशेषः वायौ सति द्वितयेऽपि द्विप्रकारा अपि, "प्रथमचरम" इत्यादिना जसि विभाषया सर्वनामसंज्ञा। ते द्रुमसानुमन्तश्चलाश्चञ्चला यदि, सानुमतामपि चलने द्रुमवत्तेषामप्यचलसंज्ञा न स्यादित्यर्थः॥ ९०॥

अन्वयः--हे वशिनाम् उत्तम! 'त्वं' पृथग्जनवत्, शुचः, वशं, गन्तुं, न, अर्हसि, द्रुमसानुमतां, किम्, अन्तरं, यदि, वायौ, 'सति' द्वितये, अपि, ते, चलाः, 'स्युः' ॥ ९०॥

सुधा—हे वशिनां = जितेन्द्रियाणाम् उत्तम! = श्रेष्ठ!, पृथग्जनवत् = नीचनर इव, शुचः = शोकस्य, वशम् = आयत्ततां, गन्तुं = प्राप्तुं, नार्हसि = न योग्योऽसि, त्वमिति शेषः। द्रुमसानुमतां = तरुप्रस्थवतां, वृक्षपर्वतानामिति यावत्। किमन्तरं = को विशेषः, यदि = चेत, वायौ = पवने, सतीति शेषः। द्वितये = द्वितयाः, द्विप्रकारा इति यावत्। अपि, ते = पूर्वोक्ताः, द्रुमसानुमन्त इति यावत्। चलाः = चञ्चलाः, स्युरिति शेषः ॥९०॥

कोशः—'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इति, 'मन्युशोकौ तु शुक् स्त्रियाम्' इति चामरः। 'वशमायत्ततायां स्यात्' इति मेदिनी। 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः। अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः' इति, 'स्नुप्रस्थः सानुरस्त्रियाम्' इति, 'चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्। चञ्चलं तरलं चैव' इति चामरः॥ ९०॥

समासादि—(सज्जनेभ्यः) पृथग्भूतो जन इति पृथग्जनः (शाकपार्थिवादिः), पृथग्जन इव पृथग्जनवत्। वशमेषां सन्तीति वशिनस्तेषां वशिनाम्। सानु विद्यन्ते एषामिति सानुमन्तः, द्रुमाश्च सानुमन्तश्चेति द्रुमसानुमन्तस्तेषां द्रुमसानुमताम् (द्व०)। द्वाववयवौ एषां ते द्वितये॥ ९०॥

व्याकरणम्—गन्तुं = गम्लृ (गतौ--लृदित्), तुमुन्। द्वितये = द्वि + 'संख्याया अवयवे तयप्' इति तयप्, 'प्रथमचरमतयाल्पार्ध' इत्यादिना जसि परतः सर्वनामसंज्ञा॥ ९०॥

वाच्यपरिवर्तनम्—हे वशिनाम् उत्तम!, 'त्वया' पृथग्जनवत्, शुचः, वशं, गन्तुं, न, अर्ह्यते, द्रुमसानुमतां, किम्, अन्तरम्, यदि, वायौ, 'सति' द्वितयैः, अपि, तैः, चलैः, 'भूयते'॥ ९०॥

तात्पर्यार्थः--हे जितेन्द्रियवर्य! पामरजनवत् शोकस्याधीनं गन्तुं त्वं न योग्योऽसि, तथा हि वृक्षपर्वतानां को विशेषः? यदि वायौ सति द्विप्रकारा अपि वृक्षपर्वताः कम्पमानाः स्युः॥९०॥

भाषाऽर्थः--हे जितेन्द्रियों में श्रेष्ठ!, नीचमनुष्यों की नाई शोक के वश में जाने को तू योग्य नहीं हो, वृक्ष और पर्वत में क्या अन्तर है यदि हवासे वे (वृक्ष और पर्वत) भी हिल जायं॥ ९०॥

अथाजः शिष्यमुखेरितं गुरोर्वच अङ्गीकृत्य तं शिष्यं विसृष्टवानित्याह--

**स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम्।**
**तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः॥ ९१॥**

सञ्जीविनी—स इति। सोऽज उदारमतेर्विनेतुर्गुरोर्वसिष्ठस्य वचस्तच्छिष्यमुखेरितं तथेति प्रतिगृह्याङ्गीकृत्य मुनिं वसिष्ठशिष्यं विससर्ज प्रेषयामास, किन्तु तद्वचः शोकघने दुःखसान्द्रेऽस्याजस्य हृद्यलब्धपदमप्राप्तावकाशं सद् गुरोर्वसिष्ठस्यान्तिकं प्रतियातमिव प्रतिनिवृत्तं किमु, इत्युत्प्रेक्षा। तोटकवृत्तमेतत्—'इह तोटकमम्बुधिसैः प्रथितम्' इति तल्लक्षणम्॥ ९१॥

अन्वयः--सः, उदारमतेः, विनेतुः, 'गुरोः' वचः, तथा, इति, प्रतिगृह्य, मुनिं, विससर्ज, 'किन्तु' तत्, शोकघने, अस्य, हृदि, अलब्धपदं, 'सत्' गुरोः, अन्तिकं, प्रतियातम्, इव, 'बभूव'॥ ९१॥

सुधा--सः = अजः, उदारमतेः = महाबुद्धेः, विनेतुः = शिक्षकस्य, गुरोरिति शेषः। वचः = वचनं, शिष्यमुखप्रेषितवाक्यमिति यावत। तथा = तादृशम्, इति = एवम्, उक्त्वेति शेषः। प्रतिगृह्य = स्वीकृत्य, मुनिं = वसिष्ठछात्रं, विससर्ज = विसृष्टवान्, निर्वर्तितवानिति यावत्। 'किन्तु' तत् = वचः, शोकघने = शुचसान्द्रे, अस्य = अजस्य, हृदि हृदये, अलब्धपदम् = अप्राप्तस्थानं, सदिति शेषः। गुरोः = वसिष्ठस्य, अन्तिकं = समीपं, प्रतियातं = प्रतिनिवृत्तम्, इव = किमु, बभूवेति शेषः। इदं तोटकच्छन्दस्तल्लक्षणं च-'इह तोटकमम्बुधिसैः प्रथितम्' इति ॥ ९१ ॥

कोशः--'उदारो दक्षिणो महान्' इत्यनेकार्थसंग्रहः। 'वचनं वचः' इति, 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति, 'घनं निरन्तरं सान्द्रम्' इति चामरः ॥ ९१ ॥

समासादि--विनयतीति विनेता तस्य विनेतुः। उदारा मतिर्यस्य स उदारमतिस्तस्योदारमतेः (ब० व्री०)। न लब्धमित्यलब्धम्, अलब्धञ्च तत्पदमित्यलब्धपदम् (क० धा०)। शोकेन घन इति शोकघनस्तस्मिन् शोकघने (त० पु०) ॥ ९१ ॥

व्याकरणम्--विनेतुः = वि + णीञ् (प्रापणे--जित्), तृच्। प्रतिगृह्य = प्रति + ग्रह (उपादाने), क्त्वा + सम्प्रसारणम्। विससर्ज = वि + सृज (विसर्गे), लिट्। प्रतियातं = प्रति + या (प्रापणे), क्तः ॥ ९१ ॥

वाच्यपरिवर्तनम्--तेन, उदारमतेः, विनेतुः, 'गुरोः' वचः, तथा, इति, प्रतिगृह्य, मुनिः, विससृजे, तेन, शोकघने, अस्य, हृदि, अलब्धपदेन, 'सता' गुरोः, अन्तिकं, प्रतियातेन, इव, 'बभूव' ॥ ९१ ॥

तात्पर्यार्थः--अजः महाबुद्धेः शिक्षकस्य गुरोर्वशिष्ठस्य शिष्यमुखेन प्रेषितं वचनं 'तथा' इत्युक्त्वा वसिष्ठशिष्यं निर्वर्तितवान्, किन्तु तत् गुरुवचनं दुःखसान्द्रे अस्याजस्य हृदये अप्राप्तावकाशं सत् वसिष्ठस्य समीपं प्रतिनिवृत्तमिव बभूव ॥ ९१ ॥

भाषाऽर्थः--उस (अज) ने उदार बुद्धि वाले शिक्षक (गुरु) के वचन को 'ठीक है' ऐसा कह कर मुनि (वसिष्ठ के शिष्य) को बिदा किया, परन्तु शोक से घनीभूत इस (अज) के हृदय में वह (वचन) स्थान न प्राप्त करते हुये मानों गुरु के समीप लौट गया ॥ ९१ ॥

अथाजः पुत्रस्य राज्यपालनाक्षमत्वात् कथञ्चित् वर्षाष्टकं परिगमितवानित्याह—

तेनाष्टौ परिगमिताः समाः कथञ्चिद्बालत्वादवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥९२॥

सञ्जीविनी—तेनेति। अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेनाजेन सूनोः पुत्रस्य बालत्वात्, राज्याक्षमत्वादित्यर्थः। प्रियाया इन्दुमत्याः सादृश्यं वस्त्वन्तरगतमाकारसाम्यं प्रतिकृतिश्चित्रं तयोर्दर्शनैः स्वप्नेषु क्षणिकाः क्षणभङ्गुरा ये समागमोत्सवास्तैश्च कथञ्चित्कृच्छ्रेण अष्टौ समाः वत्सराः, 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः। परिगमिता अतिवाहिताः, उक्तं च—"वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथितः ॥" इति। प्रकृते सादृश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम्। प्रहर्षिणावृत्तमेतत् ॥ ९२ ॥

अन्वयः--अवितथसूनृतेन, तेन, सूनोः, बालत्वात्, प्रियायाः, सादृश्यप्रतिकृतिदर्शनैः, स्वप्नेषु, क्षणिकसमागमोत्सवैः, च, कथञ्चित्, अष्टौ, समाः, परिगमिताः, ॥ ९२ ॥

सुधा--अवितथसूनृतेन = सत्यप्रियवचसा, तेन = पूर्वोक्तेन, अजेनेति यावत्। सूनोः = आत्मजस्य, दशरथस्येति यावत्। बालत्वात = शिशुत्वात्, राज्यपालनेऽसमर्थत्वादित्यर्थः। प्रियायाः = दयितायाः, इन्दुमत्या इति यावत्। सादृश्यप्रतिकृतिदर्शनैः = तुल्यप्रतिबिम्बा-

वलोकनैः, वस्तवन्तरगताकारसाम्यचित्रदर्शनैरित्यर्थः । स्वप्नेषु = निद्रासु, स्वप्नावस्थास्विति यावत् । क्षणिकसमागमोत्सवैः = क्षणभङ्गुरसंयोगानन्दैः, च, कथञ्चित = केनापि प्रकारेण, कष्टेनेत्यर्थः । अष्टौ = अष्ट, समाः = संवत्सराः, परिगमिताः = यापिताः । प्रहर्षणीछन्दस्तल्लक्षणञ्च--'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्' इति वृत्तरत्नाकरे ॥ ९२ ॥

कोशः--'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इति, 'सूनृतं प्रिये' इति, प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिः' इति 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इति चामरः ॥ ९२ ॥

समासादि—बालस्य भावो बालत्वं तस्मात् बालत्वात् । न वितथोऽवितथः, अवितथं सूनृतं यस्य स तेन अवितथसूनृतेन (ब०व्री०) । सदृशस्य भावः सादृश्यं, सादृश्यञ्च प्रतिकृतिश्चेति सादृश्यप्रतिकृती ( द्व० ), तयोर्दर्शनमिति सादृश्यप्रतिकृतिदर्शनं तैः सादृश्यप्रतिकृतिदर्शनैः ( त० पु० ) । समागमस्योत्सवा इति समागमोत्सवाः ( त० पु० ), क्षणिकाश्च ते समागमोत्सवा इति क्षणिकसमागमोत्सवास्तैः क्षणिकसमागमोत्सवैः ( क० धा० ) ॥९२॥

व्याकरणम्—परिगमिताः = परि + गम् + णिच् + क्तः । सादृश्यं = सदृश + ष्यञ् । प्रतिकृतिः = प्रति = कृ + क्तिन् । स्वप्नेषु = ञिष्वप् (शये—जित्), 'स्वपो नन्' इति नन् । समागम = सम् + आ + गम्लृ ( गतौ—लृदित् ), 'ग्रहवृदृनिश्चिगमश्च' इत्यप् ॥ ९२ ॥

वाच्यपरिवर्तनम्—अवितथसूनृतः, सः, सूनोः, बालत्वात्, प्रियायाः, सादृश्यप्रतिकृतिदर्शनैः, स्वप्नेषु, क्षणिकसमागमोत्सवैः, च, कथञ्चित्, अष्टौ, समाः, परिगमितवान् ॥९२॥

तात्पर्यार्थः—सत्यप्रियवचनेन तेनाजेन पुत्रस्य राज्यपालनाक्षमत्वादिन्दुमत्या वस्त्वन्तरगताकारसाम्यैश्चित्रदर्शनैः स्वप्नेषु क्षणभङ्गुरैः समागमोत्सवैश्च कष्टेनाष्टौ संवत्सरा अतिवाहिताः ॥ ९२ ॥

भाषाऽर्थः—सत्य और प्रिय वचन ( बोलने ) वाले उस ( अज ) ने पुत्र ( दशरथ ) को बालकपन के कारण प्रिया (इन्दुमती) के सदृश चित्र देखने से और स्वप्न में क्षणमात्र संयोग के आनन्द से किसी तरह आठ वर्ष बिताया ॥ ९९ ॥

अथाजः प्रियाया वियोगस्य दुस्सहत्वात्तत्प्राप्तिहेतुं मरणमेव श्रेष्ठं मेन इत्याह—

**तस्य प्रसह्य हृदयं किल शोकशङ्कुः प्लक्षप्ररोह इव सौधतलं बिभेद ।**
**प्राणान्तहेतुमपि तं भिषजामसाध्यं लाभं प्रियाऽनुगमने त्वरया स मेने ॥९३॥**

सञ्जीविनी—तस्येति । शोक एव शङ्कुः कीलः, 'शङ्कुः कीले शिवेऽस्त्रे च' इति विश्वः । तस्याजस्य हृदयं प्लक्षप्ररोहः सौधतलमिव प्रसह्य बलात्किल बिभेद । सोऽजः प्राणान्तहेतुं मरणकारणमपि भिषजामसाध्यमप्रतिसमाधेयं तं शोकशङ्कुं रोगपर्यवसितं प्रियाया अनुगमने त्वरयोत्कण्ठया लाभं मेने । तद्विरहस्यातिदुःसहत्वात्तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यतेत्यर्थः ॥ ९३ ॥

अन्वयः—शोकशङ्कुः, तस्य, हृदयं, प्लक्षप्ररोहः, सौधतलम्, इव, प्रसह्य, बिभेद, किल, सः, प्राणान्तहेतुम्, अपि, भिषजाम्, असाध्यं, तं, प्रियाऽनुगमने, त्वरया, लाभं, मेने ॥९३॥

सुधा—शोकशङ्कुः = दुःखकीलः, तस्य = पूर्वोक्तस्य, अजस्येति यावत् । हृदयं = हृत, प्लक्षप्ररोहः = अश्वत्थावरोहः, प्लक्षजटेति यावत् । सौधतलम् = विशिष्टगृहाधः, इव = यथा, प्रसह्य = बलात्, बिभेद = अभत्सीत्, किल, किल इति निश्चये । सः = अजः, प्राणान्तहेतुं = मरणकारणम्, अपि भिषजां = वैद्यानाम्, असाध्यं = अचिकित्सनीयम्, अप्रतिसमाधेयमिति यावत् । तं = पूर्वोक्तं, शोकशङ्कुमिति यावत् । प्रियाऽनुगमने = इन्दुमत्यनुयाने, त्वरया = सम्भ्रमेण, उत्कण्ठयेति यावत् । लाभं = इन्दुमत्याः प्राप्तिं, मेने = अमंस्त । एतद् वसन्ततिलकाछन्दस्तल्लक्षणं हि--'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥ ९३ ॥

कोशः—'शङ्कुः पञ्चशिराजाले संख्यार्कालकशम्भुषु । यादोऽस्त्रभेदयोर्मेढ्रे' इति, 'प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पर्कटे' इति च हैमः । 'सौधोऽस्त्री राजसदनम्' इति, 'अधः स्वरूपयोरस्त्री तलम्' इति, 'रोगहार्यगदङ्कारो भिषग्वैद्यो चिकित्सके' इति, 'सम्भ्रमस्त्वरा' इति चामरः ॥ ९३ ॥

समासादि—प्रकर्षेण सोढ्वा इति प्रसह्य । शोक एव शङ्कुरिति शोकशङ्कुः (क० धा०) । प्लक्षस्य प्ररोह इति प्लक्षप्ररोहः (त० पु०) । सुधालेपोऽस्यास्तीति सौधः, तस्य तलमिति सौधतलम् ( त० पु० ) । प्राणस्यान्त इति प्राणान्तस्तस्य हेतुः प्राणान्तहेतुस्तं प्राणान्तहेतुम् ( त० पु० ) साद्धुं योग्यं साध्यं न साध्यमित्यसाध्यम् ( न० त० पु० ) प्रियाया अनुगमनमिति प्रियाऽनुगमनं तस्मिन् प्रियाऽनुगमने ( त० पु० ) ॥ ९३ ॥

व्याकरणम्—प्रसह्य = प्र + षह (मर्षणे), क्त्वा + ल्यबादेशः । सौध = सुधा + ज्योत्स्नादित्वादण् । बिभेद = भिदिर् ( विदारणे—इरित ), लिट् । असाध्यम् = न + साध ( संसिद्धौ ), 'ऋहलोर्ण्यत्' इति ण्यत् । मेने = मनु ( अवबोधने—उकारेत् ), लिट् ॥ ९३ ॥

वाच्यपरिवर्तनम्—शोकशङ्कुना, तस्य, हृदये, प्लक्षप्ररोहेण, सौधतलेन, इव, प्रसह्य, बिभिदे, किल, तेन, प्राणान्तहेतुः, अपि, भिषजाम्, असाध्यः, सः, प्रियाऽनुगमने, त्वरया, लाभः, मेने ॥ ९३ ॥

तात्पर्यार्थः—यथा अश्वत्थावरोहः राजसदनतलं भेत्ति, तथा शोकरूपकीलस्तस्याजस्य हृदयं बलात् अभेत्सीत्, स अजः मरणकारणमपि वैद्यानामप्रतिसमाधेयं तं शोकरूपरोगेणपर्यवसितं कीलं दयिताया अनुगमने उत्कण्ठया तल्लाभममंस्त । अर्थात् स अजः इन्दुमतीवियोगस्य दुस्सहत्वात् तत्प्राप्तिहेतुं मरणमेव श्रेष्ठं मेने ॥ ९३ ॥

भाषाऽर्थः—शोकरूप कील उस (अज) के हृदय को मकान के नीचे बड के वृक्ष की जटा (बरोह) के समान भीतर तक भेदन कर गया था, उस ( अज ) ने मरण के कारण, वैद्यों से असाध्य ( नहीं चिकित्सा करने योग्य ) उस ( शोक ) को प्यारी ( इन्दुमती के पीछे जाने में शीघ्र लाभ माना ॥ ९३ ॥

अथाजोऽनशनावस्थाने बुद्धिं व्यधादित्याह—

**सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।**
**रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥**

सञ्जीविनी—सम्यगिति । अथ नृपतिरजः सम्यग्विनीतं निसर्गसंस्काराभ्यां विनयवन्तं वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः, "वयसि च" इत्यच्प्रत्ययः । तं कुमारं दशरथं प्रजानां रक्षणविधौ राज्ये विधिवद्विध्यर्हं, यथाशास्त्रमित्यर्थः । "तदर्हम्" इति वतिप्रत्ययः । आदिश्य नियुज्य रोगेणोपसृष्टाया व्याप्तायास्तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुर्जिहासुः सन् प्रायोपवेशनेऽनशनावस्थाने मतिर्यस्य स बभूव । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः । अत्र पुराणवचनम्—"समासक्तो भवेद्यस्तु पातकैर्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीडितो वा भवेत्तु यः ॥ स्वयं देहविनाशस्य काले प्राप्ते महामतिः । आब्राह्मणं वा स्वर्गादिमहाफलजिगीषया ॥ प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा । एतेषामधिकारोऽस्ति नान्येषां सर्वजन्तुषु ॥ नराणामथ नारीणां सर्ववर्णेषु सर्वदा ।" इति । अनयोर्वसन्ततिलकाच्छन्दः, तल्लक्षणम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति ॥ ९४ ॥

अन्वयः—अथ, नृपतिः, सम्यग्विनीतं, वर्महरं, कुमारं, प्रजानां, रक्षणविधौ, विधिवत्, आदिश्य, रोगोपसृष्टतनुदुर्वसतिं, मुमुक्षुः, 'सन्' प्रायोपवेशनमतिः, बभूव ॥ ९४ ॥

सुधा—अथ = अनन्तरं, मरणमेव वरमिति स्थिरीकरणान्तरमिति यावत् । नृपतिः = राजा, अज इति यावत् । सम्यग्विनीतं = स्वभावसंस्काराभ्यां विनयवन्तं, वर्महरं = कवच

धरं, कवचधारणयोग्यवयस्कमिति यावत् । कुमारं = दशरथं, प्रजानां = जनानां, रक्षणविधौ = पालनविधाने, राज्ये इत्यर्थः । विधिवत् = विध्यर्हं, यथाशास्त्रमिति यावत् । आदिश्य = नियुज्य, रोगापसृष्टतनुदुर्वसतिं = व्याधिव्याप्तशरीरदुःखावस्थितिं, मुमुक्षुः, त्यक्तुमिच्छुः, सन्निति शेषः । प्रायोपवेशनमतिः = अनशनावस्थानबुद्धिः, बभूव = अभूत् । एतदपि वसन्ततिलकाच्छन्दः ॥ ९४ ॥

कोशः—'तनुत्रं वर्म दंशनम् । उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इति, 'प्रजा स्यात्सन्ततौ जने' इति, 'रुग्रुजा चोपतापरोगव्याधिगदामयाः' इति चामरः । 'प्रायो वयस्यनशने मृत्यौ बाहुल्यतुल्ययोः' इत्यनेकार्थसंग्रहः ॥ ९४ ॥

समासादि—सम्यग् ( यथा तथा ) विनीत इति सम्यग्विनीतस्तं सम्यग्विनीतम् । वर्म हरतीति वर्महरस्तं वर्महरम् । रक्षणस्य विधिरिति रक्षणविधिस्तस्मिन् रक्षणविधौ ( त० पु० ) । विधिमर्हतीति विधिवत् । उपसृष्टा चासौ तनुरित्युपसृष्टतनुः ( क० धा० ), रोगेणोपसृष्टतनुरिति रोगापसृष्टतनुः, रोगापसृष्टतनोर्दुर्वसतिस्तं रोगापसृष्टतनुदुर्वसतिम् ( त० पु० ) । मोक्तुमिच्छुरिति मुमुक्षुः । प्रायस्योपवेशनमिति प्रायोपवेशनं तस्मिन् मतिरिति प्रायोपवेशनमतिः ( त० पु० ) । नृणां पतिरिति नृपतिः ( त० पु० ) ॥ ९४ ॥

व्याकरणम्—विनीत = वि + णीञ् + क्तः । वर्महरं = वर्म + हृञ् ( हरणे-जिन् ), 'वयसि च' इत्युद्यमनार्थेऽच् । आदिश्य । आ + दिश् + ल्यप् । विधिवत् = विधि + 'तदर्हम्' इति वतिः । उपसृष्ट = उप + सृज (विसर्गे), क्तः । मुमुक्षुः = मुच्लृ ( मोचने-लृदित् ), सन् + 'सनाशंसभिक्ष उः' इत्युः ॥ ९४ ॥

वाच्यपरिवर्तनम्—अथ, नृपतिना, सम्यग्विनीतं, वर्महरं, कुमारं, विधिवत्, प्रजानां, रक्षणविधौ, आदिश्य, रोगापसृष्टतनुदुर्वसतिं, मुमुक्षुणा, 'सता' प्रायोपवेशनमतिना, बभूवे ॥ ९४ ॥

तात्पर्यार्थः—अथाजः निसर्गसंस्काराभ्यां विनयवन्तं कवचधारणयोग्यवयस्कं दशरथं प्रजानां रक्षणविधौ राज्ये यथाशास्त्रं नियुज्य व्याधिव्याप्तदेहस्य दुःखावस्थितिं जिहासुः सन् अनशनावस्थाने बुद्धिं व्यधात् ॥ ९४ ॥

भावार्थः—इसके बाद राजा (अज) ने अच्छी तरह ( स्वभाव और संस्कार ) से विनीत कवचधारी कुमार ( दशरथ ) को शास्त्रानुसार प्रजाओं की रक्षण विधि ( राज्य ) में नियुक्त कर रोग से व्याप्त शरीर की खराब स्थिति को छोड़ने की इच्छा से अनशन ( अन्न त्याग ) में बुद्धि की ॥ ९४ ॥

अथाजः गङ्गासरयूसङ्गमे देहत्यागाद् देवत्वं प्राप्य प्रियया सह पर्यक्रीडतेत्याह—

**तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-**
**र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।**
**पूर्वाकाराधिकतररुचा सङ्गतः कान्तयाऽसौ**
**लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ९५ ॥**

सञ्जीविनी—तीर्थ इति । असावजो जह्नुकन्यासरय्वोस्तोयानां जलानां व्यतिकरेण सम्भेदेन भवे तीर्थे गङ्गासरयूसङ्गमे देहत्यागात्सद्य एवामरगणनायां लेख्यं लेखनम्, "तयोरेव कृत्यक्तखलर्थाः" इति भावार्थे ण्यत्प्रत्ययः । आसाद्य प्राप्य पूर्वस्मादाकारादधिकतरा रुग्यस्यास्तया कान्तया रमण्या सङ्गतः सन् नन्दनस्येन्द्रोद्यानस्याभ्यन्तरेष्वन्तर्वर्तिषु लीलागारेषु क्रीडाभवनेषु पुनररमत । "यथाकथञ्चित्तीर्थेऽस्मिन्देहत्यागं करोति यः । तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि ॥" इति स्कान्दे । मन्दाक्रान्ताच्छन्दः, तल्लक्षणम्—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति ॥ ९५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजविलापो नामाष्टमः सर्गः ॥८॥

अन्वयः—असौ, जह्नुकन्यासरय्वोः, तोयव्यतिकरभवे, तीर्थे, देहत्यागात्, सद्यः, अमरगणनालेख्यम्, आसाद्य, पूर्वाकाराधिकतररुचा, कान्तया, सङ्गतः, 'सन्' नन्दनाभ्यन्तरेषु, लीलागारेषु, पुनः, अरमत ॥ ९५ ॥

सुधा—असौ = एषः, अज इति यावत्। (१) जह्नुकन्यासरय्वोः = गङ्गासरय्वोः, तोयव्यतिकरभवे = जलव्यतिषङ्गप्रादुर्भवे, तीर्थे = पुण्यक्षेत्रे, गङ्गासरयूसङ्गम इति यावत्, देहत्यागात् = शरीरविसर्जनात्, सद्यः = सपदि, अमरगणनालेख्यं = देवपरिगणनालेखनम्, आसाद्य = प्राप्य, पूर्वाकाराधिकतररुचा = प्रथमाकृत्यधिकत्विषा, कान्तया = सुन्दर्या, सङ्गतः = युक्तः, सन्निति शेषः। नन्दनाभ्यन्तरेषु = इन्द्रोद्यानान्तर्वर्तिषु, लीलागारेषु = क्रीडागृहेषु, पुनः = भूयः, अरमत = पर्यक्रीडत। मन्दाक्रान्ताच्छन्दः, एतल्लक्षणं हि वृत्तरत्नाकरे- 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्' इति ॥ ९५ ॥

कोशः—'तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः। ऋषिजुष्टे जले सत्रिण्युपाये स्त्री रजस्यपि' इति, 'अथ व्यतिकरो, व्यसनव्यतिषङ्गयोः' इति च हैमः। 'गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा' इति, 'आकारस्त्विङ्गिताकृता' इति, 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी। सुन्दरीरमणी' इति, 'निशान्तवस्त्यसदनं भवनागारमन्दिरम्' इति चामरः॥९॥

समासादि—भवतीति भवः, तोयानां व्यतिकर इति तोयव्यतिकरस्तेन भव इति तोयव्यतिकरभवस्तस्मिन् तोयव्यतिकरभवे (त० पु०)। जह्नोः कन्या इति जह्नुकन्या (त०पु०) जह्नुकन्या च सरयू चेति जह्नुकन्यासरय्वौ तयोर्जह्नुकन्यासरय्वोः ( द्व० )। देहस्य त्यागस्तस्मात् देहत्यागात् ( त० पु० )। अमराणां गणना इत्यमरगणना तस्यां लेख्यमित्यमरगणनालेख्यम् ( त० पु० )। अतिशयेनाधिकमित्यधिकतरम्। पूर्वश्चासावाकार इति पूर्वाकारः ( क० धा० ), पूर्वाकारात् अधिकतरा रुग् यस्याः सा तया पूर्वाकाराधिकतररुचा ( ब० व्री० )। लीलाया आगाराणीति लीलागाराणि तेषु लीलागारेषु ( त० पु० )। नन्दनस्याभ्यन्तराणीति नन्दनाभ्यन्तराणि तेषु नन्दनाभ्यन्तरेषु ( त० पु० ) ॥ ९५ ॥

व्याकरणम्—व्यतिकर = वि + अति + कृ + पचाद्यच्। लेख्यं = लिख ( अक्षरविन्यासे ), 'तयोरेव कृत्यक्तखलर्थाः' इति भावार्थे 'ऋहलोर्ण्यत्' इति ण्यत्। आसाद्य = आ + षद् + णिच् + क्त्वा + ल्यबादेशः। अरमत = अ + रमु ( क्रीडायाम्–उकारेत् ), लङ् ॥ ९५ ॥

वाच्यपरिवर्तनम्—अनेन, जह्नुकन्यासरय्वोः, व्यतिकरभवे, तीर्थे, देहत्यागात्, सद्यः, अमरगणनालेख्यम्, आसाद्य, पूर्वाकाराधिकतररुचा, कान्तया, सङ्गतेन, 'सता', नन्दनाभ्यन्तरेषु लीलागारेषु, अरम्यत ॥ ९५ ॥

तात्पर्यार्थः—असावजः गङ्गासरयूसङ्गमे पुण्यक्षेत्रे शरीरत्यागात् सद्य एव देवगणनायां लेखनं प्राप्य पूर्वस्मादाकारादधिकतरप्रभया कान्तयेन्दुमत्या युक्तः सन् इन्द्रोद्यानस्यान्तर्वर्तिषु क्रीडाभवनेषु पुनः पर्यक्रीडत ॥ ९५ ॥

भाषार्थः—यह ( अज ) गंगा और सरयू के जलों के सङ्गम वाले तीर्थ में शरीर को त्यागने से शीघ्र ( ही ) देवताओंकी गणना में लेख प्राप्तकर पूर्व आकार से अधिक कान्तिवाली इन्दुमती से युक्त हो इन्द्र के उद्यान ( नन्दन वन ) के भीतर क्रीडा के भवनों में फिर विलास करने लगा ॥ ९५ ॥

इति श्रीमहाकविकालिदासविरचिते रघुवंशमहाकाव्ये पण्डितश्रीकपिलदेवमिश्रसूनुना मिश्रोपनामकश्रीसुदामाशर्म्मणा विरचितया सुधाऽऽख्यया व्याख्यया समुल्लसितः अजविलापो नाम अष्टमः सर्गः समाप्तः ॥ ८ ॥

---

(१) पौराणिकी कथा—पुरा किल स्वपितृगामुद्धारार्थं भगीरथेन स्वर्गादानीता गङ्गा दीक्षितस्य जह्नोर्यज्ञस्थलं प्लावयामास। तस्मात् क्रुद्धेन तेन जह्नुना तां गङ्गां पपौ। भगीरथादिप्रार्थनया पुनः सतां कर्णरन्ध्राणविससर्ज। तदारभ्य सा गङ्गा 'जह्नुकन्या' 'जाह्नवी' इत्याख्यया विख्याता बभूवेति ॥

# अथ नवमः सर्गः ।

एकलोचनमेकार्धं सार्धलोचनमन्यतः ।
नीलार्धं नीलकण्ठार्धं महः किमपि मन्महे ॥

अथ दशरथः पितरि स्वर्गं गते सति प्रजापालनं कृतवानित्याह—

पितुरनन्तरमुत्तरकोसलान्समधिगम्य समाधिजितेन्द्रियः ।
दशरथः प्रशशास महारथो यमवतामवतां च धुरि स्थितः ॥ १ ॥

सञ्जीविनी—पितुरिति । समाधिना संयमेन जितेन्द्रियः, 'समाधिर्नियमे ध्याने' इति कोशः । यमवतां संयमिनामवताम्, "ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता । अहिंसास्तेयमाधुर्यदमश्चेति यमाः स्मृताः ॥" इति याज्ञवल्क्यः । रक्षतां राज्ञां च धुर्यग्रे स्थितो महारथः, "एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥" इति । दशरथः पितुरनन्तरमुत्तरकोसलाञ्जनपदान्समधिगम्य प्रशशास । अत्र मनुः-"क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् । इति ।" द्रुतविलम्बितमेतद्वृत्तम्, तल्लक्षणम्—"द्रुतविलम्बितमाह नभौ भरौ" इति ॥ १ ॥

अन्वयः—समाधिजितेन्द्रियः, यमवतां, अवतां, च, धुरि, स्थितः, महारथः, दशरथः, पितुः, अनन्तरम्, उत्तरकोसलान्, समधिगम्य, प्रशशास ॥ १ ॥

सुधा—समाधिजितेन्द्रियः = चित्तैकाग्र्येण वशीकृतहृषीकः, (१)यमवतां = संयमिनाम्, अवतां = रक्षतां, राज्ञामित्यर्थः । च, धुरि = अग्रे, स्थितः = वर्तमानः, महारथः = दशसहस्रधानुष्कयोधयिता, दशरथः = अजसुतः, पितुः = जनकस्य, अजस्येति यावत् । अनन्तरं = पश्चात्, स्वर्गगमनानन्तरमिति यावत् । उत्तरकोसलान् = उत्तरकोसलदेशान्, समधिगम्य = प्राप्य, प्रशशास = शासितवान्, प्रजारक्षणं कृतवानित्यर्थः । (२)महारथलक्षणम्—'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥' इति । अस्मिन् सर्गे चतुःपञ्चाशत् श्लोकपर्यन्तं द्रुतविलम्बितछन्दः, तल्लक्षणं च—'द्रुतविलम्बितमाह नभौ भरौ' इति ॥ १ ॥

कोशः—'तातस्तु जनकः पिता' इत्यमरः । 'समाधिः स्यात्समर्थने । चित्तैकाग्र्यनियमयोर्मौने' इत्यनेकार्थसंग्रहः । 'हृषीकं विषयीन्द्रियम्' इत्यमरः ॥ १ ॥

समासादि—उत्तराश्च ते कोसला इत्युत्तरकोसलास्तान् उत्तरकोसलान् ( क० धा० ) । समाधिना जितमिन्द्रियं येन सः समाधिजितेन्द्रियः ( ब० व्री० ) । यमा विद्यन्त एषांते यमव[न्त]स्तेषां यमवताम् । अवन्तीत्यवन्तस्तेषामवताम् ॥ १ ॥

व्याकरणम्—समधिगम्य = सम् + अधि + गम्लृ ( गतौ-लृदित् ), क्त्वा + ल्यबादेशः । प्रशशास = प्र + शासु ( अनुशिष्टौ-उकारेत ), लिट् । यमवतां = यम् + मतुप् । अवताम् = अव ( रक्षणादौ ), शतृ ॥ १ ॥

वाच्यपरिवर्तनम्—समाधिजितेन्द्रियेण, यमवताम्, अवतां, च, धुरि, स्थितेन, महारथेन, दशरथेन, पितुः, अनन्तरम्, उत्तरकोसलान्, समधिगम्य, प्रशशासे ॥ १ ॥

तात्पर्यार्थः—संयमेन वशीकृतेन्द्रियः संयमिनां राज्ञां चाग्रे स्थितो महारथो दशरथः पितुरजस्यानन्तरमुत्तरकोसलान् देशान् प्राप्य प्रजापालनं कृतवान् ॥ १ ॥

---

( १ ) आनृशंस्यं क्षमा सत्यमहिंसा दमस्पृहा ।
ध्यानं प्रसादो माधुर्यमार्जवं च यमा दश ॥ इति ।

( २ ) धनुर्वेदार्थतत्त्वज्ञः सर्वशास्त्रविशारदः ।
सहस्रं योधयत्येकः स महारथ उच्यते ॥ इत्यन्यत्तल्लक्षणम् ।

भाषाऽर्थः--संयम से इन्द्रियों को जीतने वाले संयमियों ( योगियों ) और राजाओं में अग्रणी महारथी दशरथने पिता ( अज ) के बाद उत्तरकोशलदेशों को प्राप्त कर शासन किया ॥ १ ॥

अथ दशरथे रक्षति सति प्रजामण्डलमर्तीवानुरक्तं जातमित्याह--

**अधिगतं विधिवद्यदपालयत्प्रकृतिमण्डलमात्मकुलोचितम् ।**
**अभवदस्य ततो गुणवत्तरं सनगरं नगरन्ध्रकरौजसः ॥ २ ॥**

सञ्जीविनी--अधिगतमिति । अधिगतं प्राप्तमात्मकुलोचितं स्वकुलागतं सनगरं नगरजनसहितं प्रकृतिमण्डलं जानपदमण्डलम् । अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगात्गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । यद्यस्माद्विधिवद्यथाशास्त्रमपालयत्, ततो हेतोः रन्ध्रं करोतीति रन्ध्रकरः, रन्ध्रहेतुरित्यर्थः ।'कृञो हेतुताच्छील्यानुलोम्येषु" इति टप्रत्ययः । नगस्य रन्ध्रकरो नगरन्ध्रकरः कुमारः 'कुमारः, क्रौञ्चदारणः' इत्यमरः । तदोजसस्तत्तुल्यबलस्यास्य दशरथस्य गुणवत्तरमभवत् तत्पौरजनपदमण्डलं तस्मिन्नतीवासक्तमभूदित्यर्थः ॥ २ ॥

अन्वयः--'दशरथः' अधिगतम् , आत्मकुलोचितं, सनगरं, प्रकृतिमण्डलं, यत्, विधिवत् , अपालयत्, ततः, नगरन्ध्रकरौजसः, अस्य, गुणवत्तरम् , अभवत् ॥ २ ॥

सुधा--'दशरथः' अधिगतं = लब्धम् , आत्मकुलोचितं = स्ववंशागतं, सनगरं = सपुरं, नगरजनसहितमिति यावत् । प्रकृतिमण्डलं = जानपदवृन्दं, यत् = यस्मात् , विधिवत् = यथाशास्त्रम्, अपालयत् = पालयामास, ततः = तस्मात् , नगरन्ध्रकरौजसः = क्रौञ्चाख्यपर्वतबिलकारिबलस्य, कार्तिकेयतुल्यपराक्रमस्येति यावत् । अस्य = दशरथस्य, 'जानपदमण्डलम्' गुणवत्तरं = प्रकृष्टगुणयुक्तम् , अभवत् = अभूत् ॥ २ ॥

कोशः--'प्रकृतिर्योनिलिङ्गिनोः । पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः' इत्यनेकार्थसंग्रहः । 'मण्डलं परिधौ कोठे देशे द्वादशराजसु । कलापेऽथ निवहे बिम्बे त्रिषु पुंसि च कुक्कुरे' इति मेदिनी । 'ओजो दीप्तिप्रकाशयोः । अवष्टम्भे बले धातुस्तेजसि' इत्यनेकार्थसंग्रहः ॥ २ ॥

समासादि--विधिमर्हतीति तत् विधिवत् । प्रकृतीनां मण्डलमिति तत् प्रकृतिमण्डलम् । आत्मनः कुलमित्यात्मकुलम् ( त० पु० ), तस्मिन्नुचितमित्यात्मकुलोचितम् ( त० पु० ) । गुणोविद्यतेऽस्येति तत् गुणवत् । अतिशयेन गुणवदिति तत् गुणवत्तरम् । नगरैः सहितमिति सनगरम् । रन्ध्रं करोतीति रन्ध्रकरः, नगस्य रन्ध्रकर इति नगरन्ध्रकरः ( त० पु० ), तस्योज इवौजो यस्य स नगरन्ध्रकरोजाः तस्य नगरन्ध्रकरौजसः ( ब० व्री० ) ॥ २ ॥

व्याकरणम्--अधिगतम् = अधि + गम् + क्तः । विधिवत् = विधि + 'तदर्हम्' इति वतिः । अपालयत् = अ + पाल ( रक्षणे ), णिच् + लङ् । गुणवत्तरं = गुण + मतुप् + तरप् । रन्ध्रकरः = रन्ध्र + कृ + टच् ॥ २ ॥

वाच्यपरिवर्तनम्--'दशरथेन' अधिगतम्, आत्मकुलोचितं, सनगरं, प्रकृतिमण्डलं, यत्, विधिवत्, अपाल्यत, ततः, नगरन्ध्रकरौजसः, अस्य, गुणवत्तरेण, अभूयत ॥ २ ॥

तात्पर्यार्थः--स दशरथः प्राप्तं स्ववंशागतं नगरजनयुक्तं जानपदमण्डलं यतो यथाशास्त्रमपालयत्ततः कार्तिकेयतुल्यपराक्रमस्यास्य तज्जानपदमण्डलं प्रकृष्टगुणयुक्तमभवत् । अर्थात् तत्प्रकृतिमण्डलं तस्मिन्नतीवानुरक्तमभूत् ॥ २ ॥

भाषाऽर्थः—( उस दशरथ ने ) पाये हुये अपने कुल के योग्य नगर सहित प्रजामंडल को शास्त्रानुसार जिस कारण पालन किया, इस कारण पर्वत में छिद्र करने वाले (कार्तिकेय) के समान पराक्रम वाले इस ( दशरथ ) का ( प्रजामण्डल ) अधिक गुणवान हुआ ॥ २ ॥

अथ विद्वांसः इन्द्रं दशरथं च स्वकर्मकारिणां जनानां श्रमापहारिणं वदन्तीत्याह—

**उभयमेव वदन्ति मनीषिणः समयवर्षितया कृतकर्मणाम् ।**
**बलनिषूदनमर्थपतिं च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ ३ ॥**

सञ्जीविनी—उभयमिति। मनस ईषिणो मनीषिणो विद्वांसः। पृषोदरादित्वात्साधुः। बलनिषूदनमिन्द्रं दण्डस्य धरो राजा मनुरिति यो दण्डधरः स एवान्वयः कूटस्थो यस्य तमर्थपतिं दशरथं चेत्युभयमेव समयेऽवसरे जलं धनं च वर्षतीति समयवर्षी तस्य भावः समयवर्षिता तया हेतुना कृतकर्मणां स्वकर्मकारिणां नुदतीति नुदम्, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। श्रमस्य नुदं श्रमनुदम्। क्विबन्तत्वे नपुंसकलिङ्गेनोभयशब्देन सामानाधिकरण्यं न स्यात्। इति वदन्ति ॥ ३ ॥

अन्वयः—मनीषिणः, बलनिषूदनं, मनुदण्डधरान्वयं, तम्, अर्थपतिं, च, 'इति' उभयम्, एव, समयवर्षितया, कृतकर्मणां, श्रमनुदं, वदन्ति ॥ ३ ॥

सुधा—मनीषिणः = विद्वांसः, बलनिषूदनं = बलदैत्यनिहिंसनम्, इन्द्रमित्यर्थः । मनुदण्डधरान्वयं = मनुराजवंशं, तं = पूर्वोक्तम्, अर्थपतिं = धनस्वामिनं, दशरथमित्यर्थः । च, 'इति' उभयं = द्वयम्, एव, समयवर्षितया = अवसरे जलधनवर्षणत्वेन, कृतकर्मणां = निजकर्मकारिणां, स्वकार्यनिरतानामिति यावत्। श्रमनुदं = श्रमापहारिणं, वदन्ति = कथयन्ति ॥ ३ ॥

कोशः—'समयः शपथे भाषासम्पदोः कालसंविदोः । सिद्धान्ताचारसङ्केतनियमावसरेषु च' इत्यनेकार्थसंग्रहः। अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति वर्षणम्' इति शब्दार्णवः। 'प्रवासनं परासनं निषूदनं निहिंसनम्' इत्यमरः। 'दण्डधारो यमे राज्ञि' इति हैमः ॥ ३ ॥

समासादि—मनस ईषिणो मनीषिणः । समये वर्षतीति समयवर्षी तस्य भावः समयवर्षिता तया समयवर्षितया । कृतं कर्म यैस्ते कृतकर्माणस्तेषां कृतकर्मणाम् ( ब० व्री० ) । बलं निषूदयतीति बलनिषूदनस्तं बलनिषूदनम् । अर्थस्य पतिरित्यर्थपतिस्तमर्थपतिम् ( त० पु० ) । नुदतीति नुदम्, श्रमस्य नुदमिति श्रमनुदम् ( त० पु० ) । धरतीति धरः, दण्डस्य धर इति दण्डधरः ( त० पु० ), मनुश्चासौ दण्डधर इति मनुदण्डधरः ( क० धा० ), मनुदण्डधर एवान्वयो यस्य स तं मनुदण्डधरान्वयम् ( ब० व्री० ) ॥ ३ ॥

व्याकरणम्—समयवर्षितया = समय + वृषु ( वर्षणे—उकारेत् ), इनिः + तल् + टाप् । निषूदनम् = नि + षूद ( क्षरणे ), ल्युः । श्रमनुदं = श्रम + णुद ( प्रेरणे ), 'इगुपधज्ञा' इति कः ॥ ३ ॥

वाच्यपरिवर्तनम्—मनीषिभिः, बलनिषूदनः, मनुदण्डधरान्वयः, सः, अर्थपतिः, च, 'इति' उभयम्, एव, समयवर्षितया, कृतकर्मणां, श्रमनुदम्, उच्यते ॥ ३ ॥

तात्पर्यार्थः—विद्वांसो बलनिषूदनमिन्द्रं मनुनृपवंशोत्पन्नं तमर्थपतिं दशरथं च इत्युभयमेवावसरे जलधनदानेन स्वकर्मकारिणां जनानां श्रमापहारिणं कथयन्ति ॥ ३ ॥

भाषाऽर्थः—विद्वान् लोग बल दैत्य को मारने वाले (इन्द्र) और मनु राजा के वंश वाला दशरथ इन दोनों ही को अवसर पर जल और धन देने के कारण कर्म करने वाले (जनों) के श्रम को दूर करने वाले कहते हैं ॥ ३ ॥

अथ दशरथे पृथिवीश्वरे सति देशे रोगः शत्रुश्च पदं न निहितवानित्याह—

**जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः ।**
**क्षितिरभूत्फलवत्यजनन्दने शमरतेऽमरतेजसि पार्थिवे ॥ ४ ॥**

सञ्जीविनी—जनपद इति। शमरते शान्तिपरेऽमरतेजस्यजनन्दने दशरथे पार्थिवे पृथिव्या ईश्वरे सति, "तस्येश्वरः" इत्यण्प्रत्ययः। जनपदे देशे गदो व्याधिः, 'उपतापरोगव्याधिगदा-

मयाः' इत्यमरः । पदं नादधौ, नाचक्रामेत्यर्थः । सपत्नजः शत्रुजन्योऽभिभवः कुत एव, असंभावित एवेत्यर्थः । क्षितिः फलवत्यभूच्च इति, दैवानुकूल्यमभूदित्यर्थः ॥ ४ ॥

अन्वयः—शमरते, अमरतेजसि, अजनन्दने, पार्थिवे, 'सति' जनपदे, गदः, पदं न, आदधौ, सपत्नजः, अभिभवः, कुतः, एव, क्षितिः, फलवती, अभूत्, 'च' ॥ ४ ॥

सुधा—शमरते = शान्तितत्परे, अमरतेजसि = देवतुल्यपराक्रमे, अजनन्दने = दशरथे, पार्थिवे = राज्ञि, सतीति शेषः । जनपदे = देशे, गदः = रोगः, पदं = चरणं, न आदधौ = न निहितवान्, नाचक्रामेत्यर्थः । सपत्नजः = शत्रुजन्यः, अभिभवः = पराभवः, कुतः = कस्मात्, एव, असम्भव एवेत्यर्थः । क्षितिः = पृथिवी, फलवती = फलयुक्ता, अभूत् = बभूव, 'च' ॥ ४ ॥

कोशः—'नावृज्जनपदो देशः' इति, 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः' इति, 'शमथस्तु शमः शान्तिः' इति चामरः । 'तेजस्त्विट्दूरेतसोर्बले' इत्यनेकार्थसंग्रहः ॥ ४ ॥

समासादि—जनः पदं ( वस्तु ) यस्मिन्नसौ जनपदस्तस्मिन् जनपदे । सपत्नाज्जातः सपत्नजः । फलं विद्यते यस्या असौ फलवती । नन्दयतीति नन्दनः, अजस्य नन्दन इत्यजनन्दनस्तस्मिन्नजनन्दने ( त० पु० ) । शमेन रत इति शमरतस्तस्मिन् शमरते ( त० पु० ) । अमराणां तेज इव तेजो यस्य स अमरतेजास्तस्मिन्नमरतेजसि ( ब०व्री० ) । पृथिव्या ईश्वरः पार्थिवस्तस्मिन् पार्थिवे ॥ ४ ॥

व्याकरणम्—आदधौ = आ + दध + लिट् । नन्दने = टुनदि ( समृद्धौ-टु इकारश्चेत् ), ल्युः । रते = रमु + क्तः + मस्य लोपः । पार्थिवे = पृथिवी + अण् ॥ ४ ॥

वाच्यपरिवर्तनम्—शमरते, अमरतेजसि, अजनन्दने, पार्थिवे, 'सति' जनपदे, गदेन, पदं, न, आदधे, सपत्नजेन, अभिभवेन, कुतः, एव, क्षित्या, फलवत्या, अभावि, 'च' ॥ ४ ॥

तात्पर्यार्थः—शान्तिधर्मतत्परे देवतुल्यपराक्रमे दशरथे पृथिवीश्वरे सति राज्ये रोगः पदं नाचक्राम, शत्रुजन्यपराभवः कुत एव ?, पृथ्वी फलवती चाभूत् ॥ ४ ॥

भाषाऽर्थः—शान्ति में तत्पर, देवताओं के समान पराक्रम वाले अज के नन्दन (दशरथ) के राजा होने पर राज्यमें रोगने ( अपने ) पैरों को नहीं रक्खा, ( फिर ) शत्रुओं का भय कहां ?, ( और ) पृथिवी फलवाली हुई ॥ ४ ॥

अथ पृथिवी दशरथस्य पूर्वजं प्राप्य यथा श्रियमवर्द्धयत्तथा तमपीत्याह--

**दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम् ।**
**तमधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम् ॥ ५ ॥**

सञ्जीविनी—दशेति । मही दशदिगन्ताञ्जितवानिति दशदिगन्तजित्, "चतस्रः कीर्तयेद्वाष्टौ दश वा ककुभः क्वचित्" इति वाग्भट्टः । तेन रघुणा यथा श्रियं कान्तिमपुष्यत्, ततः परं रघोरनन्तरमजेन च यथा श्रियमपुष्यत् तथैवाहीनपराक्रमं न हीनः पराक्रमो यस्य तमन्यूनपराक्रमं तं दशरथमिनं स्वामिनमधिगम्य पुनर्न बभाविति न, बभावेवेत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ५ ॥

अन्वयः--मही, दशदिगन्तजिता, रघुणा, ततः, परम्, अजेन, 'च' यथा, श्रियम्, अपुष्यत्, तथा, एव, अहीनपराक्रमं, तम्, इनम्, अधिगम्य, पुनः, न, बभौ, 'इति' न ॥५॥

सुधा—मही = पृथिवी, दशदिगन्तजिता = दशाशान्तविजयिना, रघुणा = रघुराज्ञा, ततः = पूर्वोक्तात्, रघोरिति यावत् । परम् = अनन्तरम्, अजेन = अजराज्ञा, चेति शेषः । यथा = येन प्रकारेण, श्रियं = शोभाम्, अपुष्यत् = पुष्टवती, अवर्द्धयदिति यावत् । तथा = तेन प्रकारेण, एव, अहीनपराक्रमम् = अन्यूनसामर्थ्यं, तं = पूर्वोक्तम्, इनं = प्रभुम्, दशरथमिति यावत् । अधिगम्य = प्राप्य, पुनः = भूयः, न बभौ = न शुशुभे, 'इति' न, 'किन्तु' बभौ एवेत्यर्थः ॥ ५ ॥

कोशः--'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । श्रीर्वेशरचनाशोभा भारतीसरलद्रुमे' इतिमेदिनी । 'इनः सूर्ये प्रभौ' इत्यमरः । 'पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि' इति विश्वः ॥ ५ ॥

समासादि--दश च ता दिश इति दशदिशस्तासामन्तं जितवानिति दशदिगन्तजित् तेन दशदिगन्तजिता ( क० धा० )। न हीनः पराक्रमो यस्य स अहीनपराक्रमस्तमहीनपराक्रमम् ( ब० व्री० ) ॥ ५ ॥

व्याकरणम्--अपुष्यत् = अ + पुष (पुष्टौ), लङ् + श्यन् । बभौ = भा (दीप्तौ ), लिट् ॥५॥

वाच्यपरिवर्तनम्--महया, दशदिगन्तजिता, रघुणा, ततः, परम् , अजेन, 'च' यथा, श्रीः, अपुष्यत, तथा, एव, अहीनपराक्रमं, तम् , इनम्, अधिगम्य, पुनः, न, बभे, 'इति' न ॥ ५ ॥

तात्पर्यार्थः--पृथ्वी यथा चक्रवर्तिना रघुणा तदनन्तरमजेन सह शोभामवर्द्धयत्, तथैव महाबलिष्ठं तं स्वामिनं दशरथं प्राप्य पुनर्न शुशुभे इति न किन्तु शुशुभ एव ॥ ५ ॥

भाषाऽर्थः—पृथिवीने दशदिशाओंके जीतने वाले रघुसे और इसके बाद अजसे जैसे शोभा बढाई थी, वैसे ही बड़े पराक्रमवाले उस स्वामी (दशरथ) को पाकर फिर शोभित नहीं हुई, ( ऐसा ) नहीं, ( किन्तु शोभित ही हुई ) ॥ ५ ॥

अथ दशरथः कुबेरं, यमं, सूर्यञ्चानुचकारेत्याह—

**समतया वसुवृष्टिविसर्जनैर्नियमनादसतां च नराधिपः ।**
**अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ॥ ६ ॥**

सञ्जीविनी—समतयेति । नराधिपो दशरथः समतया समवर्तित्वेन, मध्यस्थत्वेनेत्यर्थः । वसुवृष्टेर्विसर्जनैः असतां दुष्टानां नियमनान्निग्रहाच्च सवरुणौ वरुणसहितौ यमपुण्यजनेश्वरौ यमकुबेरौ यमकुबेरवरुणान् यथासंख्यमनुययावनुचकार, रुचा तेजसाऽरुणाग्रसरमरुणसारथिं सूर्यमनुययौ ॥ ६ ॥

अन्वयः—नराधिपः, समतया, वसुवृष्टिविसर्जनैः, असतां, नियमनात् , च, सवरुणौ, यमपुण्यजनेश्वरौ, अनुययौ, रुचा, अरुणाग्रसरम् , 'अनुययौ' ॥ ६ ॥

सुधा—नराधिपः = जनपतिः, दशरथ इति यावत् । समतया = तुल्यदर्शितया, वसुवृष्टिविसर्जनैः = धनवर्षत्यागैः, असताम् = असज्जनानां, दुष्टानामिति यावत् । नियमनात् = निग्रहात्, दण्डनादिति यावत् । च, सवरुणौ = सप्रचेतसौ, यमपुण्यजनेश्वरौ = दण्डधरधनदौ, अनुययौ = अनुजगाम, क्रमशो यमकुबेरवरुणाननुचकारेत्यर्थः । रुचा = त्विषा, कान्त्येति यावत् । अरुणाग्रसरम् = अनूरुपुरोगम् , अरुणसारथिमिति यावत् , सूर्यमित्यर्थः । अनुययाविति शेषः ॥ ६ ॥

कोशः—'वसुर्मयूखाग्निजनाधिपेषु योक्त्रे सुरे स्याद्वसु हाटके च । वृद्ध्यौषधस्थानधनेषु रत्ने वसु स्मृतं स्यान्मधुरेऽन्यवच्च' इति विश्वप्रकाशः । 'यमो दण्डधरे ध्वांक्षे संयमे यमजेऽपि च' इति विश्वः । 'यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः । मनुष्यधर्मा धनदो' इति, 'प्रचेता वरुणः पाशी' इति, 'सूरसूतोऽरुणोऽनूरुः' इति चामरः ॥ ६ ॥

समासादि—समस्य भावः समता तया समतया । वर्षणं वृष्टिः, वसुनो वृष्टिरिति वसुवृष्टिः, वसुवृष्टेर्विसर्जनमिति तैर्वसुवृष्टिविसर्जनैः ( त० पु० ) । नियच्छतीति नियमनं तस्मान्नियमनात् । न सन्त इत्यसन्तस्तेषामसताम् । नराणामधिप इति नराधिपः ( त० पु० ) । पुण्याश्च ते जना इति पुण्यजनाः ( क० धा० ), पुण्यजनानामीश्वर इति पुण्यजनेश्वरः ( त० पु० ), यमश्च पुण्यजनेश्वरश्चेति यमपुण्यजनेश्वरौ ( द्व० ) । वरुणेन सहिताविति सवरुणौ । अरुण एवाग्रसरो यस्य स तम् अरुणाग्रसरम् ( ब० व्री० ) ॥ ६ ॥

व्याकरणम्—वृष्टिः = वृषु ( सेचने-उकारेत् ), क्तिन् । अनुययौ = अनु + या ( प्रापणे ),

लिट् ॥ ६ ॥

वाच्यपरिवर्तनम्—नराधिपेन, समतया, वसुवृष्टिविसर्जनैः, असतां, नियमनात्, च, सवरुणौ, यमपुण्यजनेश्वरौ, अनुयये, रुचा, अरुणाग्रसरः, 'अनुयये' ॥ ६ ॥

तात्पर्यार्थः—राजा दशरथः समवर्तितया धनवर्षत्यागैः, दुष्टानां दण्डनाच्च क्रमशो यमकुबेरवरुणाननुययौ, कान्त्या सूर्यमनुययौ ॥ ६ ॥

भापाऽर्थः—प्रजाओंके स्वामी (दशरथ) एक समान के बर्ताव से धन बरसाने और दुष्टों को दंड देने से, वरुण के सहित यम, कुबेर ( और ) तेज से सूर्य के अनुयायी हुये ॥ ६ ॥

अथ मृगयाद्यूतमधुनवयौवनाङ्गाभिर्दशरथो न वशीकृत इत्याह—

**न मृगयाऽभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु ।**
**तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत् ॥ ७ ॥**

सञ्जीविनी—तस्य व्यसनासक्तिर्नासीदित्याह—नेति । उदयाय यतमानमभ्युदयार्थं व्याप्रियमाणं तं दशरथं मृगयाऽभिरतिराखेटव्यसनं नापाहरन्नाचकर्ष, 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इत्यमरः । दुष्टमासमन्तादुदरमस्येति दुरोदरं द्यूतं च नापाहरत्, 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । शशिनः प्रतिमा प्रतिबिम्बमाभरणं यस्य तन्मधु नापाहरत् । न वेति पदच्छेदः वाशब्दः समुच्चये । नवयौवना नवं नूतनं यौवनं तारुण्यं यस्यास्तादृशी प्रियतमा वा स्त्री नापाहरत् । जातावेकवचनम् । अत्र मनुः—"पानमक्षः स्त्रियश्चेति मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥" इति ॥ ७ ॥

अन्वयः—उदयाय, यतमानं, तं, मृगयाभिरतिः, न, अपाहरत् दुरोदरं, न, 'अपाहरत्' शशिप्रतिमाभरणं, मधु, च, न, 'अपाहरत्' नवयौवना, प्रियतमा, वा, न, 'अपाहरत्' ॥ ७ ॥

सुधा—उदयाय = अभ्युदयाय, वृद्धये इति यावत । यतमानं = व्याप्रियमाणं, तं पूर्वोक्तं, दशरथमिति यावत । मृगयाऽभिरतिः = मृगव्यव्यसनं, न, अपाहरत् = नाचकर्ष, न वशीचकारेत्यर्थः । दुरोदरं = द्यूतं, न, अपाहरदिति शेषः। शशिप्रतिमाभरणं = चन्द्रप्रतिबिम्बभूषणं, मधु = मद्यं, च, चेति समुच्चये । न, अपाहरदिति शेषः । नवयौवना = नूतनतारुण्या, प्रियतमा = स्त्री, वा, वेति समुच्चये, न अपाहरदिति शेषः ॥ ७ ॥

कोशः—'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इत्यमरः । 'दुरोदरः पुनर्द्यूते द्यूतकारे पणेऽपि च' इत्यनेकार्थसंग्रहः । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया' इति, 'मधु मद्ये पुष्परसे क्षौद्रेऽपि' इति, 'तारुण्यं यौवनं समे' इति चामरः ॥ ७ ॥

समासादि—मृगयाया अभिरतिरिति मृगयाऽभिरतिः ( त० पु० ) । दुष्टमासमन्तादुदरमस्येति तद्दुरोदरम् । शशिनः प्रतिमेति शशिप्रतिमा ( त० पु० ), शशिप्रतिमा आभरणं यस्य तत् शशिप्रतिमाभरणम् ( ब०व्री० ) । नवं यौवनं यस्याः सा नवयौवना (ब० व्री०) । यततेऽसौ यतमानस्तं यतमानम् ॥ ७ ॥

व्याकरणम्—प्रियतमा = प्रिय + तमप् । यतमानं = यति (प्रयत्ने), शानच् । अपाहरत = अप + अ + हञ् ( हरणे-जित् ), लङ् ॥ ७ ॥

वाच्यपरिवर्तनम्—उदयाय, यतमानः, सः, मृगयाऽभिरत्या, न, अपाह्रियत, दुरोदरेण, न, 'अपाह्रियत' शशिप्रतिमाभरणेन, मधुना, च, न, 'अपाह्रियत' नवयौवनया, प्रियतमया, वा, न, 'अपाह्रियत' ॥ ७ ॥

तात्पर्यार्थः—अभ्युदये व्यापारं करिष्यमाणं तं दशरथमाखेटव्यसनं नाचकर्ष, द्यूतं च नाचकर्ष, चन्द्रस्य प्रतिबिम्बाभरणं मद्यं च नाचकर्ष, नवयौवना स्त्री वा नाचकर्ष ॥ ७ ॥

भापाऽर्थः—अभ्युदय में यत्न करते हुये उस दशरथ को न शिकार के व्यसनने, न चन्द्र प्रतिबिम्ब के भूषण वाले मद्यने, और न नवीन युवा अवस्था वाली स्त्रियोंने

खींचा, (याने वश में नहीं किया) ॥ ७ ॥

अथ दशरथेन सर्वत्र अदीना सत्या मधुरैव वाण्युक्तेत्याशयेनाह—

**न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि।**
**न च सपत्नजनेष्वपि तेन वागपरुषा परुषाक्षरमीरिता ॥ ८ ॥**

सञ्जीविनी—नेति। राज्ञा प्रभवति प्रभौ सति वासवेऽपि कृपणा दीना वाङ् नेरिता नोक्ता, परिहासकथास्वपि वितथाऽनृता वाङ् नेरिता, किं चापरुषा रोपशून्येन तेन सपत्नजनेष्वपि शत्रुजनेष्वपि परुषाक्षरं निष्ठुराक्षरं यथा तथा वाङ् नेरिता। किमुतान्यत्रेति सर्वत्रापिशब्दार्थः। किन्त्वदीना सत्या मधुरैव वागुक्तेति फलितोऽर्थः ॥ ८ ॥

अन्वयः—तेन, प्रभवति, 'सति' वासवे, अपि, कृपणा, वाक्, न, ईरिता, परिहासकथासु, अपि, वितथा, 'वाक्-न-ईरिता' अपरुषा, 'तेन' सपत्नजनेषु, अपि, परुषाक्षरं, 'वाक्-न-ईरिता' ॥ ८ ॥

सुधा—तेन = पूर्वोक्तेन, दशरथेनेति यावत्। प्रभवति = प्रभौ, सतीति शेषः। वासवे = इन्द्रे, अपि, कृपणा = कुत्सिता, दीनेति यावत्। वाक् = वाणी, न, ईरिता = नोक्ता, परिहासकथासु = परिहासवार्तासु, अपि, वितथा = अनृता, असत्येति यावत्। 'वाक्-न-ईरिता' अपरुषा = रोपरहितेन, तेनेति शेषः। सपत्नजनेषु = शत्रुजनेषु, अपि, परुषाक्षरं = निष्ठुरवचनं, (यथा तथा) 'वाक्-न-ईरिता'। किन्तु-अदीना सत्या मधुरैव वाण्युक्तेति फलितार्थः ॥ ८ ॥

कोशः—'कृपणस्तु कृमौ पुंसि मन्दकुत्सितयोस्त्रिषु' इति मेदिनी। 'वितथं त्वनृतं वचः' इत्यमरः। 'परुषो कर्बुरे रुक्षे स्यान्निष्ठुरवचस्यपि' इति हैमः ॥ ८ ॥

समासादि—परिहासस्य कथा इति परिहासकथास्तासु परिहासकथासु (न० पु०)। सपत्नाश्च जना इति सपत्नजनास्तेषु सपत्नजनेषु (क० धा०)। परुषं च तदक्षरमिति परुषाक्षरम् (क० धा०) ॥ ८ ॥

व्याकरणम्—प्रभवति = प्र + भू + शतृ। ईरिता = ईर + क्तः + टाप् ॥ ८ ॥

वाच्यपरिवर्तनम्—सः, प्रभवति, 'सति' वासवे, अपि, कृपणां, वाचं, न, ईरितवान्, परिहासकथासु, अपि, वितथां, 'वाचं-न-ईरितवान्' अपरुट्, 'सः' सपत्नजनेषु, अपि, परुषाक्षरं, 'वाचं-न-ईरितवान्' ॥ ८ ॥

तात्पर्यार्थः—तेन दशरथेन प्रभौ सतीन्द्रेऽपि दीना वाङ् नोक्ता, परिहासवार्तास्वपि मिथ्या वाङ् नोक्ता, किञ्च कोपरहितेन तेन दशरथेन शत्रुजनेष्वपि कठोरवचनयुक्ता वाङ् नोक्ता। किन्त्वदीना सत्या मधुरैव वागुक्तेति ॥ ८ ॥

भाषाऽर्थः—उस (दशरथ) ने प्रभु होने पर दीनता का वचन इन्द्र से भी नहीं कहा हँसी की बातों में भी झूठा (वचन नहीं कहा) और क्रोध रहित (उस दशरथ ने) शत्रुजनों में भी कठोर (वचन नहीं कहा) ॥ ८ ॥

अथ दशरथादाज्ञाकारिणो भूपतयः सुखं, लङ्घिताज्ञाश्च दुःखमलभन्नित्याह—

**उदयमस्तमयं च रघूद्वहादुभयमानशिरे वसुधाऽधिपाः।**
**स हि निदेशमलङ्घयतामभूत्सुहृदयोहृदयः प्रतिगर्जताम् ॥ ९ ॥**

सञ्जीविनी—उदयमिति। वसुधाऽधिपा राजानः उद्वहतीत्युद्वहो नायकः, पचाद्यच्। रघूणामुद्वहो रघुनायकः तस्माद्रघुनायकादुदयं वृद्धिम् अस्तमयं नाशं च इत्युभयमानशिरे लेभिरे। कुतः ? हि यस्मात्स दशरथो निदेशमाज्ञामलङ्घयतां शोभनं हृदयमस्येति सुहृन्मित्रमभूत्, 'सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातः। प्रतिगर्जतां प्रतिस्पर्धिनाम् अय इव हृदयं यस्येत्ययोहृदयः कठिनचित्तोऽभूत। आज्ञाकारिणो रक्षति अन्यान्मारयतीत्यर्थः ॥ ९ ॥

अन्वयः—वसुधाधिपाः, रघूद्वहात्, उदयम्, अस्तमयं, च 'इति' उभयम्, आनशिरे,

हि, सः, निदेशम्, अलङ्घयतां, सुहृत्, अभूत्, प्रतिगर्जताम्, अयोहृदयः, 'अभूत्' ॥ ९ ॥

सुधा—वसुधाधिपाः = पृथिवीपतयः,राजान इति यावत्। रघूद्वहात् = रघुनेतुः, रघुकुलपतेरिति यावत्। दशरथादित्यर्थः। उदयम् = अभ्युदयम्, अस्तमयं = नाशगतिम्, च, 'इति' उभयं = द्वयम्, आनशिरे = प्रापुः, हि = यतः, सः = पूर्वोक्तः, दशरथ इति यावत्। निदेशं = शासनम्, अलङ्घयताम् = अक्राम्यतां, अतिरस्कुर्वतामिति यावत्। सुहृत् = मित्रम्, अभूत् = अभवत्, प्रतिगर्जतां = प्रतिस्पर्धिनाम्, अयोहृदयः = लोहमनाः, कठोरचित्त इति यावत्। अभूदिति शेषः ॥ ९ ॥

कोशः—'अववादस्तु निर्देशो निदेशः शासनं च सः। शिष्टिश्चाज्ञा च' इति, 'अथ मित्रं सखा सुहृत्' इति, 'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी' इति चामरः ॥ ९ ॥

समासादि—अयनमयः, अस्तम् ( अव्ययम् ) अय इत्यस्तमयस्तमस्तमयम्। उद्वहतीत्युद्वहः, रघूणामुद्वह इति रघूद्वहस्तस्मात् रघूद्वहात् ( त० पु० )। वसुधाया अधिपा इति वसुधाधिपाः ( त० पु० )। लङ्घयन्तीति लङ्घयन्तः, न लङ्घयन्त इत्यलङ्घयन्तस्तेषामलङ्घयताम्। शोभनं हृदयमस्येति स सुहृत्। अय इव हृदयं यस्य स अयोहृदयः ( ब० व्री० )। प्रतिगर्जन्तीति प्रतिगर्जन्तस्तेषां प्रतिगर्जताम् ॥ ९ ॥

व्याकरणम्—अयम् = इण् (गतौ-णित्), अच्। आनशिरे = अशू (व्याप्तौ + सङ्घाते च-ऊकारेत्), लिट् + 'तस्मान्नुड् द्विहलः' इति नुट्। अलङ्घयतां = न + लघि + णिच् + शतृ ॥ ९ ॥

वाच्यपरिवर्तनम्—वसुधाधिपैः, रघूद्वहात्, उदयम्, अस्यमयं, च, 'इति' उभयम्, आनशे, हि, तेन, निदेशम्, अलङ्घयतां, सुहृदा, अभावि, प्रतिगर्जताम्, अयोहृदयेन, 'अभावि' ॥ ९ ॥

तात्पर्यार्थः—राजानो दशरथाद् वृद्धिं नाशञ्चेति द्वयं लेभिरे, यस्मात् सः आज्ञामलङ्घयतां मित्रमभूत्, प्रतिस्पर्धिनां कठिनचित्तोऽभूत् ॥ ९ ॥

भावार्थः—राजाओंने दशरथ से उन्नति और नाश ये दोनों को प्राप्त किया, क्यों कि वह ( दशरथ ) आज्ञा उल्लंघन न करने वालों का मित्र और सामना करनेवालों का कठिन चित्त वाला हुआ ॥ ९ ॥

अथ दशरथ एकेनैव रथेन समुद्रपर्यन्तां भूमिमजयदित्याह—

**अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः।**
**जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥ १० ॥**

सञ्जीविनी—अजयदिति। अधिज्यशरासनः ज्यामधिरूढम् अधिज्यं शरासनं यस्य स दशरथ उदधिनेमिं समुद्रवेष्टनां मेदिनीमेकरथेनाजयत्, स्वयमेकरथेनाजैषीदित्यर्थः। गजवती गजयुक्ता जवेन तीव्रा जवाधिका हया यस्यां सा चमूस्त्वस्य नृपस्य केवलं जयमघोषयदप्रथयत्। स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ॥ १० ॥

अन्वयः—अधिज्यशरासनः, सः, एकरथेन, उदधिनेमिं, मेदिनीम्, अजयत्, गजवती, जवतीव्रहया, चमूः, तु, अस्य, केवलं, जयम्, अघोषयत् ॥ १० ॥

सुधा—अधिज्यशरासनः = ज्यारोपितकार्मुकः, सः = पूर्वोक्तः, दशरथ इति यावत्। एकरथेन = अद्वितीयस्यन्दनेन, उदधिनेमिं = समुद्रपर्यन्ताम्, मेदिनीम् = पृथ्वीम्, अजयत् = अजैषीत्। गजवती = कुञ्जरवती, हस्तियुक्तेति यावत्। जवतीव्रहया = वेगाधिकाश्वा, चमूः = सेना, तु, अस्य = दशरथस्य, केवलम् = एकं, जयं = विजयम्, अघोषयत् = घोषयाञ्चकार ॥ १० ॥

कोशः—'रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे' इत्यनेकार्थसंग्रहः। 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः। 'जवः स्याद् वेगवेगिनोः' इत्यनेकार्थसंग्रहः। 'ध्वजिनी वाहि-

सेना पृतनानीकिनी चमूः' इत्यमरः ॥ १० ॥

समासादि--एकश्चासौ रथ इत्येकरथस्तेनैकरथेन ( क० धा० )। उदधेर्नेमिरित्युदधिनेमिस्तामुदधिनेमिम् ( त० पु० ) । ज्यायामधिगतमधिज्यम्, अधिज्यं शरासनं यस्य स अधिज्यशरासनः ( ब० व्री० )। गजो विद्यतेऽस्या इति गजवती। जवेन तीव्रा हया यस्याः सा जवतीव्रहया ( ब० व्री० ) ॥ १० ॥

व्याकरणम्--अजयत्=अ+जि ( जये ), लङ् । अघोषयत्=अ+घुषिर् ( विशब्दने-इरित् ), णिच्+लङ् ॥ १० ॥

वाच्यपरिवर्तनम्--अधिज्यशरासनेन, तेन, एकरथेन, उदधिनेमिः, मेदिनी, अजीयत, गजवत्या, जवतीव्रहयया, चम्वा, तु, अस्य, केवलः, जयः, अघोष्यत ॥ १० ॥

तात्पर्यार्थः—ज्यारोपितकार्मुकः स दशरथः समुद्रवेष्टनां पृथिवीमेकस्यन्दनेनाजयत्, हस्तियुक्ता वेगेन तीव्राश्वा सेना तु अस्य दशरथस्य केवलं विजयमप्रथयत् । अर्थात्–अस्य महीपतेः सेना उपकरणमात्रमभूत् ॥ १० ॥

भाषाऽर्थः—धनुष पर प्रत्यंचा चढ़ाये उस ( दशरथ ) ने एक रथ से समुद्रपर्यन्त पृथ्वी को जीता, हाथी और बड़े वेगवान् घोड़े वाली सेना, तो इस ( दशरथ ) का केवल जय को घोषित किया ॥ १० ॥

अथ दशरथस्य समुद्रा विजयदुन्दुभितां व्यधादित्याह—

अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसम्पदः ॥ ११ ॥

सञ्जीविनी—अवनिमिति । वरूथिना गुप्तिमता, 'वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम्' इति सज्जनः । एकरथेनाद्वितीयरथेनावनिं जितवतो धनुर्भृतो नरवाहनसम्पदः कुबेरतुल्यश्रीकस्य तस्य दशरथस्य घनरवा मेघसमघोषा अर्णवा विजयदुन्दुभितां किल ययुः । अर्णवान्तविजयीत्यर्थः ॥ ११ ॥

अन्वयः—वरूथिना, एकरथेन, अवनिं, जितवतः, धनुर्भृतः, नरवाहनसम्पदः, तस्य, घनरवा, अर्णवाः, विजयदुन्दुभितां, ययुः, किल ॥ ११ ॥

सुधा—वरूथिना=रथगुप्तिमता, एकरथेन=अद्वितीयस्यन्दनेन, अवनिं=पृथ्वीं, जितवतः=जेतुः, धनुर्भृतः=धानुष्कस्य, नरवाहनसम्पदः=पौलस्त्यसमलक्ष्मीकस्य, तस्य=पूर्वोक्तस्य, दशरथस्येति यावत् । घनरवाः=अम्बुदतुल्यस्वनाः, अर्णवाः=समुद्राः, विजयदुन्दुभितां=जयभेरित्वं, ययुः=प्रापुः, किल, किलेति निश्चये ॥ ११ ॥

कोशः—'वरूथो रथगुप्तौ स्यात् वरूथं चर्मवेश्मनोः' इति मेदिनी । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे' इति हैमः । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति, 'किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः' इति, 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' इति चामरः ॥ ११ ॥

समासादि—व्रियते रथोऽनेनेति वरूथः, सोऽस्यास्तीति वरूथी तेन वरूथिना । धनुर्बिभर्तीति धनुर्भृत्तस्य धनुर्भृतः । विजयस्य दुन्दुभिरिति विजयदुन्दुभिस्तस्य भावो विजयदुन्दुभिता तां विजयदुन्दुभिताम् । घनस्य रव इव रवो येषां ते घनरवाः (ब०व्री०) । नरो वाहनमस्येति नरवाहनस्तस्य सम्पद् इव सम्पद्यस्य स तस्य नरवाहनसम्पदः ( ब० व्री० ) ॥ ११ ॥

व्याकरणम्—जितवतः=जि ( जये ), क्तवतुः । ययुः=या ( प्रापणे ), लिट् ॥ ११ ॥

वाच्यपरिवर्तनम्—वरूथिना, एकरथेन, अवनिं, जितवतः, धनुर्भृतः, नरवाहनसम्पदः, तस्य, घनरवैः, अर्णवैः, विजयदुन्दुभिता, यये, किल ॥ ११ ॥

तात्पर्यार्थः—परशस्त्राभिघातरक्षार्थं लोहादिनिर्मितावरणयुक्तेन अद्वितीयस्यन्दनेन पृथिवीं

जितवतो धनुर्धरस्य कुबेरतुल्यलक्ष्मीकस्य तस्य दशरथस्य मेघतुल्यघोषाः समुद्रा विजयदुन्दुभितां ययुः ॥ ११ ॥

भाषार्थः—वरूथ ( दूसरे के शस्त्र आदि से रक्षा के लिये लोह आदि से आवरण) वाले एकरथ से पृथ्वीको जीतने वाले धनुषधारी, कुबेर के समान लक्ष्मीवान उस ( दशरथ ) के, मेघ के समान शब्द करता हुआ समुद्र विजय का नगाड़े पनको प्राप्त हुआ ॥ ११ ॥

अथ दशरथो बाणवृष्ट्या शत्रुबलं नाशितवानित्याह—

शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरंदरः ।
स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः ॥ १२ ॥

मल्लिनाथी—शमितेति । पुरंदर इन्द्रः शतकोटिना शतास्रिणा कुलिशेन वज्रेण शिखरिणां पर्वतानां शमितपक्षबलो विनाशितपक्षसारः नवतामरसाननो नवपङ्कजाननः, 'पङ्केरुहं तामरसम्' इत्यमरः । स दशरथः शरवृष्टिमुचा इषुवर्षमुचा स्वनवता धनुषा द्विषां शमितो नाशितः पक्षः सहायो बलं च येन स तथोक्तः, 'पक्षः सहायेऽपि' इत्यमरः ॥ १२ ॥

अन्वयः—पुरन्दरः, शतकोटिना, कुलिशेन, शिखरिणां, शमितपक्षबलः, नवतामरसाननः, सः, शरवृष्टिमुचा, स्वनवता, धनुषा, द्विषां, 'शमितपक्षपक्षबलः' ॥ १२ ॥

सुधा—पुरन्दरः = इन्द्रः, शतकोटिना = शतास्रिणा, कुलिशेन = वज्रेण, शिखरिणां = पर्वतानां, (१)शमितपक्षबलः = विनाशितपत्त्रसारः, नवतामरसाननः = नवकमलवन्मुखः, सः = पूर्वोक्तः, दशरथ इति यावत् । शरवृष्टिमुचा = बाणवर्षसृजा, स्वनवता = शब्दवता, धनुषा = चापेन, द्विषां = शत्रूणां, शमितपक्षबल इति शेषः । अत्र पक्षे पक्षपदस्य सहायं बलं च नाशितवानित्यर्थः ॥ १२ ॥

कोशः—'गरुत्पक्षच्छदाः पत्त्रं पतत्रं च तनूरुहम्' इति, 'ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इति चामरः । पक्षस्तु मासार्धे गृहसाध्ययोः । चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्च ये । पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे' इति हैमः ॥ १२ ॥

समासादि—पक्षस्य बलमिति पक्षबलम् ( त० पु० ), शमिते पक्षबले येन स शमितपक्षबलः ( ब० व्री० ) । दशरथपक्षे—पक्षश्च बलञ्चेति पक्षबले ( द्व० ), शमिते पक्षबले येन सः शमितपक्षबलः ( ब० व्री० ) । शतं कोटिर्यस्य स तेन शतकोटिना (ब० व्री०) । शिखरमेषां सन्तीति शिखरिणस्तेषां शिखरिणाम् । पुरं दारयतीति पुरन्दरः । शरस्य वृष्टिरिति शरवृष्टिस्तं मुञ्चतीति शरवृष्टिमुक् तेन शरवृष्टिमुचा (त० पु०) । स्वनो विद्यते यस्यासौ तेन स्वनवता । नवं च तत्तामरसमिति नवतामरसम् ( क०धा० ), तद्वदाननं यस्य स नवतामरसाननः ( ब० व्री० ) ॥ १२ ॥

व्याकरणम्—शमित = शमु ( उपशमे-उकारेत् ), क्तः + इट् । पुरंदरः = पुर् + दृ + णिच् + 'पूः सर्वयोर्दारिसहोः' इति खच् , 'वाचंयमपुरन्दरौ च' इति निपातितः ॥ १२ ॥

वाच्यपरिवर्तनम्—पुरन्दरेण, शतकोटिना, कुलिशेन, शिखरिणां, शमितपक्षबलेन, 'अभूयत' नवतामरसाननेन, तेन, शरवृष्टिमुचा, स्वनवता, धनुषा, द्विषां, 'शमितपक्षबलेन—'अभूयत' ॥ १२ ॥

तात्पर्यार्थः—इन्द्रः शतास्रिणा वज्रेण पर्वतानां पक्षबलं नाशितवान् , नवकमलवन्मुखः स दशरथः बाणवृष्टिमुचा शब्दवता धनुषा शत्रूणां सहायं बलं च नाशितवान् ॥ १२ ॥

भाषार्थः—इन्द्र ने सैकड़ों कोटिवाले वज्रों से पर्वतों के पक्ष बल का नाश किया, ( और ) नये कमल के समान मुख वाले उस ( दशरथ ) ने बाण वर्षाने वाले धनुष से शत्रुओं के ( सहायक और बल को नाश किया ) ॥ १२ ॥

---

(१) अत्रत्या पौराणिकी कथा द्विषष्ठितमे पृष्ठे टिप्पण्यामवलोकनीया ॥

अथ राजानः दशरथपदद्वयम् अलङ्कृतैर्मस्तकैरस्पृशन्नित्याह—

**चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन्।**
**नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम्॥ १३॥**

सञ्जीविनी—चरणयोरिति। शतशो नृपतयोऽखण्डितपौरुषं तं दशरथं मरुतो देवाः शतमखं यथा शतक्रतुमिव नखरागेण चरणनखकान्त्या समृद्धिभिः संपादितर्द्धिभिर्मुकुटरत्नमरीचिभिश्चरणयोरस्पृशन्। तं प्रणेमुरित्यर्थः॥ १३॥

अन्वयः—शतशः, नृपतयः, अखण्डितपौरुषं, तं, मरुतः, शतमखं, यथा, नखरागसमृद्धिभिः, मुकुटरत्नमरीचिभिः, चरणयोः, अस्पृशन्॥ १३॥

सुधा—शतशः = शताधिकसंख्याकाः, नृपतयः = राजानः, अखण्डितपौरुषम् = अविनष्टपराक्रमं, तं = दशरथं, मरुतः = देवाः, शतमखं = शतक्रतुम्, इन्द्रमित्यर्थः। यथा = इव, नखरागसमृद्धिभिः = चरणनखकान्तिवर्द्धितर्द्धिभिः, मुकुटरत्नमरीचिभिः = किरीटगतमणिप्रभाभिः, चरणयोः = पादयोः, अस्पृशन् = पस्पर्शुः, दशरथं प्रणेमुरित्यर्थः॥ १३॥

कोशः—'अथ मुकुटं किरीटं पुंनपुंसकम्' इत्यमरः। 'मरुद् देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी। 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः॥ १३॥

समासादि—नखानां राग इति नखरागस्तस्य समृद्धयस्ताभिर्नखरागसमृद्धिभिः ( त० पु० )। मुकुटस्य रत्नानीति मुकुटरत्नानि तेषां मरीचय इति मुकुटरत्नमरीचयस्ताभिः मुकुटरत्नमरीचिभिः ( त० पु० )। नृणां पतय इति नृपतयः ( त० पु० )। शतं मखा यस्य स शतमखस्तं शतमखम् ( ब० व्री० )। पुरुषस्य भावः पौरुषम्, अखण्डितं पौरुषं यस्य स तमखण्डितपौरुषम् ( ब० व्री० )॥ १३॥

व्याकरणम्—समृद्धि = सम् + ऋधु ( वृद्धौ—उकारेत् ) क्तिन्। अस्पृशन् = अ + स्पृश + लङ्। पौरुषं = पुरुष + अण्॥ १३॥

वाच्यपरिवर्तनम्—शतशः, नृपतिभिः, अखण्डितपौरुषः, सः, मरुद्भिः, शतमखः, यथा, नखरागसमृद्धिभिः, मुकुटरत्नमरीचिभिः, चरणयोः, अस्पृश्यत॥ १३॥

तात्पर्यार्थः—शतशो राजानोऽखण्डितपराक्रमं तं दशरथं देवा इन्द्रमिव पदनखकान्त्या संवर्द्धितर्द्धिभिर्मुकुटमणिप्रभाभिश्चरणयोः पस्पर्शुः। अर्थात् दशरथं प्रणेमुः॥ १३॥

भाषाऽर्थः—सैकड़ों राजा लोग नष्ट नहीं हुये पौरुष वाले उस(दशरथ) को, देवलोग इन्द्र को जैसे (चरण) के नखों की प्रभा से बढ़ी हुई कान्तिवाली मुकुट के रत्नों की प्रभा से चरणों को स्पर्श करते हैं वैसे स्पर्श किये। याने दशरथ को प्रणाम किये॥ १३॥

अथ दशरथः शत्रुभूतान् राज्ञो विजित्य पुनरयोध्यामागत इत्याह—

**निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन्।**
**समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम्॥ १४॥**

सञ्जीविनी—निववृत इति। स दशरथः सचिवैः संप्रयोजितैः कारिता बालसुतानामञ्जलयो यैस्तान्, स्वयमसम्मुखागतानित्यर्थः। अनलकान्हतभर्तृकतयाऽलकसंस्कारशून्यान्सपत्नपरिग्रहाञ्छत्रुपत्नीः, 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। समनुकम्प्यानुगृह्यालकानवमाम् अलकानगरादन्यूनाम्, अलति भूषयति स्वस्थानमित्यलकां पुरीमयोध्यां प्रति महार्णवानां रोधसः पर्यन्तान्निववृते। शरणागतवत्सल इति भावः॥ १४॥

अन्वयः—सः, सचिवकारितबालसुताञ्जलीन्, अनलकान्, सपत्नपरिग्रहान्, समनुकम्प्य, अलकानवमां, पुरीं, 'प्रति' महार्णवरोधसः, निववृते॥ १४॥

सुधा—सः = पूर्वोक्तः, दशरथ इति यावत्। सचिवकारितबालसुताञ्जलीन् = मन्त्रिनिष्पादितनवार्भककरसम्पुटान्, अनलकान् = चूर्णकुन्तलसंस्काररहितान्, सपत्नपरिग्रहान् =

रिपुकलत्रान्, शत्रुपत्नीरिति यावत् । समनुकम्प्य = अनुगृह्य, अलकानवमाम् = अलकानगर्यनधमां, कुबेरपुर्यन्यूनामिति यावत् । पुरीं = नगरीम्, अयोध्यामिति यावत् । प्रतीति शेषः । महार्णवरोधसः = महासमुद्रतटप्रान्तात्, निववृते = निवृत्तः ॥ १४ ॥

कोशः—'कूलं रोधश्च तीरञ्च प्रतीरं च तटं त्रिषु' इति, 'मन्त्री सहायः सचिवौ' इति चामरः । 'अञ्जलिस्तु कुडवे करसम्पुटे' इति हैमः । 'परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे' इत्यजयः । 'अलका कुबेरपुर्यामस्त्रियां चूर्णकुन्तले' इति मेदिनी । 'निकृष्टप्रतिकृष्टाऽर्वरेफयाप्याऽवमाऽधमाः' इत्यमरः ॥ १४ ॥

समासादि—महाँश्चासावर्णव इति महार्णवः ( क० धा० ), तस्य रोध इति महार्णवरोधस्तस्मात् महार्णवरोधसः ( त० पु० ) । बालाश्च ते सुता इति बालसुताः ( क० धा० ), तेषामञ्जलय इति बालसुताञ्जलयः ( त० पु० ), सचिवैः कारिता बालसुताञ्जलयो यैस्ते सचिवकारितबालसुताञ्जलयस्तान् सचिवकारितबालसुताञ्जलीन् (ब० व्री०) । परिगृह्णन्तीति परिग्रहाः, सपत्नानां परिग्रहा इति तान् सपत्नपरिग्रहान् (त०पु०) । न अवमेत्यनवमा, अलकाया अनवमेति तामलकानवमाम् ( त० पु० ) ॥ १४ ॥

व्याकरणम्—निववृते = नि + वृतु (वर्तने-उकारेत्), लिट् । समनुकम्प्य = सम् + अनु + कपि ( चलने-इकारेत् ), क्त्वा, ल्यबादेशः । परिग्रह = परि + ग्रह ( उपादाने ), 'विभाषा ग्रहः' इत्यप् ॥ १४ ॥

वाच्यपरिवर्तनम्—तेन, सचिवकारितबालसुताञ्जलीन्, अनलकान्, सपत्नपरिग्रहान्, समनुकम्प्य, अलकानवमां, पुरीं, 'प्रति' महार्णवरोधसः निववृते ॥ १४ ॥

तात्पर्यार्थः—स दशरथः मन्त्रिभिः कारितबालपुत्राञ्जलीन् स्वामिनो हतत्वादलकसंस्काराशून्याः शत्रुपत्नीः समनुकम्प्य कुबेरपुरीतुल्यामयोध्यापुरीं प्रति महासमुद्रतीरान्निवृत्तः ॥१४॥

भाषाऽर्थः—वह ( दशरथ ) मंत्रियों से कराई हुई बालकों की अंजुरी ( और ) टेढ़े बालों के संस्कार रहित शत्रुओं की स्त्रियों पर कृपा करके कुबेर की नगरी से कुछ कम नहीं अयोध्या पुरी ( अपनी राजधानी ) को महासमुद्र के तटप्रान्त से लौट आया ॥ १४ ॥

अथ द्वादशमण्डलेश्वरोऽपि दशरथः श्रियं चञ्चलां वीक्ष्य अप्रमत्तोऽभूदित्याह—

उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।
श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः ॥ १५ ॥

सञ्जीविनी—उपगत इति । अनुदितमनुच्छ्रितमन्यत्स्वच्छत्रातिरिक्तं सितातपवारणं श्वेतच्छत्रं यस्य सः, अनलसोमयोरग्निचन्द्रयोः समे द्युती तेजःकान्ती यस्य स तथोक्तः, श्रियं लक्ष्मीं रन्ध्रेऽन्यायालस्यादिरूपे छले चलां चञ्चलामवेक्ष्यावलोक्य, श्रीर्हि केनचिन्निमेषेण पुमांसं परिहरति । स दशरथो मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वमुपगतोऽपि, चक्रवर्ती सन्नपीत्यर्थः । "अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका ॥ रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः ॥ आद्यः क्षत्रियभेदे तु मतो मुख्यमहीपतौ ॥" इति केशवः । अनलसोऽप्रमत्तोऽभूत् । 'अजितमस्ति नृपास्पदम्' इति पाठान्तरेऽजितं नृपास्पदमस्तीति बुद्ध्या अनलसोऽप्रमत्तोऽभूत् । विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवानिव । जागरूक एवावर्तिष्टेत्यर्थः । द्वादशराजमण्डलं तु कामन्दकेनोक्तम्—"अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथाऽरिमित्रमित्रं च विजगीषोः पुरःसरा ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥" इति । "अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासाराः ॥" इति । पृष्ठतश्चत्वारः मध्यमोदासी-

नौ द्वौ विजिगीषुरेकः, इत्येवं द्वादशराजमण्डलम् । तत्रोदासीनमध्यमोत्तरश्चक्रवर्ती दशरथश्चे-तादृगिति तात्पर्यार्थः ॥ १९ ॥

अन्वयः—अनुदितान्यसितातपवारणः, अनलसोमसमद्युतिः सः, मण्डलनाभिताम्, उपगतः, अपि, श्रियं, च, रन्ध्रचलाम्, अवेक्ष्य, अनलसः, अभूत् ॥ १९ ॥

सुधा—अनुदितान्यसितातपवारणः = अनुच्छ्रितान्यश्वेतच्छत्रः, अनलसोमसमद्युतिः = अग्निचन्द्रतुल्यतेजःकान्तिः, सः = दशरथः, मण्डलनाभितां = द्वादशराजमण्डलमुख्यमहीपतित्वं, चक्रवर्तित्वमिति यावत् । उपगतः = प्राप्तः, अपि, श्रियं = लक्ष्मीं, च, रन्ध्रचलाम् = आलस्यादिच्छिद्रचञ्चलां, अवेक्ष्य = अवलोक्य, अनलसः = आलस्यरहितः, अप्रमत्त इति यावत् । अभूत् = अभवत् ॥ १९ ॥

कोशः—'मण्डलो बिम्बदेशयोः । भुजङ्गभेदे परिधौ शुनि द्वादशराजके' इति, 'नाभिः क्षत्रप्रधानयोः । चक्रमध्ये मृगमदे प्राण्यङ्गे मुख्यराजि च' इति च हैमः । 'रन्ध्रं तु दूषणे छिद्रे' इति विश्वः । 'मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः' इत्यमरः ॥ १९ ॥

समासादि—नाभेर्भावो नाभिता, मण्डलस्य नाभितेति मण्डलनाभिता तां मण्डलनाभिताम् ( त० पु० ) । आतपो वार्यतेऽनेनेत्यातपवारणं, सितञ्च तदातपवारणमिति सितातपवारणम् ( क० धा० ), नोदितमन्यत्सितातपवारणं यस्य स अनुदितान्यसितातपवारणः ( ब० व्री० ) । रध्रे चलामिति रन्ध्रचलाम् (त०पु०) । न अलस इत्यनलसः, अनलश्च सोमश्चेत्यनलसोमौ ( द्व० ), तयोः समे द्युती यस्य स अनलसोमसमद्युतिः ( ब० व्री०) ॥१९॥

व्याकरणम्—वारणं = वृञ् ( वरणे—ञित् ), णिच् + करणे ल्युट् । अवेक्ष्य = अव + ईक्ष ( दर्शने ), क्त्वा, ल्यबादेशः ॥ १९ ॥

वाच्यपरिवर्तनम्—अनुदितान्यसितातपवारणेन, अनलसोमसमद्युतिना, तेन, मण्डलनाभिताम्, उपगतेन, अपि, श्रियं, च, रन्ध्रचलाम्, अवेक्ष्य, अनलसेन, अभावि ॥ १९ ॥

तात्पर्यार्थः—उन्नतश्वेतच्छत्रवान् अग्निचन्द्रतुल्यतेजःकान्तिः स दशरथो द्वादशराजमण्डलस्य प्रधानमहीपतित्वमवाप्याऽपि लक्ष्मीं अन्यायालस्यादिच्छिद्रे चञ्चलां विलोक्य अप्रमत्तोऽभूत् ॥ १९ ॥

भाषाऽर्थः—ऊंचे ( केवल ) अपने ही श्वेत छत्र वाला, अग्नि और चन्द्रमा के समान तेज और कान्तिवान वह ( दशरथ ) बारह प्रकार के राजमंडल का मुख्य राजा ( चक्रवर्ती ) होकर भी लक्ष्मी को ( आलस्य आदि ) छिद्र में चलायमान होनेवाली देख कर आलस्य रहित हुआ ॥ १९ ॥

अथ लक्ष्मीर्विष्णाविव दशरथे स्थिराऽभूदित्याह—

> तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता ।
> नृपतिमन्यमसेवत देवता सकमला कमलाघवमर्थिषु ॥ १६ ॥

सञ्जीविनी—तमिति । पत्यौ व्रतं नियमो यस्याः सा पतिव्रता सकमला कमलहस्ता देवता लक्ष्मीरर्थिषु विषयेऽलाघवं लघुत्वरहितम् , अपराङ्मुखमित्यर्थः । ककुत्स्थकुलोद्भवं तं दशरथमात्मभवं पुरुषं पुरि शरीरे उषतीति पुरुषः तं विष्णुं चापहाय त्यक्त्वा अन्यं कं नृपतिमसेवत ? । कमपि नासेवतेत्यर्थः । विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराऽभूदित्यर्थः ॥ १६ ॥

अन्वयः—पतिव्रता, सकमला, देवता, अर्थिषु, अलाघवं, ककुत्स्थकुलोद्भवं, तम्, आत्मभवं, पुरुषं, च, अपहाय, अन्यं, कं, नृपतिम् , असेवत ? ॥ १६ ॥

सुधा—पतिव्रता = साध्वी, सकमला = सपद्मा, कमलहस्तेति यावत् । देवता = लक्ष्मीः, अर्थिषु = याचकेषु, अलाघवं = लघुत्वरहितम्, उदारमित्यर्थः । ककुत्स्थकुलोद्भवं = ककुत्स्थ-

नृपवंशोत्पन्नं, तं = पूर्वोक्तं, दशरथमिति यावत । आत्मभवं = स्वयम्भु , पुरुषं = विष्णुं, च, अपहाय = त्यक्त्वा, अन्यं = परं, विष्णुदशरथातिरिक्तमिति यावत् । कं, नृपतिं = राजानम्, असेवत ? = सेवितवान् ?, कमपि नासेवतेत्यर्थः ॥ १६ ॥

कोशः--'सुचरित्रा तु सती साध्वी पतिव्रता' इत्यमरः । 'अर्थी पुमान् याचके स्यात्सेवके च विवादिनि' इति मेदिनी ॥ १६ ॥

समासादि—ककुदि तिष्ठतीति ककुत्स्थस्तस्य कुलमिति ककुत्स्थकुलम् ( त० पु० ), ककुत्स्थकुले उद्भवो यस्य स तं ककुत्स्थकुलोद्भवम् (ब०व्री०) । पत्यौ व्रतं यस्याः सा पतिव्रता ( ब० व्री० ) । नृणां पतिरिति नृपतिस्तं नृपतिम् ( त० पु० ) । कमलेन सहिता सकमला । लघोर्भावो लाघवं न लाघवमित्यलाघवम् ॥ १६ ॥

व्याकरणम्--अपहाय = अप + हा + ल्यप् । उद्भवम् = उत् + भू + 'ऋदोरप्' इत्यप्, असेवत = अ + षिवृ + लङ् । लाघव = लघु + अण् । अर्थिषु = अर्थ + इनिः ॥ १६ ॥

वाच्यपरिवर्तनम्--पतिव्रतया, सकमकया, देवतया, अर्थिषु, अलाघवं, ककुत्स्थकुलोद्भवं, तम्, आत्मभवं, पुरुषं, च, अपहाय, अन्यः, कः, नृपतिः, असेव्यत ॥ १६ ॥

तात्पर्यार्थः--पतिसेवातत्परा कमलहस्ता लक्ष्मीः याचकेषु विषये उदारं ककुत्स्थकुलोत्पन्नं तं दशरथं स्वयम्भुवं विष्णुं स त्यक्त्वाऽन्यं कं भूपतिमसेवत ?, न कमपीति ॥ १६ ॥

भाषाऽर्थः--पतिव्रता कमल के सहित ( हाथ वाली ) लक्ष्मी, याचकों के ( विषय में ) लाघव रहित ककुत्स्थके वंशमें उत्पन्न उस ( दशरथ ) को ( और ) स्वयं उत्पन्न होने वाले पुरुष ( विष्णु ) को छोड़ कर दूसरे किस राजा की सेवा करती थी ?, ( याने किसी को नहीं ) ॥ १६ ॥

अथ सुमित्राकौसल्याकैकेय्यो दशरथं पतिं प्रापुरित्याह--

**तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः ।**
**मगधकोसलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् ॥ १७ ॥**

सञ्जीविनी—तमिति । पतिरेव देवता यासां ताः पतिदेवताः पतिव्रताः मगधाश्च कोसलाश्च केकयाश्च ताञ्जनपदाञ्छासतीति तच्छासिनः तेषां राज्ञां दुहितरः पुत्र्यः, सुमित्राकौसल्याकैकेय्य इत्यर्थः । अत्र क्रमान विवक्षितः । अहितरोपितमार्गणं शत्रुनिखातशरम्, 'कदम्बमार्गणशराः' इत्यमरः । तं दशरथं शिखरिणां क्ष्माभृतां दुहितरः आ समन्तादपगच्छन्तीति अथ वा आपेनाप्सम्बन्धिना वेगेन गच्छन्तीत्यापगाः, इति क्षीरस्वामी । नद्यः सागरमिव पतिं भर्तारमलभन्त प्रापुः ॥ १७ ॥

अन्वयः--पतिदेवताः, मगधकोसलकेकयशासिनां, दुहितरः, अहितरोपितमार्गणं, तं, शिखरिणां, 'दुहितरः' आपगाः, सागरम् , इव, पतिम् , अलभन्त ॥ १७ ॥

सुधा—पतिदेवताः = पतिव्रताः, मगधकोसलकेकयशासिनां = मगधकोसलकेकयाख्यदेशाधिपतीनां, दुहितरः = पुत्र्यः, सुमित्राकौसल्याकैकेय्य इत्यर्थः । अहितरोपितमार्गणं = शत्रुनिखातशरं, तं = पूर्वोक्तं, दशरथमिति यावत् । शिखरिणां = पर्वतानां, दुहितर इति शेषः । आपगाः = स्रवन्त्यः, नद्य इति यावत् । सागरं = समुद्रम् , इव = यथा, पतिं = स्वामिनम् , अलभन्त = लब्धवत्यः ॥ १७ ॥

कोशः—'स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा' इत्यमरः । 'सुता तु दुहिता पुत्री' इति त्रिकाण्डशेषः । 'द्विड् विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः । 'मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि' इति हैमः ॥ १७ ॥

समासादि--पतिरेव देवता यासान्ताः पतिदेवताः ( ब० व्री० ) । शिखरमेषां सन्तीति शिखरिणस्तेषां शिखरिणाम् । अपां समूह आपं तेन गच्छन्तीत्यापगाः । मगधाश्च कोस-

शाश्च केकयाश्चेति मगधकोसलकेकयाः ( जनपदाः ), तान् शासतीति मगधकोसलकेकयशासिनस्तेषां मगधकोसलकेकयशासिनाम् ( द्व० )। न हिता इत्यहितास्तेषु रोपिता मार्गणा येन स अहितरोपितमार्गणस्तम् अहितरोपितमार्गणम् ( ब० व्री० ) ॥ १७ ॥

व्याकरणम्—अलभन्त = अ + लभ + लङ् । शिखरिणां = शिखर + इनिः । आपगाः = अप् + अण् + गम् + डः + टाप् ॥ १७ ॥

वाच्यपरिवर्तनम्—पतिदेवताभिः, मगधकोसलकेकयशासिनां, दुहितृभिः, अहितरोपणमार्गणः, सः, शिखरिणां, 'दुहितृभिः' आपगाभिः, सागरः, इव, पतिः, अलभ्यत ॥ १७ ॥

तात्पर्यार्थः—यथा पर्वतानां सुता नद्यः स्वामिनं समुद्रं प्राप्नोति, तथा पतिव्रताः मगधकोसलकेकयाधिपतीनां राज्ञां सुताः सुमित्राकौसल्याकैकेय्यः शत्रुषु निखातशरं तं दशरथं स्वामिनं प्रापुः ॥ १७ ॥

भाषार्थः—पतिव्रता मगध, कोसल, केकय देश के राजाओं की लड़कियों ( सुमित्रा कौसल्या कैकई ) ने शत्रुओं पर बाण चलाने वाले उस (दशरथ) को, जैसे पर्वतों की पुत्रियां नदियां समुद्र को पति प्राप्त करती हैं, वैसे पति प्राप्त किया ॥ १७ ॥

अथ दशरथस्तिसृभिः स्त्रीभिः सह कथमिव शुशुभ इत्याह—

**प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः ।**
**उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः ॥ १८ ॥**

सञ्जीविनी—प्रियतमाभिरिति। अरीन् घ्नन्तीत्यरिहणो रिपुघ्नाः, हन्तेः क्विप्, "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति नियमस्य प्रायिकत्वात् । यथाह न्यासकारः—"प्रायिकश्चायं नियमः, क्वचिदन्यस्मिन्नप्युपपदे दृश्यते—मधुहा । प्रायिकत्वं च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते" इति । तेषु योगेषूपायेषु विचक्षणो दक्षः, 'योगः संनहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। इन्द्रेऽपि योज्यमेतत् । असौ दशरथस्तिसृभिः प्रियतमाभिः सह प्रजा विनिनीषुर्विनेतुमिच्छुस्तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिरेव सह भुवमुपगतो हरिहय इन्द्र इव बभौ ॥ १८ ॥

अन्वयः—अरिहयोगविचक्षणः, असौ, तिसृभिः, प्रियतमाभिः, सह, प्रजाः, विनिनीषुः, शक्तिभिः, 'सह' भुवम् , उपगतः, हरिहयः, इव, बभौ ॥ १८ ॥

सुधा—अरिहयोगविचक्षणः = शत्रुनाशोपायप्रवीणः, असौ = एषः, दशरथ इति यावत् । तिसृभिः = त्रित्वसंख्याविशिष्टाभिः, प्रियतमाभिः = स्त्रीभिः, सह = सार्द्धं, प्रजाः = जनान् , विनिनीषुः = विनेतुमिच्छुः, तिसृभिः = त्रित्वसंख्याविशिष्टाभिः, शक्तिभिः = प्रभावोत्साहमन्त्राख्यशक्तिभिः, सहेति शेषः । भुवं = पृथिवीम् , भूलोक इति यावत् । उपगतः = आगतः, (१) हरिहयः = सुवर्णकान्तितुल्याश्ववान् , इन्द्र इति यावत । इव = यथा, बभौ = शुशुभे १८॥

कोशः—'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । 'योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे । विस्रब्धघातिनि द्रव्योपायसंनहनेऽप्यपि' इति विश्वः ॥ १८ ॥

समासादि—हरिर्हयो यस्य स हरिहयः ( ब० व्री० ) । अरीन् घ्नन्तीत्यरिहणः, अरिहणश्च ते योगा इत्यरिहयोगाः ( क० धा० ), तेषु विचक्षण इत्यरिहयोगविचक्षणः ( त० पु० ) ॥ १८ ॥

व्याकरणम्—बभौ = भा + लिट् । विनिनीषुः = वि + णीञ् ( प्रापणे—ञित् ), सन् + 'सनाशंसभिक्ष उः' इत्युः । विचक्षणः = वि + चक्षिङ् ( व्यक्तायां वाचि—इदित् ) , 'अनु-

(१) 'त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु । हरिः स वर्णतोऽश्वस्तु पीतकौशेयसप्रभः' इति शालिहोत्रम् ॥

दात्तेतश्च हलादेः' इति युच् ॥ १८ ॥

वाच्यपरिवर्तनम्—अरिहयोगविचक्षणेन, अनेन, तिसृभिः, प्रियतमाभिः, सह, प्रजाः, विनिनीपुणा, तिसृभिः, शक्तिभिः, 'सह' भुवम्, उपगतेन, हरिहयेन, इव, बभे ॥ १८ ॥

तात्पर्यार्थः—शत्रोर्नाशविधौ दक्षोऽसौ दशरथः तिसृभिः स्त्रीभिः सार्द्धं प्रजाः विनेतुमिच्छुः, तिसृभिः प्रभावमन्त्रोत्साहशक्तिभिः सह पृथ्वीमागतः इन्द्र इव शुशुभे ॥ १८ ॥

भाषाऽर्थः—शत्रुओं के नाश के उपाय में चतुर यह ( दशरथ ) तीनों स्त्रियों के साथ प्रजा के विनयन की इच्छासे तीनों ( प्रभाव, मंत्र, उत्साह ) शक्तियों के सहित पृथ्वीपर आये हुये मानो इन्द्र के समान शोभित हुआ ॥ १८ ॥

अथ दशरथ इन्द्रसहायतां विधाय देवाङ्गनाभिः स्वकीर्तिमगापयदित्याह—

**स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।**

**स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ १९ ॥**

सञ्जीविनी— स इति । महारथः स दशरथः संयुगमूर्ध्नि रणाङ्गणे मघवत इन्द्रस्य सहायतां प्रतिपद्य प्राप्य शरैरवधूतभया निर्वर्तितत्रासाः सुरवधूरुच्छ्रितं स्वभुजवीर्यमगापयत्किल खलु । गायतेः शब्दकर्मत्वात्, "गतिबुद्धि" इत्यादिना सुरवधूनामपि कर्मत्वम् ॥ १९ ॥

अन्वयः—महारथः, सः, संयुगमूर्ध्नि, मघवतः, सहायतां, प्रतिपद्य, शरैः, अवधूतभयाः, सुरवधूः, उच्छ्रितं, स्वभुजवीर्यम्, अगापयत्, किल ॥ १९ ॥

सुधा = महारथः = दशसहस्रधानुष्कयोधयिता, सः = पूर्वोक्तः, दशरथ इति यावत् । संयुगमूर्ध्नि = सङ्ग्रामभूमौ, मघवतः = इन्द्रस्य, सहायतां = सहायकत्वं, प्रतिपद्य = अवाप्य, शरैः = बाणैः, अवधूतभयाः = निर्वर्तितभीतयः, सुरवधूः = देवाङ्गनाः, उच्छ्रितम् = उच्चं, स्वभुजवीर्य = निजबाहुसामर्थ्यम्, अगापयत् = गापयाञ्चकार, किल, किलेति निश्चये ॥१९॥

कोशः—'संप्रहाराभिसम्पातकलिसंस्फोटसंयुगाः । अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः' इत्यमरः । 'वीर्यं प्रभावे शुक्रे च तेजः सामर्थ्ययोरपि' इति मेदिनी ॥ १९ ॥

समासादि—संयुगस्य मूर्धेति संयुगमूर्धा तस्मिन् संयुगमूर्ध्नि ( त० पु० ) । सहायानां समूहः सहायता तां सहायताम् । स्वस्य भुजाविति स्वभुजौ तयोर्वीर्यमिति स्वभुजवीर्यम् ( त० पु० ) । सुराणां वध्व इति ताः सुरवधूः ( त० पु० ) । अवधूतं भयं यासां ता अवधूतभयाः ( ब० व्री० ) ॥ १९ ॥

व्याकरणम्—सहायतां = सहाय + 'गजसहाभ्यां चेति वक्तव्यम्' इति वार्तिकेन तल् । अगापयत् = अ + गै + णिच् + पुक् + लङ् ॥ १९ ॥

वाच्यपरिवर्तनम्—महारथेन, तेन, संयुगमूर्ध्नि, मघवतः, सहायतां, प्रतिपद्य, शरैः, अवधूतभयाः, सुरवधूः, उच्छ्रितं, स्वभुजवीर्यम्, अगाप्यत, किल ॥ १९ ॥

तात्पर्यार्थः—दशसहस्रधानुष्कयोधयिता स दशरथः समरप्राङ्गणे इन्द्रस्य सहायतां प्रतिपद्य बाणैर्निर्वर्तितत्रासा देवाङ्गनाः उच्चं स्वभुजसामर्थ्यमगापयत् ॥ १९ ॥

भाषाऽर्थः—महारथी वह ( दशरथ ) रणक्षेत्रमें इन्द्र का सहायक हो बाणों से डर मिटा दी गयी देवाङ्गनाओं से ऊँचे अपनी बाहुओं के सामर्थ्य को गवाया ॥ १९ ॥

अथ दशरथस्तमसासरयून्द्योस्तटान् सुवर्णयूपेन शोभिनश्चकारेत्याह—

**क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः ।**

**कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटाः ॥ २० ॥**

सञ्जीविनी—क्रतुष्विति । क्रतुष्वश्वमेधेषु विसर्जितमौलिनाऽवरोपितकिरीटेन, दीक्षितेन मुण्डितेन भाव्यं त्यक्तमुकुटेन वा, भूपा हि यज्ञेषु वपनस्थाने मौलिं विसर्जयन्ति । 'यावद्यज्ञमध्वर्युरेव राजा भवति' इति राजश्चिह्नत्यागविधानादित्यभिप्रायः । 'मौलिः किरीटे धम्मिल्ले'

इति विश्वः । भुजसमाहृतदिग्वसुना भुजार्जितदिगन्तसम्पदा, अनेन क्षत्रियस्य विजितत्व मुक्तम् । नियमार्जितधनत्वं सद्विनियोगकारित्वं च सूच्यते । वितमसा तमोगुणरहितेन तेन दशरथेन तमसा च सरयूश्च नद्यौ तयोस्तटाः कनकयूपानां समुच्छ्रयेण समुन्नमनेन शोभिनः कृताः कनकमयत्वं च यूपानां शोभार्थं विध्यभावात्, 'हेमयूपस्तु शोभिकः' इति यादवः ॥ २० ॥

अन्वयः—क्रतुषु, विसर्जितमौलिना, भुजसमाहृतदिग्वसुना, वितमसा, तेन, तमसासरयूतटाः, कनकयूपसमुच्छ्रयशोभिनः, कृताः ॥ २० ॥

सुधा—क्रतुषु = यज्ञेषु अश्वमेधेष्विति यावत् । विसर्जितमौलिना = त्याजितकिरीटेन, राज्ञो हि यज्ञेषु मुण्डनस्थाने मुकुटं विसर्जयन्तीति भावः । भुजसमाहृतदिग्वसुना = बाह्वर्जिताशान्तधनेन, वितमसा = तमोगुणशून्येन, तेन = पूर्वोक्तेन, दशरथेनेति यावत् । तमसासरयूतटाः = तमसासरयूनदीकूलाः, कनकयूपसमुच्छ्रयशोभिनः = सुवर्णस्तम्भसमुन्नमनशोभायुक्ताः, कृताः = अकारि, यज्ञेषु सुवर्णमययूपानां विध्यभावात् शोभाऽर्थं कृता इत्यर्थः ॥ २० ॥

कोशः—'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः । 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्द्धसु' इति, 'वसु स्वर्णं रत्ने वृद्ध्योषधौ धने' इति, 'तमो राहौ गुणे पापे ध्वान्ते' इति च हैमः ॥ २० ॥

समासादि—विसर्जितो मौलिर्येन स विसर्जितमौलिस्तेन विसर्जितमौलिना (ब० व्री०) । दिशां वसूनीति दिग्वसूनि ( त० पु० ), भुजाभ्यां समाहृतानि दिग्वसूनि येन स तेन भुजसमाहृतदिग्वसुना ( ब० व्री० ) । कनकस्य यूप इति कनकयूपस्तस्य समुच्छ्रयस्तेन शोभन्त इति ते कनकयूपसमुच्छ्रयशोभिनः ( त० पु० ) । विगतं तमो यस्य स तेन वितमसा ( ब० व्री० ) । तमसा च सरयूश्चेति तमसासरय्वौ ( द्व० ), तयोस्तटा इति तमसा सरयूतटाः ( त० पु० ) ॥ २० ॥

व्याकरणम्—समाहृत = सम् + आ + हृञ् ( हरणे-ञित् ), क्तः । समुच्छ्रय = सम् + उत् + श्रिञ् ( सेवायाम्-ञित् ), 'एरच्' इत्यच् ॥ २० ॥

वाच्यपरिवर्तनम्—क्रतुषु, विसर्जितमौलिः, भुजसमाहृतदिग्वसुः, वितमाः, सः, तमसा सरयूतटान्, कनकयूपसमुच्छ्रयशोभिनः, कृतवान् ॥ २० ॥

तात्पर्यार्थः—अश्वमेधयज्ञेषु त्याजितमुकुटो बाह्वर्जितदिगन्तसम्पतः तमोगुणविहीनः स दशरथस्तमसासरयूतीरान् सुवर्णयूपानां समुन्नमनेन शोभिनः कृतवान् ॥ २० ॥

भाषाऽर्थः—(अश्वमेध) यज्ञ में मुकुट को उतारने ( और ) बाहुओं से दिशाओं के धन लाने वाले तमोगुण से रहित उस ( दशरथ ) ने तमसा और सरयू नदी के तीरों को सुवर्ण के ऊँचे खंभों से शोभायमान किया ॥ २० ॥

अथ शङ्करो यज्ञदीक्षितां दशरथतनुमधितिष्ठन्नधिकमभासयदित्याह—

**अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम् ।**

**अधिवसंस्तनुमध्वरदीक्षितामसमभासमभासयदीश्वरः ॥ २१ ॥**

सञ्जीविनी—अजिनेति । ईश्वरो भगवानष्टमूर्तिरजिनं कृष्णाजिनं दण्डमौदुम्बरं बिभर्तीति तमजिनदण्डभृतम्, "कृष्णाजिनं दीक्षयति औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति" इति वचनात् । कुशमयी मेखला यस्यास्तां कुशमेखलां शरमयी मौञ्जी वा मेखला, 'तया यजमानं दीक्षयति' इति विधानात् । प्रकृते कुशग्रहणं क्वचित्प्रतिनिधिदर्शनात्कृतम् । यतगिरं वाचंयमाम्, "वाचं यच्छति" इति श्रुतेः । मृगशृङ्गं परिग्रहः कण्डूयनसाधनं यस्यास्ताम्, "कृष्णविषाणेन कण्डूयते" इति श्रुतेः । अध्वरदीक्षितां संस्कारविशेषयुक्तां तनुं दाशरथीमधिवसन्नधितिष्ठन्सन् असमा भासो दीप्तयो यस्मिन्कर्मणि तद्यथा तथा अभासयद्भासयति स्म ॥ २१ ॥

अन्वयः—ईश्वरः, अजिनदण्डभृतं, कुशमेखलां, यतगिरं मृगशृङ्गपरिग्रहाम्, अध्वरदीक्षितां, तनुम्, अधिवसन्, 'सन्' असमभासम्, अभासयत् ॥ २१ ॥

सुधा—ईश्वरः = शङ्करः, भगवानष्टमूर्तिरिति यावत्। अजिनदण्डभृतं = कृष्णाजिनौदुम्बरदण्डधारिणीं, कुशमेखलां = दर्भमेखलां, शरमयीमेखलां मौञ्जीं वा, यतगिरं = वाचंयमां, मृगशृङ्गपरिग्रहां = कण्डूयनार्थं गृहीतहरिणविषाणाम्, अध्वरदीक्षितां = यज्ञदीक्षितां, तनुं = मूर्तिं, दाशरथीं तनुमिति यावत्। अधिवसन् = अधितिष्ठन्,सन्निति शेषः। असमभासम् = अधिककान्तिम्, ( यथा तथा ) अभासयत् = भासयति स्म ॥ २१ ॥

कोशः—'कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः' इति हैमः। 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ' इति मेदिनी। 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। 'ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः' इत्यमरः ॥ २१ ॥

समासादि—अजिनञ्च दण्डञ्चेत्यजिनदण्डे ( द्व० ), अजिनदण्डे बिभर्तीत्यजिनदण्डभृत्तामजिनदण्डभृतम्। कुशमयी मेखला यस्याः सा तां कुशमेखलाम् ( ब० व्री० )। यता गीर्यस्याः सा तां यतगिरम् (ब० व्री०)। मृगस्य शृङ्गमिति मृगशृङ्गम् (त० पु०), मृगशृङ्गं परिग्रहो यस्याः सा तां मृगशृङ्गपरिग्रहाम् ( ब० व्री० )। अधिवसतीत्यधिवसन्। अध्वरे दीक्षितेत्यध्वरदीक्षिता तामध्वरदीक्षिताम् ( त० पु० )। असमा भासो यस्मिन् कर्मणि तत् असमभासम् ( ब० व्री० ) ॥ २१ ॥

व्याकरणम्—परिग्रहां = परि + ग्रह + अप् + टाप्। अधिवसन् = अधि + वस + शतृ। दीक्षितां = दीक्षा + इतच् + टाप्। अभासयत् = अ + भास + णिच् + लङ् ॥ २१ ॥

वाच्यपरिवर्तनम्—ईश्वरेण, अजिनदण्डभृतं, कुशमेखलां, यतगिरं, मृगशृङ्गपरिग्रहाम्, अध्वरदीक्षितां, तनुम्, अधिवसता, 'सता' असमभासम्, अभास्यत ॥ २१ ॥

तात्पर्यार्थः—भगवानष्टमूर्तिः कृष्णाजिनौदुम्बरदण्डधारिणीं दर्भमेखलां वाचंयमां कण्डूयनार्थं धृतहरिणशृङ्गां यज्ञदीक्षितां संस्कारविशेषयुक्तां तनुमधिवसन् सन्नधिकदीप्ति भासयति स्म ॥ २१ ॥

भाषार्थः—( भगवान अष्टमूर्ति ) शिवने मृगचर्म और दंड धारण किये कुश की मेखला वाले, मौन, हरिण का सींग ग्रहण किये, यज्ञ में दीक्षित दशरथ सम्बन्धी शरीर में वसते हुये अधिक कान्तिसे शोभित कराया ॥ २१ ॥

अथ यज्ञान्ते स्नातो दशरथ इन्द्रायैव नमयति स्म, नान्यस्मै इत्याह—

**अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः।**
**नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २२ ॥**

सञ्जीविनी—अवभृथेति। अवभृथेन प्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितो देवसमाजाधिष्ठानार्हः स दशरथ उन्नतं शिरो वनमुचे जलवर्षिणे, 'जलं नीरं वनं सत्वम्' इति शाश्वतः। नमुचेररये केवलमिन्द्रायैव नमयति स्म। लोकरक्षार्थं वृष्टेरपेक्षितत्वादिन्द्रमेवानमच्छिरः, न कस्मै चिदन्यस्मै मानुषायेत्यर्थः ॥ २२ ॥

अन्वयः—अवभृथप्रयतः, नियतेन्द्रियः, सुरसमाजसमाक्रमणोचितः, सः, उन्नतं, शिरः, वनमुचे, नमुचेः, अरये, केवलं, नमयति स्म ॥ २२ ॥

सुधा—अवभृथप्रयतः = यज्ञान्तस्नानेन पूतः, नियतेन्द्रियः = जितेन्द्रियः, सुरसमाजसमाक्रमणोचितः = देवसङ्घाधिष्ठानयोग्यः, सः = दशरथः, उन्नतम् = उच्चं, शिरः = उत्तमाङ्गं, वनमुचे = जलवर्षिणे, नमुचेः = नमुचिनाम्नो दैत्यस्य, अरये = शत्रवे, इन्द्रायेति यावत्। केवलम् = एकं, नमयति स्म = अनमयत्, नान्यस्मै जनायेत्यर्थः ॥ २२ ॥

कोशः—'दीक्षान्तोऽवभृथो यज्ञः' इति, 'पवित्रः प्रयतः पूतः' इति चामरः। 'वनं

नपुंसकं नीरे निवापालयकानने' इति मेदिनी । 'जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः' इत्यमरः ॥ २२ ॥

समासादि—अवभृथेन प्रयत इत्यवभृथप्रयतः ( त० पु० ) । नियतमिन्द्रियं यस्य स नियतेन्द्रियः ( ब० व्री० ) । समजनं समाजः, सुराणां समाज इति सुरसमाजः तस्मिन्समाक्रमणमिति सुरसमाजसमाक्रमणं तस्मिन्नुचित इति सुरसमाजसमाक्रमणोचितः ( त० पु० ) । वनं मुञ्चतीति वनमुक् तस्मै वनमुचे । न मुञ्चतीति नमुचिस्तस्य नमुचेः ॥ २२ ॥

व्याकरणम्—प्रयतः = प्र + यम् + अकर्मकत्वात्कर्तरि क्तः । समाक्रमण = सम् + आ + क्रमु ( पादविक्षेपे—उकारेत् ), भावे ल्युट् । नमयति = णम ( प्रह्वत्वे शब्दे ), णिच् + लट् । नमुचिः = 'नभ्राणनपान्न' इत्यादिना नस्य प्रकृतिभावः ॥ २२ ॥

वाच्यपरिवर्तनम्—अवभृथप्रयतेन, नियतेन्द्रियेण, सुरसमाजसमाक्रमणोचितेन, तेन, उन्नतं, शिरः, वनमुचे, नमुचेः, अरये, केवलं, नम्यते स्म ॥ २२ ॥

तात्पर्यार्थः—यज्ञान्तस्नानेन पवित्रः जितेन्द्रियः देवसभायामधिष्ठानयोग्यः स दशरथः उन्नतं शिरः जलवर्षिणे नमुचिदैत्यशत्रवे इन्द्रायैव केवलमनमयन्नान्यस्मै पुरुषायेति ॥ २२ ॥

भाषाऽर्थः—यज्ञ के अन्तिम स्नान से पवित्र इन्द्रियों को जीतने वाले देवताओं की सभामें बैठने के योग्य उस (दशरथ) ने, ऊंचे शिरको केवल नमुचि दैत्य के शत्रु जल वर्षाने वाले ( इन्द्र ) के लिये केवल नमाया ॥ २२ ॥

अथ दशरथः सूर्यस्याभिमुखस्थिता रणधूलयो दैत्यरुधिरेण दूरीकृतवानित्याह—

असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता ।
दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥

सञ्जीविनी—असकृदिति । एकरथेनाद्वितीयरथेन तरस्विना बलवता हरिहयस्येन्द्रस्याग्रसरेण धनुर्भृता दशरथेनासकृद्बहुशो दिनकरस्याभिमुखाः, अभिमुखस्थिता इत्यर्थः । रणरेणवः सुरद्विषां दैत्यानां रुधिरेण रुरुधिरे निवारिताः ॥ २३ ॥

अन्वयः—एकरथेन, तरस्विना, हरिहयाग्रसरेण, धनुर्भृता, दिनकराभिमुखाः, रणरेणवः, सुरद्विषां, रुधिरेण, असकृत्, रुरुधिरे ॥ २३ ॥

सुधा—एकरथेन = अद्वितीयस्यन्दनेन, तरस्विना = बलवता, हरिहयाग्रसरेण = इन्द्रपुरोगामिना, धनुर्भृता = धानुष्केन, दिनकराभिमुखाः = सूर्यसन्मुखस्थिताः, रणरेणवः = समरधूलयः, सुरद्विषां = देवशत्रूणां, दैत्यानामिति यावत् । रुधिरेण = रक्तेन, असकृत् = बहुवारं, रुरुधिरे = दूरीकृताः ॥ २३ ॥

कोशः—'तरो जवे बले' इति हैमः । 'पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसरा । पुरोगमः पुरोगामी' इति, 'रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्' इति, 'द्विट्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इति चामरः ॥ २३ ॥

समासादि—एकश्चासौ रथ इत्येकरथस्तेनैकरथेन (क०धा०) । तरो विद्यतेऽस्येति तरस्वी तेन, तरस्विना । हरिर्हयो यस्य स हरिहयस्तस्याग्रे सरतीति हरिहयाग्रसरस्तेन हरिहयाग्रसरेण (त०पु०) । करोतीति करः, दिनस्य कर इति दिनकरस्तस्याभिमुखा इति दिनकराभिमुखाः ( त० पु० ) । रणस्य रेणव इति रणरेणवः ( त० पु० ) । सुरं द्विषन्तीति सुरद्विषस्तेषां सुरद्विषाम् ॥ २३ ॥

व्याकरणम्—तरस्विना = तरस् + विनि । दिनकर = दिन + कृ + 'दिवाविभा' इत्यादिना टः । रुरुधिरे = रुधिर्(आवरणे-इरित ), लिट् । सुरद्विषां = सु + द्विष (अप्रीतौ), क्विप् ॥२३॥

वाच्यपरिवर्तनम्—एकरथो, तरस्वी, हरिहयाग्रसरः, धनुर्भृत्, दिनकराभिमुखान्, रणरेणून्, सुरद्विषां, रुधिरेण, असकृत्, रुरोध ॥ २३ ॥

तात्पर्यार्थः—अद्वितीयस्यन्दनो बलवान् इन्द्रस्य पुरोगामी धानुष्को दशरथः सूर्य्यस्य सन्मुखस्थितान् समरधूलीन् देवशत्रूणां दैत्यानां रुधिरेण बहुवारं दूरीकृतवान् ॥ २३ ॥

भाषाऽर्थः—एकरथी, बली, इन्द्र के आगे चलने वाले, धनुषधारी ( दशरथने ) सूर्य के सामने स्थित युद्ध की धूलिको देवताओं के शत्रुओं ( दैत्यों ) के रुधिर से बहुत बार दूर किया ॥ २३ ॥

अथ वसन्तर्तुः दशरथं सेवितुमिव नवैः पुष्पैरुपलक्षितः सन् समागत इत्याह—

**अथ समावव्रृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् ।**
**यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥**

सञ्जीविनी—अथेति । अथ यमकुबेरजलेश्वरवज्रिणांधर्मराजधनदवरुणामरेन्द्राणां समा धूर्भारो यस्य स समधुरः, माध्यस्थवितरणसंनियमनैश्वर्येस्तुल्यकक्ष इत्यर्थः । "ऋक्पूरब्धूःपथामानक्षे" इत्यनेन समासान्तोऽच्प्रत्ययः । तं समधुरम् अञ्चितविक्रमं पूजितपराक्रममेकनराधिपं तं दशरथं सेवितुमिव मधुर्वसन्तः, 'मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रमे' इति विश्वः । नवैः कुसुमैरुपलक्षितः सन् समाववृते समागतः । "रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम्" इति वचनात्पुष्पसमेतो राजानं सेवितुमागत इत्यर्थः ॥ २४ ॥

अन्वयः—अथ, मधुः, यमकुबेरजलेश्वरवज्रिणां, समधुरम् , अञ्चितविक्रमम् , एकनराधिपं, तं, सेवितुम् , इव, नवैः, कुसुमैः, 'उपलक्षितः—सन्' समाववृते ॥ २४ ॥

सुधा—अथ = अनन्तरं, मधुः = वसन्तर्तुः, यम( १ )कुबेरजलेश्वरवज्रिणां = धर्मराजधनाधिपवरुणवासवानां, समधुरं = तुल्यभारम्, अञ्चितविक्रमं = पूजितशक्तिसम्पत्तिम्, अञ्चितपराक्रममिति यावत् । एकनराधिपम् = अद्वितीयराजानं, चक्रवर्त्तिनमिति यावत् । तं = दशरथं, सेवितुम् = उपासितुम्, इव = यथा, नवैः = नूतनैः, कुसुमैः = पुष्पैः, 'उपलक्षितः-सन्' इति शेषः । समाववृते = समागतः ॥२४॥

कोशः—'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति मेदिनी । 'धर्मराजः पितृपतिः समवर्ती परेतराट् । कृतान्तो यमुनाभ्राता शमनो यमराड्यमः' इति, 'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इति चामरः । 'विक्रमः शक्तिसम्पत्तिः क्रान्तिमात्रं च विक्रमः' इति धरणिः ॥२४॥

समासादि—नराणामधिप इति नराधिपः ( ष० पु० ), एकश्चासौ नराधिप इत्येकनराधिपः ( क० धा० ) । कुत्सितं बेरं ( शरीरम् ) अस्येति कुबेरः, यमश्च जलेश्वरश्च वज्री चेति ते तेषां यमकुबेरजलेश्वरवज्रिणाम् ( द्व० ) । समा धूर्यस्य स समधुस्तं समधुरम् (ब० व्री०) । अञ्चितो विक्रमो यस्य सोऽञ्चितविक्रमस्तमञ्चितविक्रमम् ( ब० व्री० ) ॥ २४ ॥

व्याकरणम्—समाववृते = सम् + आ + वृतु ( वर्तने-उकारेत् ) , लिट् । सेवितुं = षेवृ ( सेवने-ऋकारेत ), तुमुन् ॥ २४ ॥

वाच्यपरिवर्तनम्—अथ, मधुना, यमकुबेरजलेश्वरवज्रिणां, समधुरम् , अञ्चितविक्रमम्, एकनराधिपम् , तं, सेवितुम् , इव, नवैः, कुसुमैः, समाववृते ॥ २४ ॥

तात्पर्यार्थः—तदनन्तरं वसन्तर्तुः धर्मराजकुबेरवरुणेन्द्राणां तुल्यभारं पूजितपराक्रमं चक्रवर्तिनं तं दशरथमुपासितुमिव नवैः पुष्पैरुपलक्षितः सन् समागतः ॥ २४ ॥

भाषाऽर्थः—उसके बाद वसंत ऋतु यमराज, कुबेर, वरुण और इन्द्र के समान भारवाले, पूजितबल, चक्रवर्ती उस ( दशरथ ) की सेवा के लिये मानो नये फूलों के साथ आया ॥२४॥

अथोत्तरां दिशं गन्तुमिच्छुः सूर्यो दक्षिणां दिशं तत्याजेत्याह—

**जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।**

---

( १ ) कुत्सायां क्विति शब्दोऽयं शरीरं बेरमुच्यते ।
कुबेरः कुशरीरत्वान्नाम्ना तेनैव सोऽङ्कितः । इति वायुपुराणम् ॥

दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् ॥ २५ ॥

सञ्जीविनी—जिगमिषुरिति । धनदाध्युषितां कुबेराधिष्ठितां दिशं जिगमिषुर्गन्तुमिच्छुः रथयुजा सारथिनाऽरुणेन परिवर्तितवाहनो निवर्तिताश्वो रविः हिमस्य निग्रहैर्निराकरणैर्दिनमुखानि विमलयन्विशदयन् मलयं नगं मलयाचलमत्यजत्, दक्षिणां दिशमत्याक्षी-

अन्वयः—धनदाध्युषितां, दिशं, जिगमिषुः, रथयुजा, परिवर्तितवाहनः, रविः, हिमनिग्रहैः, दिनमुखानि, विमलयन्, 'सन्' मलयं, नगम्, अत्यजत् ॥ २५ ॥

सुधा—धनदाध्युषितां = धनाधिपाधिष्ठितां, कुबेराश्रितामिति यावत् । दिशम् = आशां, जिगमिषुः = गन्तुमिच्छुः, रथयुजा = सारथिना, अरुणेनेति यावत् । परिवर्तितवाहनः = निवर्तिताश्वः, रविः = सूर्यः, हिमनिग्रहैः = तुषारदूरीकरणैः, दिनमुखानि = दिवसप्रारम्भाः, प्रभातानीति यावत् । विमलयन् = विशदयन्, प्रकाशयन्निति यावत् । सन्निति शेषः । मलयं = मलयाख्यं, नगं = पर्वतम्, अत्यजत् = तत्याज, दक्षिणां दिशं जहावित्यर्थः ॥ २५ ॥

कोशः—'मनुष्यधर्मा धनदो राजराजो धनाधिपः' इति, 'तुषारस्तुहिनं हिमम्' इति चामरः ॥ २५ ॥

समासादि—धनं ददातीति धनदस्तेनाध्युषितेति धनदाध्युषिता तां धनदाध्युषिताम् ( त० पु० ) । रथं युनक्तीति रथयुक् तेन रथयुजा । परिवर्तितं वाहनं यस्य स परिवर्तितवाहनः ( ब० व्री० ) । दिनस्य मुखानीति दिनमुखानि ( त० पु० ) । हिमस्य निग्रहा इति हिमनिग्रहास्तैर्हिमनिग्रहैः ( त० पु० ) । विमलयतीति विमलयन् ॥ २५ ॥

व्याकरणम्—जिगमिषुः = गम् + सन् + 'सनाशंस' इत्यादिना उः । अध्युषिता = अधि + वस + क्तः + सम्प्रसारणम् + टाप् । परिवर्तित = परि + वृतु + णिच् + क्तः । विमलयन् = वि + मल ( धारणे ), णिच् + शतृ । अत्यजत् = अ + त्यज + लङ् ॥ २५ ॥

वाच्यपरिवर्तनम्—धनदाध्युषितां, दिशं, जिगमिषुणा, रथयुजा, परिवर्तितवाहनेन, रविणा, हिमनिग्रहैः, दिनमुखानि, विमलयता, 'सता' मलयः, नगः, अत्यज्यत ॥ २५ ॥

तात्पर्यार्थः—कुबेराधिष्ठितां दिशं गन्तुमिच्छुः सारथिनाऽरुणेन निवर्तिताश्वः सूर्यस्तुपारनिवारणैर्प्रभातानि प्रकाशयन् मलयपर्वतं तत्याज । अर्थात् दक्षिणां दिशमत्यजत् ॥ २५ ॥

भाषाऽर्थः—कुबेरसे बसी हुई ( उत्तर ) दिशा को जाने की इच्छा वाले, अरुण से घोड़े लौटाये हुये सूर्यने पाले को निवारण करने से प्रातःकाल को स्वच्छ करते हुये मलयाचल को त्याग दिया । ( याने दक्षिण दिशा को छोड़ा ) ॥ २५ ॥

अथ वृक्षबहुलां वनस्थलीमवतीर्य वसन्तर्तुराविरभूदित्याह—

कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् ।

इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ २६ ॥

सञ्जीविनी—कुसुमेति । आदौ कुसुमजन्म ततो नवपल्लवाः तदनु, "अनुर्लक्षणे" इति कर्मप्रवचनीयत्वाद्द्वितीया । यथासंख्यं तदुभयानन्तरं षट्पदानां कोकिलानां च कूजितम् इत्येवम्प्रकारेण यथाक्रमं क्रममनतिक्रम्यपुष्पप्रियो भृङ्गः पल्लवप्रियः कोकिलः इति क्रमोक्तेरयमाशयः । द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीमवतीर्य मधुर्वसन्त आविरभूत् । केषांचिद् द्रुमाणां पल्लवप्राथम्यात्केषांचित्कुसुमप्राथम्यान्नोक्तक्रमस्य दृष्टविरोधः ॥ २६ ॥

अन्वयः—'आदौ' कुसुमजन्म, ततः, नवपल्लवाः, तदनु, षट्पदकोकिलकूजितम्, इति, यथाक्रमं, द्रुमवतीं, वनस्थलीम्, अवतीर्य, मधुः, आविरभूत् ॥ २६ ॥

सुधा—'आदौ' कुसुमजन्म = पुष्पोत्पत्तिः, ततः = तदनन्तरं, नवपल्लवाः = नूतनकिसलयानि, तदनु = ततः पश्चात्, षट्पदकोकिलकूजितं = भ्रमरपिकस्वनितम्, इति = इत्थं,

यथाक्रमं = क्रमशः, द्रुमवतीं = वृक्षप्रचुरां, वनस्थलीम् = आरण्यकाकृत्रिमभूमिम्, अवतीर्य = समागत्य, मधुः = वसन्तः, आविरभूत् = प्रादुर्बभूव ॥ २६ ॥

कोशः—'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति, 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इति चामरः ॥ २६ ॥

समासादि—कुसुमानां जन्मेति कुसुमजन्म ( त० पु० )। नवाश्च ते पल्लवा इति नवपल्लवाः ( क० धा० )। षट् पदान्यस्येति षट्पदः, षट्पदाश्च कोकिलाश्चेति षट्पदकोकिलाः ( द्व० ), तेषां कूजितमिति षट्पदकोकिलकूजितम् ( त० पु० )। क्रममनतिक्रम्येति यथाक्रमम् ( अ० भा० )। द्रुमा विद्यन्तेऽस्यामिति द्रुमवती तां द्रुमवतीम्। वनस्य स्थलीति वनस्थली तां वनस्थलीम् ( त० पु० ) ॥ २६ ॥

व्याकरणम्—कूजितं = कूज (अव्यक्ते शब्दे), क्तः। आविरभूत् = आविर् + भू + लुङ्। द्रुमवतीं = द्रुम + प्रचुरार्थे मतुप् + ङीप्। अवतीर्य = अव + तॄ ( प्लवनतरणयोः ), क्त्वा, ल्यबादेशः। स्थलीं = स्थल + 'जानपदकुण्डगोणस्थल' इत्यादिनाऽकृत्रिमार्थे ङीप् ॥२६॥

वाच्यपरिवर्तनम्—'आदौ' कुसुमजन्मना, ततः, नवपल्लवैः, तदनु, षट्पदकोकिलकूजितेन, इति, यथाक्रमं, द्रुमवतीं, वनस्थलीम्, अवतीर्य, मधुना, आविरभावि ॥ २६ ॥

तात्पर्यार्थः—पूर्वं केषाञ्चित् वृक्षाणां पुष्पविकसनेन केषाञ्चिन्नवपल्लवेन ततो भ्रमराणां कोकिलानां च कूजितेन इत्येवंप्रकारेण क्रममनतिक्रम्य वृक्षभूयिष्ठां वनस्थलीमवतीर्य वसन्तः प्रादुर्बभूव ॥ २६ ॥

भाषाऽर्थः—( पहले ) फूलों की उत्पत्ति इसके बाद नये पल्लव फिर भौंरों और कोकिलों के शब्द, इस प्रकार क्रम से बहुत वृक्षों वाली वन की अकृत्रिम भूमि में आकर वसन्त प्रगट हुआ ॥ २६ ॥

अथ भ्रमरादयः सरःकमलिन्याः समीपमाजग्मुरित्याह—

**नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः ।**
**अभिययुः सरसो मधुसम्भृतां कमलिनीमलिनीरपतत्रिणः ॥ २७ ॥**

सञ्जीविनी—नयेति। नयो नीतिरेव गुणः तेन, अथवा नयेन गुणैः शौर्यादिभिश्चोपचितां सतामुपकारः फलं यस्यास्तां सदुपकारफलां भूपतेर्दशरथस्य श्रियमर्थिन इव मधुना वसन्तेन सम्भृतां सम्यक्पुष्टां सरसः सम्बन्धिनीं कमलिनीं पद्मिनीमलिनीरपतत्रिणः अलयो भृङ्गाः नीरपतत्रिणो जलपक्षिणो हंसादयश्च अभिययुः ॥ २७ ॥

अन्वयः—नयगुणोपचितां, सदुपकारफलां, भूपतेः, श्रियम्, अर्थिनः, इव, मधुसम्भृतां, सरसः, कमलिनीम्, अलिनीरपतत्त्रिणः, अभिययुः ॥ २७ ॥

सुधा—नयगुणोपचितां = नीतिशौर्यादिगुणवर्द्धितां, सदुपकारफलां = सज्जनोपकृतिफलिकां, भूपतेः = राज्ञः, दशरथस्येति यावत्। श्रियं = लक्ष्मीम्, अर्थिनः = याचकस्य, इव = यथा, मधुसम्भृतां = वसन्तपरिपुष्टां, सरसः = तडागस्य, कमलिनीं = पद्मिनीम्, अलिनीरपतत्त्रिणः = भ्रमरहंसादिपक्षिणः, अभिययुः = अभिजग्मुः ॥ २७ ॥

कोशः—'अर्थी पुमान् याचके स्यात् सेवके च विवादिनि' इति, 'सरो नीरतडागयोः' इति मेदिनी। 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां च योषिति' इति विश्वः ॥ २७ ॥

समासादि—नय एव गुण इति नयगुणः ( क० धा० ), तेनोपचितेति नयगुणोपचिता तां नयगुणोपचिताम् ( त० पु० ), अथवा—नयश्च गुणाश्चेति नयगुणाः (द्व०), तैरुपचितामिति नयगुणोपचिताम्। भुवः पतिरिति भूपतिस्तस्य भूपतेः ( त० पु० )। उपक्रियत इत्युपकारः, सतामुपकार इति सदुपकारः ( त० पु० )। सदुपकार एव फलं यस्याः सा सदुपकारफला तां सदुपकारफलाम् ( ब० व्री० )। मधुना सम्भृतेति मधुसम्भृता तां मधुसम्भृताम् (त०पु०)।

नीरस्य पतत्त्रिण इति नीरपतत्त्रिणः, अलयश्च नीरपतत्त्रिणश्चेत्यलिनीरपतत्त्रिणः (द्व०) ॥२७॥

व्याकरणम्—उपचिताम् = उप + चिञ् ( चयने—ञित् ), क्तः + टाप् । अभियुयुः = अ-भि + या + लिट् । सम्भृतां = सम् + भृ + क्तः + टाप् ॥ २७ ॥

वाच्यपरिवर्तनम्—नयगुणोपचिता, सदुपकारफला, भूपतेः, श्रीः, अर्थिभिः, इवः, मधुस-म्भृता, सरसः, कमलिनी, अलिनीरपतत्त्रिभिः, अभियये ॥ २७ ॥

तात्पर्यार्थः—यथा नीत्या शौर्यादिगुणैर्बद्धितायाः सज्जनोपकारफलिकायाः दशरथस्य ल-क्ष्म्याः समीपं याचका अभिययुः, तथा वसन्तेन सम्यक् परिपुष्टायास्तडागस्य पद्मिन्याः समीपं भ्रमराः जलपक्षिणः हंसादयश्चाभिययुः ॥ २७ ॥

भाषाऽर्थः—नीति और शौर्य आदि गुणों से बढाई गई सज्जनों के उपकार रूप फल वाली राजाकी लक्ष्मी के समीप जैसे याचक जाते थे, वैसे वसन्त ऋतु से पुष्ट की हुई सरोवर की कमलिनी के समीप भौंरे और जल के ( हंस आदि ) पक्षी आगये ॥ २७ ॥

अथ विलासिनां पल्लवसंतानोऽपि कामोद्दीपनोऽभूदित्याह—

**कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् ।**
**किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥ २८ ॥**

सञ्जीविनी—कुसुममिति । ऋतुरस्य प्राप्त आर्तवम्, "ऋतोरण्" इत्यण् । वनं प्रत्यग्रम-शोकतरोः केवलं कुसुममेव स्मरदीपनमुद्दीपनं न, किन्तु विलासिनां मदयिता मदजनको दयि-ताश्रवणार्पितः किसलयप्रसवोऽपि पल्लवसंतानोऽपि स्मरदीपनोऽभवत् ॥ २८ ॥

अन्वयः—आर्तवं, नवम्, अशोकतरोः, केवलं, कुसुमम्, एव, स्मरदीपनं, न, 'अभूत्' 'किन्तु' विलासिनां, मदयिता, दयिताश्रवणार्पितः, किसलयप्रसवः, अपि, 'स्मरदीपनः-अभूत्' ॥२८॥

सुधा—आर्तवम् = ऋतुजन्यं, वसन्तर्तुसम्बन्धिनमिति यावत् । नवं = नूतनम्, अशोक-तरोः = वञ्जुलवृक्षस्य, केवलम् = एकं, कुसुमं = पुष्पम्, एव, स्मरदीपनं = कामोद्दीपनं, न, अभूदिति शेषः । 'किन्तु' विलासिनां = कामुकानां, मदयिता = मदोत्पादकः, दयिताश्रव-णार्पितः = प्रियाकर्णस्थापितः, किसलयप्रसवः = पल्लवसंतानः, अपि, 'स्मरदीपनोऽभूत्', इति शेषः ॥ २८ ॥

कोशः—'आर्तवं स्त्री रजे पुष्पे क्लीबे स्यादृतुजे त्रिषु' इति मेदिनी । 'वञ्जुलोऽशोके' इति, 'पल्लवोऽस्त्री किसलयम्' इति चामरः । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति मेदिनी । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः ॥ २८ ॥

समासादि—ऋतुरस्य प्राप्त इत्यतिवम् । अशोकस्य तरुरित्यशोकतरुस्तस्याशोकतरोः ( त० पु० ) । दीपयतीति दीपनम्, स्मरस्य दीपनमिति स्मरदीपनम् ( त० पु० ) । किस-लयस्य प्रसव इति किसलयप्रसवः ( त० पु० ) । दयितायाः श्रवणयोरर्पित इति दयिताश्र-वणार्पितः ( त० पु० ) ॥ २८ ॥

व्याकरणम्—आर्तवम् = ऋतु + अण् । दीपनं = दीप + ल्युः । विलासिनां = वि + लस + 'वौ कषलसकत्थस्रम्भः' इति घिनुण् । मदयिता = मद + णिच् + तृच् ॥ २८ ॥

वाच्यपरिवर्तनम्—आर्तवेन, नवेन, अशोकतरोः, केवलेन, कुसुमेन, एव, स्मरदीपनेन, न 'अभूयत' 'किन्तु' विलासिनां, मदयित्रा, दयिताश्रवणार्पितेन, किसलयप्रसवेन, अपि, 'स्मर-दीपनेन—अभावि' ॥ २८ ॥

तात्पर्यार्थः—वसन्तऋतुजन्यमशोकवृक्षस्य केवलं नवपुष्पमेव कामोद्दीपनं नाभूत्, किन्तु विलासिनां मदोत्पादकः प्रियाकर्णस्थापितः पल्लवसन्तानोऽपि कामोद्दीपनोऽभूत् ॥ २८ ॥

भाषाऽर्थः—ऋतुसंबन्धी अशोकवृक्षका केवल नवीन फूल ही कामोद्दीपक नहीं ( हुआ,

किन्तु) विलासियों को मद कराने वाला स्त्रियों के कानों में रक्खा हुआ पल्लव का गुच्छा भी ( कामोद्दीपक हुआ ) ॥ २८ ॥

अथ भ्रमराः कुरबकवृक्षाणां मधूनि पीत्वा गायन्ति स्मेत्याह—

विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः ।
मधुलिहां मधुदानविशारदाः कुरबका स्वकारणतां ययुः ॥ २९ ॥

सञ्जीविनी—विरचितेति । मधुना वसन्तेन विरचिता उपवनश्रियामभिनवाः पत्रविशेषकाः पत्ररचना इव स्थिता मधूनां मकरन्दानां दाने विशारदाश्चतुराः कुरबकास्तरवो मधुलिहां मधुपानां स्वकारणतां ययुः । भृङ्गाः कुरबकाणां मधूनि पीत्वा जगुरित्यर्थः । दानशौण्डानर्थिजनाः स्तुवन्तीति भावः ॥ २९ ॥

अन्वयः—मधुना, विरचिताः, उपवनश्रियाम्, अभिनवाः, पत्रविशेषकाः, इव, 'स्थिताः' मधुदानविशारदाः, कुरबकाः, मधुलिहां, स्वकारणतां, ययुः ॥ २९ ॥

सुधा—मधुना = वसन्तेन, विरचिताः = कल्पिताः, उपवनश्रियाम् = उपवनलक्ष्म्याम्, अभिनवाः = नव्याः, पत्रविशेषकाः = पत्ररचनाः, इव, स्थिता इति शेषः । मधुदानविशारदाः = मकरन्दवितरणचतुराः, कुरबकाः = कुरबकवृक्षाः, रक्तसैरेयका इति यावत् । मधुलिहां = भ्रमराणां, स्वकारणतां = स्वनहेतुतां, ययुः = प्रापुः, प्राप्ते वसन्तसमये भ्रमराः कुरबकवृक्षाणां मधूनि पीत्वा गायन्ति स्मेत्यर्थः । याचकाः दातारं प्रशंसन्त्येवेति भावः ॥ २९ ॥

कोशः—'मधु क्षीरे जले मद्ये क्षौद्रे पुष्परसेऽपि च' इत्यनेकार्थसंग्रहः । 'तस्मिन् कुरबकोऽरुणे' इति, 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति चामरः ॥ २९ ॥

समासादि—उपगतं वनमित्युपवनम्, तस्य श्रीस्तस्यामुपवनश्रियाम् ( त० पु० ) । विशेषा एव विशेषकाः, पत्राणां विशेषका इति पत्रविशेषकाः ( त० पु० ) । मधूनि लिहन्तीति मधुलिहस्तेषां मधुलिहाम् । मधूनां दानमिति मधुदानं तस्मिन् विशारदा इति मधुदानविशारदाः (त० पु०) । कारणस्य भावः कारणता स्वस्य कारणतेति स्वकारणता तां स्वकारणाताम् ( त० पु० ) ॥ २९ ॥

व्याकरणम्—विरचिताः = वि + रच ( प्रतियत्ने ), णिच् + क्तः + टाप् । विशेषकाः = स्वार्थे कः । ययुः = या ( प्रापणे ), लिट् ॥ २९ ॥

वाच्यपरिवर्तनम्—मधुना, विरचितैः, उपवनश्रियाम्, अभिनवैः, पत्रविशेषकैः, इव, 'स्थितैः' मधुदानविशारदैः, कुरबकैः, मधुलिहां, स्वकारणता, यये ॥ २९ ॥

तात्पर्यार्थः—वसन्तेन उपवनशोभायां विरचिता अभिनवाः पत्ररचना इव स्थिताः मकरन्दानां दाने चतुराः कुरबकवृक्षाः भ्रमराणां स्वनहेतुतां प्रापुः ॥ २९ ॥

भाषाऽर्थः—वसन्त से उपवन की शोभा में रचे गये नूतन, पत्ररचना की नाईं स्थित, अपने फूलों के रस देने में चतुर कुरवकवृक्ष भौंरों के शब्द के कारण हुये ॥ २९ ॥

अथ पुष्पोद्गमः भ्रमरैर्बकुलवृक्षं व्याप्तं चकारेत्याह—

सुवदनावदनासवसम्भृतस्तदनुवादिगुणः कुसुमोद्गमः ।
मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः ॥ ३० ॥

सञ्जीविनी—सुवदनेति । सुवदनावदनासवेन कान्तामुखमद्येन संभृतो जनितः, तत्तस्य दोहदमिति प्रसिद्धिः । तस्यासवस्यानुवादी सदृशो गुणो यस्य तदनुवादिगुणः कुसुमोद्गमः कर्ता-मधुलोलुपैरायतपङ्क्तिभिर्दीर्घपङ्क्तिभिर्मधुकरैर्मधुपैः करणैः बकुलो ह्यङ्गनानां मद्यगण्डूषेण पुष्यतीति प्रसिद्धिः । बकुलं बकुलवृक्षमाकुलमकरोत् ॥ ३० ॥

अन्वयः—सुवदनावदनासवसम्भृतः, तदनुवादिगुणः, कुसुमोद्गमः, मधुलोलुपैः, आयतपङ्क्तिभिः, मधुकरैः, बकुलम्, आकुलम्, अकरोत् ॥ ३० ॥

सुधा—सुवदनावदनासवसम्भृतः = कान्तामुखमद्यजनितः, तदनुवादिगुणः = मद्यसदृशगुणवान्, कुसुमोद्गमः = पुष्पाभिनवाङ्कुरः, मधुलोलुपैः = मद्यलोभिभिः, आयतपङ्क्तिभिः = दीर्घश्रेणीभिः, मधुकरैः = भ्रमरैः, वकुलं = केसरवृक्षम्, आकुलं = व्याप्तम्, अकरोत् = कृतवान् ॥ ३० ॥

कोशः—'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति, 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति, 'अथ केसरं । बकुलः' इति चामरः ॥३०॥

समासादि—शोभनं वदनं यस्याः सा सुवदना ( ब० व्री० ), तस्या वदनं तस्यासव इति सुवदनावदनासवस्तेन सम्भृत इति सुवदनावदनासवसम्भृतः (त०पु०) । तस्य अनुवादी गुणो यस्य स तदनुवादिगुणः (ब० व्री०) । कुसुमस्योद्गम इति कुसुमोद्गमः ( त० पु० ) । मधु कुर्वन्तीति मधुकरास्तैर्मधुकरैः । मधुनो लोलुपा इति तैर्मधुलोलुपैः ( त० पु० ) । आयताः पङ्क्तयो येषां ते तैरायतपङ्क्तिभिः ( ब० व्री० ) ॥ ३० ॥

व्याकरणम्—मधुकरैः = मधु + कृ + 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टच् । अकरोत् = अ + कृ + लङ् । आकुलम् = आ + कुल ( संस्त्याने बन्धुषु च ), 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः ॥ ३० ॥

वाच्यपरिवर्तनम्—सुवदनावदनासवसम्भृतेन, तदनुवादिगुणेन, कुसुमोद्गमेन, मधुलोलुपैः, आयतपङ्क्तिभिः, मधुकरैः, वकुलः, आकुलः, अक्रियत ॥ ३० ॥

तात्पर्यार्थः—कान्तामुखमद्येन प्रादुर्भूतः मद्यसदृशगुणवान् पुष्पाभिनवाङ्कुरः ( कर्ता ), मद्यलोभिभिर्दीर्घपङ्क्तिभिर्भ्रमरैः ( करणैः ) वकुलवृक्षं व्याप्तं कृतवान् । वकुलो नवयौवनाया मुखगण्डूषमासाद्य पुष्प्यति ॥ ३० ॥

भाषाऽर्थः—सुन्दर मुख वाली ( स्त्रियों ) के मुख के मद्य से उत्पन्न, उस ( मद्य ) के सदृश गुण वाले पुष्प के मौल ने, मद्य के लोभी दीर्घ पंक्ति वाले भौरों से वकुलवृक्ष (मवशली) को व्याप्त कर दिया । (वकुलवृक्ष युवति स्त्रीके मुख के कुल्ले से फूलता है)॥३०॥

अथ वसन्तलक्ष्म्या पलाशवृक्षे दत्तः कुड्मलसमूहोऽशोभतेत्याह—

**उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके ।**
**प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ३१ ॥**

सञ्जीविनी—उपहितमिति । शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके पलाशवृक्षे, 'पलाशः किंशुकः पर्णः' इत्यमरः । उपहितं दत्तं मुकुलजालं कुड्मलसंहतिः मदेन यापितलज्जया ऽपसारितत्रपया प्रमदया प्रणयिनि प्रियतम उपहितं नखक्षतमेव मण्डनं तदिव अशोभत ॥३१॥

अन्वयः—शिशिरापगमश्रिया, किंशुके, उपहितं, मुकुलजालं, मदयापितलज्जया, प्रमदया, प्रणयिनि, 'उपहितं' नखक्षतमण्डनम्, इव, अशोभत ॥ ३१ ॥

सुधा—शिशिरापगमश्रिया = वसन्तलक्ष्म्या, किंशुके = पलाशवृक्षे, उपहितं = दत्तं, मुकुलजालं = कुड्मलवृन्दं, मदयापितलज्जया = मदेन दूरीकृतत्रपया, प्रमदया = कामिन्या, प्रणयिनि = प्रियतमे, उपहितमिति शेषः । नखक्षतमण्डनं = नखव्रणभूषणम्, इव, अशोभत = शुशोभ ॥ ३१ ॥

कोशः—'कुड्मलो मुकुलोऽस्त्रियाम्' इति, 'जालं समूह आनाये गवाक्षः क्षारकावपि' इति, 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् । मण्डनं च' इति चामरः ॥ ३१ ॥

समासादि—शिशिरस्यापगमो यस्मिन् स शिशिरापगमः ( ब० व्री० ), तस्य श्रीस्तया शिशिरापगमश्रिया ( त० पु० ) । मुकुलस्य जालमिति तन्मुकुलजालम् ( त० पु० ) । प्रणयोऽस्यास्तीति प्रणयी तस्मिन्प्रणयिनि । नखेन क्षत इति नखक्षतः ( त० पु० ), नखक्षतमेव मण्डनमिति तन्नखक्षतमण्डनम् ( क० धा० ) । मदेन यापिता लज्जा यया सा तया मद-

यापितलज्जया ( ब० व्री० ) ॥ ३१ ॥

व्याकरणम्—उपहितम् = उप + हा + क्तः । अशोभत + अ + शुभ + लङ् । यापित = या + णिच् + पुक् + क्तः + टाप् ॥ ३१ ॥

वाच्यपरिवर्तनम्—शिशिरापगमश्रिया, किंशुके, उपहितेन, मुकुलजालेन, मदयापितलज्जया, प्रमदया, प्रणयिनि, 'उपहितेन' नखक्षतमण्डनेन, इव, अशुभ्यत ॥ ३१ ॥

तात्पर्यार्थः—यथा मदेन दूरीकृतलज्जया स्त्रिया प्रियतमे दत्तं नखक्षतरूपभूषणं शोभते, तथा वसन्तलक्ष्म्या पलाशवृक्षे दत्तं कुड्मलवृन्दं शुशुभे ॥ ३१ ॥

भाषाऽर्थः—वसन्त की लक्ष्मी से पलाशवृक्ष में दिये हुये कलियों के समूह, जैसे मद से लज्जा को छोड़ने वाली कामिनी स्त्रियों से प्रियमें दिये हुये नखक्षतरूप भूषण शोभित होते हैं, वैसे शोभित हुये ॥ ३१ ॥

अथ सूर्यः आवसन्तात्तुषारं निःशेषं कर्तुं नाशकत्किन्तु स्वल्पं चकारेत्याह—

**व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम् ।**

**न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान् हिमम् ॥ ३२ ॥**

सञ्जीविनी—व्रणेति । व्रणैर्दन्तक्षतैर्गुरुभिर्दुर्धरैः प्रमदानामधरैरधरोष्ठैर्दुःसहं हिमस्य व्यथाकरत्वादसह्यं जघनेषु निर्विषयीकृता निरवकाशीकृता मेखला येन तत्, शैत्यात्त्याजितमेखलमित्यर्थः । एवंभूतं हिमं रविस्तावदावसन्तादशेषं निःशेषं यथा तथाऽपोहितुं निरसितुं नालं खलु न शक्तो हि, किन्तु विरलं कृतवांस्तनूचकार ॥ ३२ ॥

अन्वयः—रविः, व्रणगुरुप्रमदाधरदुःसहं, जघननिर्विषयीकृतमेखलं, हिमं, तावत्, अशेषम्, अपोहितुं, न, अलं, खलु, 'किन्तु' विरलं, कृतवान् ॥ ३२ ॥

सुधा—रविः = सूर्यः, व्रणगुरुप्रमदाधरदुःसहं = दन्तक्षतैर्दुर्धररमण्यधरोष्ठदुसह्यं, जघननिर्विषयीकृतमेखलं = जघननिरवकाशीकृतकाञ्चि, हिमं = तुहिनं, तावत् = आवसन्तात्, अशेषं = निःशेषं, ( यथा तथा ) अपोहितुं = दूरीकर्तुं, नालं = न समर्थः, खलु, खल्विति निश्चये । ' किन्तु ' विरलं = तनु, स्वल्पमिति यावत् । कृतवान् = अकरोत् ॥ ३२ ॥

कोशः—'प्रमदा मानिनी कान्ता ललना च नितम्बिनी । सुन्दरी रमणी रामा' इति, 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इति, 'पेलवं विरलं तनुः' इति चामरः ॥ ३२ ॥

समासादि—प्रमदानामधरा इति प्रमदाधराः ( त० पु० ), गुरवश्च ते प्रमदाधरा इति गुरुप्रमदाधराः ( क० धा० ), व्रणैः ( हेतुभिः ) गुरुप्रमदाधरैः दुःसहमिति तद् व्रणगुरुप्रमदाधरदुःसहम् । ( त० पु० ) । जघनेषु निर्विषयीकृता मेखला येन तज्जघननिर्विषयीकृतमेखलम् ( ब० व्री० ) ॥ ३२ ॥

व्याकरणम्—अपोहितुम् = अप + उहिर ( अर्दने-इरित् ), तुमुन् + इट् ॥ ३२ ॥

वाच्यपरिवर्तनम्—रविणा, व्रणगुरुप्रमदाधरदुःसहं, जघननिर्विषयीकृतमेखलं, हिमं, तावत्, निःशेषम्, अपोहितुं, न, अल, खलु, 'किन्तु' विरलं, कृतम् ॥ ३२ ॥

तात्पर्यार्थः—सूर्यः दन्तक्षतैर्हेतुभिर्दुर्धरैः कान्तानामधरोष्ठैरसह्यं शैत्याज्जघनेभ्यस्त्याजितमेखलं हिमम् आवसन्तान्निःशेषं यथा तथा अपसारितुं न समर्थो खलु, किन्तु तत् स्वल्पं कृतवान् ॥ ३२ ॥

भाषाऽर्थः—दन्तक्षतों से स्त्रियों के दुर्धर हुये अधरोष्ठों से असह्य (और) जघनों से मेखलाको हटवा देने वाले हिम को सूर्य ने वसन्त तक संपूर्णनष्ट करने को समर्थ नहीं हुआ किन्तु ( उसे ) अल्प कर दिया । ( नाभि के नीचे भाग को 'जघन' कहते हैं ) ॥ ३२ ॥

अथ आम्रलता जितरागद्वेषाणामपि चित्तमहरदित्याह—

**अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा ।**

**अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥ ३३ ॥**

सञ्जीविनी—अभिनयानिति । अत्र चूतलताया नर्तकीसमाधिरभिधीयते । अभिनयानर्थव्यञ्जकान्व्यापारान् । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । परिचेतुमभ्यसितुमुद्यतेव स्थिता । कुतः ? मलयमारुतेण कम्पितपल्लवा, पल्लवशब्देन हस्तो गम्यते । सकलिका सकोरका, 'कलिका कोरकः पुमान्' इत्यमरः । सहकारलता, कलिः कलहो द्वेष उच्यते । 'कलिः स्यात्कलहे शूरे कलिरन्त्ययुगे युधि' इति विश्वः । कामो रागः तज्जितामपि, जितरागद्वेषाणामपीत्यर्थः । मनोऽमदयत् ॥ ३३ ॥

अन्वयः—अभिनयान्, परिचेतुम्, उद्यता, इव, 'स्थिता' मलयमारुतकम्पितपल्लवा, सकलिका, सहकारलता, कलिकामजिताम्, अपि, मनः, अमदयत् ॥ ३३ ॥

सुधा—अभिनयान् = अर्थप्रकाशकव्यापारान्, परिचेतुं = परिचयार्थम्, अभ्यसितुमिति यावत् । उद्यता = तत्परा, इव, स्थितेति शेषः । मलयमारुतकम्पितपल्लवा = मलयपवनचलितकिसलया, सकलिका = सकोरका, सहकारलता = सौरभविशिष्टाम्रवल्लरी, कलिकामजितां = कलहरागजयिनां, जितरागद्वेषाणां यतीनामिति यावत् । अपि, मनः = चित्तम्, अमदयत् = मदयाञ्चकार ॥ ३३ ॥

कोशः—'सहकारोऽतिसौरभः' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति चामरः । 'कलिः स्त्री कलिकायां ना शूराजिकलहे युगे' इति मेदिनी ॥ ३३ ॥

समासादि—अभिनयन्त्यर्थमिति अभिनयास्तानभिनयान् । मलयस्य मारुत इति मलयमारुतः ( त० पु० ), मलयमारुतेन कम्पिताः पल्लवा यस्याः सा मलयमारुतकम्पितपल्लवा ( ब० व्री० ) । सहकारस्य लतेति सहकारलता ( त० पु० ) । कलिकया सहिता सकलिका । कलिश्च कामश्चेति कलिकामौ ( द्व० ), तौ जयन्तीति तेषां कलिकामजिताम् ॥ ३३ ॥

व्याकरणम्—अभिनयान् = अभि + णीञ् (प्रापणे—ञित्), पचाद्यच् । अमदयत् = अ + मदी ( हर्षे—ईदित् ), णिच् + लङ् ॥ ३३ ॥

वाच्यपरिवर्तनम्—अभिनयान्, परिचेतुम्, उद्यतया, इव, 'स्थितया' मलयमारुतकम्पितपल्लवया, सकलिकया, सहकारलतया, कलिकामजिताम्, अपि, मनः, अमाद्यत ॥३३॥

तात्पर्यार्थः—अर्थप्रकाशकव्यापारानभ्यसितुमुद्यता वेश्या इव स्थिता मलयवायुना कम्पितकिसलया कोरकेन सहिता आम्रवल्लरी जितरागद्वेषाणां यतीनामपि चित्तम् अमदयत् ॥ ३३ ॥

भाषाऽर्थः—अभिप्राय के प्रकाशक व्यापारों को अभ्यास करने के लिये तत्पर ( वेश्या ) की नाईं स्थित, मलयाचल के वायु से कंपित पत्तों वाली और कलियों के सहित आम्र की लताने द्वेष और राग को जीतने वाले ( यतियों ) के भी मन को मत्त कर दिया ॥३३॥

अथ जनाः कोकिलाभिः प्रारम्भेषूक्तान् परिमितालापान् शुश्रुवुरित्याह—

**प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः ।**
**सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ ३४ ॥**

सञ्जीविनी—प्रथममिति । सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु, "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इत्यनेनेकारः । कुसुमान्यासां सञ्जातानि कुसुमितास्तासु वनराजिषु वनपङ्क्तिषु अन्यभृताभिः कोकिलाभिः प्रथमं प्रारम्भेषूदीरिता उक्ता अत एव मिताः परिमिता गिर आलापाः प्रविरला मौग्ध्यात्स्तोकोक्ता मुग्धवधूनां कथा वाच इव शुश्रुविरे श्रुताः ॥ ३४ ॥

अन्वयः—सुरभिगन्धिषु, कुसुमितासु, वनराजिषु, अन्यभृताभिः, प्रथमम्, उदीरिताः, मिताः, गिरः, प्रविरलाः मुग्धवधूकथाः, इव, शुश्रुविरे ॥ ३४ ॥

सुधा—सुरभिगन्धिषु = नासिकातृप्तिकरगन्धवतीषु,कुसुमितासु = पुष्पितासु,वनराजिषु = अरण्यपङ्क्तिषु, अन्यभृताभिः = कोकिलाभिः,प्रथमं = पूर्वं,प्रारम्भेष्विति यावत्। उदीरिताः = उच्चारिताः, 'अत एव' मिताः = परिमिताः, गिरः = वाचः, आलापा इति यावत्। प्रविरलाः = मौग्ध्यात् स्वल्पोक्ताः, मुग्धवधूकथाः = अङ्कुरितयौवननायिकावाचः,इव, शुश्रुविरे = श्रुताः, जनैरिति शेषः ॥ ३४ ॥

कोशः—'परभृतः कोकिलः पिक इत्यपि' इति, 'ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती' इति चामरः ॥ ३४ ॥

समासादि—अन्यैर्भृता इत्यन्यभृतास्ताभिरन्यभृताभिः । मुग्धाश्च ता वध्व इति मुग्धवध्वः ( क० धा० ), तासां कथा इति मुग्धवधूकथाः ( त० पु० ) । सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु ( ब० व्री० ) । कुसुमानि सञ्जातान्यासामिति कुसुमितास्तासु ।कुसुमितासु । वनस्य राजय इति वनराजयस्तासु वनराजिषु ( त० पु० ) ॥ ३४ ॥

व्याकरणम्—उदीरिताः = उत्+ईर+क्तः+टाप् । शुश्रुविरे = श्रु ( श्रवणे ), कर्मणि लिट् । कुसुमितासु—कुसुम+'तदस्य सञ्जातम्' इत्यादिना इतच् ॥ ३४ ॥

वाच्यपरिवर्तनम्—सुरभिगन्धिषु, कुसुमितासु, वनराजिषु, अन्यभृताभिः, प्रथमम्, उदीरिताः, मिताः, गिरः, प्रविरलाः, मुग्धवधूकथाः, इव, शुश्रुवुः ॥ ३४ ॥

तात्पर्यार्थः—जनाः मनोहरगन्धवतीषु पुष्पितासु वनपङ्क्तिषु कोकिलाभिः प्रारम्भेषूक्तान् अत एव परिमितान् आलापान् मौग्ध्यात् स्वल्पोक्ता अङ्कुरितयौवननायिकावाच इव शुश्रुवुः ॥ ३४ ॥

भाषाऽर्थः—मनोहर गंध वाले फूली हुयी वन की पंक्तियों में कोकिलाओं से प्रथम उच्चारण किये गये (अत एव) थोड़े (मधुर) शब्द, मुग्धा नायिका के थोड़े वचन के समान सुनाई पड़े। ( जिसकी युवावस्था प्रारंभ हो रही हो उसे 'मुग्धा' कहते हैं) ॥३४॥

अथोपवनान्तर्वर्त्तिलतायां नर्तकीत्वमारोप्याह—

**श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।**
**उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ३५ ॥**

सञ्जीविनी—श्रुतीति । श्रुतिसुखाः कर्णमधुरा भ्रमरस्वना एव गीतयो यासां ताः, कुसुमान्येव कोमला दन्तरुचो दन्तकान्तयो यासां ताः, अनेन सस्मितत्वं विवक्षितम् । उपवनान्तलताः आराममध्यवल्लयः पवनेनाहतैः कम्पितैः किसलयैः सलयैः साभिनयैः, लयशब्देन लयानुगतोऽभिनयो लक्ष्यते, उपवनान्ते पवनाहतैरिति सक्रियत्वाभिधानात्। पाणिभिरिव बभुः। अनेन लतानां नर्तकीसाम्यं गम्यते ॥ ३५ ॥

अन्वयः—श्रुतिसुखभ्रमरस्वनगीतयः, कुसुमकोमलदन्तरुचः, उपवनान्तलताः, पवनाहतैः, किसलयैः, सलयैः, पाणिभिः, इव, बभुः ॥ ३५ ॥

सुधा—श्रुतिसुखभ्रमरस्वनगीतयः = कर्णानन्ददायकभृङ्गशब्दरूपगानाः, कुसुमकोमलदन्तरुचः = पुष्परूपमृदुदशनकान्तयः, उपवनान्तलताः = आरामान्तर्वर्तिवल्लयः, पवनाहतैः = वायुकम्पितैः, किसलयैः = पल्लवैः, सलयैः = सविलासैः, साभिनयैरिति यावत् । पाणिभिः = हस्तैः, इव, बभुः = अशोभन्त ॥ ३५ ॥

कोशः—'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । 'गीतिश्छन्दसि गाने च' इत्यनेकार्थसंग्रहः । 'पाणिः शमः शयो हस्तः' इत्यमरमाला ॥ ३५ ॥

समासादि—भ्रमराणां स्वना इति भ्रमरस्वनाः ( त० पु० ), श्रुतिसुखाः भ्रमरस्वना एव गीतयो यासां ताः श्रुतिसुखभ्रमरस्वनगीतयः ( ब० व्री० ) । दन्तानां रुच इति दन्तरुचः ( त० पु० ), कुसुमान्येव कोमला दन्तरुचो यासां ताः कुसुमकोमलदन्तरुचः (ब०व्री०)।

उपवनस्यान्त इत्युपवनान्तस्तस्मिन् लता इत्युपवनान्तलताः ( त० पु० ) । पवनेनाहतानि तैः पवनाहतैः ( त० पु० ) । लयैः सहिताः सलयास्तैः सलयैः ॥ ३९ ॥

व्याकरणम्—गीतयः = गै ( शब्दे ), 'स्त्रियां क्तिन्' इति क्तिन्+आत्वम् । बभुः = भा ( दीप्तौ ), लिट् । आहतैः = आ + ( हिंसागत्योः), क्तः + नलोपः ॥ ३९ ॥

वाच्यपरिवर्तनम्—श्रुतिसुखभ्रमरस्वनगीतिभिः, कुसुमकोमलदन्तरुचिभिः, उपवनान्तलताभिः, पवनाहतैः, किसलयैः, सलयैः, पाणिभिः, इव, बभे ॥ ३९ ॥

तात्पर्यार्थः--यथा कर्णसुखकरं गायन्त्यः स्मितं प्रदर्शयन्त्यो नर्तक्यः अभिनयसहितैर्हस्तैः शोभन्ते, तथैव कर्णसुखकरा भ्रमरशब्दरूपगीतयः पुष्परूपकोमलदन्तद्युतय उपवनान्तवर्तिवल्लयो वायुना कम्पितैः पल्लवैरशुभन् ॥ ३९ ॥

भाषाऽर्थः—कानों के सुखकर भौरों के शब्दरूप गीत और पुष्परूप कोमल दांतों की कान्तिवाली उपवनके समीप की लता, वायु से कम्पित पल्लवों से भाव बतलाते हुये हाथों के समान शोभायमान हुई ॥ ३९ ॥

अथ स्त्रियो पतिभिः सह परस्परस्नेहपूर्वकं मधं पपुरित्याह—

**ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।**
**पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ ३६ ॥**

सञ्जीविनी—ललितेति । अङ्गना ललितविभ्रमबन्धविचक्षणं मधुरविलासघटनापटुतरं सुरभिणा मनोहरेण गन्धेन पराजितकेसरं निर्जितवकुलपुष्पम्, 'अथ केसरे । वकुलः' इत्यमरः । स्मरस्य सखायं स्मरसखं, स्मरोद्दीपकमित्यर्थः । मधु मद्यम्, 'मधु मद्ये पुष्परसे' इत्यमरः । "अर्धर्चाः पुंसि च" इति पुंलिङ्गता । उक्तं च—"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधु॥" इति । पतिषु विषये रसखण्डनवर्जितमनुरागभङ्गरहितं यथा निर्विविशुः । परस्परानुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ॥ ३६ ॥

अन्वयः—अङ्गनाः, ललितविभ्रमबन्धविचक्षणं, सुरभिगन्धपराजितकेसरं, स्मरसखं, मधुं, पतिषु, रसखण्डनवर्जितं, निर्विविशुः ॥ ३६ ॥

सुधा—अङ्गनाः = स्त्रियः, ललितविभ्रमबन्धविचक्षणं = सुन्दरविलासरचनाप्रवीणं, सुरभिगन्धपराजितकेसरं = मनोहरगन्धनिर्जितवकुलद्रुमं, स्मरसखं = मदनमित्रं, कामोद्दीपकमित्यर्थः । मधुं = मद्यं, पतिषु = भर्तृषु विषये, रसखण्डनवर्जितं = स्नेहभङ्गरहितं, ( यथा तथा ) निर्विविशुः = पानं चक्रुः, सानुरागं पतिभिः सह पपुरित्यर्थः ॥ ३६ ॥

कोशः—'केसरो नागकेसरे । तुरङ्गसिंहयोः स्कन्धकेशेषु वकुलद्रुमे' इति, 'रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च' इति चानेकार्थसंग्रहः ॥ ३६ ॥

समासादि—विभ्रमस्य बन्ध इति विभ्रमबन्धः ( त० पु० ), ललितश्चासौ विभ्रमबन्ध इति ललितविभ्रमबन्धः ( क० धा० ), तस्मिन् विचक्षणस्तं ललितविभ्रमबन्धविचक्षणम् ( त० पु० ) । सुरभिश्चासौ गन्ध इति सुरभिगन्धः ( क० धा० ), तेन पराजितः केसरो येन स तं सुरभिगन्धपराजितकेसरम्(ब०व्री०)।स्मरस्य सखेति स्मरसखस्तं स्मरसखम्(त०पु०)। रसस्य खण्डनमिति रसखण्डनं तेन वर्जितस्तं रसखण्डनवर्जितम् ( त० पु० ) ॥ ३६ ॥

व्याकरणम्—पराजित = परा + जि + क्तः । निर्विविशुः = निर् + विश ( प्रवेशने ), लिट् । मधुम्—अस्य अर्धर्चादिगणे पाठात् पुँल्लिङ्गत्वम् । उक्तं च—"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः ॥" इति । वर्जितम् = वृजी ( वर्जने—ईदित ), क्तः + इट् ॥ ३६ ॥

वाच्यपरिवर्तनम्—अङ्गनाभिः, ललितविभ्रमबन्धविचक्षणः, सुरभिगन्धपराजितकेसरः, स्मरसखः, मधुः, पतिषु, रसखण्डनवर्जितं, निर्विविशे ॥ ३६ ॥

तात्पर्यार्थः—स्त्रियः मधुरविलासघटनाप्रवीणं मनोहरगन्धेन निर्जितवकुलवृक्षं कामोद्दीपकं मद्यं परस्परानुरागपूर्वकं पतिभिः सह पपुः ॥ ३६ ॥

भाषाऽर्थः—स्त्रियोंने सुन्दर विलास कराने में चतुर मनोहर गन्धसे वकुल पुष्प को जीतनेवाले काम के मित्र मद्य को पतियों के साथ स्नेहभंग से रहित पीया ॥ ३६ ॥

अथ विकसितकमलायुक्ताः गृहवाप्यः शोभन्ते स्मेत्याह—

**शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः ।**
**विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहङ्गमाः ॥ ३७ ॥**

सञ्जीविनी—शुशुभिर इति । विकचतामरसा विकसितकमलाः मदेन कला अव्यक्तमधुरं ध्वनन्त उदकलोलविहङ्गमा जलप्रियपक्षिणो हंसादयो यासु ताः, मदकलोदकलोलविहङ्गमा गृहेषु दीर्घिका वाप्यः स्मितेन चारुतराण्याननानि यासां ताः, "ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवोचितैः । अलक्षितं द्विजद्वारे उत्तमानां स्मितं भवेत् ॥" इति नाट्यलोचने । श्लथाः शिञ्जिता मुखरा मेखला यासां ताः, शिञ्जितेति कर्तरि क्तः । स्त्रिय इव शुशुभिरे ॥ ३७ ॥

अन्वयः—विकचतामरसाः, मदकलोदकलोलविहङ्गमाः, गृहदीर्घिकाः, स्मितचारुतराननाः, श्लथशिञ्जितमेखलाः, स्त्रियः, इव, शुशुभिरे ॥ ३७ ॥

सुधा—विकचतामरसाः = प्रफुल्लकमलाः, मदकलोदकलोलविहङ्गमाः = हर्षाव्यक्तमधुरध्वनिजलप्रियहंसादिपक्षियुक्ताः, गृहदीर्घिकाः = गेहवाप्यः, स्मितचारुतराननाः = ईषद्धासेन अत्यन्तसुन्दरमुख्यः, श्लथशिञ्जितमेखलाः = विचलितक्वणितकाञ्च्यः, स्त्रियः = नार्यः, इव, शुशुभिरे = शोभन्ते स्म ॥ ३७ ॥

कोशः—'भूषणानां च शिञ्जितम् । निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि' इति, 'वापी तु दीर्घिका' इति चामरः । 'कलं शुक्रे त्रिष्वजीर्णे चाव्यक्तमधुरध्वनौ' इति मेदिनी॥३७॥

समासादि—स्मितेन चारुतराण्याननानि यासां ताः स्मितचारुतराननाः ( ब० व्री० ) । श्लथाश्च शिञ्जिताश्चेति श्लथशिञ्जिताः ( क० धा० ), श्लथशिञ्जिता मेखला यासां ताः श्लथशिञ्जितमेखलाः ( ब० व्री० ) । विकचानि तामरसानि यासां ता विकचतामरसाः ( ब० व्री० ) । गृहेषु दीर्घिका इति गृहदीर्घिकाः ( त० पु० ) । मदेन कला उदकलोला विहङ्गमा यासु ता मदकलोदकलोलविहङ्गमाः ( ब० व्री० ) ॥ ३७ ॥

व्याकरणम्—शुशुभिरे = शुभ + लिट् । शिञ्जित = शिजि ( अव्यक्ते शब्दे-इदित् ), कर्तरि क्तः + इट् ॥ ३७ ॥

वाच्यपरिवर्तनम्—विकचतामरसाभिः, मदकलोदकलोलविहङ्गमाभिः, गृहदीर्घिकाभिः, स्मितचारुतराननाभिः, श्लथशिञ्जितमेखलाभिः, स्त्रीभिः, इव, शुशुभे ॥ ३७ ॥

तात्पर्यार्थः—यथा ईषद्धासेन अत्यन्तसुन्दरमुख्यः श्लथक्वणितकाञ्चीमत्यः स्त्रियः शोभन्ते, तथा विकसितपद्मविशिष्टा हर्षेणाव्यक्तमधुरं ध्वनन्त्या जलप्रियहंसादिपक्षियुक्ता गृहवाप्यः शोभन्ते स्म ॥ ३७ ॥

भाषाऽर्थः—खिले हुये कमल और मधुर शब्द वाले जलप्रिय ( हंस आदि ) पक्षियोंसे युक्त गृह की बावड़ियां, मुसकुराने से सुन्दर मुख वाली ढीली और शब्द करती हुई करधनी वाली स्त्रियों की नाई शोभित हुईं ॥ ३७ ॥

अथ वसन्तसमयेन ह्रासं गमितायां रजन्यां खण्डितात्वमारोप्याह—

**उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।**
**सदृशमिष्टसमागमनिर्वृतिं वनितयाऽनितया रजनीवधूः ॥ ३८ ॥**

सञ्जीविनी—उपययाविति । मधुना मधुसमयेन खण्डिता ह्रासं गमिता, क्षीयन्ते खलूत्तरायणे रात्रयः । खण्डिताख्या च नायिका ध्वन्यते । हिमकरोदयेन चन्द्रोदयेन पाण्डुर्मुखस्य-

प्रदोषस्य वक्त्रस्य च छविर्यस्याः सा रजन्येव वधूः इष्टसमागमनिर्वृतिं प्रियसङ्गमसुखमनितयाऽप्राप्तया, 'इण् गतौ' इति धातोः कर्तरि क्तः । वनितया सदृशं तुल्यं तनुतां न्यूनतां कार्श्यं चोपययौ ॥ ३८ ॥

अन्वयः—मधुखण्डिता, हिमकरोदयपाण्डुमुखच्छविः, रजनीवधूः, इष्टसमागमनिर्वृतिम्, अनितया, वनितया, सदृशं, तनुताम्, उपययौ ॥ ३८ ॥

सुधा—मधुखण्डिता = वसन्तसमयेन ह्रासं प्रापिता, हिमकरोदयपाण्डुमुखच्छविः = चन्द्रोदयेन सितप्रदोषद्युतिः, रजनीवधूः = रात्रिरूपिणी स्त्रीः, इष्टसमागमनिर्वृतिं = प्रियसङ्गमसुखम् ,अनितया = अप्राप्तया, वनितया, = अङ्गनया,खण्डिताख्ययास्त्रियेति यावत् । सदृशं = तुल्यं, तनुतां = कार्श्यम् , उपययौ = प्राप्तवती । (१) खण्डिता च-'अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा' इति ॥ ३८ ॥

कोशः—'तनुर्वपुस्त्वचोः । विरलेऽल्पे कृशे' इति, 'पाण्डुः कुन्तीपतौ सिते' इत्यनेकार्थसंग्रहः ॥ ३८ ॥

समासादि—तनोर्भावस्तनुता तां तनुताम् । मधुना खण्डितेति मधुखण्डिता (त०पु०) । हिमकरस्योदयेन पाण्डुमुखं यस्य स हिमकरोदयपाण्डुमुखस्तस्य छविरिव छविर्यस्याः सा हिमकरोदयपाण्डुमुखच्छविः ( ब० व्री० ) । इष्टस्य समागम इतीष्टसमागमस्तस्य निर्वृतिस्ताम् इष्टसमागमनिर्वृतिम् ( त० पु० । रजनी एव वधूरिति रजनीवधूः ( क०धा० ) ॥ ३८ ॥

व्याकरणम्—उपययौ = उप + या + लिट् । तनुतां = तनु + तल् + टाप् । हिमकर = हिम + कृ + टः ॥ ३८ ॥

वाच्यपरिवर्तनम्—मधुखण्डितया, हिमकरोदयपाण्डुमुखछव्या, रजनीवध्वा, इष्टसमागमनिर्वृतिम् , अनितया, वनितया, सदृशं, तनुता, उपयये ॥ ३८ ॥

तात्पर्यार्थः—यथा खण्डिताऽऽख्या नायिका प्रियसङ्गमसुखमप्राप्य कार्श्यमाप्नोति, तथा वसन्तसमयेन ह्रासं गमिता चन्द्रोदयेन श्वेतप्रदोषस्य द्युतिमती रात्रिर्न्यूनतां प्राप ॥ ३८ ॥

भाषाऽर्थः—वसंत के समय से क्षीण हुई चंद्र के उदय से उज्ज्वल मुख ( प्रदोष ) की कांति वाली रात्रि रूपी स्त्री, प्रिय के संगम का सुख नहीं प्राप्त करने वाली खंडिता नायिका के तुल्य कृशपने को पाई ॥ ३८ ॥

अथ चन्द्रः निर्मलद्युतिभिः किरणैः काममशातयदित्याह—

**अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः ।**
**कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥**

सञ्जीविनी—अपेति । हिमकरश्चन्द्रः अपतुषारतयाऽपगतनीहारतया विशदप्रभैर्निर्मलकान्तिभिः सुरतसङ्गपरिश्रमनोदिभिः सुरतसङ्गखेदहारिभिरंशुभिः किरणैः, "चन्दनं मृदुनालानि हरन्ति सुरतश्रमम् ।" इति रतिरहस्यम् । मकरोर्जितकेतनं मकरेणोर्जितं केतनं ध्वजो यस्य तम्, लब्धावकाशत्वादुच्छ्रितध्वजमित्यर्थः । कुसुमचापं काममतेजयदशातयत् ,'तिज निशाने' इति धातोर्ण्यन्ताल्लुङ् । सहकारिलाभात्कामोऽपि तीक्ष्णोऽभूदित्यर्थः ॥ ३९ ॥

अन्वयः—हिमकरः, अपतुषारतया, विशदप्रभैः, सुरतसङ्गपरिश्रमनोदिभिः, अंशुभिः, मकरोर्जितकेतनं, कुसुमचापम् , अतेजयत् ॥ ३९ ॥

सुधा—हिमकरः = चन्द्रमाः, अपतुषारतया = अपगतहिमत्वेन, विशदप्रभैः = निर्मलद्युतिभिः, सुरतसङ्गपरिश्रमनोदिभिः = सुरतसमागमखेदहारिभिः, अंशुभिः = किरणैः, मकरोर्जि-

---

(१) अपि च-

निद्राकषायकलुषीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः ।
यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः ॥ इति भरतमुनिः ।

तकेतनं = मकरोच्छ्रितध्वजं, कुसुमचापं = पुष्पधन्वानम्, अतेजयत् = अशातयत् ॥ ३९ ॥

कोशः—'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इति, 'किरणोऽस्रमयूखांशुगभस्ति-घृणिरश्मयः' इति, 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्' इति चामरः ॥ ३९ ॥

समासादि—अपगतस्तुषार इत्यपतुषारः (क० धा०), तस्य भावोऽपतुषारता तयाऽपतुषारतया। विशदाः प्रभा येषां ते तैर्विशदप्रभैः (ब०व्री०)। सुरतस्य सङ्ग इति सुरतसङ्गस्तस्य परिश्रम इति सुरतसङ्गपरिश्रमस्तं नुदन्तीति ते तैः सुरतसङ्गपरिश्रमनोदिभिः ( त० पु० )। कुसुममेव चापो यस्य स तं कुसुमचापम् (ब० व्री०)। मकरेणोर्जितं केतनं यस्य स तं मकरोर्जितकेतनम् ( ब० व्री० ) ॥ ३९ ॥

व्याकरणम्—अतेजयत् = अ + तिज ( निशाने ), णिच् + लङ् ॥ ३९ ॥

वाच्यपरिवर्तनम्—हिमकरेण, अपतुषारतया, विशदप्रभैः, सुरतसङ्गपरिश्रमनोदिभिः, अंशुभिः, मकरोर्जितकेतनः कुसुमचापः, अतेज्यत ॥ ३९ ॥

तात्पर्यार्थः—चन्द्रः अपगततुषारत्वेन निर्मलकान्तिभिः सुरतसमागमखेदहारिभिः किरणैः मकरेणोच्छ्रितध्वजं पुष्पधन्वानं काममतेजयत् ॥ ३९ ॥

भाषाऽर्थः—चन्द्रमा ने हिम के नाश होने से निर्मल प्रभा और सुरत के संगमसे हुये परिश्रम को हरण करने वाली किरणों से मकर की ऊंची पताका वाले पुष्पधन्वा (काम ) को तीक्ष्ण किया ॥ ३९ ॥

अथ स्त्रियः कर्णिकारपुष्पं स्वचूर्णकुन्तले दधुरित्याह—

**हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।**
**युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥ ४० ॥**

सञ्जीविनी—हुतेति। हुतहुताशनदीप्त्याज्यादिप्रज्वलिताग्निप्रभं यत्कुसुमम्, कर्णिकारमित्यर्थः। वनश्रियः उपवनलक्ष्म्याः कनकाभरणस्य प्रतिनिधिः, अभूदिति शेषः। दलेषु केसरेषु च पेशलम्, सुकुमारपत्रकिञ्जल्कमित्यर्थः। आहितम्, प्रियैरिति शेषः। तत्कुसुमं युवतयोऽलके।कुन्तले दधुः ॥ ४० ॥

अन्वयः—हुतहुताशनदीप्ति, यत्, कुसुमं, वनश्रियः, कनकाभरणस्य, प्रतिनिधिः, 'अभूत्' दलकेशरपेशलं, 'प्रियैः' आहितं, तत्, युवतयः, अलके, दधुः ॥ ४० ॥

सुधा-हुतहुताशनदीप्ति = घृतादिप्रज्वलिताग्निसमकान्ति, यत् = कर्णिकारं, कुसुमं = पुष्पं, वनश्रियः = उपवनलक्ष्म्याः, कनकाभरणस्य = सुवर्णालङ्कारस्य, प्रतिनिधिः = स्थानापन्नः, अभूदिति शेषः। दलकेशरपेशलं = पत्रपरागसुकुमारम्, आहितं = प्राप्तं, प्रियैरिति शेषः। तत् = पूर्वोक्तं, कर्णिकारमिति यावत्। युवतयः = तरुण्यः, स्त्रिय इति यावत्। अलके = कुन्तले, दधुः = दधति स्म ॥ ४० ॥

कोशः—'स्वर्णं सुवर्णं कनकं हिरण्यं 'हेम हाटकम्' इति, अलङ्कारस्त्वाभरणम्' इति, 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इति चामरः ॥ ४० ॥

समासादि—हुतमश्नातीति हुताशनः, हुतश्चासौ हुताशन इति हुतहुताशनः (क० धा०), तस्य दीप्तिरिव दीप्तिर्यस्य तत् हुतहुताशनदीप्ति ( ब० व्री० )। वनस्य श्रीरिति वनश्रीस्तस्य वनश्रियः (त०पु०)। प्रतिनिधीयत इति प्रतिनिधिः। कनकस्याभरणमिति कनकाभरणं तस्य कनकाभरणस्य ( त० पु० )। दलानि च केशराश्चेति दलकेसराः ( द्व० ), तेषु पेशलमिति तद् दलकेशरपेशलम् ( त० पु० ) ॥ ४० ॥

व्याकरणम्—प्रतिनिधिः = प्रति + नि + डुधाञ् ( धारणपोषणयोः-डुञित् ), 'उपसर्गे घोः किः' इत्यनेन किः। दधुः = धा + लिट् ॥ ४० ॥

वाच्यपरिवर्तनम्—हुतहुताशनदीप्तिना, येन, कुसुमेन, वनश्रियः, कनकाभरणस्य, प्रति-

निधिना, 'अभाद्धि' दलकेशरपेशलं, 'प्रियैः' आहितं, तत्, युवतिभिः, अलके, दधे ॥ ४० ॥

तात्पर्यार्थः—घृतादिभिः प्रज्वलिताग्निप्रभातुल्यम् उपवनलक्ष्म्याः सुवर्णालङ्कारस्य प्रतिनिधिभूतं पत्रेषु परागेषु च सुकुमारं प्रियैः प्राप्तं तत्कर्णिकारपुष्पं स्त्रियः कुन्तले दधुः ॥४०॥

भाषाऽर्थः—घृत आदिसे प्रज्वलित अग्निके समान कान्ति वाला जो ( कठचंपा ) पुष्प उपवनलक्ष्मी का प्रतिनिधि ( हुआ ), पत्ते और पराग में सुकुमार ( प्रियों से ) पाकर उस ( कठचंपे ) को स्त्रियोंने बालों में धारण किया ॥ ४० ॥

अथ तिलकवृक्षो वनस्थलीमशोभयदित्याह—

**अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।**
**न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥ ४१ ॥**

सञ्जीविनी—अलिभिरिति । अञ्जनबिन्दुमनोहरैः कज्जलकणसुन्दरैः कुसुमपङ्क्तिषु निपतन्ति ये तैः अलिभिरङ्कितश्चिह्नितस्तिलकः श्रीमान्नाम वृक्षः, 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । वनस्थलीं तिलको विशेषकः, 'तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः । प्रमदामिव न शोभयति स्मेति न खलु, अपि त्वशोभयदेवेत्यर्थः । "लट् स्मे" इति स्मशब्दयोगात् भूतार्थे लट् । तिलकेष्वञ्जनबिन्दवः शोभार्थं क्रियन्ते ॥४१॥

अन्वयः—अञ्जनबिन्दुमनोहरैः, कुसुमपङ्क्तिनिपातिभिः, अलिभिः, अङ्कितः, तिलकः, वनस्थलीं, तिलकः, प्रमदाम्, इव, न, शोभयति स्म, 'इति' न, खलु ॥ ४१ ॥

सुधा—अञ्जनबिन्दुमनोहरैः = कज्जलकणमनोरमैः, कुसुमपङ्क्तिनिपातिभिः = पुष्पश्रेणिपतनशीलैः, अलिभिः = भ्रमरैः,अङ्कितः = चिह्नितः, तिलकः = तिलकाख्यवृक्षः, वनस्थलीम् = आरण्यकाकृत्रिमभूमिं, तिलकः = चित्रकः, ललाटकृतसिन्दूरतिलक इति यावत् । प्रमदां = स्त्रियम्, इव, न शोभयति स्म = नाशोभयत, 'इति' नखलु, किन्त्वशोभयदेवेत्यर्थः ॥ ४१ ॥

कोशः—'अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने' इति मेदिनी । 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' इत्यमरः ॥ ४१ ॥

समासादि—अञ्जनस्य बिन्दव इत्यञ्जनबिन्दवः ( त० पु० ), अञ्जनबिन्दव इव मनोहरास्तैरञ्जनबिन्दुमनोहरैः ( क० धा० ) । कुसुमानां पङ्क्तय इति कुसुमपङ्क्तयः, कुसुमपङ्क्तिषु निपतन्तीति कुसुमपङ्क्तिनिपातिनस्तैः कुसुमपङ्क्तिनिपातिभिः ( त० पु० )। वनस्य स्थली इति वनस्थली तां वनस्थलीम् ( त० पु० ) ॥ ४१ ॥

व्याकरणम्—निपातिभिः = नि + पत + णिनिः । अङ्कितः = अकि ( लक्षणे—इदित् ), क्तः + नुम् + इट् । शोभयति स्म = शुभ + णिच् + लट् ॥ ४१ ॥

वाच्यपरिवर्तनम्—अञ्जनबिन्दुमनोहरैः, कुसुमपङ्क्तिनिपातिभिः, अलिभिः, अङ्कितेन, तिलकेन, वनस्थली, तिलकेन, प्रमदा, इव, न, शोभ्यते, 'इति' न, खलु ॥ ४१ ॥

तात्पर्यार्थः—कज्जलकणमनोरमैः पुष्पपङ्क्तिषु निपतनशीलैर्भ्रमरैश्चिह्नितस्तिलकाख्यो वृक्षः वनस्थलीं ललाटकृतसिन्दूरतिलकः स्त्रियमिव अशोभयत् ॥ ४१ ॥

भाषाऽर्थः—काजल के बिंदु की नाईं मनोहर, पुष्पों की पंक्ति में पतन शील भ्रमरोंके चिह्नवाले तिलक वृक्ष ने, जैसे ललाट में किया हुआ तिलक स्त्रियों को शोभित करता है, वैसे शोभित नहीं किया ( ऐसा ) नहीं, ( किन्तु शोभित किया ही ) ॥ ४१ ॥

अथ नवमल्लिका पश्यतां मनोऽमदयदित्याह—

**अमदयन्मधुगन्धसनाथया किसलयाधरसङ्गतया मनः ।**
**कुसुमसम्भृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥**

सञ्जीविनी—अमदयदिति । तरुचारुविलासिनी तरोः पुंसश्च चारुविलासिनी नवमल्लिका सप्तलाख्या लता, 'सप्तला नवमल्लिका' इत्यमरः । मधुनो मकरन्दस्य मद्यस्य च गन्धेन सना-

थया, गन्धप्रधानयेत्यर्थः । किसलयमेवाधरस्तत्र सङ्गतया, प्रसृतरागयेत्यर्थः। कुसुमैः सम्भृतया सम्पादितया, कुसुमरूपयेत्यर्थः । स्मितरुचा हासकान्त्या मनः, पश्यतामिति शेषः । अमदयत् ॥ ४२ ॥

अन्वयः—तरुचारुविलासिनी, नवमल्लिका, मधुगन्धसनाथया, किसलयाधरसङ्गतया, कुसुमसम्भृतया, स्मितरुचा, 'पश्यतां' मनः, अमदयत् ॥ ४२ ॥

सुधा—तरुचारुविलासिनी = वृक्षस्य सुन्दराङ्गना, नवमल्लिका = सप्तलानाम्नी लता, मधुगन्धसनाथया = मकरन्दप्रधानया, किसलयाधरसङ्गतया = पल्लवरूपोष्ठप्रसृतरागया, कुसुमसम्भृतया = पुष्पसम्पादितया, पुष्पस्वरूपयेति यावत् । स्मितरुचा = ईषद्धासकान्त्या, मनः = चित्तं, पश्यतामिति शेषः । अमदयत् = मदयति स्म ॥ ४२ ॥

कोशः—'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इति, 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इति चामरः ॥ ४२ ॥

समासादि—मधुनो गन्ध इति मधुगन्धस्तेन सनाथा तया मधुगन्धसनाथया (त०पु०) । किसलयमेवाधर इति किसलयाधरः ( क० धा० ), तस्मिन् सङ्गता तया किसलयाधरसङ्गतया ( त० पु० ) । कुसुमैः सम्भृता तया कुसुमसम्भृतया ( त० पु० ) । स्मितस्य रुगिति स्मितरुक् तया स्मितरुचा ( त० पु० ) । विलसितुं शीलमस्याः सा विलासिनी, तरोश्चारुविलासिनीति तरुचारुविलासिनी ( त० पु० ) ॥ ४२ ॥

व्याकरणम्—अमदयत् = अ + मदी ( हर्षे-ईदित् ), णिच् + लङ् । सम्भृतया = सम् + भृ + क्तः + टाप् । विलासिनी = वि + लस + घिनुण् + ङीप् ॥ ४२ ॥

वाच्यपरिवर्तनम्—तरुचारुविलासिन्या, नवमल्लिकया, मधुगन्धसनाथया, किसलयाधरसङ्गतया, कुसुमसम्भृतया, स्मितरुचा, 'पश्यतां' मनः, अमाद्यत ॥ ४२ ॥

तात्पर्यार्थः—यथा पुंसो विलासिनी मद्यगन्धप्रधानया अधरे प्रसृतरागया स्वस्मितकान्त्या पश्यतां मनो मदयन्ति, तथा वृक्षस्य सुन्दरविलासिनी नवमल्लिका परागगन्धप्रधानया पल्लवरूपाधरे प्रसृतरागया पुष्परूपया हासकान्या पश्यतां मनोऽमदयत् ॥४२॥

भाषाऽर्थः—वृक्ष की सुन्दर विलासिनी ( स्त्री ) नवमल्लिका ( नेवाड़ी ) ने, पराग के गन्धसे युक्त पल्लवरूपी ओठोंमें राग वाली पुष्प रूप हास की कांति से, ( देखने वालोंके ) मनको मत्त कर दिया ॥ ४२ ॥

अथ कामसैन्यैर्विलासिनः पुरुषाः स्त्रीपरतन्त्राः कृता इत्याह—

**अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः ।**
**परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥**

सञ्जीविनी—अरुणेति । विलासिनो विलसनशीलाः पुरुषाः, 'वौ कषलसकत्थस्रम्भः" इत्यनेन घिनुणप्रत्ययः । अरुणस्यानूरो रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीत्यरुणरागनिषेधिनस्तैः, कुसुम्भादिरञ्जनात्तत्सदृशैरित्यर्थः । "तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्येवानुकरोतीति शब्दाः सादृश्यवाचकाः ॥" इति दण्डी । अंशुकैरम्बरैः स्रवणेषु कर्णेषु लब्धपदैः, निवेशितैरित्यर्थः । यवाङ्कुरैश्च परभृताविरुतैः कोकिलाकूजितैश्च इत्येतैः स्मरबलैः कामसैन्यैः अबलास्वेक एव रसो रागो येषां तेऽबलैकरसाः स्त्रीपरतन्त्राः कृताः ॥ ४३ ॥

अन्वयः—विलासिनः, अनुरागनिषेधिभिः, अंशुकैः, श्रवणलब्धपदैः, यवाङ्कुरैः, च, परभृताविरुतैः, च, 'इत्येतैः' स्मरबलैः, अबलैकरसाः, कृताः ॥ ४३ ॥

सुधा—विलासिनः = कामुकाः पुरुषाः, अरुणरागनिषेधिभिः = सूर्यसुतारुण्यतिरस्कुर्वद्भिः, कुसुम्भादिरञ्जनात्तत्सदृशैरिति, यावत् । उक्तं च दण्डिना—'तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्येवानुकरोतीति शब्दाः सादृश्यवाचकाः' इति । अंशुकैः = वस्त्रैः,

श्रवणलब्धपदैः = कर्णप्राप्तस्थानैः, यवाङ्कुरैः = यवनवप्ररोहैः, च, (१) परभृताविरुतैः = कोकिलाकूजितैः, च, स्मरबलैः = कामदेवसैन्यैः, 'इत्येतैः' अबलैकरसाः = स्त्रीपराधीनाः, कृताः = अकारिषत ॥ ४३ ॥

कोशः—'सूर्यसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः' इति, वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्' इति, 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इति, 'परभृतः कोकिलः पिक इत्यपि' इति चामरः । 'विलासी कामुकः कामी स्त्रीपरो रतिलोलुपः' इति शब्दार्णवः ॥ ४३ ॥

समासादि—अरुणस्य राग इत्यरुणरागस्तं निषेधन्तीत्यरुणरागनिषेधिनस्तैररुणरागनिषेधिभिः ( त० पु० ) । श्रवणेषु लब्धानि पदानि यैस्ते तैः श्रवणलब्धपदैः ( ब० व्री० ) । यवस्याङ्कुरा इति यवाङ्कुरास्तैर्यवाङ्कुरैः (त० पु०) । परैर्भृता इति परभृतास्तासां विरुतानि तैः परभृताविरुतैः ( त० पु० ) । स्मरस्य बलानीति स्मरबलानि तैः स्मरबलैः (त० पु०) । नास्ति बलं यासां ता अबलास्तास्वेक एव रसो येषां ते अबलैकरसाः ( ब० व्री० ) ॥ ४३ ॥

व्याकरणम्—निषेधिभिः = निषेध + इनिः । विरुतैः = वि + रु ( शब्दे ), क्तः ॥ ४३ ॥

वाच्यपरिवर्तनम्—विलासिनः, अरुणरागनिषेधीनि, अंशुकानि, श्रवणलब्धपदाः, यवाङ्कुराः, च, परभृताविरुतानि, च, 'इत्येतानि' स्मरबलानि, अबलैकरसान् , कृतवन्ति ॥ ४३ ॥

तात्पर्यार्थः—कुसुम्भादिरागरञ्जितानि वस्त्राणि, कर्णेषु निवेशिता यवाङ्कुराः, कोकिलायाः कूजितानि, इत्येतानि कामदेवसैन्यानि कामुकान् पुरुषान् स्त्रीपरतन्त्रान् अकुर्वन् ॥ ४३ ॥

भाषाऽर्थः—विलासी पुरुषों को सूर्यसारथि के रंग के सदृश वस्त्र, और कानों पर रक्खे हुये यव के अङ्कुर ( अंखुये ), और कोकिलाओंके शब्द, ( इन सब ) कामदेव की सेनाओंने स्त्रियोंमें अनुरक्त कर दिया ॥ ४३ ॥

अथ जनैस्तिलकवृक्षमञ्जरी कथमिवादृश्यतेत्याह—

**उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी ।**
**सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजाऽलकजालकमौक्तिकैः ॥ ४४ ॥**

सञ्जीविनी—उपचितेति । शुचिभिः शुभ्रैः कणैः रजोभिरुपचितावयवा पुष्टावयवा अलिकदम्बकयोगमुपेयुषी प्राप्ता तिलकजा तिलकवृक्षोत्था मञ्जरी अलकेषु यज्जालकमाभरणविशेषस्तस्मिन् मौक्तिकैः सदृशकान्तिः अलक्ष्यत । भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्ता जालमिवालक्ष्यतेति वाक्यार्थः ॥ ४४ ॥

अन्वयः—शुचिभिः, कणैः, उपचितावयवा, अलिकदम्बकयोगम्, उपेयुषी, तिलकजा, मञ्जरी, अलकजालकमौक्तिकैः, सदृशकान्तिः, अलक्ष्यत ॥ ४४ ॥

सुधा—शुचिभिः = शुभ्रैः, कणैः = परागैः, उपचितावयवा = पुष्टाङ्गा, अलिकदम्बकयोगं = भ्रमरवृन्दसङ्गतम् , उपेयुषी = प्राप्तवती, तिलकजा = श्रीमान्नामवृक्षोत्पन्ना, मञ्जरी = वल्लरी, अलकजालकमौक्तिकैः = नीलचूर्णकुन्तलाभरणविशेषमुक्ताभिः, सदृशकान्तिः = तुल्यद्युतिः, अलक्ष्यत = अदृश्यत, जनैरिति शेषः ॥ ४४ ॥

कोशः—'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इति, 'स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्' इति, 'वल्लरिर्मञ्जरिः स्त्रियौ' इति, 'तिलकः क्षुरकः श्रीमान्' इति, 'अथ मौक्तिकम् । मुक्ता' इति चामरः ॥ ४४ ॥

समासादि—उपचितोऽवयवो यस्याः सा उपचितावयवा ( ब० व्री० ) । अलीनां कद-

---

( १ ) कोकिला अवकाशं प्राप्य वायस्याः कुलाये स्वकीयाण्ड प्रक्षिपति । सा वायसी स्वाण्डबुद्ध्या तदण्डं पालयति । पश्चात् उत्पन्नपक्षः स कोकिलाशिशुः स्वजातीयानां कोकिलानां निकटं गच्छतीति कोकिलानां परभृतत्वमिति किम्वदन्ती ॥

म्बकमित्यलिकदम्बकं तस्य योगस्तम् अलिकदम्बकयोगम् ( त० पु० )। सदृशी कान्तिर्यस्याः सा सदृशकान्तिः ( ब० व्री० )। तिलकाज्जाता तिलकजा। जालमेव जालकम्, अलकेषु जालकमित्यलकजालकं तस्मिन् मौक्तिकानि तैरलकजालकमौक्तिकैः (त०पु०) ॥४४॥

व्याकरणम्—उपेयुषी = उप + इण् ( गतौ ), क्वसुः। अलक्ष्यत = अ + लक्ष + कर्मणि यक् + लङ् ॥ ४४ ॥

वाच्यपरिवर्तनम्--शुचिभिः, कणैः, उपचितावयवाम्, अलिकदम्बकयोगम्, उपेयुषीं, तिलकजां, मञ्जरीम्, अलकजालकमौक्तिकैः, सदृशकान्तिम्, अलक्षयन् ॥ ४४ ॥

तात्पर्यार्थः—जनाः शुभ्रपरागैः पुष्टावयवां भ्रमरसमूहयोगं प्राप्तवतीं तिलकवृक्षोत्पन्नां मञ्जरीं नीलकुन्तलसक्तमुक्ताजालमिव लक्षयन् ॥ ४४ ॥

भाषाऽर्थः—उज्ज्वल परागों से पुष्ट अवयववाली भ्रमरों के समूहसे युक्त तिलकवृक्ष की मंजरी, बालों के समूहमें मोतियों के सदृश कान्तिमान् देखी गई ॥ ४४ ॥

अथ भ्रमराः पुष्पकिञ्जल्करजः अन्वगच्छन्नित्याह--

**ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः।**
**कुसुमकेशररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥**

सञ्जीविनी—ध्वजपटमिति। अलिव्रजाः षट्पदनिवहा धनुर्भृता धानुष्कस्य मदनस्य कामस्य ध्वजपटं पताकाभूतम् ऋतुश्रियो वसन्तलक्ष्म्याश्छविकरं शोभाकरं मुखचूर्णं मुखालङ्काररचूर्णभूतम्, 'चूर्णानि वासयोगाः स्युः' इत्यमरः। सपवनोपवनोत्थित सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितं कुसुमानां केशरेषु किञ्जल्केषु यो रेणुस्तम् अन्वयुरन्वगच्छन्। यातेर्लङ् ॥ ४५ ॥

अन्वयः--अलिव्रजाः, धनुर्भृतः, मदनस्य, ध्वजपटम्, ऋतुश्रियः, छविकरं, मुखचूर्णं, सपवनोपवनोत्थितं, कुसुमकेशररेणुम्, अन्वयुः ॥ ४५ ॥

सुधा--अलिव्रजाः = भ्रमरसमूहाः, धनुर्भृतः = धन्विनः, मदनस्य = कामस्य, ध्वजपटं = पताकावस्त्रभूतम्, ऋतुश्रियः = वसन्तर्तुलक्ष्म्याः, छविकरं = द्युतिकरं, मुखचूर्णम् = आननाभरणचूर्णभूतं, सपवनोपवनोत्थितं = सवाय्वारामनिर्गतं, कुसुमकेशररेणुं = पुष्पकिञ्जल्करजः, अन्वयुः = अन्वगच्छन् ॥ ४५ ॥

कोशः--'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्' इत्यमरः। 'पटश्चित्रपटे वस्त्रे' इति मेदिनी। 'किञ्जल्कः केशरोऽस्त्रियाम्' इत्यमरः। 'व्रजो गोष्ठाऽध्ववृन्देषु' इति मेदिनी ॥ ४५ ॥

समासादि--ध्वजस्य पटमिति ध्वजपटम् ( त० पु० )। धनुर्बिभर्तीति धनुर्भृत्तस्य धनुर्भृतः। छविं करोतीति छविकरस्तं छविकरम्। मुखस्य चूर्णमिति मुखचूर्णम् ( त० पु० )। ऋतोः श्रीरिति ऋतुश्रीस्तस्याः ऋतुश्रियः ( त० पु० )। अलीनां व्रजा इत्यलिव्रजाः ( त० पु० )। पवनेन सहितं सपवनं, सपवनञ्च तदुपवनमिति सपवनोपवनम् (क० धा०), तस्मिन्नुत्थितस्तं सपवनोपवनोत्थितम् ( त० पु० ) ॥ ४५ ॥

व्याकरणम्—छविकरं = छवि + कृ + टः। अन्वयुः = अनु + अ + या + लङ् ॥ ४५ ॥

वाच्यपरिवर्तनम्--अलिव्रजैः, धनुर्भृतः, मदनस्य, ध्वजपटम्, ऋतुश्रियः, छविकरं, मुखचूर्णं, सपवनोपवनोत्थितं, कुसुमकेशररेणुम्, अनुयये ॥ ४५ ॥

तात्पर्यार्थः—भ्रमरसमूहाः धानुष्कस्य कामस्य पताकाभूतं वसन्तलक्ष्म्याः कान्तिकरम् आननाभरणचूर्णभूतं पवनेन सहितम् उपवनोत्थितं पुष्पकिञ्जल्करजः अन्वगच्छन् ॥ ४५ ॥

भाषाऽर्थः—भ्रमरों के समूह, धनुर्धर कामदेव की पताका रूपी वसंत ऋतु की लक्ष्मी को शोभित करने वाले मुख का चूर्णरूप, उपवन पवन के साथ उठी हुई पुष्पों के केशर की धूलिके पीछे चला ॥ ४५ ॥

अथ स्त्रियः दोलाक्रीडासु पतनभिया प्रियकण्ठमाश्लिष्यन्नित्याह--

**अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।**

**अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥ ४६ ॥**

सञ्जीविनी—अनुभवन्निति । नवा दोला प्रेङ्खा यस्मिंस्तं नवदोलमृतूत्सवं वसन्तोत्सवमनुभवन्नबलाजनः पटुरपि निपुणोऽपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुमालिङ्गितुमिच्छयाऽऽसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां जलतां शैथिल्यम्, डलयोरभेदः । 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्' इति । अनयत् । दोलाक्रीडासु पतनभयनाटितकेन प्रियकण्ठमाश्लिष्यदित्यर्थः ॥ ४६ ॥

अन्वयः--नवदोलम्, ऋतूत्सवम्, अनुभवन्, अबलाजनः, पटुः, अपि, प्रियकण्ठजिघृक्षया, आसनरज्जुपरिग्रहे, भुजलतां, जलताम्, अनयत् ॥ ४६ ॥

सुधा--नवदोलं = नूतनप्रेङ्खम्, ऋतूत्सवं = वसन्तोत्सवम्, अनुभवन् = चरितार्थयन्, अबलाजनः = स्त्रीजनः, पटुः = निपुणः, अपि, प्रियकण्ठजिघृक्षया = वल्लभगलग्रहीतुमिच्छया, आसनरज्जुपरिग्रहे = पीठवटीग्रहणे, भुजलतां = बाहुलतां, बाहुमिति यावत् । जलतां = जड़तां, ( डलयोरभेदः ) शैथिल्यमिति यावत् । अनयत् = प्रापयत् ॥ ४६ ॥

कोशः—'दोला प्रेङ्खः पुमान् प्रेङ्खा निःश्रेणिरधिरोहिणी' इति रत्नकोशः । 'मह उद्धव उत्सवः' इति, 'कण्ठो गलोऽथ ग्रीवायाम्' इति, 'शुल्वं वराटकः स्त्री तु रज्जुस्त्रिषु वटी गुणः' इति चामरः ॥ ४६ ॥

समासादि—नवा दोला यस्मिन् स नवदोलस्तं नवदोलम् ( ब० व्री० ) । ऋतोरुत्सवस्तम् ऋतूत्सवम् ( त० पु० ) । ग्रहीतुमिच्छा जिघृक्षा, प्रियस्य कण्ठ इति प्रियकण्ठस्तस्य जिघृक्षा तया प्रियकण्ठजिघृक्षया ( त० पु० ) । आसनस्य रज्जुस्तस्याः परिग्रहस्तस्मिन् आसनरज्जुपरिग्रहे ( त० पु० ) । भुज एव लतेति भुजलता तां भुजलताम् (क० धा०) । अबलैव जन इत्यबलाजनः ( क० धा० ) ॥ ४६ ॥

व्याकरणम्—अनुभवन् = अनु + भू + शतृ । जिघृक्षया = ग्रह ( उपादाने ), सन् । अनयत् = अ + णीञ् ( प्रापणे-ञित् ), लङ् ॥ ४६ ॥

वाच्यपरिवर्तनम्—नवदोलम्, ऋतूत्सवम्, अनुभवता, अबलाजनेन, पटुना, अपि, प्रियकण्ठजिघृक्षया, आसनरज्जुपरिग्रहे, भुजलता, जलता, अनीयत ॥ ४६ ॥

तात्पर्यार्थः—नूतनदोलं वसन्तोत्सवं चरितार्थयन् स्त्रीजनः निपुणोऽपि प्रियकण्ठमालिङ्गितुमिच्छया पीठरज्जुग्रहणे बाहुलतां शैथिल्यमकरोत् ॥ ४६ ॥

भाषाऽर्थः—नवीन झूले वाले वसन्तोत्सव का अनुभव करती हुई स्त्रियोंने चतुर होकर भी प्रिय के कंठ के आलिंगन की इच्छासे आसन की रस्सी को ग्रहण करनेमें भुजलता को शिथिल कर दिया ॥ ४६ ॥

अथ कोकिलाभिर्मदनाभिप्राये निवेदिते सति स्त्रीजनोऽक्रीडदित्याह—

**त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।**

**परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ४७ ॥**

सञ्जीविनी—त्यजतेति । बतेत्यामन्त्रणे, 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । बत अङ्गना मानं कोपं त्यजत । तदुक्तम्—"स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ॥" इति । विग्रहैर्विरोधैरलं विग्रहो न कार्य इत्यर्थः । गतमतीतं चतुरमुपभोगक्षमं वयो यौवनं पुनर्नैति नागच्छति । इत्येवंरूपे स्मरमते स्मराभिप्राये, नपुंसके भावे क्तः । परभृताभिः कोकिलाभिर्निवेदिते सतीव वधूजनो रमते स्म रेमे । कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनभयादिवोच्छृङ्खलमखेलदित्यर्थः ॥ ४७ ॥

अन्वयः—बत ! 'अङ्गनाः' मानं, त्यजत, विग्रहैः, अलं, गतं, चतुरं, वयः, पुनः, न, एति, इति, स्मरमते, परभृताभिः, निवेदिते, 'सति' इव, वधूजनः, रमते स्म ॥ ४७ ॥

सुधा—बत ! इत्यामन्त्रणे ।'अङ्गनाः' मानं = कोपं, प्रियापराधसूचिकाचेष्टामिति यावत्। त्यजत = जहीत, विग्रहैः = विरोधैः, अलं = विरोधो न कर्तव्यः, गतं = व्यतीतं, चतुरं = भोगसमर्थं, नवीनमिति यावत् । वयः = यौवनं, अवस्थेति यावत्। पुनः = भूयः, नैति = नागच्छति, इति = एवं, स्मरमते = मदनाशये, परभृताभिः = कोकिलाभिः, निवेदिते = कथिते, आज्ञापित इति यावत्। सतीति शेषः । इव, वधूजनः = विलासिनीजनः, रमते स्म = रेमे ॥ ४७ ॥

कोशः—'प्रिये कोपः समाख्यातो मानः' इति रसकौस्तुभः । 'बताऽऽमन्त्रणखेदयोः । धृत्याश्चर्यानुकम्पासु' इत्यनेकार्थसंग्रहः । 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी ॥ ४७ ॥

समासादि—परैर्भृता इति परभृतास्ताभिः परभृताभिः । स्मरस्य मतमिति स्मरमतं तस्मिन् स्मरमते ( त० पु० ) । वधूश्चासौ जन इति वधूजनः ( क० धा० ) ॥ ४७ ॥

व्याकरणम्—त्यजत = त्यज + लोट् । एति = इण् + लट् । निवेदिते = नि + विद् + क्तः + इट् । रमते = रमु ( क्रीडायाम्—उकारेत् ), लट् ॥ ४७ ॥

वाच्यपरिवर्तनम्—बत ! 'अङ्गनाभिः' मानं, त्यज्यतां, विग्रहैः, अलं, गतेन, चतुरेण, वयसा, पुनः, न, ईयते, इति, स्मरमते, परभृताभिः, निवेदिते, 'सति' इव, वधूजनेन, रम्यते स्म ॥ ४७ ॥

तात्पर्यार्थः—स्त्रियः ! यूयं कोपं त्यजत,विरोधो न कर्तव्यः,अतीतमुपभोगक्षमं यौवनं पुनर्नागच्छति, इत्येवं प्रकारेण मदनाशये कोकिलाभिर्निवेदिते सतीव स्त्रीजनोऽक्रीडत् ॥ ४७ ॥

भाषाऽर्थः—( स्त्रियों ! ) कोप छोड़ दो, विरोध मत करो, गई हुई ( भोगमें समर्थ ) नवीन अवस्था फिर नहीं आती है,इस तरह कामदेव का आशय कोकिलाओं से निवेदन करने पर मानो स्त्रियोंने रमण किया ॥ ४७ ॥

अथ दशरथो वसन्तसुखमनुभूय मृगयाविहारमाचकाङ्क्षेत्याह—

**अथ यथासुखमार्तवमुत्सवं समनुभूय विलासवतीसखः ।**
**नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसंनिभः ॥ ४८ ॥**

सञ्जीविनी—अथेति । अथानन्तरं मधु मथ्नातीति मधुमद्विष्णुः, संपदादित्वात्क्विप्। मधुर्वसन्तः, मथ्नातीति मथः, पचाद्यच् , मनसो मथो मन्मथः कामः तेषां संनिभः सदृशो मधुमन्मधुमन्मथसंनिभः स नरपतिर्दशरथो विलासवतीसखः स्त्रीसहचरः सन् ऋतुः प्राप्तोऽस्यार्तवः तमुत्सवं यथासुखं समनुभूय मृगयारतिं मृगयाविहारं चकमे आचकाङ्क्ष ॥ ४८ ॥

अन्वयः—अथ, मधुमन्मधुमन्मथसन्निभः, सः, नरपतिः, विलासवतीसखः, 'सन्' आर्त्तवम् , उत्सवं, यथासुखं, समनुभूय, मृगयारतिं, चकमे ॥ ४८ ॥

सुधा—अथ = अनन्तरं, मधुमन्मधुमन्मथसन्निभः = विष्णुवसन्तमदनसमः, सः = पूर्वोक्तः, नरपतिः = राजा, दशरथ इति यावत् । विलासवतीसखः = स्त्रीसहायः, सन्निति शेषः । आर्तवम् = ऋतुसम्बन्धिनम् , उत्सवं = महः, वसन्तोत्सवमिति यावत् । यथासुखं = सुखपूर्वकं, समनुभूय = सम्यगनुभवं कृत्वा, मृगयारतिम् ,आखेटविहारं, चकमे = वाञ्छति स्म ॥४८॥

कोशः—'सखा मित्रे सहाये ना वयस्यायां सखी मता' इति मेदिनी । 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इति, 'मदनो मन्मथो मारः' इति चामरः ॥ ४८ ॥

समासादि = सुखमनतिक्रम्य यथासुखम् ( अ० भा० ) । ऋतुः प्राप्तोऽस्येत्यार्तवस्तम् आर्तवम् । विलासो विद्यतेऽस्या इति विलासवती, विलासवत्याः सखेति विलासवतीसखः

(त०पु०) । नराणां पतिरिति नरपतिः (त०पु०)। मृगयाया रतिरिति मृगयारतिस्तां मृगयारतिम् (त०पु०) । मधुं मथ्नातीति मधुमत्, मथ्नातीति मथः, मनसो मथ इति मन्मथः, मधुमच्च मधु च मन्मथश्चेति मधुमन्मधुमन्मथाः (द्व०),तेषां सन्निभ इति मधुमन्मधुमन्मथसन्निभः ( त० पु० ) ॥ ४८ ॥

व्याकरणम्—आर्तवम् = ऋतु + अण् । समनुभूय = सम् + अनु + भू + क्त्वा,'ल्यबादेशः । चकमे = कमु ( कान्तौ—उकारेत् ), लिट् ॥ ४८ ॥

वाच्यपरिवर्तनम्—अथ, मधुमन्मधुमन्मथसन्निभेन, तेन, नरपतिना, विलासवतीसखेन, 'सता' आर्तवम्, उत्सवं, यथासुखं, समनुभूय, मृगयारतिः, चकमे ॥ ४८ ॥

तात्पर्यार्थः—अनन्तरं विष्णुवसन्तमदनसदृशः स राजा दशरथः स्त्रीसहचरः सन् वसन्तोत्सवं यथासुखमनुभूय मृगयाविहारमाचकाङ्क्ष ॥ ४८ ॥

भाषार्थः—इसके बाद विष्णु वसन्त और कामदेव के सदृश उस राजा (दशरथ) ने विलासवती स्त्रियों के मित्र होते हुये वसंतोत्सव के सुख को अनुभव कर शिकार खेलने की इच्छा किया ॥ ४८ ॥

अथ मन्त्रिभिरनुमोदितः सन् दशरथो ययावित्याह—

**परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।**
**श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९ ॥**

सञ्जीविनी—परिचयमिति । असौ मृगया चललक्ष्याणि मृगगवयादीनि तेषां निपातने परिचयमभ्यासं करोति, भयरुषोर्भयक्रोधयोस्तदिङ्गितबोधनं तेषां चललक्ष्याणामिङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानं च करोति, तनु शरीरं श्रमस्य जयान्निरासात्प्रगुणां प्रकृष्टलाघवादिगुणवतीं च करोति, अतो हेतोः सचिवैरनुमतोऽनुमोदितः सन् ययौ । सर्वं चैतद्युद्धोपयोगीत्यतस्तदपेक्षया मृगयाप्रवृत्तिः, न तु व्यसनितयेति भावः ॥ ४९ ॥

अन्वयः—असौ, चललक्ष्यनिपातने, परिचयं, करोति, भयरुषोः, तदिङ्गितबोधनं, च, 'करोति' श्रमजयात्, तनुं, प्रगुणां, च, 'करोति' अतः, 'दशरथः' सचिवैः, अनुमतः, 'सन्' ययौ ॥ ४९ ॥

सुधा—असौ = एषा, मृगयेति यावत् । चललक्ष्यनिपातने = चञ्चलमृगगवयादिशरव्यमारणे, परिचयं = प्रबोधम्, अभ्यासमिति यावत् । करोति = सम्पादयति, भयरुषोः = त्रासकोपयोः, तदिङ्गितबोधनं = मृगादिलक्ष्यचेष्टितज्ञानं, च, करोतीति शेषः । श्रमजयात् = परिश्रमनिरासात्, तनुं = शरीरं, प्रगुणां = प्रकृष्टगुणयुक्तां, च, करोतीति शेषः । अतः = अस्मात्कारणात्, सचिवैः = मन्त्रिभिः, अनुमतः = अनुमोदितः, सन्निति शेषः । ययौ = जगाम, दशरथ इति शेषः ॥ ४९ ॥

कोशः—'चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् । चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । 'लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्' इति मेदिनी । 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इति, 'मन्त्री सहायः सचिवौ' इति चामरः ॥ ४९ ॥

समासादि—चलानि च तानि लक्ष्याणीति चललक्ष्याणि ( क० धा० ), तेषां निपातनं तस्मिन् चललक्ष्यनिपातने ( त० पु० ) । भयञ्च रुट् च भयरुषौ तयोर्भयरुषोः ( द्व० ) । तेषामिङ्गितं तदिङ्गितं तस्य बोधनमिति तदिङ्गितबोधनम् (त०पु०) । श्रमस्य जय इति श्रमश्रयस्तस्मात् श्रमजयात ( त० पु० ) ॥ ४९ ॥

व्याकरणम्—लक्ष्य = लक्ष ( आलोचने ), ण्यत् । इङ्गित = इगि ( गतौ–इदित् ), क्तः + 'इदितो नुम् धातोः' इति नुम् + इट् । ययौ = या ( प्रापणे ), लिट् ॥ ४९ ॥

वाच्यपरिवर्तनम्—अनया, चललक्ष्यनिपातने, परिचयः, क्रियते, भयरुषोः, तदिङ्गितबोधनं, च, 'क्रियते' श्रमजयात, तनुः, प्रगुणा, च, 'क्रियते' अतः, 'दशरथेन' सचिवैः, अनुमतेन,

'सता' यत्ने ॥ ४९ ॥

तात्पर्यार्थः—एषा मृगया चञ्चलानां मृगगवयादीनां मारणेऽभ्यासं करोति, तेषां मृगगवयादीनां भयकोपयोः चेष्टाज्ञानं च करोति, परिश्रमनिरासात् शरीरं प्रकृष्टगुणयुक्तं च करोति, अस्मात्कारणात् स दशरथो मन्त्रिभिरनुमोदितः सन् जगाम ॥ ४९ ॥

भाषाऽर्थः--यह ( मृगया ) चलायमान निशानाभूत मृग आदि को मारने में परिचय याने निपुण करती है, उन ( मृग आदि ) के भय और क्रोध की चेष्टा का ज्ञान कराती है, और परिश्रम को हटाने के कारण शरीर को अच्छे गुणवाला करती है, इस कारण ( दशरथ ) मंत्रियों से अनुमोदित होकर गया ॥ ४९ ॥

अथ दशरथः अश्वखुरोत्थापितधूलिभिराकाशम् अविद्यमानमिवाकरोदित्याह—

**मृगवनोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।**

**गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥ ५० ॥**

सञ्जीविनी—मृगवनेति । मृगाणां वनं तस्योपगमः प्राप्तिः तस्य क्षममर्हं वेषं बिभर्तीति स तथोक्तः, मृगयाविहारानुगुणवेषधारीत्यर्थः । विपुलकण्ठे निषक्तशरासनो लग्नधन्वा ना सवितेव नृसविता पुरुषश्रेष्ठः, उपमितसमासः । स राजाऽश्वखुरोद्धतरेणुभिर्गगनं वितानं तुच्छम् असदिवाकरोत्, गगनं नालक्ष्यतेत्यर्थः । 'वितानं तुच्छमन्दयोः' इति विश्वः । अथवा सवितानमित्येकं पदम्, सवितानमुल्लोचसहितमिवाकरोत् । 'अस्त्री वितानमुल्लोचः' इत्यमरः ॥ ५० ॥

अन्वयः—मृगवनोपगमक्षमवेषभृत्, विपुलकण्ठनिषक्तशरासनः, नृसविता, सः, अश्वखुरोद्धतरेणुभिः, गगनं, वितानम्, इव, अकरोत् ॥ ५० ॥

सुधा—मृगवनोपगमक्षमवेषभृत् = हरिणारण्यप्राप्तियोग्यनेपथ्यधारी, विपुलकण्ठनिषक्तशरासनः = महद्गललग्नचापः, नृसविता = नरसूर्यः, जनश्रेष्ठ इत्यर्थः । सः = पूर्वोक्तः, दशरथ इति यावत् । अश्वखुरोद्धतरेणुभिः = तुरगशफोद्धूतधूलिभिः, गगनम् = आकाशं, वितानं = तुच्छम्, अविद्यमानमिति यावत् । इव, अकरोत् = चकार, अथवा 'सवितानम्' इत्येकं पदम्, तत्र सवितानम् = उल्लोचसहितम्, इव, अकरोदित्यर्थो बोध्यः ॥ ५० ॥

कोशः—'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इति, 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् । वड्रोरुविपुलम्' इति चामरः । 'खुरः शफे कोकदले' इति हैमः । 'वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् । क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः' इति मेदिनी ॥ ५० ॥

समासादि—मृगाणां वनमिति मृगवनं तस्योपगम इति मृगवनोपगमस्तस्य क्षमं वेषं बिभर्तीति स मृगवनोपगमक्षमवेषभृत् ( त० पु० ) । विपुलश्चासौ कण्ठ इति विपुलकण्ठः ( क० धा० ), तस्मिन् निषक्तं शरासनं येन स विपुलकण्ठनिषक्तशरासनः ( ब० व्री० ) । अश्वस्य खुरावित्यश्वखुरौ (त०पु०), ताभ्यामुद्धता रेणव इत्यश्वखुरोद्धतरेणवस्तैरश्वखुरोद्धतरेणुभिः ( त० पु० ) । ना सविता इवेति नृसविता ॥ ५० ॥

व्याकरणम्--निषक्त = नि + षञ्ज (सङ्गे), क्तः + नलोपः । उद्धत = उत + हन् + क्तः + नलोपः । अकरोत् = अ + कृ + लङ् ॥ ५० ॥

वाच्यपरिवर्तनम्--मृगवनोपगमक्षमवेषभृता, विपुलकण्ठनिषक्तशरासनेन, नृसवित्रा, तेन, अश्वखुरोद्धतरेणुभिः, गगनं, वितानम्, इव, अक्रियत ॥ ५० ॥

तात्पर्यार्थः--मृगारण्यप्राप्तियोग्यवेषधारी महत्स्कन्धलग्नधन्वा पुरुषश्रेष्ठः स दशरथः, अश्वखुरोद्धूतैर्धूलिभिराकाशं तुच्छमिव ( अथवा--उल्लोचसहितमिव ) अकरोत् ॥ ५० ॥

भाषाऽर्थः--मृगों के वनमें जाने योग्य वेष धारण किये, बड़े कंठ पर धनुष लगाये पुरुष रूपी सूर्य उस ( दशरथ ) ने घोड़ों के खुरों से उठाई हुई धूलिसे आकाश को तुच्छ ( अथवा चँदवा के सहित ) सा करदिया ॥ ५० ॥

अथ दशरथः रुर्वाख्यमृगैश्चरितासु भूमिषु व्यद्योतिष्टेत्याह—

**ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।**
**तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥**

सञ्जीविनी—ग्रथितेति । वनमालया वनपुष्पस्रजा ग्रथितमौलिर्बद्धधम्मिल्लः । 'पत्रपुष्पमयी माला वनमाला प्रकीर्तिता' इति । तरूणां पलाशैः पत्रैः सवर्णः समानस्तनुच्छदो वर्म यस्य स तथोक्तः, इदं च वर्मणः पलाशसावर्ण्याभिधानं मृगादीनां विश्वासार्थम् । तुरगस्य वल्गनेन गतिविशेषेण चञ्चलकुण्डलोऽसौ दशरथो रुरुभिर्मृगविशेषैश्चेष्टिताश्चरिता या भूमयस्तासु विरुरुचे विदिद्युते ॥ ५१ ॥

अन्वयः—वनमालया, ग्रथितमौलिः, तरुपलाशसवर्णतनुच्छदः, तुरगवल्गनचञ्चलकुण्डलः, रुरुचेष्टितभूमिषु, विरुरुचे ॥ ५१ ॥

सुधा—वनमालया = अरण्यपुष्पमाल्येन, ग्रथितमौलिः = गुम्फितधम्मिल्लः, तरुपलाशसवर्णतनुच्छदः = वृक्षपत्रसमानकवचः, तुरगवल्गनचञ्चलकुण्डलः = अश्ववल्गिताख्यगत्या चलकर्णवेष्टनः, असौ = एषः, दशरथ इति यावत् । रुरुचेष्टितभूमिषु = रुर्वाख्यमृगचरितमहीषु, विरुरुचे = व्यद्योतिष्ट, दशरथस्य वृक्षपत्रसवर्णकवचधारणं हरिणादीनां विश्वासार्थम् ॥५१॥

कोशः—'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्' इति मेदिनी ।'पत्रं पलाशं छदनम्' इति, 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इति, 'आस्कन्दितं धोरितिकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्चधाराः' इति चामरः ॥ ५१ ॥

समासादि—ग्रथिता मौलयो यस्य स ग्रथितमौलिः (ब०व्री०) । वनस्य माला वनमाला तया वनमालया (त०पु०) । तरूणां पलाशानीति तरुपलाशानि (त०पु०), तैः सवर्णस्तनुच्छदो यस्य स तरुपलाशसवर्णतनुच्छदः ( ब० व्री० ) । तुरगस्य वल्गनमिति तुरगवल्गनं तेन चञ्चलं कुण्डलं यस्य स तुरगवल्गनचञ्चलकुण्डलः (ब०व्री०) । चेष्टिताश्च ता भूमय इति चेष्टितभूमयः ( क० धा० ), रुरुभिश्चेष्टितभूमय इति रुरुचेष्टितभूमयस्तासु रुरुचेष्टितभूमिषु ( त० पु० ) ॥ ५१ ॥

व्याकरणम्—तनुच्छदः = तनु + छद ( अपवारणे ), 'पुंसि संज्ञायां घः' इति घः । विरुरुचे = वि + रुच ( दीप्तावभिप्रीतौ च, ) लिट् ॥ ५१ ॥

वाच्यपरिवर्तनम्—वनमालया, ग्रथितमौलिना, तरुपलाशसवर्णतनुच्छदेन, तुरगवल्गनचञ्चलकुण्डलेन, अमुना, रुरुचेष्टितभूमिषु, विरुरुचे ॥ ५१ ॥

तात्पर्यार्थः—अरण्यपुष्पमय्या मालया बद्धधम्मिल्लः वृक्षाणां पत्रैः समानकवचयुक्तः अश्वस्य वल्गिताख्यगतिविशेषेण चञ्चलकुण्डलोऽसौ दशरथः रुरुनामकमृगैश्चरितासु भूमिषु विदिद्युते ॥ ५१ ॥

भाषाऽर्थः—वन के पुष्पों की माला से गुथे जूड़े वाला, वृक्षों के पत्तों के वर्ण के सदृश कवच वाला, घोड़े की वल्गन ( उछाल ) की शीघ्र गति से चंचल कुंडल वाला यह ( दशरथ ) रुरु नाम के मृगों से चली हुई पृथ्वी पर शोभायमान हुआ । ( शरीर के आगे के भाग को समेट कर खराब स्थल आदि पर मुख को टेढ़ा करके चलने को 'वल्गन' या 'वल्गित' कहते हैं ) ॥ ५१ ॥

अथ वनदेवतास्तं दशरथं ददृशुरित्याह—

**तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।**
**ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोसलम् ॥ ५२ ॥**

सञ्जीविनी—तनुलतेति । तनुषु लतासु विनिवेशितविग्रहाः संक्रमितदेहाः भ्रमरेषु संक्रमिता ईक्षणवृत्तयो दृग्व्यापारा यासां ता वनदेवताः सुनयनं सुलोचनं नयेन नीत्या नन्दिता-

स्तोषिताः कोसला येन तं दशरथमध्वनि ददृशुः। प्रसन्नपावनतया ते देवता अपि गूढवृत्त्या ददृशुरित्यर्थः ॥ ५२ ॥

अन्वयः—तनुलताविनिवेशितविग्रहाः, भ्रमरसंक्रमितेक्षणवृत्तयः, वनदेवताः, सुनयनं, नयनन्दितकोसलं, तम्, अध्वनि, ददृशुः ॥ ५२ ॥

सुधा—तनुलताविनिवेशितविग्रहाः = सूक्ष्मवल्लीसंक्रमितशरीराः, भ्रमरसंक्रमितेक्षणवृत्तयः = भृङ्गसंलग्ननयनव्यापाराः, वनदेवताः = अरण्यदेवताः, सुनयनं = सुलोचनं, नयनन्दितकोसलं = नीत्या तोषितकोसलाख्यदेशं, तं = पूर्वोक्तं, दशरथमिति यावत्। अध्वनि = मार्गे, ददृशुः = अपश्यन् ॥ ५२ ॥

कोशः—'स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु' इति, 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इति, 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः' इति चामरः ॥ ५२ ॥

समासादि—तनवश्च ता लता इति तनुलताः ( क० धा० ), तासु विनिवेशिताः विग्रहा यासां तास्तनुलताविनिवेशितविग्रहाः ( ब० व्रो० )। ईक्षणयोर्वृत्तय इति ईक्षणवृत्तयः ( त० पु० ), भ्रमरेषु संक्रमिता ईक्षणवृत्तयो यासां ता भ्रमरसंक्रमितेक्षणवृत्तयः ( ब० व्रो० )। वनस्य देवता इति वनदेवताः ( त० पु० )। शोभने नयने यस्य स तं सुनयनम् (ब० व्रो०)। नयेन नन्दिताः कोसला येन स तं नयनन्दितकोसलम् ( ब० व्रो० ) ॥ ५२ ॥

व्याकरणम्—विनिवेशित = वि + नि + विश + क्तः + इट्। संक्रमित = सम् + क्रमु + क्तः + इट्। ददृशुः = दृशिर् + लिट्। नन्दित = टुनदि + क्तः + इट् ॥ ५२ ॥

वाच्यपरिवर्तनम्—तनुलताविनिवेशितविग्रहाभिः, भ्रमरसंक्रमितेक्षणवृत्तिभिः, वनदेवताभिः, सुनयनः, नयनन्दितकोसलः, सः, अध्वनि, ददृशे ॥ ५२ ॥

तात्पर्यार्थः—सूक्ष्मलतासु संक्रमितशरीराः भ्रमरेषु संलग्ननयनव्यापाराः वनदेवताः सुलोचनं नीत्या तोषितकोसलाख्यदेशं तं दशरथं मार्गे ददृशुः ॥ ५२ ॥

भाषाऽर्थः—छोटी लताओं में छिपाये हुये शरीरवाली भ्रमरों में नेत्रों के व्यापार को लगाई हुई वनदेवता ने सुंदर नेत्र (और) नीति से कोसल देश को तुष्ट करने वाले उस (दशरथ) को मार्ग में देखा ॥ ५२ ॥

अथ दशरथो वनं प्रविष्टवानित्याह—

**श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु विवेश सः।**
**स्थिरतुरङ्गमभूमि निपानवन्मृगवयोगवयोपचितं वनम् ॥ ५३ ॥**

सञ्जीविनी—श्वगणीति। स दशरथः शुनां गणः स एषामस्तीति श्वगणिनः श्वग्राहिणः तैः, वागुरा मृगबन्धनरज्जुः, 'वागुरा मृगबन्धनी' इत्यमरः। तया चरन्तीति वागुरिका जालिकाः, "चरति" इति ठक्प्रत्ययः। 'द्वौ वागुरिकजालिकौ' इत्यमरः। तैश्च प्रथममास्थितमधिष्ठितं व्यपगता अनला दावाग्नयो दस्यवस्तस्कराश्च यस्मात्तथोक्तम्, 'दस्युतस्करमोषकाः' इत्यमरः। 'कारयेद्वनशोधनमादौ मातुरन्तिकमपि प्रविविक्षुः। आप्तशस्त्र्यनुगतः प्रविशेद्वा सङ्कटे च गहने च न तिष्ठेत् ॥' इति कामन्दकः। स्थिरा दृढा पङ्कादिरहिता तुरङ्गमयोग्या भूमिर्यस्य तत् निपानवदाहावयुक्तम्, 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः। मृगैर्हरिणादिभिर्वयोभिः पक्षिभिर्गवयैर्गोसदृशैररण्यपशुविशेषैश्चोपचितं समृद्धं वनं विवेश प्रविष्टवान् ॥५३॥

अन्वयः—सः, श्वगणिवागुरिकैः, प्रथमास्थितं, व्यपगतानलदस्यु, स्थिरतुरङ्गमभूमि, निपानवत, मृगवयोगवयोपचितं, वनं, विवेश ॥ ५३ ॥

सुधा—सः = पूर्वोक्तः, दशरथ इति यावत्। श्वगणिवागुरिकैः = शुनकग्राहिभिर्जालिकैः, व्याधैरित्यर्थः। प्रथमास्थितं = पूर्वमधिष्ठितं, व्यपगतानलदस्यु = दावाग्निना चौरेण च रहितं, स्थिरतुरङ्गमभूमि = दृढाश्वयोग्यपृथिवीकम्, कर्दमादिरहितमश्वगमनार्हस्थलमिति

यावत्। निपानवत् = आहावयुक्तं, कूपसमीपरचितजलाधारयुतमिति यावत्। मृगवयोगवयोपचितं = हरिणपक्षिगवयसमृद्धं, वनम् = अरण्यं, विवेश = प्राविशत् ॥ ५३ ॥

कोशः—'शुनको भषकः श्वा स्यात्' इति, 'वागुरा मृगबन्धनी' इति, 'द्वौ वागुरिकजालिकौ' इति चामरः। 'दस्युः प्रत्यर्थि चौरयोः' इति हैमः। 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इति, 'आहावस्तु निपानं स्यादुपकूपजलाशये' इति चामरः। 'वयः पक्षिणि बाल्यादौ' इति मेदिनी ॥ ५३ ॥

समासादि—शुनां गणः श्वगणः (त० पु०), श्वगणो विद्यत एषामिति ते श्वगणिनः, वागुरया मृगबन्धनरज्ज्वा चरन्तीति ते वागुरिकाः, श्वगणिनश्च वागुरिकाश्चेति ते श्वगणिवागुरिकास्तैः श्वगणिवागुरिकैः (द्व०)। प्रथमम् आस्थितमिति तत् प्रथमास्थितम् (क०धा०)। अनलश्च दस्यवश्चेत्यनलदस्यवः (द्व०), व्यपगता अनलदस्यवो यस्मात्तद् व्यपगतानलदस्यु (ब० व्री०)। तुरङ्गमाणां भूमिः तुरङ्गमभूमिः (त० पु०), स्थिरा तुरङ्गमभूमिर्यस्य तत् स्थिरतुरङ्गमभूमि (ब० व्री०)। मृगाश्च वयांसि च गवयाश्चेति मृगवयोगवयाः (द्व०), तैरुपचितमिति तद् मृगवयोगवयोपचितम् (त० पु०) ॥ ५३ ॥

व्याकरणम्—वागुरिकैः = वागुरा + ठक्। व्यपगत = वि + अप + गम् + क्तः + मलोपः। विवेश = विश + लिट्। उपचितम् = उप + चिञ् (चयने—जित्), क्तः ॥ ५३ ॥

वाच्यपरिवर्तनम्—तेन, श्वगणिवागुरिकैः, प्रथमास्थितं, व्यपगतानलदस्यु, स्थिरतुरङ्गमभूमि, निपानवत्, मृगवयोगवयोपचितं, वनं, विविशे ॥ ५३ ॥

तात्पर्यार्थः—स दशरथः श्वग्राहिभिः जालिकैश्च पूर्वमधिष्ठितं दावाग्नितस्करभयरहितम् अश्वगमनयोग्यपङ्करहितदृढभूमियुक्तं हरिणपक्षिगवयैः समृद्धं वनं प्रविष्टवान् ॥ ५३ ॥

भाषाऽर्थः—उस (दशरथ) ने कुत्तों के समूह को रखने वाले और जाल से मृगों को बांधने वालों (व्याधों) से प्रथम अधिष्ठित अग्नि और चोरों से रहित, घोड़ों के योग्य (कीचड़ आदि से शून्य) कठिन भूमि वाले, प्याऊ से युक्त, हरिण आदि पक्षियों और वन गैयों से पूर्ण वन में प्रवेश किया ॥ ५३ ॥

अथ दशरथः धनुः कथमिव जग्राहेत्याह—

**अथ नभस्य इव त्रिदशायुधं कनकपिङ्गतडिद्गुणसंयुतम् ।**
**धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेसरी ॥ ५४ ॥**

सञ्जीविनी—अथेति। अथ अनाधिर्मनोव्यथारहितो नरवरो नरश्रेष्ठः रवेण धनुष्टङ्कारेण रोषिताः केसरिणः सिंहा येन स राजा कनकमिव पिङ्गः पिशङ्गो यस्तडिदेव गुणो मौर्वी तेन संयुतं त्रिदशायुधमिन्द्रचापं नभस्यो भाद्रपदमास इव, 'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः' इत्यमरः। अधिज्यमधिगतमौर्वीकं धनुरुपाददे जग्राह ॥ ५४ ॥

अन्वयः—अथ, अनाधिः, रवरोषितकेसरी, नरवरः, कनकपिङ्गतडिद्गुणसंयुतं, त्रिदशायुधं, नभस्यः, इव, अधिज्यं, धनुः, उपाददे ॥ ५४ ॥

सुधा—अथ = अनन्तरं, वनप्रवेशानन्तरमिति यावत्। अनाधिः = मानसीव्यथारहितः, रवरोषितकेसरी = धनुष्टङ्कारेण क्रोधीकृतसिंहः, नरवरः = मनुष्यश्रेष्ठः, दशरथ इति यावत्। कनकपिङ्गतडिद्गुणसंयुतं = सुवर्णपिशङ्गविद्युद्रूपमौर्वीयुक्तं, त्रिदशायुधम् = इन्द्रधनुः, नभस्यः = भाद्रपदः, अधिज्यम् = आरोपितमौर्वीकं, धनुः = चापम्, उपाददे = गृहीतवान् ॥ ५४ ॥

कोशः—'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः' इति, 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इति, 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इति, 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इति चामरः ॥ ५४ ॥

समासादि—नभः (अभ्रम्), तत्र साधुर्नभस्यः। त्रिदशानामायुधमिति त्रिदशायुधम्

( त० पु० ) । कनकमिव पिङ्गस्तडिदेव गुणो यस्य स कनकपिङ्गतडिद्गुणः ( ब० व्री० ), तेन संयुतस्तं कनकपिङ्गतडिद्गुणसंयुतम् (त० पु०) । अधिरोपिता ज्या यस्मिन् तदधिज्यम् (ब० व्री०)। न आधिरित्यनाधिः । नरेषु वर इति नरवरः ( त० पु० ) । रवेण रोषिता केसरिणो येन स रवरोषितकेसरी ( ब० व्री० ) ॥ ५४ ॥

व्याकरणम्—नभस्यः = नभस् + 'तत्र साधुः' इति यत् । उपाददे = उप + आ + दद + लिट् ॥ ५४ ॥

वाच्यपरिवर्तनम्—अथ, अनाधिना, रवरोषितकेसरिणा, नरवरेण, कनकपिङ्गतडिद्गुणसंयुतं, त्रिदशायुधं, नभस्येन, इव, धनुः, उपाददे ॥ ५४ ॥

तात्पर्यार्थः—अनन्तरं मानसीव्यथारहितः धनुष्टङ्कारेण रोषितसिंहः नरश्रेष्ठः स दशरथः सुवर्णपिङ्गविद्युद्रूपमौर्वीसंयुक्तमिन्द्रधनुः भाद्रपदमास इव आरोपितमौर्वीकं धनुर्जग्राह ॥५४॥

भाषाऽर्थः—इसके बाद मन की व्यथा से रहित धनुष के टङ्कार से सिंह को क्रोधित करने वाले मनुष्यों में श्रेष्ठ ( दशरथ ) ने सोने के सदृश बिजली रूपी प्रत्यंचे से युक्त इंद्रधनुष को भाद्रमास की नाई ग्रहण किया ॥ ५४ ॥

अथ मृगसमूहो दशरथस्याग्रे प्रादुर्बभूवेत्याह—

**तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणीगमनं पुरस्तात् ।**
**आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णसारम् ॥ ५५ ॥**

सञ्जीविनी—तस्येति । स्तनप्रणयिभिः स्तनपायिभिरेणशावैर्हरिणशिशुभिः, 'पृथुकः शावकः शिशुः' इत्यमरः । व्याहन्यमानं तद्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्रतिषिध्यमानं हरिणीनां गमनं गतिर्यस्य तत्, कुशा गर्भे येषां तानि मुखानि यस्य तत्कुशगर्भमुखम्, यस्य यूथस्याग्रेसरः पुरःसरो गर्वितो दृप्तश्च कृष्णसारो यस्य तत्, मृगाणां यूथं कुलम्, 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्' इत्यमरः । तस्य दशरथस्य पुरस्तादग्रे आविर्बभूव । वसन्ततिलकावृत्तम् ॥ ५५ ॥

अन्वयः—स्तनप्रणयिभिः, एणशावैः, मुहुः, व्याहन्यमानहरिणीगमनं, कुशगर्भमुखं, तदग्रसरगर्वितकृष्णसारं, मृगाणां, यूथं, तस्य, पुरस्तात्, आविर्बभूव ॥ ५५ ॥

सुधा—स्तनप्रणयिभिः = कुचस्नेहिभिः, स्तनपानकर्तृभिरिति यावत् । एणशावैः = मृगशिशुभिः, मुहुः = असकृत्, पुनःपुनरिति यावत् । व्याहन्यमानहरिणीगमनं = तद्गत्यनुसारेण प्रतिषिध्यमानमृगीगतिं, कुशगर्भमुखं, दर्भान्तर्वदनं, तदग्रसरगर्वितकृष्णसारं = यूथाग्रगामिदृप्तकृष्णसाराख्यमृगं, मृगाणां = हरिणानां, यूथं = कुलं, समूह इति यावत् । तस्य = दशरथस्य, पुरस्तात् = अग्रतः, आविर्बभूव = प्रादुरभूत् । इतो वसन्ततिलकं छन्दः, लक्षणन्तूक्तमष्टमे ॥५५॥

कोशः—'स्तनौ कुचौ' इत्यमरः । प्रणयः प्रश्रये प्रेम्णि याञ्चाविश्रम्भयोरपि' इति मेदिनी । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इति, 'अस्त्री कुशं कुथो दर्भः पवित्रम्' इति चामरः । 'यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति' इति मेदिनी ॥ ५५ ॥

समासादि—स्तनयोः प्रणयोऽस्त्येषामिति ते तैः स्तनप्रणयिभिः ( त० पु० ) । एणानां शावास्तैरेणशावैः ( त० पु० ) । हरिणीनां गमनमिति हरिणीगमनम् ( त० पु० ), व्याहन्यमानं हरिणीगमनं यस्य तद् व्याहन्यमानहरिणीगमनम् ( ब० व्री० ) । कुशा गर्भे येषां तानि कुशगर्भाणि, कुशगर्भाणि मुखानि यस्य तत् कुशगर्भमुखम् ( ब० व्री० ) । गर्वितश्चासौ कृष्णसारश्चेति गर्वितकृष्णसारः ( क० धा० ), अग्रे सरतीति अग्रेसरः, तस्य अग्रेसरस्तदग्रेसरः (त०पु०), तदग्रेसरो गर्वितकृष्णसारो यस्य तत् तदग्रसरगर्वितकृष्णसारम् (ब० व्री०) ॥ ५५ ॥

व्याकरणम्—आविर्बभूव = आविर् + भू + लिट् । गर्वित = गर्व ( दर्प ), क्तः + इट् ॥५५॥

वाच्यपरिवर्तनम्—स्तनप्रणयिभिः, एणशावैः, मुहुः, व्याहन्यमानहरिणीगमनेन, कुशगर्भमुखेन, तदग्रसरगर्वितकृष्णसारेण, मृगाणां, यूथेन, तस्य, पुरस्तात्, आविर्बभूवे ॥ ५५ ॥

तात्पर्यार्थः--स्तनपानशीलैरेणशिशुभिर्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्रतिषिध्यमानमृगीगमनः दर्भगर्भाननः यूथपुरोगामिदृप्तकृष्णसारो मृगाणां समूहो दशरथस्याग्रे प्रादुर्बभूव ॥ ९५ ॥

भाषाऽर्थः—स्तनों के स्नेही मृगों के बच्चों से बारंबार हरिणियों का गमन रोका गया, और मुखों में कुश भरा हुआ, उस समूह के आगे चलने वाला गर्वी काले मृगों का समूह उस ( दशरथ ) के आगे से निकला ॥ ९५ ॥

अथ मृगयूथमश्रुसिक्तैर्दृष्टिपातैर्वनं श्यामीकृतवानित्याह--

**तत्प्रार्थितं जवनवाजिगतेन राज्ञा तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।**
**श्यामीचकार वनमाकुलदृष्टिपातैर्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ९६ ॥**

सञ्जीविनी—तदिति । जवनो जवशीलः, "जुचङ्क्रम्यदन्द्रम्य सृगृधिज्वलशुचलषपतपदः" इत्यनेन युच्प्रत्ययः । 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः' इत्यमरः । तं वाजिनमश्वं गतेनारूढेन तूणी इषुधिः, "बह्वादिभ्यश्च" इति स्त्रियां ङीष् । तस्या मुखाद्विवरादुद्धृतशरेण राज्ञा प्रार्थितमभियातम्, 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः । अत एव विशीर्णा पङ्क्तिः संघीभावो यस्य तत् मृगयूथं कर्तृ, आर्द्रैर्भयादश्रुसिक्तैराकुला भयचकिता ये दृष्टिपातास्तैः वातेरितोत्पलदलप्रकरैः पवनकम्पितेन्दीवरदलवृन्दैरिव वनं श्यामीचकार ॥९६॥

अन्वयः—जवनवाजिगतेन, तूणीमुखोद्धृतशरेण, राज्ञा, प्रार्थितं, विशीर्णपङ्क्ति, तत्, आर्द्रैः, आकुलदृष्टिपातैः, वातेरितोत्पलदलप्रकरैः, इव, वनं, श्यामीचकार ॥ ९६ ॥

सुधा—जवनवाजिगतेन = वेगगाम्यश्वारूढेन, तूणीमुखोद्धृतशरेण = निषङ्गविवरनिष्कासितबाणेन, राज्ञा = नृपेण, दशरथेनेति यावत् । प्रार्थितम् = अभिगतं, विशीर्णपङ्क्ति = खण्डितश्रेणि, तत् = पूर्वोक्तं, मृगयूथमिति यावत् । आर्द्रैः = अश्रुसिक्तैः, आकुलदृष्टिपातैः = भयव्याकुललोचनैः, वातेरितोत्पलदलप्रकरैः = वायुकम्पितेन्दीवरपत्रसङ्घैः, इव = यथा, वनम् = अरण्यं, श्यामीचकार = कृष्णवर्णं कृतवान् ॥ ९६ ॥

कोशः—'जवनो वेगिवेगयोः । वेग्यश्वे नावृति' इत्यनेकार्थसंग्रहः । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । 'उत्पलं कुष्ठभूरुहे । इन्दीवरे मांसशून्ये' इति हैमः । 'दलमुत्सेधखण्डयोः । शस्त्रीच्छेदेऽप्यपद्रव्ये पत्रे' इति, 'प्रकरः स्यात्पुमान् सङ्घे विकीर्णकुसुमादिषु' इति च मेदिनी ॥ ९६ ॥

समासादि—जवनश्चासौ वाजी चेति जवनवाजी (क० धा०), जवनवाजिनं गत इति जवनवाजिगतस्तेन जवनवाजिगतेन ( त० पु० ) । तूण्या मुखमिति तूणीमुखं ( त० पु० ), तस्मादुद्धृतः शरो येन स तेन तूणीमुखोद्धृतशरेण ( ब० व्री० ) । विशीर्णा पङ्क्तिर्यस्य तत् विशीर्णपङ्क्ति ( ब० व्री० ) । अश्यामं श्याममिव चकार इति श्यामीचकार । दृष्टीनां पाता इति दृष्टिपाताः ( क० धा० ), आकुलाश्च ते दृष्टिपाता इत्याकुलदृष्टिपातास्तैराकुलदृष्टिपातैः ( क० धा० ) । उत्पलानां दलानीत्युत्पलदलानि ( त० पु० ), वातेनेरितानि च तान्युत्पलदलानीति वातेरितोत्पलदलानि ( क० धा० ), तेषां प्रकरास्तैर्वातेरितोत्पलदलप्रकरैः ( त० पु० ) ॥ ९६ ॥

व्याकरणम्—जवनः = जु + 'जुचङ्क्रम्यदन्द्रम०' इत्यादिना युच् । पङ्क्ति = पचि (विस्तारे-इदित्), क्तिच् + नुम् । श्यामीचकार = श्याम + कृ + लिट् + च्विः ॥९६॥

वाच्यपरिवर्तनम्--जवनवजिगतेन, तूणीमुखोद्धृतशरेण, राज्ञा, प्रार्थितेन, विशीर्णपङ्क्तिना, तेन, आर्द्रैः, आकुलदृष्टिपातैः, वातेरितोत्पलदलप्रकरैः, इव, वनं, श्यामीचक्रे ॥ ९६ ॥

तात्पर्यार्थः--यथा वायुकम्पितैर्नीलकमलदलसमूहैर्वनं श्यामीभवति, तथा शीघ्रगाम्यश्वारूढेन निषङ्गविवरान्निष्कासितबाणेन राज्ञा दशरथेनाभियातं विशीर्णराजि तन्मृगयूथम् अश्रुसिक्तैर्भयचकितदृक्पातैर्वनं श्यामीकृतवान् ॥ ९६ ॥

भावार्थः—तेज चलने वाले घोड़े पर चढ़े, तरकस के मुखसे बाण निकाले हुये राजा ( दशरथ ) से खदेड़े गये और भिन्न पंक्ति वाले उस मृगों के समूहने, ( आंसुओं से ) आर्द्र और भयचकित दृष्टियों से, वायुसे कंपाये गये नीले पद्म के पत्रों के समूह की नाई वन को श्यामवर्ण सा किया ॥ ५६ ॥

अथ दशरथः आकृष्टमपि बाणं न मुमोचेत्याशयेनाह—

**लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।**
**आकर्णकृष्टमपि कामितया स धन्वी बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥५७॥**

सञ्जीविनी—लक्ष्यीकृतस्येति । हरिरिन्द्रो विष्णुर्वा तस्येव प्रभावः सामर्थ्यं यस्य स तथोक्तः धन्वी धनुष्मान्स नृपः लक्ष्यीकृतस्य वेद्धुमिष्टस्य हरिणस्य स्वप्रेयसो देहं व्यवधायानुरागादन्तर्धाय स्थितां सह चरतीति सहचरी, पचादिषु चरतेष्टिकरणान्ङीप् । यथाऽऽह वामनः—'अनुचरतीति चरेष्टित्वात्' इति । तां सहचरीं हरिणीं प्रेक्ष्य कामितया स्वयं कामुकत्वात् कृपामृदुमनाः करुणार्द्रचित्तः सन् आकर्णकृष्टमपि, दुष्प्रतिसंहरमपीत्यर्थः । बाणं प्रतिसंजहार, नैपुण्यादित्यर्थः । नैपुण्यं तु धन्वीत्यनेन गम्यते ॥ ५७ ॥

अन्वयः—हरिप्रभावः, धन्वी, सः, लक्ष्यीकृतस्य, हरिणस्य, देहं, व्यवधाय, स्थितां, सहचरीं, प्रेक्ष्य, कामितया, कृपामृदुमनाः, 'सन्' आकर्णकृष्टम्, अपि, बाणं, प्रतिसञ्जहार ॥५७॥

सुधा—हरिप्रभावः = इन्द्रपराक्रमः, विष्णुपराक्रमो वा, धन्वी = धनुर्धरः, सः = दशरथः, लक्ष्यीकृतस्य = शरव्यीकृतस्य, वेद्धमिष्टस्येति यावत् । हरिणस्य = मृगस्य, देहं = शरीरं, व्यवधाय = तिरोधाय, अनुरागाद् व्यवधानं कृत्वेति यावत् । स्थिताम् = अवस्थितां, सहचरीम् = अनुचरीं, हरिणीमित्यर्थः । प्रेक्ष्य = अवलोक्य, कामितया = कामुकत्वेन, कृपामृदुनाः = दयाकोमलहृदयः, करुणापूर्णचित्त इत्यर्थः । सन्निति शेषः । आकर्णकृष्टं = कर्णपर्यन्तमाकर्षितम्, अपि, बाणं = शरं, प्रतिसञ्जहार = अवतारितवान्, न मुमोचेत्यर्थः ॥ ५७ ॥

कोशः—' हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । हरिर्वाच्यवदाख्यातः' इति विश्वः । 'अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् । अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः ॥ ५७ ॥

समासादि—न लक्ष्यमलक्ष्यम्, अलक्ष्यं लक्ष्यं कृत इति लक्ष्यीकृतस्तस्य लक्ष्यीकृतस्य । हरेरिव प्रभावो यस्य स हरिप्रभावः ( ब० व्री० ) । सह चरतीति सहचरी तां सहचरीम् । कर्णमभिव्याप्य आकर्णम् ( अ० भा० ), आकर्णं कृष्ट इत्याकर्णकृष्टस्तमाकर्णकृष्टम् । कामिनो भावः कामिता तया कामितया । कृपया मृदु मनो यस्य स कृपामृदुमनाः (ब०व्री०) ॥५७॥

व्याकरणम्—प्रेक्ष्य = प्र + ईक्ष ( दर्शने ), क्त्वा, ल्यबादेशः । व्यवधाय = वि + अव + धा + ल्यप् । धन्वी = धनुष् + 'व्रीह्यादिभ्यश्च' इति इनिः । प्रतिसञ्जहार = प्रति + सम् + हृ + लिट् ॥ ५७ ॥

वाच्यपरिवर्तनम्—हरिप्रभावेण, धन्विना, तेन, लक्ष्यीकृतस्य, हरिणस्य, देहं, व्यवधाय, स्थितां, सहचरीं, प्रेक्ष्य, कामितया, कृपामृदुमनसा, 'सता' आकर्णकृष्टः, अपि, बाणः, प्रतिसंजह्रे ॥ ५७ ॥

तात्पर्यार्थः—इन्द्रसदृशपराक्रमो धनुष्मान् स दशरथः वेद्धुमिष्टस्य स्वप्रेयस मृगस्य शरीरम् अनुरागादन्तर्धाय स्थितां सहचरीं हरिणीं विलोक्य स्वयं कामुकत्वाद्धेतोः करुणापूर्णचित्तः सन् कर्णपर्यन्तमाकृष्टमपि बाणमवतारितवान् ॥ ५७ ॥

भावार्थः—इन्द्र के तुल्य सामर्थ्य वाले धनुषधारी उस ( दशरथ ) ने निशाना किये हुये हरिण के शरीर को ( अनुरागसे ) व्यवधान कर स्थित हुई सहचरी (हरिणी) को देख कर कामुकपन के कारण दया से मृदु चित्त वाला होकर कानों तक खींचे हुये भी बाण को उतार दिया ॥ ५७ ॥

अथ दशरथस्य दृढाङ्गुलिः शिथिलीबभूवेत्याह—

**तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः।**
**त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥**

सञ्जीविनी—तस्येति। त्रासाद्भयादतिमात्रं चटुलैरत्यन्तचञ्चलैः सुनेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि प्रगल्भकान्ताविलोचनविलासव्यापारान् सादृश्यात्स्मरतः अपरेष्वपि मृगेषु शरान्मुमुक्षोर्मोक्तुमिच्छोस्तस्य नृपस्य निबिडो दृढोऽपि मुष्टिः कर्णान्तमेत्य प्राप्य बिभिदे स्वयमेव भिद्यते स्म, भिदेः कर्मकर्तरि लिट्। कामिनस्तस्य प्रियाविभ्रमस्मृतिजनितकृपाऽतिरेकान्मुष्टिभेदः, न त्वनैपुण्यादिति तात्पर्यार्थः ॥ ५८ ॥

अन्वयः—त्रासातिमात्रचटुलैः, सुनेत्रैः, प्रौढप्रियानयनविभ्रमचेष्टितानि, स्मरतः, अपरेषु, अपि, मृगेषु, शरान्, मुमुक्षोः, तस्य, निबिडः, अपि, मुष्टिः, कर्णान्तम्, एत्य, बिभिदे ॥५८॥

सुधा—त्रासातिमात्रचटुलैः = भीत्याऽत्यन्तचञ्चलैः, सुनेत्रैः = सुलोचनैः, प्रौढप्रियानयनविभ्रमचेष्टितानि = चतुररमणीनेत्रविलासव्यापारान्, स्मरतः = ध्यायतः, अपरेषु = अन्येषु, अपि, मृगेषु = हरिणेषु, शरान् = बाणान्, मुमुक्षोः = मोक्तुमिच्छोः, तस्य = पूर्वोक्तस्य, दशरथस्येति यावत्। निबिडः = कठिनः,दृढ इति यावत्। अपि, मुष्टिः = संपीडिताङ्गुलिः, कर्णान्तं = कर्णपर्यन्तम्, एत्य = प्राप्य, बिभिदे = भिद्यते स्म, शिथिलीबभूवेत्यर्थः॥५८॥

कोशः—'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इति, 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः। कलम्बमार्गणशराः' इति चामरः ॥ ५८ ॥

समासादि—मोक्तुमिच्छुर्मुमुक्षुस्तस्य मुमुक्षोः। कर्णयोरन्तमिति कर्णान्तम्। त्रासेन अतिमात्रं चटुला इति त्रासातिमात्रचटुलास्तैः त्रासातिमात्रचटुलैः। (त० पु०) शोभनानि नेत्राणीति सुनेत्राणि तैः सुनेत्रैः (क० धा०)। प्रौढा चासौ प्रियेति प्रौढप्रिया (क० धा०), तस्या नयने तयोः विभ्रम इति प्रौढप्रियानयनविभ्रमस्तस्य चेष्टितानि इति प्रौढप्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥

व्याकरणम्—मुमुक्षोः = मुच्लृ (मोचने-लृदित्), सन्+उः। बिभिदे = भिदिर् (विदारणे), कर्मकर्तरि लिट्। मुष्टिः = मुष (स्तेये), 'स्त्रियां क्तिन्' इति क्तिन्, अथवा क्तिच् ॥५८॥

(१)वाच्यपरिवर्तनम्—त्रासातिमात्रचटुलैः, सुनेत्रैः, प्रौढप्रियानयनविभ्रमचेष्टितानि, स्मरतः, अपरेषु, अपि, मृगेषु, शरान्, मुमुक्षोः, तस्य, निबिडेन, अपि, मुष्टिना, बिभिदे ॥५८॥

तात्पर्यार्थः—भयादत्यन्तचञ्चलैः सुलोचनैः प्रगल्भरमणीनेत्रकटाक्षान् स्मरतः अन्येष्वपि मृगेषु शरान् मोक्तुमिच्छोः कामिनस्तस्य दशरथस्य कान्ताविलासस्मृतिजन्यदयया मुष्टिभेदः सञ्जातः, न त्वनैपुण्यादिति ॥ ५८ ॥

भाषाऽर्थः—डर से अधिक चंचल हुये सुन्दर नेत्रों से चतुर प्रियाके नयन विलास के व्यापार (कटाक्ष) को स्मरण करते हुये दूसरे हरिणों पर बाण छोडने की इच्छा करने वाले उस (दशरथ) की दृढ मुट्ठी भी कान तक पहुंच कर शिथिल हो गयी ॥ ५८ ॥

अथ दशरथः पलायितवराहयूथस्य मार्गमनुययावित्याह—

**उत्तस्थुषः सपदि पल्वलपङ्कमध्यान्मुस्ताप्ररोहकवलावयवानुकीर्णम्।**
**जग्राह स द्रुतवराहकुलस्य मार्गं सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥५९॥**

सञ्जीविनी—उत्तस्थुष इति। स नृपः मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कवला ग्रासाः तेषामवयवैः श्रमविवृतमुखभ्रंशिभिः शकलैरनुकीर्णं व्याप्तम् आयताभिर्दीर्घाभिरार्द्रपदपङ्क्तिभिः सुव्यक्तं सपदि पल्वलपङ्कमध्यादुत्तस्थुष उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस्य मार्गं जग्राहानुससार। जिघांसया तदीयपदवीमनुययावित्यर्थः ॥ ५९ ॥

---

(१) इदं भावे बोध्यम्।

अन्वयः—सः, मुस्ताप्ररोहकवलावयवानुकीर्णम्, आयताभिः, आर्द्रपदपङ्क्तिभिः, सुव्यक्तं, सपदि, पल्वलपङ्कमध्यात्, उत्तस्थुषः, द्रुतवराहकुलस्य, मार्गं, जग्राह ॥ ५९ ॥

सुधा—सः = दशरथः, मुस्ताप्ररोहकवलावयवानुकीर्णं = मुस्तकाङ्कुरग्रासशकलानुव्याप्तम्, आयताभिः = दीर्घाभिः, आर्द्रपदपङ्क्तिभिः = क्लिन्नचरणश्रेणीभिः, सुव्यक्तं = सुस्फुटं, सपदि = तत्क्षणे, तत्काले इति यावत्। पल्वलपङ्कमध्यात् = वेशन्तकर्दममध्यभागात्, उत्तस्थुषः = उत्थितस्य, निर्गतस्येति यावत्। द्रुतवराहकुलस्य = पलायितसूकरयूथस्य, मार्गं = पन्थानं, जग्राह = गृहीतवान्, अनुययावित्यर्थः ॥ ५९ ॥

कोशः—'सद्यः सपदि तत्क्षणे' इति, 'वेशन्तः पल्वलम्' इति चामरः। 'पङ्कोऽस्त्री कर्दमे पापे' इति मेदिनी। 'कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्' इति, 'ग्रासस्तु कवलार्थकः' इति, 'वराहः सूकरो घृष्टिः' इति चामरः ॥ ५९ ॥

समासादि—पल्वलस्य पङ्क इति पल्वलपङ्कस्तस्य मध्यस्तस्मात् पल्वलपङ्कमध्यात् ( त० पु० )। मुस्तायाः प्ररोहा इति मुस्ताप्ररोहास्तेषां कवला इति मुस्ताप्ररोहकवलास्तेषामवयवास्तैरनुकीर्णस्तं मुस्ताप्ररोहकवलावयवानुकीर्णम् ( त० पु० )। द्रुताश्च ते वराहा इति द्रुतवराहाः ( क० धा० ), तेषां कुलं तस्य द्रुतवराहकुलस्य ( त० पु० )। आर्द्राश्च ते पदा इत्यार्द्रपदाः ( क० धा० ), तेषां पङ्क्तयस्ताभिरार्द्रपदपङ्क्तिभिः ( त० पु० ) ॥ ५९ ॥

व्याकरणम्—उत्तस्थुषः = उत् + ष्ठा (गतिनिवृत्तौ), 'क्वसुश्च' इति क्वसुः। अनुकीर्णम् = अनु + कॄ + क्तः + इत्वं + दीर्घः। जग्राह = ग्रह + लिट्। सुव्यक्तं = सु + वि + अञ्ज् + क्तः ॥५९॥

वाच्यपरिवर्तनम्—तेन, मुस्ताप्ररोहकवलावयवानुकीर्णः, आयताभिः, आर्द्रपदपङ्क्तिभिः, सुव्यक्तः, सपदि, पल्वलपङ्कमध्यात्, उत्तस्थुषः, द्रुतवराहकुलस्य, मार्गः, जगृहे ॥ ५९ ॥

तात्पर्यार्थः—स दशरथः मुस्तकाङ्कुरग्रासानां श्रमविवृतमुखभ्रंशिशकलैर्व्याप्तं दीर्घाभिः क्लिन्नपदपङ्क्तिभिः स्फुटं तत्क्षणेऽल्पसरसः कर्दममध्यभागादुत्थितस्य पलायितसूकरयूथस्य मार्गमनुससार ॥ ५९ ॥

भाषार्थः = उस ( दशरथ ) ने, मोथे के अंकुरोंके ग्रास के टुकड़ों से पूर्ण ( और ) बड़े भीगे पैरों की पंक्तियों से स्फुट, उस क्षण में छोटे सरोवरों की कीचड़ से निकल कर और भागे हुये सूकरयूथ के मार्ग को ग्रहण किया ॥ ५९ ॥

अथ वराहाः दशरथस्येषुभिर्विद्धमात्मानं न विविदुरित्याह—

**तं वाहनादवनतोत्तरकायमीषद्विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः।**
**नात्मानमस्य विविदुः सहसा वराहा वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥६०॥**

सञ्जीविनी—तमिति। वराहा वाहनादश्वादीषदवनतोत्तरकायं किञ्चिदानतपूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् उद्धृतसटा ऊर्ध्वकेसराः सन्तः, 'सटा जटाकेसरयोः' इति केशवः। प्रतिहन्तुमीषुः प्रतिहर्तुमैच्छन्, अस्य नृपस्येषुभिः सहसा जघनानामाश्रयेष्ववष्टम्भेषु वृक्षेषु विद्धमात्मानं न विविदुः। एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥ ६० ॥

अन्वयः—वराहाः, वाहनात्, ईषत्, अवनतोत्तरकायं, विध्यन्तं, तम्, उद्धृतसटाः, 'सन्तः' प्रतिहन्तुम्, ईषुः, अस्य, इषुभिः, सहसा, जघनाश्रयेषु, वृक्षेषु, विद्धम्, आत्मानं, न, विविदुः ॥ ६० ॥

सुधा—वराहाः = सूकराः, वाहनात् = यानात, अश्वादित्यर्थः। ईषत् = किञ्चित्, अवनतोत्तरकायं = नम्रीभूतपूर्वशरीरं, विध्यन्तं = प्रहरन्तं, तं = पूर्वोक्तं, दशरथमिति यावत। उद्धृतसटाः = ऊर्ध्वकेसराः, सन्त इति शेषः। प्रतिहन्तुं = प्रतिहर्तुम्, ईषुः = वाञ्छुः, अस्य = दशरथस्य, इषुभिः = बाणैः, सहसा = झटिति, जघनाश्रयेषु = नितम्बभागावष्टम्भेषु, वृक्षेषु = पादपेषु, विद्धं = प्रहृतम्, आत्मानं = स्वं, न विविदुः = न ज्ञातवन्तः ॥ ६०॥

कोशः—'सटा जटाकेसरयोः' इत्यनेकार्थसंग्रहः। 'वृक्षो महीरुहः शाखी विटपी पादप-

स्तरुः' इत्यमरः ॥ ६० ॥

समासादि—उत्तरश्चासौ काय इत्युत्तरकायः (क०धा०), अवनत उत्तरकायो यस्य स, अवनतोत्तरकायस्तम् अवनतोत्तरकायम् ( ब० व्री० )। उद्धूताः सटा येषां ते उद्धूतसटाः ( ब० व्री० )। जघनानामाश्रया जघनाश्रयास्तेषु जघनाश्रयेषु ( त० पु० ) ॥ ६० ॥

व्याकरणम्—प्रतिहन्तुं = प्रति + हन् + तुमुन् । ईषु = इषु (इच्छायाम्-उकारेत्), लिट् । विविदुः = विद् + लिट् । विद्धं = व्यध ( ताडने ), क्तः + सम्प्रसारणम् ॥ ६० ॥

वाच्यपरिवर्तनम्—वराहैः, वाहनात्, ईषत्, अवनतोत्तरकायं, विध्यन्तं, तम्, उद्धूतसटैः, 'सद्भिः' प्रतिहन्तुम्, ईषे, अस्य, इषुभिः, सहसा, जघनाश्रयेषु, वृक्षेषु, विद्धः, आत्मा, न, विविदे ॥ ६० ॥

तात्पर्यार्थः—सूकराः अश्वात् किञ्चिदानतपूर्वशरीरं प्रहरन्तं तं दशरथम् ऊर्ध्वकेसराः सन्तः प्रतिहर्तुमैच्छन्, अस्य दशरथस्य बाणैः सहसा नितम्बभागावष्टम्भेषु वृक्षेषु विद्धमात्मानं न ज्ञातवन्तः ॥ ६० ॥

भाषाऽर्थः—सूकरोंने घोड़े से आगे के देह को कुछ झुकाने वाले ( और ) प्रहार करते हुये उस ( दशरथ ) को केशों को खड़े कर मारने की इच्छा किया, इस ( दशरथ ) के बाणों से सहसा जघन ( नितंब भाग ) के आश्रय भूत वृक्षों में विधे हुये अपने को नहीं जाना ॥ ६० ॥

अथ दशरथस्य शरो महिषदेहं निर्भिदन्नपातयदित्याह--

**तेनाभिघातरभसस्य विकृष्य पत्री वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।**
**निर्भिद्य विग्रहमशोणितलिप्तपुङ्खस्तं पातयां प्रथममास पपात पश्चात् ॥ ६१ ॥**

सञ्जीविनी—तेनेति । अभिघाते रभस औत्सुक्यं यस्य तस्य, अभिहन्तुमुद्यतस्येत्यर्थः । वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्याकृष्य मुक्तः पत्री शरो विग्रहं महिषदेहं निर्भिद्य विदार्य शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः, सन् तं महिषं प्रथमं पातयामास स्वयं पश्चात् पपात । "कृञ्चानुप्रयुज्यते लिटि" इत्यत्रानुशब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इत्यपप्रयोग इति पाणिनीयाः । यथाह वार्तिककारः-'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चानुग्रहणम्' इति ॥६१॥

अन्वयः--तेन, अभिघातरभसस्य, वन्यस्य, महिषस्य, नेत्रविवरे, विकृष्य, मुक्तः, पत्री, विग्रहं, निर्भिद्य, अशोणितलिप्तपुङ्खः, 'सन्' तं, प्रथमं, पातयामास, 'स्वयं' पश्चात्, पपात ॥६१॥

सुधा--तेन = दशरथेन, अभिघातरभसस्य = अभिहनने वेगवतः, अभिहन्तुमुद्यतस्येति यावत् । वन्यस्य = आरण्यकस्य, महिषस्य = सैरिभस्य, नेत्रविवरे = नयनच्छिद्रे, नेत्रमध्ये इत्यर्थः । विकृष्य = आकृष्य, मुक्तः = त्यक्तः, पत्री = शरः, विग्रहं = देहं, महिषशरीरमित्यर्थः । निर्भिद्य = विदीर्णं कृत्वा, अशोणितलिप्तपुङ्खः = अरुधिरलग्नशरमूलभागः, सन्निति शेषः । तं = पूर्वोक्तं, महिषमिति यावत् । प्रथमं = प्राक्, पातयामास = अपातयत्, 'स्वयम्' पश्चात् = महिषपातनानन्तरं, पपात = अपतत् ॥ ६१ ॥

कोशः—'रभसो हर्षवेगयोः' इति विश्वः । 'श्येनाख्यो विहगः पत्री पत्त्रिणौ शरपक्षिणौ' इति शाश्वतः । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इति, 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति चामरः ॥ ६१ ॥

समासादि—अभिघाते रभसो यस्य स अभिघातरभसस्तस्याभिघातरभसस्य(ब०व्री०) । पत्रं विद्यतेऽस्येति पत्री । नेत्रस्य विवर इति नेत्रविवरविवरस्तस्मिन् नेत्रविवरे ( त० पु० ) । शोणितेन लिप्त इति शोणितलिप्तः ( त० पु० ), न शोणितलिप्तः पुङ्खो यस्य स अशोणित- ( ब० व्री० ) ॥ ६१ ॥

व्याकरणम्—अभिघात = अभि+हन्+घञ् + 'हनस्तो चिण्णलोः' इति तकारोऽन्तादेशः, 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्। विकृष्य = वि+कृष+क्त्वा, ल्यप्। पत्री = पत्र+इनिः। निर्भिद्य = निर्+भिद्+क्त्वा+ल्यप्। लिप्त = लिप (उपदेहे), क्तः। पपात = पत+लिट् ॥६१॥

वाच्यपरिवर्तनम्—तेन, अभिघातरभसस्य, वन्यस्य, महिषस्य, नेत्रविवरे, विकृष्य, मुक्तेन, पत्रिणा, विग्रहं, निर्भिद्य, अशोणितलिप्तपुङ्खेन, 'सता' सः, प्रथमं, पातयाञ्चक्रे, 'स्वयं' पश्चात्, पेते ॥ ६१ ॥

तात्पर्यार्थः—दशरथेन, अभिहन्तुमुद्यतस्य आरण्यकमहिषस्य नेत्रमध्ये आकृष्य त्यक्तः शरः महिषदेहं विदार्य अशोणितलग्नमूलभागः सन् महिषं प्राक् अपातयत, स्वयं पश्चात् अपतत् ॥ ६१ ॥

भाषाऽर्थः—उस (दशरथ) से, मारने को उद्यत जंगली भैंसे के नेत्र के मध्यमें खींचकर छोड़े हुये बाणने (भैंसे के) देह को विदारण कर मूल भाग में रुधिर नहीं लगे ही प्रथम उस (भैंसे) को गिराया, (स्वयं) पीछे गिरा ॥ ६१ ॥

अथ दशरथः प्रतिकूलानामुन्नतिं न सेहे, आयुस्तु सेह एवेत्याशयेनाह—

**प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः।**
**शृङ्गं स दृप्तविनयाधिकृतः परेषामत्युच्छ्रितं न ममृषे नतु दीर्घमायुः ॥६२॥**

सञ्जीविनी—प्राय इति। नृपतिर्निशितैः क्षुरप्रैः शरविशेषैः, चन्द्रार्धबाणैरित्यर्थः। खड्गान् खड्गाख्यान्मृगान्, 'गण्डके खड्गखड्गिनौ' इत्यमरः। प्रायो बाहुल्येन विषाणपरिमोक्षेण शृङ्गभङ्गेन लघून्यगुरूण्युत्तमाङ्गानि शिरांसि तेषां तांश्चकार, न तत्वजावित्यर्थः। कुतः? दृप्तविनयाधिकृतो दुष्टनिग्रहनियुक्तः स राजा परेषां प्रतिकूलानामत्युच्छ्रितमुन्नतं शृङ्गं विषाणं प्राधान्यं च, 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः। न ममृषे न सेहे, दीर्घमायुर्जीवितकालम्, 'आयुर्जीवितकालो ना' इत्यमरः। न ममृष इति न, किन्तु ममृष एवेत्यर्थः ॥ ६२ ॥

अन्वयः—नृपतिः, निशितैः, क्षुरप्रैः, खड्गान्, प्रायः, विषाणपरिमोक्षलघूत्तमाङ्गान्, चकार, दृप्तविनयाधिकृतः, सः, परेषाम्, अत्युच्छ्रितं, शृङ्गं, न, ममृषे, दीर्घम्, आयुः, तु, न, 'ममृषे-इति-न' ॥ ६२ ॥

सुधा—नृपतिः = राजा, दशरथ इति यावत्। निशितैः = तीक्ष्णैः, क्षुरप्रैः = तदाख्यबाणविशेषैः, खड्गान् = खड्गनामकहरिणान्, प्रायः = बाहुल्येन, विषाणपरिमोक्षलघूत्तमाङ्गान् = शृङ्गकर्तनलघुशिरसः, चकार = कृतवान्, दृप्तविनयाधिकृतः = अहङ्कारिनिग्रहनियुक्तः, सः = दशरथः, परेषां = शत्रूणां, प्रतिकूलानामित्यर्थः। अत्युच्छ्रितम् = अत्युन्नतं, शृङ्गं = विषाणं, प्रभुत्वं च, न ममृषे = न सेहे, दीर्घम् = अधिकम्, आयुः = जीवितकालं, तु, न, 'ममृषे-इति-न' किन्तु ममृष एवेत्यर्थः ॥ ६२ ॥

कोशः—'विषाणं तु शृङ्गे कोलेभदन्तयोः' इत्यनेकार्थसंग्रहः। 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः। 'शृङ्गं चिह्नविषाणयोः। क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वोत्कर्षसानुषु' इत्यनेकार्थसंग्रहः। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः ॥ ६२ ॥

समासादि—विषाणस्य परिमोक्ष इति विषाणपरिमोक्षः (त० पु०), तेन लघून्युत्तमाङ्गानि येषां ते तान् विषाणपरिमोक्षलघूत्तमाङ्गान् (ब० व्री)। क्षुर इव प्रान्तीति क्षुरप्रास्तैः क्षुरप्रैः। दृप्तानां विनयेऽधिकृतः इति दृप्तविनयाधिकृतः। (त० पु०) ॥ ६२ ॥

व्याकरणम्—क्षुरप्रैः = क्षुर+प्रा (पूर्तौ), 'आतोऽनुपसर्गे कः' इत्यनेन कः। अत्युच्छ्रितम् = अति+उत्+श्रिञ्+क्तः। ममृषे = मृ+लिट् ॥ ६२ ॥

वाच्यपरिवर्तनम्—नृपतिना, निशितैः, क्षुरप्रैः, खड्गाः, प्रायः, विषाणपरिमोक्षल-

धूतमाङ्गाः, चक्रिरे, इषविनयाधिकृतेन, तेन, परेषाम्, अत्युच्छ्रितं, शृङ्गम्, न, ममृषे, दीर्घम्, आयुः, तु, न, 'ममृषे-इति-न' ॥ ६२ ॥

तात्पर्यार्थः--राजा दशरथस्तीक्ष्णैः क्षुरप्राख्यशरविशेषैः खड्गनामकमृगान् बाहुल्येन शृङ्गभङ्गेन लघुशिरसः कृतवान्, यस्मात् दुष्टनिग्रहनियुक्तः स दशरथः प्रतिकूलानामुत्कर्षं न सेहे, अधिकं जीवितकालं तु न सेह इति न किन्तु सेह एव ॥ ६२ ॥

भाषाऽर्थः--राजा ( दशरथ ) ने तीखे क्षुरप्र नामक बाण विशेष से खड्गनामवाले मृगों के सींगको काट ( उनके ) शिर हलके करदिये, दुष्टों को दमन करने में नियुक्त वह ( दशरथ ) प्रतिकूलों के उत्कर्ष को सहन न कर सका, अधिक आयुको तो नहीं, ( सहन कर सका ऐसा नहीं किन्तु सहन ही किया ) ॥ ६२ ॥

अथ धन्वी दशरथो व्याघ्राणां मुखविवरान् बाणैः पूरितवानित्याह ।

**व्याघ्रानभीरभिमुखोत्पतितान्गुहाभ्यः फुल्लासनाग्रविटपानिव वायुरुग्णान् ।**
**शिक्षाविशेषलघुहस्ततया निमेषात्तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ ६३ ॥**

सञ्जीविनी—व्याघ्रानिति । अभीर्निर्भीकः स धन्वी गुहाभ्योऽभिमुखमुत्पतितान् वायुना रुग्णान्भग्नान् फुल्ला विकसिताः,"अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति निष्ठातकारस्य लत्वनिपातः । येऽसनस्य सर्जवृक्षस्य, 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इत्यमरः । अग्रविटपास्तानिव स्थितान् ,इपुधिभूतानित्यर्थः । व्याघ्राणां चित्ररूपत्वादुपमाने फुल्लविशेषणम् । शरैः पूरितानि वक्त्ररन्ध्राणि येषां तान् व्याघ्रान् शिक्षाविशेषेणाभ्यासातिशयेन लघुहस्ततया क्षिप्रहस्ततया निमेषात्तूणीचकार, तूणं शरैः पूरितवानित्यर्थः ॥ ६३ ॥

अन्वयः—अभीः, सः, गुहाभ्यः, अभिमुखोत्पतितान्, वायुरुग्णान्, फुल्लासनाग्रविटपान्, इव, 'स्थितान्' शरपूरितवक्त्ररन्ध्रान्, व्याघ्रान्, शिक्षाविशेषलघुहस्ततया, निमेषात्, तूणीचकार ॥ ६३ ॥

सुधा-अभीः = निर्भय, सः = पूर्वोक्तः, दशरथ इति यावत् । गुहाभ्यः = गह्वरेभ्यः, अभिमुखोत्पतितान् = सन्मुखागतान्, वायुरुग्णान् = पवनपातितान्, फुल्लासनाग्रविटपान् = विकसितसर्जवृक्षाग्रविटपान्, इव, स्थितानिति शेषः । शरपूरितवक्त्ररन्ध्रान् = बाणपूर्णमुखविवरान्, व्याघ्रान् = शार्दूलान्, शिक्षाविशेषलघुहस्ततया = अभ्यासाधिक्यद्रुतपाणितया, निमेषात् = लवद्वयात्, शीघ्रमित्यर्थः । तूणीचकार = निषङ्गीकृतवान्, शरैर्व्याघ्रमुखरन्ध्रान् पूरितवानित्यर्थः ॥६३॥

कोशः-'शार्दूलद्वीपिनौ व्याघ्रे' इति, 'देवखातबिले गुहा । गह्वरम्' इति, 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः' इति चामरः । 'क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम्' इत्यमरटीका ॥६३॥

समासादि—न भीरित्यभीः । अभिमुखमुत्पतितास्तानभिमुखोत्पतितान् । असनस्याग्रविटपा इत्यसनाग्रविटपाः ( त० पु० ), फुल्लाश्च तेऽसनाग्रविटपा इति फुल्लासनाग्रविटपास्तान् फुल्लासनाग्रविटपान् ( क० धा० ) । वायुना रुग्णा इति वायुरुग्णास्तान् वायुरुग्णान् ( त० पु० ) । लघुश्चासौ हस्त इति लघुहस्तः (क० धा०), तस्य भावो लघुहस्तता, शिक्षाया विशेष इति शिक्षाविशेषस्तेन लघुहस्तता तया शिक्षाविशेषलघुहस्ततया ( त० पु० ) । वक्त्राणां रन्ध्राणीति वक्त्ररन्ध्राणि ( त० पु० ), शरैः पूरितानि वक्त्ररन्ध्राणि येषां ते तान् शरपूरितवक्त्ररन्ध्रान् (ब०व्री०) ॥ ६३ ॥

व्याकरणम्-रुग्णान् = रुजो (भङ्गे --ओदित्), क्तः + 'ओदितश्च' इति तकारस्य नकारः । शिक्षा = शिक्ष ( विद्योपादने ), 'गुरोश्च हलः' इत्यप्रत्ययः + टाप् । पूरित = पूरी ( आप्यायने—ईदित् ) क्तः + इट् ॥ ६३ ॥

वाच्यपरिवर्तनम्—अभिया, तेन, गुहाभ्यः, अभिमुखोत्पतिताः, वायुरुग्णाः, फुल्लासनाग्रविटपाः, इव, 'स्थिताः' शरपूरितवक्त्ररन्ध्राः, व्याघ्राः, शिक्षाविशेषलघुहस्ततया, निमेषात्,

तूणीचक्रिरे ॥ ६३ ॥

तात्पर्यार्थः—निर्भीकः स धनुर्धारी दशरथो गुहाभ्यः सन्मुखमुत्पतितान् वायुना भग्नान् विकसितसर्जवृक्षाग्रविटपानिव स्थितान् बाणपूरितमुखरन्ध्रान् व्याघ्रानभ्यासाधिक्येन क्षिप्रहस्ततया निमेषात् तूणीकृतवान् ॥ ६३ ॥

भाषाऽर्थः—भय से रहित उस ( धनुर्धारी दशरथ ) ने गुफाओं से सन्मुख आते हुए पवन से गिराई गई, फूली हुई सर्ज वृक्ष की अग्रशाखा की नाईं ( स्थित), बाणों से भरे हुए मुख के छिद्र वाले व्याघ्रों को अभ्यास की विशेषता के कारण हाथ के हलके पन से क्षण भर में तरकस बना दिया ॥ ६३ ॥

अथ मृगराजशब्दमसहिष्णुर्दशरथः सिंहान् क्षोभयामासेत्याह—

**निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।**
**नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दे मृगेषु ॥ ६४ ॥**

सञ्जीविनी—निर्घातेति । कुञ्जेषु लीनान्, 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। सिंहाञ्जिघांसुर्हन्तुमिच्छुः, निर्घातो व्योमोत्थित औत्पातिकः शब्दविशेषः । तदुक्तं नारदीयसंहितायां—"वायुनाऽभिहतो वायुर्गगनात्पतितः क्षितौ । यदाऽदीप्तः खगरुतः स निर्घातोऽतिदोषकृत् ।" इति । तद्वदुग्रैः रौद्रैर्ज्यानिर्घोषैर्मौर्वीशब्दैः क्षोभयामास । अत्रोत्प्रेक्षते—तेषां सिंहानां सम्बन्धिनि वीर्येणोदग्रे उन्नते मृगेषु विषये यो राजशब्दस्तस्मिन्नभ्यसूयापरोऽभून्नूनम्, अन्यथा कथमेतानन्विष्य हन्यादित्यर्थः। 'मृगाणाम्' इति पाठे समासे गुणभूतत्वाद्राजशब्देन सम्बन्धो दुर्घटः । शालिनीवृत्तम्, "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥ ६४ ॥

अन्वयः— कुञ्जलीनान्, सिंहान्, जिघांसुः, निर्घातोग्रैः, ज्यानिर्घोषैः, क्षोभयामास, तेषां, वीर्योदग्रे, मृगेषु, राजशब्दे, अभ्यसूयापरः, नूनम्, अभूत् ॥ ६४ ॥

सुधा—कुञ्जलीनान् = निकुञ्जस्थितान्, सिंहान् = केसरिणः, जिघांसुः = हन्तुमिच्छुः, दशरथ इति यावत्। निर्घातोग्रैः = अशनिवद्रौद्रैः, ज्यानिर्घोषैः = मौर्वीटङ्कारैः, क्षोभयामास = त्रासयामास, तेषां = सिंहानाम्, वीर्योदग्रे = सामर्थ्योच्छ्रिते, पराक्रमेण प्राप्त इत्यर्थः। मृगेषु = हरिणेषु विषये, राजशब्दे = राजाक्षरे, मृगराज शब्द इत्यर्थः। अभ्यसूयापरः = असूयापरः, नूनम्, नूनमिति निश्चये । अभूत् = बभूव, निश्चयेनाभूदित्यर्थः । एतच्छालिनी छन्दस्तल्लक्षणं च वृत्तरत्नाकरे—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ।' इति ॥६४॥

कोश—'रौद्रं तूग्रम्' इति, 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इति, 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इति चामरः। 'असूया अभ्यसूया च' इति शब्दार्णवः॥६४॥

समासादि—निर्घातवदुग्रा इति निर्घातोग्रास्तैर्निर्घातोग्रैः । कुञ्जेषु लीना इति कुञ्जलीनास्तान् कुञ्जलीनान् ( त० पु० )। हन्तुमिच्छुर्जिघांसुः । ज्याया निर्घोषा इति ज्यानिर्घोषास्तैर्ज्यानिर्घोषैः (त०पु०)। अभ्यसूयायां पर इत्यभ्यसूयापरः ( त०पु० )। वीर्येणोदग्रा इति वीर्योदग्रस्तस्मिन् वीर्योदग्रे ( त० पु० ) । राज्ञः शब्द इति राजशब्दस्तस्मिन् राजशब्दे ( त० पु० ) ॥ ६४ ॥

व्याकरणम्—जिघांसुः = हन् + सन् + द्वित्वादिकम् + 'सनाशंसभिक्ष उः' इत्युः । क्षोभयामास = क्षुभ (सञ्चलने ) णिच् + लिट् ॥ ६४ ॥

वाच्यपरिवर्तनम्—कुञ्जलीनाः, सिंहाः, जिघांसुना, निर्घातोग्रैः, ज्यानिर्घोषैः, क्षोभयाञ्चक्रिरे, तेषां, वीर्योदग्रे, मृगेषु, राजशब्दे, अभ्यसूयापरेण, नूनम्, अभावि ॥ ६४ ॥

तात्पर्यार्थः—कुञ्जेषु स्थितान् सिंहान् हन्तुमिच्छुर्दशरथोऽशनिवद्रौद्रैर्मौर्वीशब्दैः क्षोभयामास, तेषां सिंहानां पराक्रमोन्नते मृगराजशब्देऽसूयापरोऽभूत्, अन्यथा कथमेतानन्विष्य हन्यात् ॥ ६४ ॥

भाषाऽर्थः—कुंजों में स्थित हुए सिंहों को मारने की इच्छा करने वाले ( दशरथ ) ने बिजली के शब्द के समान डरावन प्रत्यंचे की टंकारों से सिंहों को क्षुभित किया, मानो उन ( सिंहों ) के पराक्रम से उन्नत मृगों के विषय में राज शब्द पर ( दशरथ ) की ईर्ष्या थी ॥ ६४ ॥

अथ दशरथो बाणैः सिंहान् हत्वा गजानामानृण्यमात्मानं प्राप्तवन्तमिव मेन इत्याह—

**तान् हत्वा गजकुलबद्धतीव्रवैरान् काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।**
**आत्मानं रणकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५ ॥**

सञ्जीविनी—तानिति । काकुत्स्थो दशरथः गजकुलेषु बद्धं तीव्रं वैरं यैस्तान्, कुटिलेषु नखाग्रेषु लग्ना मुक्ता गजकुम्भमौक्तिकानि येषां तान्सिंहान्हत्वा आत्मानं रणेषु कृतकर्मणां कृतोपकाराणां गजानामानृण्यमनृणत्वं मार्गणैः शरैः, 'मार्गणं याचके शरे' इति विश्वः । गतं प्राप्तवन्तमिवामंस्त मेने ॥ ६५ ॥

अन्वयः—काकुत्स्थः, गजकुलबद्धतीव्रवैरान्, कुटिलनखाग्रलग्नमुक्तान्, तान्, हत्वा, आत्मानं, रणकृतकर्मणां, गजानाम्, आनृण्यं, मार्गणैः, गतम्, इव, अमंस्त ॥ ६५ ॥

सुधा—काकुत्स्थः = ककुत्स्थकुलोत्पन्नः, दशरथ इति यावत् । गजकुलबद्धतीव्रवैरान् = हस्तिवंशकृतातिशयविद्वेषान्, कुटिलनखाग्रलग्नमुक्तान् = वक्रकररुहकोटिसक्तमौक्तिकान्, तान् = पूर्वोक्तान्, सिंहानिति यावत् । हत्वा = व्यापाद्य, आत्मानं = स्वं, रणकृतकर्मणां = समरकृतोपकाराणां, गजानां = हस्तिनाम्, आनृण्यम् = अनृणत्वं, मार्गणैः = शरैः, गतं = लब्धवन्तम्, इव, अमंस्त = मन्यते स्म । एतत्प्रहर्षिणीवृत्तं तल्लक्षणं च = 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।' इति ॥ ६५ ॥

कोशः—'वैरं विरोधो विद्वेषः' इति, 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इति, 'पुनर्भवः कररुहो नखोऽस्त्री नखरो स्त्रियाम्' इति, 'कलम्बमार्गणशराः' इति चामरः ॥ ६५ ॥

समासादि—तीव्रञ्च तद् वैरमिति तीव्रवैरम् ( क० धा० ), गजानां कुलानीति गजकुलानि ( त० पु० ), तेषु बद्धं तीव्रवैरं यैस्ते तान् गजकुलबद्धतीव्रवैरान् ( ब० व्री० ) । ककुत्स्थस्यापत्यं पुमान् काकुत्स्थः । नखानामग्राणीति नखाग्राणि ( त० पु० ), कुटिलानि च तानि नखाग्राणीति कुटिलनखाग्राणि (क० धा०), तेषु लग्ना मुक्ता येषां ते तान् कुटिलनखाग्रलग्नमुक्तान् (ब० व्री) । रणेषु कृतं कर्म यैस्ते रणकृतकर्माणस्तेषां रणकृतकर्मणाम् ( ब० व्री० ) । अनृणस्य भाव आनृण्यम् ॥ ६५ ॥

व्याकरणम्—हत्वा = हन् + क्त्वा । काकुत्स्थः = ककुत्स्थ + अण् । आनृण्यम् = न + ऋण + ष्यञ् + नुडागमः । अमंस्त = अ + मनु ( अवबोधने—उकारेत् ), लुङ् ॥ ६५ ॥

वाच्यपरिवर्तनम्—काकुत्स्थेन, गजकुलबद्धतीव्रवैरान्, कुटिलनखाग्रलग्नमुक्तान्, तान्, हत्वा, आत्मा, रणकृतकर्मणां, गजानाम्, आनृण्यं, मार्गणैः, गतः, इव, अमानि ॥ ६५ ॥

तात्पर्यार्थः—काकुत्स्थो दशरथो हस्तिकुलेषु कृतातिशयवैरान् कुटिलनखाग्रेषु सक्तगजकुम्भमौक्तिकान् तान् सिंहान् व्यापाद्य आत्मानं समरेषु कृतोपकाराणां गजानामनृणत्वं शरैः प्राप्तवन्तमिव मन्यते स्म ॥ ६५ ॥

भाषाऽर्थः—काकुत्स्थ ( दशरथ ) ने गजों के कुलसे अत्यंत वैर रखने वाले टेढे नखों में मोती लगे हुये उन ( सिंहों ) को मार कर अपने को संग्राम में उपकार करने वाले हाथियों के उऋणपन को मानो बाणों से प्राप्त हुआ माना ॥ ६५ ॥

अथ दशरथश्चमरान् बाणैः शुभ्रचामरैर्वियोज्य शान्तोऽभूदित्याह—

**चमरान्परितः प्रवर्तिताश्वः क्वचिदाकर्णविकृष्टभल्लवर्षी ।**
**नृपतीनिव तान्वियोज्य सद्यः सितबालव्यजनैर्जगाम शान्तिम् ॥ ६६ ॥**

सञ्जीविनी—चमरानिति । क्वचिच्चमरान्परितः, "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इत्यनेन द्वितीया । प्रवर्तिताश्वः प्रधाविताश्वः आकर्णविकृष्टभल्लान् इषुविशेषान्वर्षतीति तथोक्तः, स नृपः नृपतीनिव तांश्चमरान्सितबालव्यजनैः शुभ्रचामरैर्वियोज्य विरहय्य सद्यः शान्तिं जगाम, शूराणां परकीयमैश्वर्यमेवासह्यं न तु जीवितमिति भावः । औपच्छन्दसिकं वृत्तम् ॥ ६६ ॥

अन्वयः—क्वचित्, चमरान्, परितः, प्रवर्तिताश्वः, आकर्णविकृष्टभल्लवर्षी, नृपतीन्, इव, तान्, सितबालव्यजनैः, वियोज्य, सद्यः, शान्तिं, जगाम ॥ ६६ ॥

सुधा—क्वचित् = कुत्रचित्, चमरान् = चमराख्यमृगविशेषान्, परितः = अभितः, समन्तत इति यावत् । प्रवर्तिताश्वः = प्रधावितघोटकः, आकर्णविकृष्टभल्लवर्षी = आश्रवणाकृष्टभल्लनामकशरविशेषवर्षी दशरथः, नृपतीन् = राज्ञः, इव, तान् = पूर्वोक्तान्, चमरानिति यावत् । सितबालव्यजनैः = श्वेतचामरैः, वियोज्य = वियोजितान् कृत्वा, सद्यः = सपदि, शान्तिं = शमं, जगाम = प्राप्तवान् । वैतालीयभेदेष्विदम् औपच्छन्दसिकं छन्दस्तल्लक्षणं च वृत्तरत्नाकरे—'पर्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ।' इति ॥ ६६ ॥

कोशः—'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इति, 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इति, 'सद्यः सपदि तत्क्षणे' इति, 'शमथस्तु शमः शान्तिः' इति चामरः ॥ ६६ ॥

समासादि—प्रवर्तितोऽश्वो येन सः प्रवर्तिताश्वः ( ब० व्री० ) । विकृष्टाश्च ते भल्ला इति विकृष्टभल्लाः ( क० धा० ), कर्णमभिव्याप्येत्याकर्णम् ( अ० भा० ), आकर्णं विकृष्टभल्ला इत्याकर्णविकृष्टभल्लास्तान् वर्षतीत्याकर्णविकृष्टभल्लवर्षी । बालानां व्यजनानीति बालव्यजनानि ( त० पु० ), सितानि च तानि बालव्यजनानि तैः सितबालव्यजनैः (क०धा०) ॥६६॥

व्याकरणम्—चमरान् = अत्र 'अभितःपरितःसमया' इत्यादिना वार्तिकेन द्वितीया । प्रवर्तित = प्र + वृतु + क्तः + इट् । विकृष्ट = वि + कृष + क्तः ॥ ६६ ॥

वाच्यपरिवर्तनम्—क्वचित्, चमरान्, परितः, प्रवर्तिताश्वेन, आकर्णविकृष्टभल्लवर्षिणा, नृपतीन्, इव, तान्, सितबालव्यजनैः, वियोज्य, सद्यः, शान्तिः, जग्मे ॥ ६६ ॥

तात्पर्यार्थः—कुत्रचित् चमराख्यमृगविशेषान् परितः प्रधाविताश्वः आकर्णाकृष्टभल्लाख्यशरवर्षी स दशरथो राज्ञ इव तांश्चमरान् शुभ्रचामरैर्वियोजितान् कृत्वा सद्यः शान्तिं प्राप्तवान् ॥ ६६ ॥

भाषाऽर्थः—कहीं पर चमर नाम वाले मृगों पर घोड़े को दौड़ाने वाले ( और ) कान तक खींचे हुये भाले को बर्षाने वाले ( दशरथ ) ने राजाओं के समान उन ( चमर नामक मृगों ) को उजले चामरों से रहित कर उस समय शांति पाया ॥ ६६ ॥

अथ दशरथो लक्ष्यीभूतमपि मयूरं न प्रहृतवानित्याह—

**अपि तुरगसमीपादुत्पतन्तं मयूरं न स रुचिरकलापं बाणलक्ष्यीचकार ।**
**सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे रतिविगलितबन्धे केशपाशे प्रियायाः॥६७॥**

सञ्जीविनी—अपीति । स नृपस्तुरगसमीपादुत्पतन्तमपि, सुप्रहारमपीत्यर्थः । रुचिरकलापं भासुरबर्हं मह्याममतिशयेन रौतीति मयूरो बर्ही, पृषोदरादित्वात्साधुः । तं चित्रेण माल्येनानुकीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः, 'उरःप्रभृतिभ्यः कप्' इति कप्प्रत्ययः । न बाणलक्ष्यीचकार, न प्रजहारेत्यर्थः ॥ ६७ ॥

अन्वयः—सः, तुरगसमीपात्, उत्पतन्तम्, अपि, रुचिरकलापं, मयूरं, चित्रमाल्यानुकीर्णे, रतिविगलितबन्धे, प्रियायाः, केशपाशे, सपदि, गतमनस्कः, न, बाणलक्ष्यीचकार ॥६७॥

सुधा—सः = पूर्वोक्तः, दशरथ इति यावत् । तुरगसमीपात् = घोटकनिकटात्, दशरथाश्वसमीपादित्यर्थः । उत्पतन्तम् = उड्डीयमानम्, अपि, रुचिरकलापं = सुन्दरबर्हयुक्तं, मयूरं =

बर्हिणं, चित्रमाल्यानुकीर्णे = किर्मीरस्रग्रचिते, रतिविगलितबन्धे = सुरतशिथिलबन्धने, प्रियायाः = वल्लभायाः, स्त्रिय इति यावत्। केशपाशे = कचपाशे, धम्मिल्ल इति यावत्। केशसमूह इत्यर्थः । सपदि = सद्यः, गतमनस्कः = प्रवृत्तमानसः, न बाणलक्ष्यीचकार = न शरव्यीकृतवान्, न प्रहृतवानित्यर्थः । मालिनी छन्दस्तल्लक्षणं च—'ननमयययुतेयं मालिनी भोगिलोकैः ।' इति ॥ ६७ ॥

कोश—'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इति, 'सुन्दरं रुचिरं चारु' इति चामरः । 'कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः' इत्यजयः । चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति चामरः ॥ ६७ ॥

समासादि—तुरगस्य समीपं तस्मात्तुरगसमीपात् ( त० पु० ) । उत्पततीत्युत्पतन् तमुत्पतन्तम् । रुचिरः कलापो यस्य स तं रुचिरकलापम् ( ब० व्री० ) । बाणस्य लक्ष्यमिति बाणलक्ष्यम् ( च्विः ) बाणलक्ष्यीचकार । गतं मनो यस्य स गतमनस्कः (ब० व्री०) । चित्रं च तन्माल्यमिति चित्रमाल्यम् ( क० धा० ), तेनानुकीर्णस्तस्मिंश्चित्रमाल्यानुकीर्णे ( त० पु० ) । रतौ विगलितो बन्धो यस्य स तस्मिन् रतिविगलितबन्धे ( ब० व्री० ) । केशानां पाश इति केशपाशस्तस्मिन् केशपाशे ( त० पु० ) ॥ ६७ ॥

व्याकरणम्—उत्पतन्तम् = उत् + पत + शतृ । माल्य = मल ( धारणे ), 'ऋहलोर्ण्यत्' इति ण्यत् । अथवा मालैवेति विग्रहे चतुर्वर्णादित्वात् ष्यञ् । अनुकीर्णे = अनु + कॄ + क्तः + ईत्वम् + दीर्घः + तकारस्य नकारः । विगलित = वि + गल ( स्रवणे ), क्तः + इट् ॥ ६७ ॥

वाच्यपरिवर्तनम्—तेन, तुरगसमीपात्, उत्पतन्, अपि, रुचिरकलापः, मयूरः, चित्रमाल्यानुकीर्णे, रतिविगलितबन्धे, प्रियायाः, केशपाशे, सपदि, गतमनस्केन, न, बाणलक्ष्यीचक्रे ॥ ६७ ॥

तात्पर्यार्थः-स दशरथः निजाश्वसमीपादुड्डीयमानमपि सुन्दरबर्हयुक्तं मयूरं चित्रविचित्रमाल्यगुम्फिते रतौ शिथिलबन्धने प्रियायाः केशसमूहे सद्यः प्रवृत्तचित्तो न प्रहृतवान् ॥६७॥

भाषाऽर्थः—उस ( दशरथ ) ने घोड़े के समीप से उड़ते हुये भी सुंदर शिखा वाले मोर को, चित्र विचित्र माला से गुथे हुये रति के समय शिथिल बंधन वाले प्रिया ( स्त्री ) के केशसमूह में तत्काल मन की प्रवृत्ति के कारण बाण का निशाना नहीं किया ॥६७॥

अथ वनपवनो दशरथस्य मुखे व्याप्तान् स्वेदबिन्दूञ्जहारेत्याह—

तस्य कर्कशविहारसम्भवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८ ॥

सञ्जीविनी—तस्येति । कर्कशविहारादतिव्यायामात्संभवो यस्य तम्, आनने विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदं सतुषारशीकरः शिशिराम्बुकणसहितः भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन सः वनानिल आचचाम, जहारेत्यर्थः । रथोद्धतावृत्तमेतत् ॥६८॥

अन्वयः—सतुषारशीकरः, भिन्नपल्लवपुटः, वनानिलः, कर्कशविहारसम्भवम्, आननविलग्नजालकं, तस्य, स्वेदम्, आचचाम ॥ ६८ ॥

सुधा—सतुषारशीकरः = तुहिनजलकणयुक्तः, भिन्नपल्लवपुटः = निर्दलितकिसलयकोशः, वनानिलः = अरण्यपवनः, कर्कशविहारसम्भवम् = अतिपरिश्रमोत्पन्नम्, आननविलग्नजालकं = मुखबद्धसमूहं, तस्य = पूर्वोक्तस्य, दशरथस्येति यावत् । स्वेदं = प्रस्वेदनम्, आचचाम = आचमितवान्, हृतवानित्यर्थः । रथोद्धताच्छन्दस्तल्लक्षणं चोक्तं केदारभट्टेन—'रान्नराविह रथोद्धता लगौ ।' इति ॥ ६८ ॥

कोशः—'स्वेदो घर्मं स्वेदने च' इति हैमः । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति, 'तुषारस्तुहिनं हिमम्' इति, 'शीकरोऽम्बुकणाः स्मृताः' इति, 'पल्लवोऽस्त्री किसल-

यम्' इति चामरः ॥ ६८ ॥

समासादि—कर्कशश्चासौ विहार इति कर्कशविहारः ( क० धा० ), तस्मात् सम्भवा यस्य स तं कर्कशविहारसम्भवम् ( ब० व्री० )। आनने विलग्नं जालं यस्य स आननविलग्नजालकस्तमाननविलग्नजालकम् ( ब० व्री० )। तुषारेण सहितः सतुषारः, सतुषारः शीकरो यस्य सः सतुषारशीकरः ( ब० व्री० )। पल्लवानां पुटा इति पल्लवपुटाः ( त० पु० ), भिन्नाः पल्लवपुटा येन स भिन्नपल्लवपुटः ( ब० व्री० )। वनस्यानिल इति वनानिलः ( त० पु० ) ॥ ६८ ॥

व्याकरणम्—जालकं = जाल + कप्। आचचाम = आ + चमु ( अदने—उकारेत् ), लिट्। भिन्न = भिदिर् ( विदारणे—इरित् ), क्तः + 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति तकारदकारयोर्नकारः ॥ ६८ ॥

वाच्यपरिवर्तनम्—सतुषारशीकरेण, भिन्नपल्लवपुटेन, वनानिलेन, कर्कशविहारसम्भवः, आननविलग्नजालकः, तस्य, स्वेदः, आचेमे ॥ ६८ ॥

तात्पर्यार्थः—हिमजलकणसहितो निर्दलितकिसलयकोशो वनपवनः अतिव्यायामादुत्पन्नं मुखे बद्धसमूहं तस्य दशरथस्य प्रस्वेदं हृतवान् ॥ ६८ ॥

भाषाऽर्थः—ठंढे जल के बिंदुओं से युक्त पल्लवों की कलियों को खोलने वाली वन की हवा ने अत्यंत परिश्रम से उत्पन्न ( और ) मुख में व्याप्त हुये पसीने के समूह को हरण किया, याने सुखा दिया ॥ ६८ ॥

अथ मृगया विदग्धा कामिनीव दशरथं वशीकृतवतीत्याह—

**इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराऽधिपम्।**
**परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ ६९ ॥**

सञ्जीविनी—इतीति। इति पूर्वोक्तप्रकारेणात्मनो विस्मृतमन्यत्करणीयं कार्यं येन तम्, विस्मृतात्मकार्यान्तरमित्यर्थः। सचिवैरवलम्बिता धृता धूर्यस्य तम्, "ऋक्पूरब्धूःपथामानक्षे" इति समासान्तोऽच्प्रत्ययः। अनुबन्धसेवया परिवृद्धो रागो यस्य तं धराऽधिपं मृग्यन्ते यस्यां मृगा इति मृगया, "परिचर्यापरिसर्यामृगयाटाट्यादीनामुपसंख्यानम्" इति शप्रत्ययान्तो निपातः। चतुरा विदग्धा कामिनीव जहाराचकर्ष। "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥" इति भावः ॥ ६९ ॥

अन्वयः—इति, आत्मनः, विस्मृतान्यकरणीयं, सचिवावलम्बितधुरम्, अनुबन्धसेवया, परिवृद्धरागं, धराऽधिपं, मृगया, चतुरा, कामिनी, इव, जहार ॥ ६९ ॥

सुधा—इति = इत्थं, पूर्वोक्तप्रकारेणेत्यर्थः। आत्मनः = स्वस्य, विस्मृतान्यकरणीयं = विस्मृतात्मकार्यान्तरं, सचिवावलम्बितधुरं = मन्त्रिधृतभारम्, अनुबन्धसेवया = निरन्तरसेवया, परिवृद्धरागं = वर्द्धितानुरागं, धराऽधिपं = पृथ्वीपतिं, दशरथमिति यावत्। मृगया = आखेटः, चतुरा = दक्षा, विदग्धेति यावत्। कामिनी = कामुकी स्त्रीः, इव = यथा, जहार = आचकर्ष, वशीकृतवतीत्यर्थः। मञ्जुभाषिणी छन्दस्तल्लक्षणं हि वृत्तरत्नाकरे—'सजसा जगौ भवति मञ्जुभाषिणी।' इति ॥ ६९ ॥

कोशः—'मन्त्री सहायः सचिवौ' इति, 'रागः स्याल्लोहितादिषु। गान्धारादौ क्लेशादिकेऽनुरागे मत्सरे नृपे' इत्यनेकार्थसंग्रहः। 'आक्षोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इत्यमरः ॥ ६९ ॥

समासादि—विस्मृतमन्यत्करणीयं येन स तं विस्मृतान्यकरणीयम् ( ब० व्री० )। सचिवैरवलम्बिता धूर्यस्य स तं सचिवावलम्बितधुरम् ( ब० व्री० )। धराया अधिप इति धराऽधिपस्तं धराऽधिपम् (त० पु०)। परिवृद्धो रागो यस्य स तं परिवृद्धरागम् ( ब० व्री० )

अनुबन्धनमनुबन्धस्तेन सेवा तयाऽनुबन्धसेवया। मृग्यन्तेऽत्रेति मृगया॥ ६९॥

व्याकरणम्—विस्मृत = वि + स्मृ + क्तः। करणीय = कृ + अनीयर्। अवलम्बित = अव + लबि + क्तः + नुम्। परिवृद्ध = परि + वृधु ( वृद्धौ-उकारेत्), 'गत्यर्थाकर्मक' इत्यादिना क्तः। सेवया = षेवृ (सेवने—ऋकारेत), 'गुरोश्च हलः' इत्यप्रत्ययः + टाप्। मृगया = मृग ( अन्वेषणे ), 'परिचर्य्यापरिसर्यामृगया' इति शप्रत्ययान्तो निपातितः। जहार = हृञ् ( हरणे—ञित्), लिट्॥ ६९॥

वाच्यपरिवर्तनम्—इति, आत्मनः, विस्मृतान्यकरणीयः, सचिवावलम्बितधूः, अनुबन्ध-सेवया, परिवृद्धरागः, धराऽधिपः, मृगयया, चतुरया, कामिन्या, इव, जह्रे॥ ६९॥

तात्पर्यार्थः—यथा काचित् चतुरा कामिनी कञ्चित् कामिनमाकर्षति, तथा पूर्वोक्त-प्रकारेण विस्मृतात्मकार्यान्तरं मन्त्रिभिर्धृतभारं निरन्तरसेवया परिवृद्धानुरागं पृथ्वीपतिं दशरथं मृगया आचकर्ष॥ ६९॥

भाषाऽर्थः—इस प्रकार अपने अन्य कार्यों को भूले हुये मंत्रियों से ( राज्य का ) भार अवलंबन किये गये बराबर सेवासे अनुराग बढे हुये पृथ्वी के स्वामी ( दशरथ ) को शिकारने चतुर स्त्री की नाई वश में कर लिया॥ ६९॥

अथ दशरथः क्वचित्परिजनैः रहित सन् रात्रिं यापयामासेत्याह—

**स ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम्।**
**नरपतिरतिवाहयांबभूव क्वचिदसमेतपरिच्छदस्त्रियामाम्॥ ७०॥**

सञ्जीविनी—स इति। स नरपतिः ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां तां ज्वलिताभिर्महौषधीभिरेव दीपिकाभिः सनाथाम्, तत्प्रधानामित्यर्थः। त्रियामां त्रयो यामा यस्याः सा ताम्, रात्रिं क्वचिदसमेतपरिच्छदः, परिहृतपरिजनः सन्नित्यर्थः। अतिवाहयांबभूव गमयामास। पुष्पिताग्रावृत्तम्॥ ७०॥

अन्वयः—सः, नरपतिः, ललितकुसुमप्रवालशय्यां, ज्वलितमहौषधिदीपिकासनाथां, त्रियामां, क्वचित्, असमेतपरिच्छदः, 'सन्' अतिवाहयाम्बभूव॥ ७०॥

सुधा—सः = पूर्वोक्तः, नरपतिः = राजा, दशरथ इति यावत्। ललितकुसुमप्रवालशय्यां = मनोहरपुष्पाभिनवपल्लवशयनीयां, ज्वलितमहौषधिदीपिकासनाथां = प्रकाशितसञ्जीविन्याद्यौषधिरूपप्रदीपिकायुक्तां, त्रियामां = रात्रिं, क्वचित् = कुत्रचित्, असमेतपरिच्छदः = परित्यक्तपरिजनः, सन्निति शेषः। अतिवाहयाम्बभूव = यापयामास। पुष्पिताग्राच्छन्दस्तल्लक्षणं च—'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा।' इति॥ ७०॥

कोशः—'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे' इत्यनेकार्थसंग्रहः। 'शय्यायां शयनीयवत्' इति, 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इति चामरः॥ ७०॥

समासादि—कुसुमानि च प्रवालानि चेति कुसुमप्रवालानि ( द्व० ), ललितानि च तानि कुसुमप्रवालानीति ललितकुसुमप्रवालानि ( क० धा० ), तेषां शय्या यस्यां सा तां ललित-कुसुमप्रवालशय्याम् ( ब० व्री० )। ज्वलिताश्च ता महौषध्य इति ज्वलितमहौषध्यस्ता एव दीपिका इति ज्वलितमहौषधिदीपिकाः ( क० धा० ), ताभिः सनाथा तां ज्वलितमहौषधिदीपिकासनाथाम् (त०पु०)। नराणां पतिरिति नरपतिः ( त० पु० )। असमेतः परिच्छदो यस्य स असमेतपरिच्छदः ( ब० व्री० )। त्रयो यामा यस्याः सा तां त्रियामाम् ( ब० व्री० )॥ ७०॥

व्याकरणम्—शय्यां = शीङ् ( स्वप्ने-ङित् ), 'संज्ञायां समज' इति क्यप्, 'अयङ् यि' इत्ययङ् आदेशः + टाप्। ज्वलित = ज्वल ( दीप्तौ ), क्तः + इट्। अतिवाहयाम्बभूव = अति + वह + णिच् + आम् + भू + लिट्॥ ७०॥

वाच्यपरिवर्तनम्—तेन, नरपतिना, ललितकुसुमप्रवालशय्या, ज्वलितमहौषधिदीपिका-सनाथा, त्रियामा, क्वचित्, असमेतपरिच्छदेन, 'सता' अतिवाहयाम्बभूवे ॥ ७० ॥

तात्पर्यार्थः—स राजा दशरथः सुन्दरपुष्पपल्लवशय्यां प्रकाशितमहौषधिरूपदीपिकायुक्तां रात्रिं क्वचित् परिहृतसेवकः सन् गमयामास ॥ ७० ॥

भाषाऽर्थः—उस राजा ( दशरथ ) ने सुन्दर पुष्प और पल्लवों की शय्या वाली प्रकाशमान ( संजीविनी आदि ) महौषधिरूप दीपक से युक्त रात्रि को कभी परिजनों को छोड़ कर ( भी ) बिताया ॥ ७० ॥

अथ प्रभाते दशरथः पक्षिणां कूजितान्येव बन्दिमङ्गलगीतानि शृण्वन्नरमतेत्याह—

**उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।**
**अरमत मधुराणि तत्र शृण्वन्विहगविकूजितबन्दिमङ्गलानि ॥ ७१ ॥**

सञ्जीविनी—उषसीति । उषसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैर्गजयूथानां हस्तिसमूहानां कर्णैरेव तालैर्वाद्यप्रभेदैर्विनीतनिद्रः स नृपस्तत्र वने मधुराणि विहगानां विकूजितान्येव बन्दिनां मङ्गलानि मङ्गलगीतानि शृण्वन् अरमत ॥ ७१ ॥

अन्वयः—उषसि, पटुपटहध्वनिभिः, गजयूथकर्णतालैः, विनीतनिद्रः, सः, तत्र, मधुराणि, विहगविकूजितबन्दिमङ्गलानि, शृण्वन्, अरमत ॥ ७१ ॥

सुधा—उषसि = प्रभाते, पटुपटहध्वनिभिः = तीक्ष्णानकसदृशशब्दयुक्तैः, गजयूथकर्णतालैः = हस्तिसमूहश्रोत्रताडनरूपवाद्यैः, विनीतनिद्रः = अपगतस्वापः, जागरित इत्यर्थः । सः = पूर्वोक्तः, दशरथ इति यावत् । तत्र = अरण्ये, मधुराणि = मनोहराणि, विहगविकूजितबन्दिमङ्गलानि = पक्ष्युच्चरितशब्दरूपस्तुतिपाठकमङ्गलगीतानि, शृण्वन् = आकर्णयन्, अरमत = रमते स्म, आनन्दितो बभूवेत्यर्थः । इदमपि पुष्पिताग्राच्छन्दः ॥ ७१ ॥

कोशः—'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि । प्रभातं च' इत्यमरः । 'पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च' इति रुद्रः । 'स्यान्निद्रा शयनं स्वापः' इति, 'बन्दिनः स्तुतिपाठकाः' इति चामरः ॥ ७१ ॥

समासादि—गजानां यूथानीति गजयूथानि, कर्णा एव ताला इति कर्णतालाः (क० धा०), गजयूथानां कर्णतालास्तैर्गजयूथकर्णतालैः ( त० पु० ) । पटवश्च ते पटहा इति पटुपटहास्तेषामिव ध्वनिर्येषां ते तैः पटुपटहध्वनिभिः ( ब० व्री० ) । विनीता निद्रा यस्य स विनीतनिद्रः ( ब० व्री० ) । बन्दिनां मङ्गलानीति बन्दिमङ्गलानि ( त० पु० ), विहगानां विकूजितान्येव बन्दिमङ्गलानीति विहगविकूजितबन्दिमङ्गलानि ( क० धा० ) ॥ ७१ ॥

व्याकरणम्—अरमत = अ + रमु ( क्रीडायाम्–उकारेत् ), लङ् । शृण्वन् = श्रु + शतृ । विकूजित = वि + कूज ( अव्यक्ते शब्दे ), क्तः + इट् ॥ ७१ ॥

वाच्यपरिवर्तनम्—उषसि, पटुपटहध्वनिभिः, गजयूथकर्णतालैः, विनीतनिद्रेण, तेन, तत्र, मधुराणि, विहगविकूजितबन्दिमङ्गलानि, शृण्वता, अरम्यत ॥ ७१ ॥

तात्पर्यार्थः—प्रातःकाले तीक्ष्णपटहसदृशशब्दयुक्तैर्हस्तियूथकर्णताडनरूपवाद्यप्रभेदैर्दूरीकृतनिद्रः स दशरथस्तत्र वने मनोहराणि पक्षिणां कूजितरूपमागधमङ्गलगीतान्याकर्णयन्नानन्दयुक्तो बभूव ॥ ७१ ॥

भाषाऽर्थः—प्रातःकाल में तेज बड़े नगाड़ों की नाई शब्द वाली गजसमूहों के कानों के ( फटकाररूप ) बाजे से नींद को दूर कर वह ( दशरथ ) उस ( वन ) में बंदियों के मंगल गीत के समान पक्षियों के मधुर शब्दों को सुनकर आनंदित हुआ ॥ ७१ ॥

अथ दशरथस्तमसां नदीं प्रापेत्याह—

**अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।**

**श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥ ७२ ॥**

सञ्जीविनी—अथेति । अथ जातु कदाचिद्रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गो विपिने वने पार्श्वचरैरनुचररलक्ष्यमाणः, तुरगवेगादित्यर्थः । श्रमेण फेनमुचा, सफेनं स्विद्यतेत्यर्थः । तुरङ्गमेण तपस्विभिर्गाढां सेवितां तमसां नाम नदीं सरितं प्राप ॥ ७२ ॥

अन्वयः—अथ, जातु, रुरोः, गृहीतवर्त्मा, विपिने, पार्श्वचरैः, अलक्ष्यमाणः, श्रमफेनमुचा, तुरङ्गमेण, तपस्विगाढां, तमसां, नदीं, प्राप ॥ ७२ ॥

सुधा—अथ = अनन्तरं, जातु = कदाचित्, रुरोः = रुर्वाख्यमृगस्य, गृहीतवर्त्मा = परिगृहीतमार्गः, विपिने = वने, पार्श्वचरैः = अनुचरैः, सेवकैरिति यावत् । अलक्ष्यमाणः = अदृश्यमाणः, अश्वस्य शीघ्रगामित्वादलक्ष्यमाणो दशरथ इत्यर्थः । श्रमफेनमुचा = परिश्रमफेनत्यागिना, तुरङ्गमेण = अश्वेन, तपस्विगाढां = तापसावगाढां, मुनिसेवितामिति यावत् । तमसां = तमसानाम्नीं, नदीं = सरितं, प्राप = प्राप्तवान् ॥ ७२ ॥

कोशः—'कदाचिज्जातु' इति, 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इति, 'तपस्वी तापसः पारी काङ्क्षी वाचंयमो मुनिः' इति, 'अथ नदी सरित्' इति, 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इति चामरः ॥ ७२ ॥

समासादि—गृहीतं वर्त्म येन स गृहीतवर्त्मा ( ब० ब्री० ) । पार्श्वे चरन्तीति पार्श्वचरास्तैः पार्श्वचरैः । लक्ष्यतेऽसौ लक्ष्यमाणो न लक्ष्यमाण इत्यलक्ष्यमाणः । श्रमेण फेनं मुञ्चतीति श्रमफेनमुक् तेन श्रमफेनमुचा ( त० पु० ) । तपस्विभिर्गाढा तां तपस्विगाढाम् ( त० पु० ) । तुरेण गच्छतीति तुरङ्गमस्तेन तुरङ्गमेण ॥ ७२ ॥

व्याकरणम्—पार्श्वचरैः = पार्श्व + चर + टः । अलक्ष्यमाणः = न + लक्ष + यक् + शानच् । गाढां = गाहू ( विलोडने—ऊकारेत् ), क्तः + टाप् । तुरङ्गमेण = तुर + गम् + 'गमेश्च' इति खच् + वा डित्, 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् ॥ ७२ ॥

वाच्यपरिवर्तनम्—अथ, जातु, रुरोः, गृहीतवर्त्मना, विपिने, पार्श्वचरैः, अलक्ष्यमाणेन, श्रमफेनमुचा, तुरङ्गमेण, तपस्विगाढा, तमसा, नदी, प्रापि ॥ ७२ ॥

तात्पर्यार्थः—अथ कदाचिद् रुर्वाख्यमृगस्य गृहीतमार्गो वनेऽश्ववेगात् सेवकैरलक्ष्यमाणः स दशरथः श्रमजन्यफेनत्यागिना तुरगेण तपस्विभिर्निषेवितां तमसां नदीं प्राप ॥ ७२ ॥

भाषाऽर्थः—इसके बाद किसी समय रुरु ( नाम वाले ) मृग के मार्ग को ग्रहण करते हुये वन में सेवकों से ( घोड़े के वेगसे दौड़ने के कारण ) नहीं दिखाई देता हुआ ( वह दशरथ ) परिश्रम से ( उत्पन्न हुये ) फेन को छोड़ने वाले घोड़े के साथ मुनियों से सेवित तमसा नाम की नदी पर पहुंचा ॥ ७२ ॥

अथ हस्तिगर्जनशङ्की दशरथस्तमसाया जले बाणं विससर्जेत्याह—

**कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।**
**तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ ७३ ॥**

सञ्जीविनी—कुम्भेति । तस्यास्तमसाया अम्भसि कुम्भपूरणेन भव उत्पन्नः, पचाद्यच् । पटुर्मधुरः उच्चैर्गम्भीरो निनदो ध्वनिरुच्चचारोदियाय । तत्र निनदे स नृपः द्विरदबृंहितं शङ्कत इति द्विरदबृंहितशङ्की सन् शब्देन शब्दानुसारेण पततीति शब्दपातिनमिषुं विससर्ज । स्वागतावृत्तम् ॥ ७३ ॥

अन्वयः—तस्याः, अम्भसि, कुम्भपूरणभवः, पटुः, उच्चैः, निनदः, उच्चचार, तत्र, सः, द्विरदबृंहितशङ्की, 'सन्' शब्दपातिनम्, इषुं, विससर्ज ॥ ७३ ॥

सुधा-तस्याः = पूर्वोक्तायाः, तमसाया इति यावत् । अम्भसि = पानीये, कुम्भपूरणभवः = घटपूर्णकरणोत्पन्नः, पटुः = मधुरः, उच्चैः = गम्भीरः, निनदः = शब्दः, उच्चचार = उद्गत-

वान्, तत्र = निनदे, सः = दशरथः, द्विरदबृंहितशङ्की = हस्तिगर्जनसंशयी, सन्निति शेषः। शब्दपातिनं = ध्वन्यनुसारवेधिनम्, इषुं = शरं, विससर्ज = व्यसृजत। स्वागताच्छन्दस्तल्लक्षणं च—'स्वागतेति रनभाद् गुरुयुग्मम्' इति ॥ ७३ ॥

कोशः—'कुम्भो राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे। कार्मुके वारनार्यां च घटे क्लीबं तु गुग्गुलौ' इति मेदिनी। 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति, 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' इति, 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' इति, बृंहितं करिगर्जितम्' इति चामरः। 'शङ्का स्यात संशये भये' इति हैमः ॥ ७३ ॥

समासादि—कुम्भस्य पूरणमिति कुम्भपूरणं, तेन भवतीति कुम्भपूरणभवः (त० पु०)। द्वौ रदावस्येति द्विरदः (ब० व्री०), तस्य बृंहितं शङ्कते इति द्विरदबृंहितशङ्की (त० पु०)। शब्देन पततीति शब्दपाती तं शब्दपातिनम् ॥ ७३ ॥

व्याकरणम्—उच्चचार = उत् + चर + लिट्। शङ्की = शङ्का + इनिः। पातिनं = पत + णिनिः। विससर्ज = वि + सृज (विसर्गे), लिट् ॥ ७३ ॥

वाच्यपरिवर्तनम्—तस्याः, अम्भसि, कुम्भपूरणभवेन, पटुना, उच्चैः, निनदेन, उच्चेरे, तत्र, तेन, द्विरदबृंहितशङ्किना, 'सता' शब्दपाती, इषुः, विससृजे ॥ ७३ ॥

तात्पर्यार्थः—तस्यास्तमसानामिकाया नद्या जले घटपूरणेनोत्पन्न मधुरगम्भीरशब्द उदियाय, तत्र शब्दे स दशरथो हस्तिगर्जितशङ्की सन् शब्दवेधिनं बाणं त्यक्तवान् ॥ ७३ ॥

भाषाऽर्थः—उस ( तमसा नदी ) के जलमें घड़े के भरने से उत्पन्न मधुर और गम्भीर शब्द निकले, उस ( शब्द ) पर उस ( दशरथ ) ने हाथी के शब्द की शंका ( करते हुये ) शब्दपाती ( शब्द से वेधने वाले ) बाण को छोड़ा ॥ ७३ ॥

अथ विद्वांसोऽपि रजोगुणयुक्ताः सन्तः कुमार्गे पदं निक्षिपन्तीत्याशयेनाह—

**नृपतेः प्रतिषिद्धमेव तत्कृतवान् पङ्क्तिरथो विलङ्घ्य यत्।**
**अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥**

सञ्जीविनी—नृपतेरिति। तत्कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धमेव यदेतत्कर्म गजवधरूपं पङ्क्तिरथो दशरथो विलङ्घ्य "लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात्" इति शास्त्रमुल्लङ्घ्य कृतवान्। ननु विदुषस्तस्य कथमीदृग्विचेष्टितमत आह-अपथ इति। श्रुतवन्तोऽपि विद्वांसोऽपि रजोनिमीलिता रजोगुणावृताः सन्तः नपन्था इत्यपथम्, "पथो विभाषा" इति वा समासान्तः, "अपथं नपुंसकम्" इति नपुंसकम्। 'अपन्थास्त्वपथं तुल्यम्' इत्यमरः। तस्मिन्नपथेऽमार्गे पदमर्पयन्ति हि निक्षिपन्ति हि, प्रवर्तन्त इत्यर्थः। वैतालीयं वृत्तम् ॥ ७४ ॥

अन्वयः—तत्, नृपतेः, प्रतिषिद्धम्, एव, 'अस्ति' यत्, पङ्क्तिरथः, विलङ्घ्य, कृतवान्, हि, श्रुतवन्तः, अपि, रजोनिमीलिताः, 'सन्तः' अपथे, पदम्, अर्पयन्ति ॥ ७४ ॥

सुधा-तत् = पूर्वोक्तं, हस्तिवधरूपकार्यमित्यर्थः। नृपतेः = राज्ञः, क्षत्रियस्येति यावत्। प्रतिषिद्धं = लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यादिति शास्त्रनिषिद्धम्, एव, अस्तीति शेषः। यत् = गजवधरूपकार्यं, पङ्क्तिरथः = दशरथः, विलङ्घ्य = उल्लङ्घ्य, कृतवान् = चकार, हि = यतः, श्रुतवन्त = शास्त्रवन्तः, विद्वांस इति यावत। अपि, रजोनिमीलिताः = रजोगुणसमावृताः, सन्त इति शेषः। अपथे = कुमार्गे, पदं = चरणं, अर्पयन्ति = निक्षिपन्ति। वैतालीयं छन्दः—'षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥' इति तस्य साधारणतया लक्षणं बोध्यम् ॥ ७४ ॥

कोशः—'पङ्क्तिर्दशाक्षरच्छन्दो दशसंख्यालिपु स्त्रियाम्' इति मेदिनी। 'श्रुतमाकर्णिते शास्त्रे' इत्यनेकार्थसंग्रहः ॥ ७४ ॥

समासादि—नॄणां पतिरिति नृपतिस्तस्य नृपतेः (त० पु०)। पञ्चनं पङ्क्तिः, पङ्क्तिः

रथो यस्य स पङ्क्तिरथः ( ब० व्री० )। न पन्था इत्यपथं तस्मिन्नपथे। श्रुतं विद्यत एषां ते श्रुतवन्तः। रजसा निर्मीलिता इति रजोनिर्मीलिताः ( त० पु० ) ॥ ७४ ॥

व्याकरणम्—प्रतिषिद्धं = प्रति + षिध ( गत्याम् ), क्तः । कृतवान् = कृ + क्तवतु । पङ्क्ति = पचि (व्यक्तीकरणे—इदित्), क्तिन् + नुम् + 'चोः कुः' इति कुत्वम् । विलङ्घ्य = वि + लघि + क्त्वा, ल्यबादेशः + नुम् । अपथे = न + पथिन् + 'पथो विभाषा' इत्यप्रत्ययः + 'अपथं नपुंसकम्' इति क्लीबत्वम् । श्रुतवन्तः = श्रुत + मतुप् । निर्मीलिताः = नि + मील ( श्लेषणे ), क्तः + इट् ॥ ७४ ॥

वाच्यपरिवर्तनम्—तेन, नृपतेः, प्रतिषिद्धेन, एव, 'भूयते' यत्, पङ्क्तिरथेन, विलङ्घ्य, कृतं, हि, श्रुतवद्भिः, अपि, रजोनिर्मीलितैः, 'सद्भिः' अपथे, पदम्, अर्प्यते ॥ ७४ ॥

तात्पर्यार्थः—तत्कर्म क्षत्रियस्य "लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात्" इति शास्त्रनिषिद्धमेवास्ति यद् गजवधरूपं कर्म दशरथो मर्यादामुल्लङ्घ्य कृतवान्, यतः विद्वांसोऽपि रजोगुणावृताः सन्तोऽमार्गे पदं निक्षिपन्ति ॥ ७४ ॥

भाषाऽर्थः—वह ( कर्म ) क्षत्रियों को निषिद्ध हो ( है ) जो ( हाथियों का वध रूप कर्म ) दशरथ ने ( शास्त्र की मर्यादा को ) लांघ कर किया, क्योंकि विद्वान् भी रजो गुण से युक्त होकर कुमार्ग में पद रखते हैं ॥ ७४ ॥

अथ दशरथो मुनिपुत्रं शरविद्धं वीक्ष्य स्वयमपि शरविद्ध इवाभवदित्याह--

**हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।**
**शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं तापादन्तःशल्य इवासीत्क्षितिपोऽपि ७५**

सञ्जीविनी—हेति । हेत्यार्तौ । तातो जनकः, 'हा विषादशुग्गर्तिषु' इति, 'तातस्तु जनकः पिता' इति चामरः । हा तातेति क्रन्दितं क्रोशनमाकर्ण्य विषण्णो भग्नोत्साहः सन् तस्य क्रन्दितस्य वेतसैर्गूढं छन्नं प्रभवत्यस्मादिति प्रभवः कारणं तमन्विष्यञ्छल्येन शरेण प्रोतं स्यूतम्, 'शल्यं शङ्कौ शरे वंशे' इति विश्वः । सकुम्भं मुनिपुत्रं प्रेक्ष्य स क्षितिपोऽपि तापाद् दुःखादन्तः शल्यं यस्य सोऽन्तःशल्य इवासीत् । मत्तमयूरं वृत्तम् ॥ ७५ ॥

अन्वयः—हा, तात !, इति, क्रन्दितम्, आकर्ण्य, विषण्णः, 'सन्' तस्य, वेतसगूढं, प्रभवम्, अन्विष्यन्, शल्यप्रोतं, सकुम्भ, मुनिपुत्रं, प्रेक्ष्य, सः, क्षितिपः, अपि, तापात्, अन्तःशल्यः, इव, आसीत् ॥ ७५ ॥

सुधा—हा तात ! = हे पितः !, हेति दुःखार्थे । इति = इत्थं, क्रन्दितं = रुदितम्, आकर्ण्य = श्रुत्वा, विषण्णः = खिन्नः, गतोत्साह इति यावत् । सन्निति शेषः । तस्य = पूर्वोक्तस्य, क्रन्दितस्येति यावत् । वेतसगूढं = वानीरच्छन्नं, प्रभवं = कारणम्, अन्विष्यन् = अन्वेषणं, कुर्वन्, शल्यप्रोतं = शरविद्धं, सकुम्भं = सघटं, मुनिपुत्र = तपस्विसुतं, प्रेक्ष्य = अवलोक्य, सः = पूर्वोक्तः, क्षितिपः = पृथ्वीपतिः, दशरथ इति यावत् । अपि, तापात् = सन्तापात्, दुःखादित्यर्थः । अन्तःशल्यः = अन्तःकरणबाणः, इव, आसीत् = अभूत । मत्तमयूरं छन्दस्तल्लक्षणं च—'वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम्' इत्युक्तं वृत्तरत्नाकरे ॥ ७५ ॥

कोशः—'हा विषादे च शोके च कुत्सादुःखार्थयोरपि' इति मेदिनी । 'तातस्तु जनकः पिता' इति, 'अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः' इति चामरः । 'शल्यं शङ्कौ शरे वंशे' इति विश्वः । 'तापः सन्तापे कृच्छ्रे च' इत्यनेकार्थसंग्रहः ॥ ७५ ॥

समासादि—वेतसैर्गूढ इति वेतसगूढस्तं वेतसगूढम् (त०पु०)। प्रभवत्यस्मादिति प्रभवस्तं प्रभवम् । शल्येन प्रोत इति शल्यप्रोतस्तं शल्यप्रोतम् (त०पु०)। कुम्भेन सहितः सकुम्भस्तं सकुम्भम् । मुनेः पुत्र इति मुनिपुत्रस्तं मुनिपुत्रम् (त०पु०)। अन्तः शल्यं यस्य स अन्तःशल्यः ( ब० व्री० )। क्षितिं पातीति क्षितिपः ॥ ७५ ॥

व्याकरणम्—क्रन्दितं = क्रदि ( आह्वाने रोदने च-इदित् ), क्तः + नुम् + इट् । आकर्ण्य = आ + कर्ण + ल्यप् । विषण्णः = वि + षद् + क्तः + 'रदाभ्याम्' इति दकारतकारयोर्नकारः + णत्वम् । गूढं = गुह + क्तः + ढत्वं + 'ढो ढे लोपः' इति ढस्य लोपः, 'ढ्रलोपे' इति दीर्घः । प्रेक्ष्य = प्र + ईक्ष + ल्यप् ॥ ७५ ॥

वाच्यपरिवर्तनम्—हा, तात !, इति, क्रन्दितम् , आकर्ण्य, विषण्णेन, 'सता' तस्य, वेतसगूढं, प्रभवम्, अन्विष्यता, शल्यप्रोतं, सकुम्भं, मुनिपुत्रं, प्रेक्ष्य, तेन, क्षितिपेन, अपि, तापात् , अन्तःशल्येन, इव, अभूयत ॥ ७५ ॥

तात्पर्यार्थः—हा जनक ! इति रुदितमाकर्ण्य हतोत्साहः सन् तस्य रुदितस्य वेतसैश्छन्नमुत्पत्तिहेतुमन्विष्यन् शरेण विद्धं कुम्भसहितं मुनिपुत्रमवलोक्य स दशरथोऽपि दुःखादन्तःकरणे विद्धबाण इवासीत् ॥ ७५ ॥

भाषाऽर्थः—हा पिता ! इस प्रकार के रुदन को सुन कर दुःखी होते हुए उस रुदन को बेतों में छिपे होने के कारण खोजते हुए बाण से बिंधे, घड़े के सहित, मुनि पुत्र को देख कर वह राजा ( दशरथ ) भी दुःख से अन्तःकरण में बाण लगे हुए के समान होगया ॥ ७५ ॥

अथ दशरथेन पृष्टोऽसौ मुनिपुत्रः 'द्विजेतरोऽहम्' इत्युक्तवानित्याह—

**तेनावतीर्य तुरगात्प्रथितान्वयेन पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।**
**तस्मै द्विजेतरतपस्विसुतं स्खलद्भिरात्मानमक्षरपदैः कथयांबभूव ॥७६॥**

सञ्जीविनी—तेनेति । प्रथितान्वयेन प्रख्यातवंशेन, एतेन पापभीरुत्वं सूचितम् । तेन राज्ञा तुरगादवतीर्य पृष्टान्वयो ब्रह्महत्याशङ्कया पृष्टकुलः जलकुम्भनिषण्णदेहः स मुनिपुत्रस्तस्मै राज्ञे स्खलद्भिः, अशक्तिवशादर्धोच्चारितैरित्यर्थः । अक्षरप्रायैः पदैरक्षरपदैरात्मानं द्विजेतरश्चासौ तपस्विसुतश्च तं द्विजेतरतपस्विसुतं कथयांबभूव, न तावत्त्रैवर्णिक एवाहमस्मि किन्तु करणः । "वैश्यात्तु करणः शूद्रायाम्" इति याज्ञवल्क्यः । कुतो ब्रह्महत्येत्यर्थः । तथा च रामायणे—"ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न द्विजातिरहं राजन् ! मा भूत्ते मनसो व्यथा ॥ शूद्रायामस्मि वैश्येन जातो जनपदाधिप ॥" इति ॥ ७६ ॥

अन्वयः—प्रथितान्वयेन, तेन, तुरगात् अवतीर्य, पृष्टान्वयः, जलकुम्भनिषण्णदेहः, सः, तस्मै, स्खलद्भिः, अक्षरपदैः, आत्मानं, द्विजेतरतपस्विसुतं, कथयाम्बभूव ॥ ७६ ॥

सुधा—प्रथितान्वयेन = विख्यातवंशेन, तेन = पूर्वोक्तेन, दशरथेनेति यावत् । तुरगात् = अश्वात्, अवतीर्य = उत्तीर्य, पृष्टान्वयः = पृष्टवंशः, जलकुम्भनिषण्णदेहः = पानीयघटन्यस्तशरीरः, सः = पूर्वोक्तः, मुनिपुत्र इति यावत् । तस्मै = दशरथाय, स्खलद्भिः = विचलद्भिः, । अशक्तिवशादर्धोच्चारितैरिति यावत् । अक्षरपदैः = अक्षरप्रायशब्दैः, आत्मानं = निजं, द्विजेतरतपस्विसुतं = द्विजातीतरमुनिपुत्रं, त्रैवर्णिकेतरकरणसंज्ञमित्यर्थः । कथयाम्बभूव = कथयामास । इत आरभ्य यावत्सर्गं वसन्ततिलकं छन्दो लक्षणं तूक्तं प्राक् ॥ ७६ ॥

कोशः—'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इति, 'तपस्वी तापसः पारी काङ्क्षी वाचंयमो मुनिः' इति चामरः । 'पदं स्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्कवस्तुनोः' इत्यनेकार्थसंग्रहः ॥ ७६ ॥

समासादि—प्रथितोऽन्वयो यस्य स तेन प्रथितान्वयेन ( ब० व्री० ) । पृष्टोऽन्वयो यस्य स पृष्टान्वयः ( ब० व्री० ) । जलस्य कुम्भ इति जलकुम्भः ( त० पु० ), तत्र निषण्णो देहो यस्य स जलकुम्भनिषण्ण देहः ( ब० व्री० ) द्वाभ्यां संस्काराभ्यां जायत इति द्विजस्तस्मादितर इति द्विजेतरः ( त० पु० ), तपस्विनः सुत इति तपस्विसुतः ( त० पु० ), द्विजेतरश्चासौ तपस्विसुतश्चेति तं द्विजेतरतपस्विसुतम् ( क० धा० ) ॥ ७६ ॥

व्याकरणम्—अवतीर्य्य = अव + तॄ ( प्लवनतरणयोः ), क्त्वा, ल्यबादेशः । प्रथित =

प्रथ ( प्रख्याने ), क्तः+इट् । पृष्ट=प्रच्छ+क्तः+'व्रश्चभ्रस्ज' इति षः+सम्प्रसारणादि । स्खलद्भिः=स्खल+शतृ । कथयाम्बभूव=कथ+णिच्+आम्+लिट् ॥ ७६ ॥

वाच्यपरिवर्तनम्—प्रथितान्वयेन, तेन, तुरगात्, अवतीर्य, पृष्टान्वयेन, जलकुम्भनिषण्ण-देहेन, तेन, तस्मै, स्खलद्भिः, अक्षरपदैः, आत्मा, द्विजेतरतपस्विसुतः, कथयाम्बभूवे ॥ ७६ ॥

तात्पर्यार्थः—प्रख्यातवंशेन तेन दशरथेन घोटकादवतीर्य ब्रह्महत्याशङ्कया पृष्टकुलो जल-घटनिषण्णशरीरः स मुनिपुत्रस्तस्मै राज्ञे दशरथाय अशक्तिवशादर्धोच्चारितैरक्षरप्रायैः पदै-रात्मानं द्विजेतरमुनिसुतं करणसंज्ञं कथयामास ॥ ७६ ॥

भाषाऽर्थः—प्रसिद्ध वंशवाले उस ( राजा दशरथ ) ने घोड़े से उतरकर पूछे गये वंश वाले जल के घड़े पर शरीर रक्खे हुये उस (मुनिपुत्र) ने, उस (दशरथ) को स्खलित शब्दों से अपने को द्विजसे अन्य जाति के मुनि का पुत्र ( करण ) बतलाया ॥ ७६ ॥

अथ दशरथस्तं मुनिपुत्रं तदवस्थमेव अन्धयोः पित्रोः समीपं निनायेत्याह—

**तच्चोदितश्च तमनुद्धृतशल्यमेव पित्रोः सकाशमवसन्नदृशोर्निनाय ।**
**ताभ्यां तथागतमुपेत्य तमेकपुत्रमज्ञानतः स्वचरितं नृपतिः शशंस ॥७७॥**

सञ्जीविनी—तच्चेति । तच्चोदितस्तेन पुत्रेण चोदितः प्रेरितः पितृसमीपं प्रापयेत्युक्तः स नृपतिरनुद्धृतशल्यमनुत्पाटितशरमेव तं मुनिपुत्रम् अवसन्नदृशोर्नष्टचक्षुषोः, अन्धयोरि-त्यर्थः । पित्रोर्मातापित्रोः, "पिता मात्रा" इत्येकशेषः । सकाशं समीपं निनाय । इदं च रामा-यणविरुद्धम् । तत्र—"अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ । अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥" इति नदीतीर एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात् । तथागतं वेत-सगूढम् एकश्चासौ पुत्रश्चैकपुत्रस्तम्, एकग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम् । तं मुनि-पुत्रमुपेत्य संनिकृष्टं गत्वाऽज्ञानतः करिभ्रान्त्या स्वचरितं स्वकृतं ताभ्यां मातापितृभ्याम्, क्रियाग्रहणाच्चतुर्थी । शशंस कथितवान् ॥ ७७ ॥

अन्वयः—तच्चोदितः, नृपतिः, अनुद्धृतशल्यम्, एव, तम्, अवसन्नदृशोः, पित्रोः, सकाश, निनाय, तथागतम्, एकपुत्रं, तम्, उपेत्य, अज्ञानतः, स्वचरितं, ताभ्यां, शशंस, च ॥ ७७ ॥

सुधा—तच्चोदितः=पूर्वोक्तमुनिपुत्रप्रेरितः, मामन्धयोः पित्रोः समीपं प्रापयेति तेनोक्त इत्यर्थः । नृपतिः=नरस्वामी, दशरथ इति यावत् । अनुद्धृतशल्यम्=अनिष्कासितशरम्, एव, विद्धबाणसहितमेवेति यावत् । तं=मुनिसुतम्, अवसन्नदृशोः=गतदृष्ट्योः, अन्ध-योरित्यर्थः । पित्रोः=मातापित्रोः, सकाशं=निकटं, निनाय=प्रापितवान्, तथा-गतं=तथाप्राप्तं, वेतसगूढमिति यावत् । तं=मुनिपुत्रम्, एकपुत्रम्=एकसुतम्, उपेत्य=समीपं प्राप्य, अज्ञानतः=अबुद्धितः, हस्तिशङ्कयेति यावत् । स्वचरितं=निजवृत्तान्तम्, आत्मकृतकर्मेति यावत् । ताभ्यां=पूर्वोक्ताभ्यां, मातापितृभ्यामिति यावत् । शशंस=अकथयत्, च ॥ ७७ ॥

कोशः—'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग् दृष्टी च' इति, 'स्वामी त्वीश्वरः पति-रीशिता' इति चामरः ॥ ७७ ॥

समासादि—तेन चोदित इति तच्चोदितः ( त० पु० ) । अनुद्धृतं शल्यं यस्य तदनुद्धृत-शल्यम् ( ब० व्री० ) । माता च पिता च पितरौ तयोः पित्रोः ( द्व० ) । अवसन्ने दृशौ ययोस्तयोरवसन्नदृशोः ( ब० व्री० ) । एकश्चासौ पुत्र इत्येकपुत्रस्तमेकपुत्रम् ( क० धा० ) । स्वस्य चरितमिति तत् स्वचरितम् ( त० पु० ) ॥ ७७ ॥

व्याकरणम्—चोदितः=चुद ( प्रेरणे ), क्तः+इट् । अनुद्धृत=न+उत्+धृ+क्तः । अवसन्न=अव+षद्+क्तः । निनाय=णीञ्+लिट् । उपेत्य=उप+इण्+ल्यप् । चरितं=

चर+क्तः+इट्। शशंस=शंसु (स्तुतौ—उकारेत्), लिट्॥ ७७॥

वाच्यपरिवर्तनम्—तच्चोदितेन, नृपतिना, अनुद्धृतशल्यः, एव, सः, अवसन्नदृशोः, पित्रोः, सकाशं, निन्ये, तथागतं, तम्, एकपुत्रम्, उपेत्य, अज्ञानतः, स्वचरितं, ताभ्यां, शशंसे, च॥ ७७॥

तात्पर्यार्थः—तेन तपस्विसुतेन 'पितृसमीपं प्रापय' इत्युक्तः स राजा दशरथोऽनुत्पाटितशरमेव तं मुनिपुत्रमन्धयोर्मातापित्रोः समीपं प्रापयाञ्चकार, तथाविधमेकसुतं तं मुनिपुत्रमुपेत्य हस्तिभ्रान्त्या स्वकृतं कार्यं ताभ्यां मातापितृभ्यां कथितवान्॥ ७७॥

भावार्थः—उस (मुनिपुत्र) के कहने पर राजा (दशरथ) ने बाण को बिना निकाले ही उस (मुनिपुत्र) को नष्ट आंख वाले (अंधे) माता पिता के निकट पहुंचाया, और वैसी अवस्था को प्राप्त हुये उस एकपुत्र के समीप जाकर अज्ञान (गज की शंका) से किये अपने कार्य को उन (माता पिता) से कह सुनाया॥ ७७॥

अथ गतप्राणं तं दृष्ट्वा तस्य वृद्धः पिता दशरथं शशापेत्याह—

**तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा शल्यं निखातमुदहारयतामुरस्तः।**
**सोऽभूत्परासुरथ भूमिपतिं शशाप हस्तार्पितैर्नयनवारिभिरेव वृद्धः॥ ७८॥**

सञ्जीविनी—ताविति। तौ जाया च पतिश्च दम्पती, राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः। 'दम्पती जम्पती जायापती भार्यापती च तौ' इत्यमरः। बहु विलप्य भूरि परिदेव्य, 'विलापः परिदेवनम्' इत्यमरः। शिशोरुरस्तो वक्षसः, "पञ्चम्यास्तसिल्"। निखातं शल्यं शरं प्रहर्त्रा राज्ञोदहारयतामुद्धारयामासतुः, स शिशुः परः परासुर्गतप्राणोऽभूत्। अथ वृद्धो हस्तार्पितैर्नयनवारिभिरेव, शापदानस्य जलपूर्वकत्वात्तैरेव भूमिपतिं शशाप॥ ७८॥

अन्वयः—तौ, दम्पती, बहु, विलप्य, शिशोः, उरस्तः, निखातं, शल्यं, प्रहर्त्रा, उदहारयतां, सः, परासुः, अभूत्, अथ, वृद्धः, हस्तार्पितैः, नयनवारिभिः, एव, भूमिपतिं, शशाप॥ ७८॥

सुधा—तौ=पूर्वोक्तौ, दम्पती=जायापती, मातापितराविति यावत्। बहु=बहुलं, विलप्य=विलापं कृत्वा, शिशोः=पुत्रस्य, उरस्तः=वक्षसः, निखातं=विद्धं, शल्यं=शरं, प्रहर्त्रा=प्रहारकेण, दशरथेनेति यावत्। उदहारयताम्=उत्पाटयामासतुः, सः=पूर्वोक्तः, शिशुरिति यावत्। परासुः=प्राप्तपञ्चत्वः, प्राणरहित इति यावत्। मृत इत्यर्थः। अभूत्=अभवत्। अथ=अनन्तरं, पुत्रमरणानन्तरमिति यावत्। वृद्धः=स्थविरः, तत्पितेत्यर्थः। हस्तार्पितैः=पाणिपतितैः, नयनवारिभिः=नेत्रजलैः, एव, शापदानस्य जलपूर्वकत्वान्नेत्रजलैरेवेत्यर्थः। भूमिपतिं=राजानं, दशरथमिति यावत्। शशाप=अशपत्॥ ७८॥

कोशः—'दम्पती जम्पती जायापती भार्यापती च तौ' इति, 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इति चामरः। 'उरो वक्षसि मुख्ये स्यात्' इति हैमः। 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः। मृतप्रमीतौ त्रिष्वेते' इत्यमरः। 'वृद्धः प्राज्ञे च स्थविरे वृद्धं शैलेयरूढयोः' इति हैमः॥ ७८॥

समासादि—जाया च पतिश्चेति दम्पती। प्रहरतीति प्रहर्ता तेन प्रहर्त्रा। उरस इत्युरस्तः। परागता असवोऽस्मादिति परासुः। भूमेः पतिस्तं भूमिपतिम् (त० पु०)। हस्ते ऽर्पितानीति हस्तार्पितानि तैर्हस्तार्पितैः (त० पु०)। नयनयोर्वारीणीति नयनवारीणि तैर्नयनवारिभिः (त० पु०)॥ ७८॥

व्याकरणम्—दम्पती—अस्य राजदन्तादिगणे जायाशब्दस्य पाठादत्र 'दम्' भावो निपात्यते। विलप्य=वि+लप (व्यक्तायां वाचि), क्त्वा, ल्यबादेशः। प्रहर्त्रा=प्र+हृञ्+तृच्। निखात=नि+खनु (अवदारणे—उकारेत्), क्तः+आत्वम्। उदहारयताम्=उत्+अ+

हृष्+णिच्+लङ् । उरस्तः=उरस्+'पञ्चम्यास्तसिल्' इति तसिल् । शशाप=शप (आक्रोशे),लिट् ॥ ७८ ॥

वाच्यपरिवर्तनम्—ताभ्यां, दम्पतिभ्यां, बहु, विलप्य, शिशोः, उरस्तः, निखातं, शल्यं, प्रहर्त्रा, उद्हार्यत, तेन, परासुना, अभावि, अथ, वृद्धेन, हस्तार्पितैः, नयनवारिभिः, एव, भूमिपतिः, शेपे ॥ ७८ ॥

तात्पर्यार्थः—तौ जायापती बहु विलापं कृत्वा पुत्रस्य वक्षसि विद्धं शरं दशरथेनोत्पाटयामासतुः, स पुत्रो निर्गतप्राणोऽभूत्, अथ स्थविरः पिता हस्तपतितैर्नेत्रजलैरेव राजानं दशरथमशपत् ॥ ७८ ॥

भाषाऽर्थः—उन स्त्रीपुरुषोंने वहुत विलाप कर पुत्र की छाती में बिंधे बाण को प्रहार करने वाले ( दशरथ ) से निकलवाया, ( निकालते ही ) वह पुत्र गत प्राण वाला हुआ याने मर गया , तब वृद्ध ( पिता ) ने हाथमें गिरे हुये आखों के जल से ही राजा ( दशरथ ) को शाप दिया ॥ ७८ ॥

अथ हे राजन् ! वार्द्धक्येऽहमिव त्वमपि सुतशोकान्मरिष्यसीति शप्तारं मुनं प्रति दशरथोऽब्रवीदित्याह—

दिष्टान्तमाप्स्यति भवानपि पुत्रशोकादन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं प्रोवाच कोसलपतिः प्रथमापराद्धः ॥ ७९ ॥

सञ्जीविनी—दृष्टान्तमिति । हे राजन् ! भवानन्त्ये वयस्यहमिव पुत्रशोकाद्दिष्टान्तं कालवसानम्, मरणमित्यर्थः। 'दिष्टः काले च दैवे स्याद्दिष्टम्' इति विश्वः । आप्स्यति प्राप्स्यति इत्युक्तवन्तम् आक्रान्तः पादाहतः पूर्वम् आक्रान्तपूर्वः, सुप्सुपेति समासः । "राजदन्तादिषु परम्" इत्यनेन परनिपातः । तं प्रथममपकृतमित्यर्थः । मुक्तविषमपकारात्पश्चादुत्सृष्टविषं भुजङ्गमिव स्थितं तं वृद्धं प्रति प्रथमापराद्धः प्रथमापराधी, कर्तरि क्तः । इदं च सहने कारणमुक्तम् । कोसलपतिर्दशरथः शापदानात्पश्चादप्येनं मुनिं प्रोवाच ॥ ७९ ॥

अन्वयः—'हे राजन् !' भवान्, अपि, अन्त्ये, वयसि, अहम्, इव, पुत्रशोकात्, दिष्टान्तम्, आप्स्यति, इति, उक्तवन्तम्, आक्रान्तपूर्वं, मुक्तविषं, भुजङ्गम्, इव, 'स्थितं' तं, प्रथमापराद्धः, कोसलपतिः, प्रोवाच ॥ ७९ ॥

सुधा—'हे राजन् !' भवानपि, अन्त्ये=चरमे, वयसि=अवस्थायां, वार्द्धक्य इति यावत् । अहं=वृद्धः, इव=यथा, पुत्रशोकात्=सुतशुचः, दिष्टान्तं=कालावसानं, मृत्युमिति यावत्। आप्स्यति=प्राप्स्यति, पुत्रशोकान्मरिष्यतीत्यर्थः। इति=एवम्, उक्तवन्तं=कथयितारं, शपन्तमिति यावत् । आक्रान्तपूर्वं=प्रथमं पादाहतं, मुक्तविषं=त्यक्तगरलं, भुजङ्गं=सर्पम्, इव, स्थितमिति शेषः । तं=पूर्वोक्तं, वृद्धमुनिं प्रतीति यावत् । प्रथमापराद्धः=आद्यापराधी, कोसलपतिः=कोसलदेशस्वामी दशरथः, प्रोवाच=उक्तवान् ॥ ७९ ॥

कोशः—'दिष्टं दैवे पुमान् काले' इति मेदिनी । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्' इति, 'मन्युशोकौ तु शुक् स्त्रियाम्' इति, 'अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम्' इति, 'क्ष्वेडस्तु गरलं विषम्' इति, 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इति चामरः ॥ ७९ ॥

समासादि—दिष्टस्यान्त इति दिष्टान्तः ( त० पु० ) । पुत्रस्य शोक इति पुत्रशोकस्तस्मात्पुत्रशोकात् ( त० पु० ) । अन्ते भवोऽन्त्यस्तस्मिन्नन्त्ये । आक्रान्तः पूर्वमित्याक्रान्तपूर्वस्तमाक्रान्तपूर्वम् ( सुप्सुपा ) । मुक्तं विषं येन स तं मुक्तविषम् ( ब० व्रीं० ) । भुजेन कौटिल्येन गच्छतीति भुजङ्गस्तं भुजङ्गम् । कोसलस्य पतिरिति कोसलपतिः (त०पु०) । अपराध्यतीत्यपराद्धः, प्रथममपराद्ध इति प्रथमापराद्धः ॥ ७९ ॥

व्याकरणम्—आप्स्यति = आप्लृ + लृट् । अन्त्ये = अन्त + दिगादित्वाद्यत् । उक्तवन्तं = वच + क्तवतुः । आक्रान्त = आ + क्रमु ( पादविक्षेपे-उदित् ), क्तः । भुजङ्गं = भुज + गम् + खच् + तस्य डित्त्वम् + टेर्लोपः । प्रोवाच = प्र + वच + लिट् । अपराद्धः = अप + राधो + कर्तरि क्तः ॥ ७९ ॥

वाच्यपरिवर्तनम्—'हे राजन् !' भवता, अपि, अन्त्ये, वयसि, मया, इव, पुत्रशोकात्, दिष्टान्तः, आप्स्यते, इति, उक्तवान्, आक्रान्तपूर्वः, मुक्तविषः, भुजङ्गः, इव, 'स्थितः' सः, प्रथमापराद्धेन, कोसलपतिना, प्रोचे ॥ ७९ ॥

तात्पर्यार्थः—हे राजन् ! 'भवानपि वृद्धावस्थायां अहमिव पुत्रशोकान्मृत्युं प्राप्स्यति' इति शपन्तं पादाहतपूर्वं त्यक्तविषं सर्पमिव स्थितं तं वृद्धं प्रति प्रथमापराधी कोसलपतिः राजा दशरथ उक्तवान् ॥ ७९ ॥

भाषाऽर्थः—( हे राजन् ! ) 'आप भी अन्त अवस्था (वृद्धावस्था) में मेरे समान पुत्र के शोक से मृत्यु को प्राप्त करोगे' ऐसा कहते हुये, पहले ( पैर ) से दबे विष को छोड़ने वाले सांप की नाईं ( स्थित ) उस ( वृद्धमुनि ) को, पहला अपराधी कोसलपति ( दशरथ ) ने कहा ॥ ७९ ॥

अथापुत्रं मां शपन्नपि भवता मदुपकार एव कृत इत्याह—

**शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।**
**कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ॥८०॥**

सञ्जीविनी—शाप इति । अदृष्टा तनयाननपद्मशोभा पुत्रमुखकमलश्रीर्येन तस्मिन्नपुत्रके मयि भगवता पातितः, वज्रप्रायत्वात्पातित इत्युक्तम् । अयं 'पुत्रशोकात् म्रियस्व' इत्येवंरूपः शापोऽपि सानुग्रहः । वृद्धकुमारीवरन्यायेनेष्टावाप्तेरान्तरीयकत्वात्सोपकार एव । निग्राहकस्यात्यनुग्राहकत्वमर्थान्तरन्यासेनाह—कृष्यामिति । इन्धनैः काष्ठैरिद्धः प्रज्वलितो ज्वलनोऽग्निः कृष्यां कर्षणार्हाम्, "ऋदुपधाच्चाक्लृपि चृतेः" इति क्यप् । क्षितिं दहन्नपि बीजप्ररोहाणां बीजाङ्कुराणां जननीमुत्पादनक्षमां करोति ॥ ८० ॥

अन्वयः—भगवता, अदृष्टतनयाननपद्मशोभे, मयि, पातितः, अयं, शापः, अपि, सानुग्रहः, 'अस्ति' इन्धनेद्धः, ज्वलनः, कृष्यां, क्षितिं, दहन्, अपि, बीजप्ररोहजननीं, करोति, खलु ॥८०॥

सुधा—भगवता = तपस्विना, अदृष्टतनयाननपद्मशोभे = अनवलोकितपुत्रमुखकमलद्युतौ, अपुत्रक इत्यर्थः । मयि = दशरथे, पातितः = दत्तः, अयम् = एषः, शापः = आक्रोशः, अपि, सानुग्रहः = सोपकारकः, अस्तीति शेषः । अपुत्रस्य मम शापवशात् पुत्रप्राप्तिरूपेष्टसिद्ध्या मयि पातितोऽयं शापः सोपकारक एवेति भावः । इन्धनेद्धः = काष्ठप्रज्वलितः, ज्वलनः = अग्निः, कृष्यां = कर्षणयोग्यां, क्षितिं = भूमिं, दहन् = दहनं कुर्वन्, अपि, बीजप्ररोहजननीं = बीजाङ्कुरोत्पादिनीं, करोति = विधत्ते, खलु, खल्विति निश्चये ॥ ८० ॥

कोशः—'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति, 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति, 'शोभा कान्तिर्द्युतिश्छविः' इति चामरः । 'खलु स्याद् वाक्यभूषायां जिज्ञासायां च सान्त्वने । वीप्सामाननिषेधेषु पूरणे पादवाक्ययोः' इति मेदिनी ॥ ८० ॥

समासादि—आननं पद्ममिवेत्याननपद्म ( क० धा० ), तनयस्याननपद्मेति तनयाननपद्म तस्य शोभेति तनयाननपद्मशोभा ( त० पु० ), अदृष्टा तनयाननपद्मशोभा येन स तस्मिन्नदृष्टतनयाननपद्मशोभे ( ब० व्री० ) । अनुग्रहणमनुग्रहस्तेन सहितः सानुग्रहः । इन्धनैरिद्ध इतीन्धनेद्धः ( त० पु० ) । बीजानां प्ररोहा इति बीजप्ररोहास्तेषां जननी तां बीजप्ररोहजननीम् ( त० पु० ) ॥ ८० ॥

व्याकरणम्—शापः = शप + घञ् । अनुग्रहः = अनु + ग्रह ( उपादाने ), 'ग्रहवृद' इत्यप् । पातितः = पत + णिच् + क्तः + इट् । दहन् = दह ( भस्मीकरणे ), शतृ । इद्धः =

ञिइन्धी ( दीप्तौ—ञीत् ), क्तः ॥ ८० ॥

वाच्यपरिवर्तनम्—भगवता, अदृष्टतनयाननपद्मशोभे, मयि, पातितेन, अनेन, शापेन, अपि, सानुग्रहेण, 'भूयते' इन्धनेद्धेन, ज्वलनेन, कृष्यां, क्षितिं, दहता, अपि, बीजप्ररोहजननी, क्रियते, खलु ॥ ८० ॥

तात्पर्यार्थः—भगवता मुनिना अवलोकितपुत्रपद्मशोभे मयि भवताऽयं पातितः शापोऽपि सोपकारक एवास्ति, काष्ठैः प्रज्वलितोऽग्निः कर्षणार्हां भूमिं दहन्नपि बीजाङ्कुराणामुत्पादनीं करोति ॥ ८० ॥

भाषाऽर्थः—आपसे , पुत्र के मुखकमल की शोभा को न देखने वाले मुझ को दिया हुआ यह शाप भी अनुग्रह करने वाला ( है ), लकड़ियों से प्रज्वलित की हुई अग्नि खेती के योग्य भूमि को जलाती हुई भी बीज के अंकुर पैदा करने वाली करती है ॥ ८० ॥

अथ 'तत्र वध्योऽयं जनः किं कुर्यात्' इति दशरथेन कथितः स मुनिः साग्निकाष्ठानि ययाच इत्याह—

**इत्थं गते गतघृणः किमयं विधत्तां वध्यस्तवेत्यभिहितो वसुधाऽधिपेन ।**
**एधान् हुताशनवतः स मुनिर्ययाचे पुत्रं परासुमनुगन्तुमनाः सदारः ॥ ८१ ॥**

सञ्जीविनी—इत्थमिति । इत्थं गते प्रवृत्ते सति वसुधाऽधिपेन राज्ञा गतघृणो निष्करुणः, हन्तृत्वान्निष्कृप इत्यर्थः । अत एव तव वध्यो वधार्होऽयं जनः, अयमिति राज्ञो निर्वेदादनादरेण स्वात्मनिर्देशः । किं विधत्तामित्यभिहित उक्तः, मया किं विधेयमिति विज्ञापित इत्यर्थः । स मुनिः सदारः सभार्यः परासुं गतासुं पुत्रमनुगन्तुं मनो यस्य सोऽनुगन्तुमनाः सन्, "तुं काममनसोरपि" इति मकारलोपः । हुताशनवतः साग्नीनेधान्काष्ठानि ययाचे । न चात्रात्मघातदोषः । "अनुष्ठानासमर्थस्य वानप्रस्थस्य जायते । भृग्वग्निजलसंपातैर्मरणं प्रविधीयते ॥" इत्युक्तेः ॥ ८१ ॥

अन्वयः—इत्थं, गते, 'सति' वसुधाऽधिपेन, गतघृणः, तव, वध्यः, अयं, किं, विधत्ताम्, इति, अभिहितः, सः, मुनिः, सदारः, परासुं, पुत्रम्, अनुगन्तुमनाः, 'सन्' हुताशनवतः, एधान्, ययाचे ॥ ८१ ॥

सुधा—इत्थम् = एवं, गते = प्राप्ते, प्रवृत्त इति यावत् । सतीति शेषः । वसुधाऽधिपेन = पृथ्वीपतिना, दशरथेनेति यावत् । गतघृणः = निष्कारुण्यः, अननुकम्प्य इति यावत् । तव = भवतः, वध्यः = वधकरणयोग्यः, अयम् = एषो जनः, किं विधत्तां = किं कुर्यात, इति = एवम्, अभिहितः = कथितः, सः = पूर्वोक्तः, मुनिः = तपस्वी, सदारः = सपत्नीकः, परासुं = गतप्राणं, मृतमिति यावत् । पुत्रं = सुतम्, अनुगन्तुमनाः = अनुगमनचित्तः, सन्निति शेषः । हुताशनवतः = वह्निमतः, एधान् = इन्धनानि, साग्निकाष्ठानीति यावत् । ययाचे = अयाचत ॥ ८१ ॥

कोशः—'कारुण्यं करुणा घृणा' इति, 'इन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्' इति, 'तपस्वी तापसः पारी कांक्षी वाचंयमो मुनिः' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति, 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जायाऽथ पुंभूम्नि दाराः' इति चामरः ॥ ८१ ॥

समासादि—गता घृणा यस्य स गतघृणः ( ब० व्री० ) । हन्तुं योग्यो वध्यः । वसुधाया अधिप इति वसुधाऽधिपस्तेन वसुधाऽधिपेन ( त० पु० ) । हुतमश्नातीति हुताशनः, स विद्यत एषु ते हुताशनवन्तस्तान् हुताशनवतः । परागता असवोऽस्येति परासुस्तं परासुम् । अनुगन्तुं मनो यस्य सोऽनुगन्तुमनाः ( ब० व्री० ) । दारेण सहितः सदारः ॥ ८१ ॥

व्याकरणम्—विधत्तां = वि + डुधाञ् ( धारणपोषणयोः—डुञित् ), लोट् । वध्यः = हन् + यत् + वधादेशः । ययाचे = याचृ ( याचने—ऋदित ), लिट् ॥ ८१ ॥

वाच्यपरिवर्तनम्—इत्थं, गते, 'सति' वसुधाऽधिपेन, गतघृणेन, तव, बध्येन, अनेन, किं, विधीयताम्, इति, अभिहितेन, तेन, मुनिना, सदारेण, परासुं, पुत्रम्, अनुगन्तुमनसा, 'सता' हुताशनवन्तः, एधाः, ययाचिरे ॥ ८१ ॥

तात्पर्यार्थः—इत्थं प्रवृत्ते सति राज्ञा दशरथेन 'निष्कृपो भवतो वधार्होऽयं जनः किं कुर्यात्' इत्युक्तः स मुनिः सपत्नीको मृतं पुत्रमनुगमनचित्तः सन् साग्निकाष्ठानि याचितवान्॥८१॥

भाषाऽर्थः—ऐसा प्राप्त होने पर राजा ( दशरथ ) से, 'तुमसे बध करने योग्य करुणा से रहित यह जन क्या करे' इस प्रकार कहे गये उस मुनिने स्त्री के साथ मरे पुत्र के पीछे गमन करने के लिये मन करते हुए अग्नि और काष्ठ को मांगा ॥ ८१ ॥

अथ दशरथो मुन्याज्ञां विधाय तस्य शापं धारयन् वनान्निवृत्त इत्याह—

**प्राप्तानुगः सपदि शासनमस्य राजा सम्पाद्य पातकविलुप्तधृतिर्निवृत्तः ।**
**अन्तर्निविष्टपदमात्मविनाशहेतुं शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः ॥८२॥**

सञ्जीविनी—प्राप्तेति । प्राप्तानुगः प्राप्तानुचरो राजा सपदि अस्य मुनेः शासनं काष्ठसंभारणरूपं प्रागेकोऽपि संप्रति प्राप्तानुचरत्वात्संपाद्य पातकेन मुनिवधरूपेण विलुप्तधृतिर्नष्टोत्साहः सन् अन्तर्निविष्टपदमन्तर्लब्धस्थानमात्मविनाशहेतुं शापम्, अम्बुराशिरौर्वं ज्वलनं बडवाऽनलमिव, 'और्वस्तु बाडवो बडवाऽनलः' इत्यमरः। दधद्धृतवान्सन् निवृत्तः, वनादिति शेषः॥८२॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
मृगयावर्णनो नाम नवमः सर्गः ॥ ९ ॥

अन्वयः—प्राप्तानुगः, राजा, सपदि, अस्य, शासनं, सम्पाद्य, पातकविलुप्तधृतिः, 'सन्' अन्तर्निविष्टपदम्, आत्मविनाशहेतुं, शापम्, अम्बुराशिः, और्वं, ज्वलनम्, इव, दधत्, 'वनात्' निवृत्तः ॥ ८२ ॥

सुधा—प्राप्तानुगः = लब्धसेवकः, राजा = पार्थिवः, दशरथ इति यावत्। सपदि = सद्यः, अस्य = एतस्य, मुनेरिति यावत् । शासनम् = आज्ञां, काष्ठाद्याहरणरूपशासनमित्यर्थः। सम्पाद्य = विधाय, पातकविलुप्तधृतिः = पुत्रवधरूपपातकेन नष्टधैर्यः, सन्निति शेषः । अन्तर्निविष्टपदम् = अन्तःकरणप्राप्तस्थानम्, आत्मविनाशहेतुं = स्वमृत्युकारणभूतं, शापं = शपनम्, अम्बुराशिः = समुद्रः, और्वम् = (१)उर्वनामकमुन्ययोनिजपुत्रं, वाडवमिति यावत्। ज्वलनम् = अग्निम्, इव = यथा, दधत् = धारयन्, सन्निति शेषः । 'वनात्' निवृत्तः = प्रत्यावृत्तः, प्रत्यागतवानित्यर्थः ॥ ८२ ॥

कोशः—'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु' इति मेदिनी । 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः । 'पदं स्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्कवस्तुनोः' इति, 'नाशः पलायने मृत्यौ परिध्वस्तावदर्शने' इति चानेकार्थसंग्रहः। 'हेतुर्ना कारणं बीजम्' इति, 'और्वस्तु बाडवो बडवाऽनलः' इति चामरः ॥ ८२ ॥

समासादि—अनुगच्छतीत्यनुगः, प्राप्तोऽनुगो येन स प्राप्तानुगः ( ब० व्री० ) । पातकेन विलुप्ता धृतिर्यस्य स पातकविलुप्तधृतिः (ब०व्री०) । अन्तर्निविष्टं पदं यस्य स तमन्तर्निविष्टपदम् ( ब० व्री० ) । आत्मनो विनाश इत्यात्मविनाशस्तस्य हेतुस्तमात्मविनाशहेतुम् ( ब० व्री० ) । ज्वलतीति ज्वलनः । उर्वस्य ( तन्नामकमुनेः ) अपत्यमौर्वम् । अम्बुनो राशिरित्यम्बुराशिः ( त० पु० ) ॥ ८२ ॥

---

( १ ) 'उर्वेण किलायोनिजपुत्रार्थिना ऊरुर्मथितः, तत्र ज्वालामयः पुरुषो जातः, तस्य च समुद्र आधार आसीत्' इति श्रुतिः ॥

व्याकरणम्—सम्पाद्य = सम् + पद् + णिच् + क्त्वा, ल्यबादेशः । पातक = पत्लृ ( गतौ—लृदित् ), णिच् = ण्वुल् । विलुप्त = वि + लिप ( उपदेहे ), क्तः । धृतिः = धृञ् ( धारणे—ञित् ), क्तिन् । निवृत्तः = नि + वृतु ( वर्तने—उकारेत् ), क्तः । निविष्ट = नि + विश ( प्रवेशने ), क्तः + पत्वं + ष्टुत्वम् । ज्वलन = ज्वल ( दीप्तौ ), 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलपपतपदः' इति युच् । और्वम् = उर्व + 'तस्यापत्यम्' इत्यण् ॥ ८२ ॥

वाच्यपरिवर्तनम्—प्राप्तानुगेन, राज्ञा, सपदि, अस्य, शासनं, सम्पाद्य, पातकविलुप्तधृतिना, 'सता' अन्तर्निविष्टपदम्, आत्मविनाशहेतुं, शापम्, अम्बुराशिना, और्वं, ज्वलनम्, इव, दधत्, 'वनात्' निवृत्तम् ॥ ८२ ॥

तात्पर्यार्थः—यथा समुद्र उर्वमुनिपुत्रं बडवाग्निं दधते, तथा प्राप्तानुचरो राजा दशरथः सद्योऽस्य मुनेः काष्ठसम्भारणरूपशासनं सम्पाद्य मुनिपुत्रवधरूपपातकेन नष्टोत्साहः सन् अन्तःकरणे लब्धस्थानं निजमरणकारणभूतं शापं दधद् वनान्निवृत्तः ॥ ८२ ॥

भाषाऽर्थः—सेवकों को प्राप्त कर राजा ( दशरथ ) ने तत्काल इस ( मुनि ) की आज्ञा को संपादन कर ( मुनिपुत्र के वधरूप ) पातक से नष्ट हुये धैर्य वाले, अन्तःकरण में स्थान पाये ( और ) अपने मरण के कारण ( भूत ) शापको, जैसे समुद्र बडवानल को धारण करता है, वैसे धारण करता हुआ ( वन से ) लौटा ॥ ८२ ॥

इति श्रीमहाकविकालिदासविरचिते रघुवंशमहाकाव्ये पण्डितश्रीकपिलदेवमिश्रसूनुना मिश्रोपनामकश्रीसुदामाशर्म्मणा विरचितया सुधाऽऽख्यया व्याख्यया समुल्लसितो मृगयावर्णनो नाम नवमः सर्गः समाप्तः ॥ ९ ॥

# अथ दशमः सर्गः ।

आशंसे नित्यमानन्दं रामनामकथाऽमृतम् ।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

अथ पृथिवीं पालयतो राज्ञो दशरथस्य दशसहस्रवर्षाणि व्यतीयुरित्याह—

**पृथिवीं शासतस्तस्य पाकशासनतेजसः ।**
**किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥**

सञ्जीविनी—पृथिवीमिति । पृथिवीं शासतः पालयतः पाकशासनतेजस इन्द्रवर्चसः अनूनर्द्धेर्महासमृद्धेस्तस्य दशरथस्य किञ्चिदूनमीषन्न्यूनं शरदां वत्सराणाम्, 'स्यादृतौ वत्सरे शरत्' इत्यमरः । अयुतं दशसहस्रं ययौ । 'एकदशशतसहस्राण्ययुतं लक्षं तथा प्रयुतम् । कोट्यर्बुदं च पद्मं स्थानात्स्थानं दशगुणं स्यात् ।' इत्यार्यभट्टः । इदं च मुनिशापात्परं वेदितव्यं न तु जननात्, "षष्टिवर्षसहस्राणि जातस्य मम कौशिक ! । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥" इति रामायणविरोधात् । नाप्यभिषेकात्परं तस्यापि 'सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम्' इति कौमारानुष्ठितत्वाभिधानात्स एव विरोध इति ॥ १ ॥

अन्वयः—पाकशासनतेजसः, पृथिवीं, शासतः, अनूनर्द्धेः, तस्य, किञ्चित्, ऊनं, शरदाम्, अयुतं, ययौ ॥ १ ॥

सुधा—पाकशासनतेजसः = इन्द्रसदृशपराक्रमस्य, पृथिवीं = मेदिनीं, शासतः = अनुशासतः, पालयत इति यावत् । अनूनर्द्धेः = अधिकसमृद्धेः, तस्य = पूर्वोक्तस्य, दशरथस्येति यावत् । किञ्चित् = ईषत्, शरदां = वर्षाणाम्, अयुतं = दशसहस्रं, ययौ = व्यतीयाय । "षष्टिवर्षसहस्राणि जातस्य मम कौशिक । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि', इति वाल्मीकीयरामाय-

रणविरोधादिदं मुनिशापादूर्ध्वमवधार्यम् । अस्मिन् सर्गेऽनुष्टुभाख्यश्छन्दस्तल्लक्षणं च— 'वक्त्रे नाद्यान्नसौ,स्यातामब्धेर्योऽनुष्टुभिख्यातम्' इति केदारभट्टेनोक्तम् ॥ १ ॥

कोशः—'इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः' इत्यमरः । 'तेजो धाम्नि पराक्रमे । प्रभावरेतसोश्च' इति विश्वः । 'ऋद्धे समृद्धे सिद्धान्ने' इति हैमः । 'शतं सहस्रमयुतं नियुतं प्रयुतं मतम् ।। स्त्री कोटिरर्बुदमिति क्रमाद्दशगुणोत्तरम्' इति रत्नकोशः ॥ १ ॥

समासादि—शासयतीति शासनः, पाकस्य ( वृत्रभ्रातुर्दैत्यस्य ) शासन इति पाकशासनः ( त० पु० ), तद्वत्तेजो यस्य स तस्य पाकशासनतेजसः ( ब० व्री० ) । न ऊना ऋद्धिर्यस्य स अनूनर्द्धिस्तस्यानूनर्द्धेः ( ब० व्री० ) ॥ १ ॥

व्याकरणम्—शासतः = शासु ( अनुशिष्टौ—उकारेत् ), शतृ । शासन = शास् + णिच् + नन्द्यादित्वाल्ल्युः । ययौ = या + लिट् ॥ १ ॥

वाच्यपरिवर्तनम्—पाकशासनतेजसः, पृथिवीं, शासतः, अनूनर्द्धेः, तस्य, किञ्चित्, ऊनेन, शरदाम्, अयुतेन, यये ॥ १ ॥

तात्पर्यार्थः—इन्द्रसदृशवर्चसः पृथिवीं पालयतो महासमृद्धेस्तस्य दशरथस्य किञ्चिन्न्यूनानि दशसहस्रवर्षाणि व्यतीयुः ॥ १ ॥

भाषाऽर्थः—इन्द्र के सदृश तेजस्वी, पृथिवी का पालन करने वाले, अधिक समृद्धिमान् उस ( दशरथ ) को कुछ कम दश हजार वर्ष बीत गये ॥ १ ॥

अथ दशरथः पितॄणां मोक्षकारणं पुत्रं न प्रापेत्याह—

**न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।**
**सुताभिधानं स ज्योतिः सद्यः शोकतमोऽपहम् ॥ २ ॥**

सञ्जीविनी—नेति । स दशरथः पूर्वेषां पितॄणामृणनिर्मोक्षसाधनम्, "एक वा अनृणी यः पुत्री" इति श्रुतेः, पितॄणामृणविमुक्तिकारणम् । सद्यः शोक एव तमस्तदपहन्तीति शोकतमोऽपहम् । अत्राभयङ्कर इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य, "अपे क्लेशतमसोः" इति डप्रत्ययः । सुताभिधानं सुताख्यं ज्योतिर्नोपलेभे न प्राप च ॥ २ ॥

अन्वयः—सः, पूर्वेषाम्, ऋणनिर्मोक्षसाधनं, सद्यः, शोकतमोऽपहं, सुताभिधानं, ज्योतिः, न, च, उपलेभे ॥ २ ॥

सुधा—सः = पूर्वोक्तः, दशरथ इति यावत् । पूर्वेषां = पूर्वजानाम्, अग्निष्वात्तादिपितॄणामित्यर्थः । ऋणनिर्मोक्षसाधनम् = ऋणनिवृत्तिकारणं, सद्यः = सपदि, शीघ्रमित्यर्थः । शोकतमोऽपहं = शोकरूपान्धकारनिवारकं, सुताभिधानं = पुत्राख्यं, ज्योतिः = प्रकाशं, न, च, उपलेभे = न प्राप्तवान् । चकारः पादपूरणार्थकः ॥ २ ॥

कोशः—पूर्वं तु पूर्वजे । प्रागग्रे श्रुतिभेदे च' इति हैमः । 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति, 'आख्याह्वे अभिधानं च नामधेयं च' इति चामरः । 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः ॥ २ ॥

समासादि—ऋणस्य निर्मोक्ष इति इति ऋणनिर्मोक्षस्तस्य साधनं तद् ऋणनिर्मोक्षसाधनम् ( त० पु० ) । सुत एवाभिधानं यस्य तत् सुताभिधानम् ( ब० व्री० ) । शोक एव तम इति शोकतमस्तदपहन्तीति तच्छोकतमोऽपहम् ॥ २ ॥

व्याकरणम्—उपलेभे = उप + लभ + लिट् । साधन = षाध ( संसिद्धौ ), ल्युट् । शोकतमोऽपहम्—इत्यत्र 'अभयङ्करः' इति वद् उपपदेऽपि तदन्तविधिमाश्रित्य 'अपे क्लेशतमसोः' इति डप्रत्ययः ॥ २ ॥

वाच्यपरिवर्तनम्—तेन, पूर्वेषाम्, ऋणनिर्मोक्षसाधनं, सद्यः, शोकतमोऽपहं, सुताभिधा-

न, ज्योतिः, न, च, उपलेभे ॥ २ ॥

तात्पर्यार्थः--स राजा दशरथः पितॄणामृणविमुक्तिकारणभूतं सद्यः शोकरूपान्धकारनिवारकं सुताख्यं ज्योतिर्न लब्धवान् ॥ २ ॥

भाषाऽर्थः--उस ( दशरथ ) ने पितरों के ऋण से छूटने के साधनभूत शीघ्र शोकरूपी अंधकार को हटाने वाली पुत्र नामक ज्योति को नहीं प्राप्त किया ॥ २ ॥

अथायं दशरथो बहुकालपर्यन्तमदृष्टपुत्रः सन्नतिष्ठदित्याह--

**अतिष्ठत्प्रत्ययापेक्षसंततिः स चिरं नृपः ।**
**प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥**

सञ्जीविनी—अतिष्ठदिति । प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा संततिर्यस्य स तथोक्तः, 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । स नृपः मन्थात्प्राङ्मन्थनात्पूर्वमनभिव्यक्ताऽदृष्टा रत्नोत्पत्तिर्यस्य सोऽर्णव इव चिरमतिष्ठत् । सामग्र्यभावाद्विलम्बो न तु बन्ध्यत्वादिति भावः ॥ ३ ॥

अन्वयः--प्रत्ययापेक्षसन्ततिः, नृपः, मन्थात्, प्राक्, अनभिव्यक्तरत्नोत्पत्तिः, अर्णवः, इव, चिरम्, अतिष्ठत् ॥ ३ ॥

सुधा—प्रत्ययापेक्षसन्ततिः = हेत्वाकाङ्क्षप्रसूतिः, सन्तानोत्पत्यर्थं यज्ञादिकारणाकाङ्क्षीत्यर्थः । सः = पूर्वोक्तः, नृपः = राजा दशरथः, मन्थात् = मन्थनात्, प्राक् = पूर्वम्, अनभिव्यक्तरत्नोत्पत्तिः = अप्रकटितरत्नोद्भवः, अर्णवः = समुद्रः, इव = यथा, चिरं = बहुकालपर्यन्तम्, अतिष्ठत् = तस्थौ ॥ ३ ॥

कोशः—'प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु । प्रथितत्वे च सन्नादावधीनज्ञानयोरपि' इति विश्वः । 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इति, 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः' इति चामरः ॥ ३ ॥

समासादि—प्रत्ययमपेक्षत इति प्रत्ययापेक्षा, प्रत्ययापेक्षा सन्ततिर्यस्य स प्रत्ययापेक्षसन्ततिः ( ब० व्री० ) । रत्नानामुत्पत्तिरिति रत्नोत्पत्तिः ( त० पु० ), न अभिव्यक्ता रत्नोत्पत्तिर्यस्य सोऽनभिव्यक्तरत्नोत्पत्तिः ( ब० व्री० ) ॥ ३ ॥

व्याकरणम्—अतिष्ठत् = अ + ष्ठा ( गतिनिवृत्तौ ), लङ् + 'पाघ्राध्मास्था' इति तिष्ठादेशः । सन्ततिः = सम् + तनु ( विस्तारे—उकारेत् ), क्तिन् । अनभिव्यक्त = न + अभि + वि + अन्जू + क्तः ॥ ३ ॥

वाच्यपरिवर्तनम्—प्रत्ययापेक्षसन्ततिना, तेन, नृपेण, मन्थात्, प्राक्, अनभिव्यक्तरत्नोत्पत्तिना, अर्णवेन, इव, चिरम्, अस्थीयत ॥ ३ ॥

तात्पर्यार्थः—यथा मन्थनात्पूर्वमप्रकटितरत्नोत्पत्तिः समुद्रो बहुकालपर्यन्तं तस्थौ, तथा सन्तानोत्पत्तियज्ञादिकारणाकाङ्क्षी स राजा दशरथो बहुकालपर्यन्तमतिष्ठत् ॥ ३ ॥

भाषाऽर्थः—संतानउत्पत्ति के कारण की अपेक्षा करनेवाला वह राजा ( दशरथ ), मंथन के पहले नहीं प्रकट हुये रत्नों की उत्पत्ति वाले समुद्र के समान बहुत समय तक स्थित हुआ ॥ ३ ॥

अथ ऋष्यश्रृङ्गादय ऋषयः पुत्रेष्टियज्ञमारेभिर इत्याह—

**ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।**
**आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥**

सञ्जीविनी—ऋष्येति । ऋष्यशृङ्गादयः,ऋष्यशृङ्गो नाम कश्चिदृषिः तदादयः ऋतुमृतौ वा यजन्तीत्यृत्विजो याज्ञिकाः, "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इत्यनेन क्विबन्तो निपातः । जितात्मानः जितान्तःकरणाः संतानकाङ्क्षिणः पुत्रार्थिनस्तस्य दशरथस्य पुत्रीयां

पुत्रनिमित्ताम् , "पुत्राच्छ च" इति छप्रत्ययः । इष्टिं यागमारेभिरे प्रचक्रमिरे ॥ ४ ॥

अन्वयः—जितात्मानः, ऋष्यशृङ्गादयः, ऋत्विजः, सन्तः, सन्तानकाङ्क्षिणः, तस्य, पुत्रीयाम् , इष्टिम् , आरेभिरे ॥ ४ ॥

सुधा—जितात्मानः = जितान्तःकरणाः, जितेन्द्रिया। इति यावत । ऋष्यशृङ्गादयः = ऋष्यशृङ्गप्रभृतयः, ऋत्विजः = याजकाः, सन्तः = भवन्तः, सन्तानकाङ्क्षिणः = वंशाभिलाषिणः, तस्य = पूर्वोक्तस्य, दशरथस्येति यावत् । पुत्रीयां = पुत्र्यां, पुत्रनिमित्तामिति यावत् । इष्टिं = यागं, पुत्रेष्टिमित्यर्थः । आरेभिरे = आरब्धवन्तः ॥ ४ ॥

कोशः—'वंशोऽन्वयायः सन्तानः' इत्यमरः । 'इष्टिर्मताभिलाषेऽपि संग्रहश्लोकयागयोः' इति मेदिनी । 'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते' इति कात्यः ॥ ४ ॥

समासादि—ऋष्यशृङ्ग आदिर्येषां ते ऋष्यशृङ्गादयः ( ब० व्री० ) । सन्तानं काङ्क्षतीति सन्तानकाङ्क्षी तस्य सन्तानकाङ्क्षिणः । जिता आत्मानो यैस्ते जितात्मानः (ब० व्री०) । पुत्रो निमित्तमस्याः पुत्रीया तां पुत्रीयाम् । ऋतौ यजन्तीति ऋत्विजः ॥ ४ ॥

व्याकरणम्—आरेभिरे—आ + रभ ( राभस्ये ), लिट् । पुत्रीयां = पुत्र + छः + टाप् । इष्टिं = यज + क्तिन् + सम्प्रसारणम् । ऋत्विजः = ऋतु + यज + क्विन् + सम्प्रसारणम् ॥ ४ ॥

वाच्यपरिवर्तनम्—जितात्मभिः, ऋष्यशृङ्गादिभिः, ऋत्विग्भिः, सद्भिः, सन्तानकाङ्क्षिणः, तस्य, पुत्रीया, इष्टिः, आरेभे ॥ ४ ॥

तात्पर्यार्थः—जितेन्द्रियाः ऋष्यशृङ्गादयो महर्षयो याजकाः सन्तः पुत्रार्थिनस्तस्य दशरथस्य पुत्रनिमित्तं यज्ञं प्रचक्रमिरे ॥ ४ ॥

भाषाऽर्थः—जितेन्द्रिय ऋष्यशृंग आदि ( ऋषियों ) ने याजक होते हुये संतान की इच्छा करने वाले उस ( दशरथ ) के पुत्र के निमित्त यज्ञ ( पुत्रेष्टि ) को आरंभ किया ॥४॥

अथ तस्मिन्नवसरे देवा रावणेन पीडिताः सन्तो विष्णुमभिजग्मुरित्याह—

**तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।**
**अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५ ॥**

सञ्जीविनी—तस्मिन्निति । तस्मिन्नवसरे पुत्रकामेष्टिप्रवृत्तिसमये देवाः पुलस्त्यस्य गोत्रापत्यं पुमान्पौलस्त्यो रावणः तेनोपप्लुताः पीडिताः सन्तः निदाघार्ता घर्मातुराः अध्वानं गच्छन्तीत्यध्वगाः पान्थाः, "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति डप्रत्ययः । छायाप्रधानं वृक्षमिव, शाकपार्थिवादित्वात्समासः । हरिं विष्णुमभिजग्मुः ॥ ५ ॥

अन्वयः—तस्मिन्, अवसरे, देवाः, पौलस्त्योपप्लुताः, 'सन्तः' निदाघार्ताः, अध्वगाः, छायावृक्षम् , इव, हरिम् , अभिजग्मुः ॥ ५ ॥

सुधा—तस्मिन् = पूर्वोक्ते, अवसरे = समये, पुत्रेष्ट्यारम्भणकाल इति यावत् । देवाः = सुराः, पौलस्त्योपप्लुताः = रावणपीडिताः, सन्त इति शेषः । निदाघार्ताः = ग्रीष्मव्याकुलाः, घर्मातुरा इति यावत् । अध्वगाः = पथिकाः, छायावृक्षम् = अनातपपादपम् , छायाप्रधानद्रुममित्यर्थः । इव = यथा, हरिं = विष्णुम् , अभिजग्मुः = अभिगतवन्तः ॥ ५ ॥

कोशः—'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः' इत्यमरः । 'पौलस्त्यो रावणो श्रादे' इति, 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च' इति च विश्वः । 'घर्मो निदाघः स्वेदः स्यात्' इति, 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि' इति चामरः ॥ ५ ॥

समासादि—पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यस्तेनोपप्लुता इति पौलस्त्योपप्लुताः (त० पु०) । निदाघेनार्ता इति निदाघार्ताः (त०पु०) । छायाप्रधानो वृक्ष इति छायावृक्षस्तं छायावृक्षम् ( शाकपार्थिवादिः ) । अध्वानं गच्छन्तीत्यध्वगाः ॥ ५ ॥

व्याकरणम्—पौलस्त्य = पुलस्त्य + अण् । उपप्लुताः = उप + प्लुङ् ( गतौ—ङित् ), क्तः । अभिजग्मुः = अभि + गम् + लिट् । अध्वगाः = अध्वन् + गम् + 'अन्तात्यन्ताध्व' इत्यादिना डः + टेर्लोपः ॥ ५ ॥

वाच्यपरिवर्तनम्—तस्मिन्, अवसरे, देवैः, पौलस्त्योपप्लुतैः, 'सद्भिः' निदाघार्तैः, अध्वगैः, छायावृक्षः, इव, हरिः, अभिजग्मे ॥ ५ ॥

तात्पर्यार्थः—यथा पथिकाः घर्मातुराः सन्तश्छायाप्रधानवृक्षमभिगच्छन्ति, तथा पुत्रकामेष्टिप्रवृत्तिकाले देवाः रावणेन पीडिताः सन्तो विष्णुमभिजग्मुः ॥ ५ ॥

भाषाऽर्थः—उस समय देवता लोग रावण से पीडित होकर, जैसे बटोही घाम से व्याकुल होकर छायावाले वृक्षों के समीप जाते हैं, वैसे ( भगवान् ) विष्णु के समीप गये ॥५॥

अथ भाविन्यां कार्यसिद्धौ अविलम्बो भवतीत्याह—

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥

सञ्जीविनी—त इति । ते देवाश्चोदन्वन्तं समुद्रम्, "उदन्वानुदधौ च" इति निपातः । प्रापुः । आदिपुरुषो विष्णुश्च बुबुधे, योगनिद्रां जहावित्यर्थः । गमनप्रतिबोधयोरविलम्बार्थौ चकारौ । तथा हि—अव्याक्षेपो गम्यस्याव्यासङ्गः, अविलम्ब इति यावत् । भविष्यन्त्याः कार्यसिद्धेर्लक्षणं लिङ्गं हि । उक्तं च—"अनन्यपरता चास्य कार्यसिद्धेस्तु लक्षणम्" इति ॥ ६ ॥

अन्वयः—ते, च, उदन्वन्तं, प्रापुः, आदिपूरुषः, च, बुबुधे, हि, अव्याक्षेपः, भविष्यन्त्याः, कार्यसिद्धेः, लक्षणम्, 'अस्ति' ॥ ६ ॥

सुधा—ते = पूर्वोक्ताः, देवा इति यावत् । च, उदन्वन्तं = सागरं, प्रापुः = प्राप्तवन्तः, आदिपूरुषः = विष्णुः, च, बुबुधे = जागरितवान्, योगनिद्रां जहावित्यर्थः । हि = यतः, अव्याक्षेपः = अविलम्बः, भविष्यन्त्याः = भाविन्याः, कार्यसिद्धेः = कर्तव्यनिष्पत्तेः, प्रयोजनसाफल्यस्येति यावत् । लक्षणं = चिह्नम्, अस्तीति शेषः ॥ ६ ॥

कोशः—'उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः' इत्यमरः । 'सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिषु' इति, 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्' इति च मेदिनी ॥ ६ ॥

समासादि—उदकानि सन्त्यत्रेत्युदन्वान् तमुदन्वन्तम् । आदिश्चासौ पूरुष इत्यादिपूरुषः ( क० धा० ) । न व्याक्षेप इत्यव्याक्षेपः । कार्यस्य सिद्धिरिति कार्यसिद्धिस्तस्याः कार्यसिद्धेः ( त० पु० ) ॥ ६ ॥

व्याकरणम्—प्रापुः = प्र + आप्लृ + लिट् । उदन्वन्तम् = उदक + 'उदन्वानुदधौ च' इति मत्वन्तो निपातितः । बुबुधे = बुध ( अवगमने ), लिट् । अव्याक्षेपः = न + वि + आ + क्षिप + घञ् ॥ ६ ॥

वाच्यपरिवर्तनम्—तैः, च, उदन्वान्, प्रापे, आदिपूरुषेण, च, बुबुधे, हि, अव्याक्षेपेण, भविष्यन्त्याः, कार्यसिद्धेः, लक्षणेन, 'भूयते' ॥ ६ ॥

तात्पर्यार्थः—ते देवाश्च समुद्रं प्रापुः, भगवान् विष्णुश्च योगनिद्रां जहौ, यतोऽविलम्बो भविष्यन्त्याः कार्यसिद्धेर्लिङ्गमस्ति ॥ ६ ॥

भाषाऽर्थः—वे ( देवतालोग ) समुद्र पर गये, और आदिपुरुष ( भगवान् विष्णु ) जागे, क्योंकि विलम्ब न होना होनेवाली कार्य की सफलता का चिह्न ( है ) ॥ ६ ॥

अथ देवाः शेषस्य शरीररूपसिंहासनमुपविष्टं विष्णुं ददृशुरित्याह—

भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ॥ ७ ॥

सञ्जीविनी—भोगीति । द्यौरोको येषां ते दिवौकसो देवाः, पृषोदरादित्वात्साधुः । यद्वा दिव शब्दोऽदन्तोऽप्यस्ति । तथा च बुद्धचरिते-'न शोभते तेन हि ना विना पुरं मरुत्वता वृत्रवधे यथा दिवम् ।' इति । तत्र 'दिवु क्रीडादौ' इति धातोः इगुपधज्ञाप्रीकिरः कः" इति कः । दिवमोक एषामिति विग्रहः । भोगिनः शेषस्य भोगः शरीरम्, 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । स एवासनं सिंहासनं तत्रासीनमुपविष्टम्, आसेः शानच्, "ईदासः" इतीकारादेशः । तस्य भोगिनः फणामण्डले य उदर्चिष उद्ररश्मयो मणयस्तैर्द्योतितविग्रहं तं विष्णुं ददृशुः ॥ ७ ॥

अन्वयः—दिवौकसः, भोगिभोगासनासीनं, तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहं, तं, ददृशुः ॥ ७ ॥

सुधा—दिवौकसः = देवाः, भोगिभोगासनासीनं = शेषशरीररूपसिंहासनोपविष्टं, तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहं = शेषफटासमूहोद्गतमयूखमणिशोभितशरीरं, तं = हरिं, विष्णुमिति यावत् । ददृशुः = दृष्टवन्तः ॥ ७ ॥

कोशः—'भोगः सुखे धने पुंसि शरीरफणयोर्मतः । पालनेऽभ्यवहारे च योषिदादिभृतावपि' इति मेदिनी । 'फटायां तु फणा द्वयोः', इत्यमरः । 'अर्थार्चिर्मयूरशिखयोर्न ना' इति मेदिनी ॥ ७ ॥

समासादि—भोगिनो भोग इति भोगिभोगः (त०पु०), स एवासनमिति भोगिभोगासनम् (क०धा०), तत्रासीनस्तं भोगिभोगासनासीनम् ( त० पु० ) । द्यौरोको येषां ते दिवौकसः (ब०व्री०) । फणाया मण्डलमिति फणामण्डलम्, उदर्चिषश्च ते मणय इत्युदर्चिर्मणयः (क० धा०), तस्य फणामण्डलं तस्मिन्नुदर्चिर्मणय इति तत्फणामण्डलोदर्चिर्मणयः (त० पु०), तैर्द्योतितो विग्रहो यस्य स तं तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ( ब० व्री० ) ॥ ७ ॥

व्याकरणम्—आसीनम् = आस (उपवेशने), शानच् + 'ईदासः' इतीकारादेशः । ददृशुः = दृशिर् ( प्रेक्षणे—इरित् ), लिट् । द्योतित = द्युत ( दीप्तौ ), क्तः + इट् ॥ ७ ॥

वाच्यपरिवर्तनम्—दिवौकोभिः, भोगिभोगासनासीनः, तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहः, सः, ददृशे ॥

तात्पर्यार्थः—देवाः शेषस्य शरीररूपसिंहासने समुपविष्टं शेषस्य फटामण्डलोद्ररश्मिमणिभिः शोभितशरीरं तं विष्णुं ददृशुः ॥ ७ ॥

भाषाऽर्थः—देवताओंने शेष के शरीर रूपी आसन पर बैठे, उस ( शेष ) के फणमंडल के किरण युक्त मणियों से शोभायमान शरीर वाले उस ( विष्णु ) को देखा ॥ ७ ॥

किञ्च देवाः लक्ष्म्या अङ्के धृतचरणं विष्णुं ददृशुरित्याह—

श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८ ॥

सञ्जीविनी—श्रिय इति । कीदृशं विष्णुं पद्मे निषण्णाया उपविष्टायाः श्रियः क्षौमान्तरिता दुकूलव्यवहिता मेखला यस्य तस्मिन्, आस्तीर्णौ करपल्लवौ पाणिपल्लवौ यस्मिन्, विशेषणद्वयेनापि चरणयोः सौकुमार्यात्कटिमेखलास्पर्शासहत्वं सूच्यते । तस्मिन्नङ्के निक्षिप्तौ चरणौ येन तम् ॥ ८ ॥

अन्वयः—पद्मनिषण्णायाः, श्रियः, क्षौमान्तरितमेखले, आस्तीर्णकरपल्लवे, अङ्के, निक्षिप्तचरणं, 'तं-दिवौकसः—ददृशुः' ॥ ८ ॥

सुधा—पद्मनिषण्णायाः = कमलोपविष्टायाः, श्रियः = लक्ष्म्याः, क्षौमान्तरितमेखले = अंशुकाच्छादितरशने, आस्तीर्णकरपल्लवे = प्रसरितपाणिरूपकिसलये, अङ्के = उत्सङ्गे, निक्षिप्तचरणं = धृतपादं, 'तं—दिवौकसः—ददृशुः' इति पूर्वेण भोगिभोगासनासीनमिति सप्तमश्लोकेन सम्बन्धो बोध्यः । एवं चतुर्दशश्लोकपर्यन्तं सम्बन्धो विद्यत इत्यवधार्यम् ॥ ८ ॥

कोशः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । 'क्षौमं वल्कलजांशुके । शणजेऽतसीजे' इति, 'अङ्को रूपकभेदागश्चिह्ने रेखाजिभूषणे । रूपकांशान्तिकोत्सङ्गस्थाने' इति च मेदिनी ॥ ८ ॥

समासादि—पद्मे निषण्णेति पद्मनिषण्णा, तस्याः पद्मनिषण्णायाः ( त० पु० ) । क्षौमेनान्तरिता मेखला यस्य स तस्मिन् क्षौमान्तरितमेखले ( ब० व्री० ) । निक्षिप्तौ चरणौ येन स तं निक्षिप्तचरणम् ( ब० व्री० ) । करौ पल्लवाविवेति करपल्लवौ ( क० धा० ), आस्तीर्णौ करपल्लवौ यस्मिन् स तस्मिन्नास्तीर्णकरपल्लवे ( ब० व्री० ) ॥ ८ ॥

व्याकरणम्—निषण्णायाः = नि + पद् + क्तः + टाप् । निक्षिप्त = नि + क्षिप + क्तः । आस्तीर्ण = आ + स्तॄञ् + क्तः ॥ ८ ॥

वाच्यपरिवर्तनम्—पद्मनिषण्णायाः, श्रियः, क्षौमान्तरितमेखले, आस्तीर्णकरपल्लवे, अङ्के, निक्षिप्तचरणः, 'सः—दिवौकोभिः—ददृशे' ॥ ८ ॥

तात्पर्यार्थः—देवाः पद्मोपविष्टायाः लक्ष्म्याः दुकूलेनाच्छादितमेखले प्रसरितपाणिरूपपल्लवे अङ्के धृतचरणं तं विष्णुं ददृशुः ॥ ८ ॥

भाषार्थः—कमल पर बैठी हुई लक्ष्मी के वस्त्रों से ढके करधनी वाले ( और ) हाथ रूप पल्लव बिछे हुये अंक में चरणों को धरे ( उस विष्णु को देवताओं ने देखा ) ॥ ८ ॥

किञ्च देवाः पीताम्बरधरं विष्णुं ददृशुरित्याह—

**प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।**
**दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९ ॥**

सञ्जीविनी—प्रबुद्धेति । पुनः कीदृशम् ? प्रबुद्धे विकसिते पुण्डरीके सिताम्भोज इव अक्षिणी यस्य तम्, दिवसे तु पुण्डरीकमेवाक्षि यस्येति विग्रहः । बालातपनिभमंशुकं यस्य तम्, पीताम्बरधरमित्यर्थः । अन्यत्र बालातपव्याजांशुकमित्यर्थः । 'निभो व्याजसदृक्षयोः' इति विश्वः । प्रकृष्ट आरम्भो योगो येषां ते प्रारम्भाः योगिनः तेषां सुखदर्शनम्, अन्यत्र प्रारम्भ आदौ सुखदर्शनं शारदं शरत्संबन्धिनं दिवसमिव स्थितम् ॥ ९ ॥

अन्वयः—प्रबुद्धपुण्डरीकाक्षं, बालातपनिभांशुकं, प्रारम्भसुखदर्शनं, शारदं, दिवसम्, इव, 'स्थितं' 'तं-दिवौकसः-ददृशुः' ॥ ९ ॥

सुधा—प्रबुद्धपुण्डरीकाक्षं = प्रफुल्लसिताम्भोजतुल्यनयनं, बालातपनिभांशुकं = प्रातःकालिकघर्मसदृशवस्त्रं, पीताम्बरधरमित्यर्थः । प्रारम्भसुखदर्शनं = योगिसुखावलोकनं, योगिगम्यमित्यर्थः । शारदं = शरत्सम्बन्धिनं, दिवसं = दिनम्, इव = यथा, स्थितमिति शेषः । 'तं-दिवौकसः—ददृशुः' ॥ दिवसपक्षे—पुण्डरीकाक्षं = सिताम्भोजरूपनेत्रं, बालातपनिभांशुकं = बालातपव्याजवस्त्रं, प्रारम्भसुखदर्शनम् = आदौ सुखावलोकनमिति बोध्यम् ॥ ९ ॥

कोशः—'पुण्डरीकं सिताम्भोजम्' इत्यमरः । 'निभः स्यात्सदृशे व्याजे' इति हैमः । 'वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्' इति, 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इति चामरः ॥ ९ ॥

समासादि—प्रबुद्धे च ते पुण्डरीके इति प्रबुद्धपुण्डरीके ( क० धा० ), प्रबुद्धपुण्डरीके इव अक्षिणी यस्य तं प्रबुद्धपुण्डरीकाक्षम् ( ब० व्री० ) । बालश्चासावातप इति बालातपः ( क० धा० ), बालातपनिभम् अंशुकं यस्य स तं बालातपनिभांशुकम् ( ब० व्री० ) । प्रकृष्ट आरम्भो योगो येषां ते प्रारम्भाः ( योगिनः ), तेषां सुखेन दर्शनमिति प्रारम्भसुखदर्शनम् ( त० पु० ) ॥ दिवसपक्षे—प्रबुद्धं पुण्डरीकमेव अक्षि यस्य तं प्रबुद्धपुण्डरीकाक्षम् ( ब० व्री० ) । बालातपनिभम् अंशुकं यस्य तं बालातपनिभांशुकम् ( ब० व्री० ) । प्रारम्भे सुखदर्शनं यस्य तं प्रारम्भसुखदर्शनम् ( ब० व्री० ) ॥ ९ ॥

व्याकरणम्—प्रबुद्ध = प्र + बुध + क्तः। अक्ष = अक्षि + अच्। शारदं = शरत् + अण्। प्रारम्भ = प्र + रभ ( राभस्ये ), घञ् + नुम् ॥ ९ ॥

वाच्यपरिवर्तनम्—प्रबुद्धपुण्डरीकाक्षः, बालातपनिभांशुकः, प्रारम्भसुखदर्शनः, शारदः, दिवसः, इव, 'स्थितः' 'सः-दिवौकोभिः-ददृशे' ॥ ९ ॥

तात्पर्यार्थः—देवाः विकसितकमलनयनं प्रातःकालिकरविसदृशवसनधारिणं योगिनां सुखदर्शनं शरत्कालिकं दिवसमिव स्थितं तं विष्णुं ददृशुः ॥ ९ ॥

भाषाऽर्थः—विकसित कमल के सदृशनेत्र, प्रातः काल के धूप के समान वस्त्र ( और ) योगियों के सुख पूर्वक दर्शन वाले शरद् सम्बन्धी दिन की नाईं स्थित हुये ( उस विष्णु को देवताओं ने देखा ) ॥ ९ ॥

किञ्च देवाः श्रीवत्साख्यं लाञ्छनं कौस्तुभनामकं मणिं च धारयन्तं विष्णुं ददृशुरित्याह—

प्रभाऽनुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १० ॥

सञ्जीविनी—प्रभेति। पुनः किंविधम्? प्रभयाऽनुलिप्तमनुरञ्जितं श्रीवत्सं नाम लाञ्छनं येन तं लक्ष्म्या विभ्रमदर्पणः कौस्तुभ इत्याख्या यस्य तम् अपां समुद्राणां सारं स्थिरांसम्, अम्मयमणिमित्यर्थः। बृहतोरसा विशालवक्षःस्थलेन बिभ्राणम् ॥ १० ॥

अन्वयः—प्रभाऽनुलिप्तश्रीवत्सं, लक्ष्मीविभ्रमदर्पणं, कौस्तुभाख्यम्, अपां, सारं, बृहता, उरसा, बिभ्राणं 'तं-दिवौकसः-ददृशुः' ॥ १० ॥

सुधा—प्रभाऽनुलिप्तश्रीवत्सं = कान्त्यनुरञ्जितश्वेतरोमावर्तचिह्नं, लक्ष्मीविभ्रमदर्पणं = श्रीविलासमुकुरभूतं, कौस्तुभाख्यं = कौस्तुभनामकम्, अपां = जलानां, समुद्राणामिति यावत्। सारं = स्थिरांशं, जलमयमणिमित्यर्थः। बृहता = महता, उरसा = वक्षसा, बिभ्राणं = धारयन्तं, 'तं-दिवौकसः-ददृशुः' ॥ १० ॥

कोशः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इति, 'दर्पणे मुकुरादर्शौ' इति, 'कौस्तुभो मणिः' इति, 'सारो बले स्थिरांशे च' इति चामरः। 'उरो वक्षसि मुख्ये स्यात्' इत्यनेकार्थसंग्रहः ॥ १० ॥

समासादि—प्रभयाऽनुलिप्तं श्रीवत्सं यस्य स तं प्रभाऽनुलिप्तश्रीवत्सम् ( ब० व्री० )। लक्ष्म्या विभ्रमस्य दर्पणमिति लक्ष्मीविभ्रमदर्पणम् ( त० पु० )। कौस्तुभ इत्याख्या यस्य स कौस्तुभाख्यस्तं कौस्तुभाख्यम् ( ब० व्री ) ॥ १० ॥

व्याकरणम्—अनुलिप्त = अनु + लिप ( उपदेहे ), क्तः। बिभ्राणं = भृ + शानच् ॥ १० ॥

वाच्यपरिवर्तनम्—प्रभाऽनुलिप्तश्रीवत्सं, लक्ष्मीविभ्रमदर्पणं, कौस्तुभाख्यम्, अपां, सारं, बृहता, उरसा, बिभ्राणः, 'सः-दिवौकोभिः-ददृशे' ॥ १० ॥

तात्पर्यार्थः—देवाः कान्त्याऽनुरञ्जितश्वेतरोमावर्तलाञ्छनं लक्ष्म्या विलासस्य दर्पणभूतं कौस्तुभनामकं जलमयं मणिं धारयन्तं तं विष्णुं ददृशुः ॥ १० ॥

भाषाऽर्थः—कांति से श्रीवत्स ( श्वेत रोम के चिह्न ) को अनुरञ्जित करने वाली ( और ) लक्ष्मी के विलास का दर्पणभूत कौस्तुभ नामक समुद्र का सारमय मणि को बड़े वक्षःस्थल में धारण करते हुये ( उस विष्णु को देवताओं ने देखा ) ॥ १० ॥

किञ्च द्वितीयं कल्पद्रुममिव स्थितं विष्णुं ददृशुरित्याह—

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥

सञ्जीविनी—बाहुभिरिति। विटपाकारैः दीर्घपीवरैरित्यर्थः। दिव्याभरणभूषितैर्बाहुभिरुपलक्षितम्। अत एवापां सैन्धवानां मध्ये आविर्भूतमपरं द्वितीयं पारिजातमिव स्थितम् ॥ ११ ॥

अन्वयः--विटपाकारैः, दिव्याभरणभूषितैः, बाहुभिः, 'उपलक्षितम्' अपां, मध्ये, आविर्भूतम्, अपरं, पारिजातम्, इव, 'स्थितं' 'तं-दिवौकसः-ददृशुः' ॥ ११ ॥

सुधा--विटपाकारैः = शाखाकृतिभिः, शाखासदृशैरित्यर्थः । दिव्याभरणभूषितैः = श्रेष्ठालङ्कारमण्डितैः,बाहुभिः = भुजैः,उपलक्षितमिति शेषः । 'अत एव' अपां = जलानां,समुद्राणामिति यावत् । मध्ये = मध्यभागे,आविर्भूतं = प्रादुर्भूतम्,अपरम् = अन्यं,द्वितीयमिति यावत् । पारिजातं = कल्पद्रुमम्, इव = यथा, स्थितमिति शेषः । 'तं-दिवौकसः-ददृशुः' ॥ ११ ॥

कोशः—'भुजबाहू प्रवेष्टो दोः' इति, 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्' इति, 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इति चामरः ॥ ११ ॥

समासादि--विटप इवाकारो येषां ते तैर्विटपाकारैः ( ब० व्रो० ) । दिव्यानि च तान्याभरणानीति दिव्याभरणानि ( क० धा० ), तैर्भूषितानि तैर्दिव्याभरणभूषितैः (त०पु०) ॥११॥

व्याकरणम्—आविर्भूतम् = आविर् + भू + क्तः ॥ ११ ॥

वाच्यपरिवर्तनम्--विटपाकारैः, दिव्याभरणभूषितैः, बाहुभिः, 'उपलक्षितः' अपां, मध्ये, आविर्भूतः, अपरः, पारिजातः, इवः, 'स्थितः' 'सः-दिवौकोभिः = ददृशे' ॥ ११ ॥

तात्पर्यार्थः--देवाः शाखासदृशैः दिव्याभरणशोभितैर्भुजैरुपलक्षितमत एव समुद्रमध्ये प्रादुर्भूतं द्वितीयं कल्पवृक्षमिव स्थितं तं विष्णुं ददृशुः ॥ ११ ॥

भाषाऽर्थः--शाखा के सदृश ( और ) श्रेष्ठ आभूषणों से शोभित भुजाओं से ( युक्त, अत एव ) समुद्र के मध्य में प्रगट हुये दूसरे पारिजात की नाई ( स्थित उस विष्णु को देवताओं ने देखा ) ॥ ११ ॥

किञ्च विजयशब्दं प्रकटयन्तीभिः शरीरवतीभिरस्त्रदेवताभिः सेवितं विष्णुं ददृशुरित्याह--

दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥

सञ्जीविनी—दैत्येति । दैत्यस्त्रीगण्डलेखानामसुराङ्गनागण्डस्थलीनां यो मदरागस्तं विलुम्पन्ति हरन्तीति मदरागविलोपिनः तैश्चेतनावद्भिः सजीवैर्हेतिभिः सुदर्शनादिभिः शस्त्रैः, 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः' इत्यमरः । उदीरितजयस्वनं जयशब्दमुद्घोषयन्तीभिर्मूर्तिमतीभिरस्त्रदेवताभिरुपास्यमानमित्यर्थः ॥ १२ ॥

अन्वयः—दैत्यस्त्रीगण्डलेखानां, मदरागविलोपिभिः, चेतनावद्भिः, हेतिभिः, उदीरितजयस्वनं, 'तं-दिवौकसः-ददृशुः' ॥ १२ ॥

सुधा-दैत्यस्त्रीगण्डलेखानाम् = असुराङ्गनाकपोलस्थलीनां, मदरागविलोपिभिः = गर्वरागहारिभिः, चेतनावद्भिः = सजीवैः, प्राणयुक्तैरिति यावत् । हेतिभिः = अस्त्रैः, सुदर्शनादिशस्त्रैरित्यर्थः । उदीरितजयस्वनं = कथितविजयशब्दं, 'तं-दिवौकसः-ददृशुः' ॥ १२ ॥

कोशः—'असुरादैत्यदैतेयदनुजेन्द्रारिदानवाः' इत्यमरः । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति मेदिनी । 'हेतिर्ज्वालास्त्रसूर्यांशुषु' इति हैमः । 'चेतना संविदि स्त्रियाम् । वाच्यवत् प्राणयुक्ते' इति मेदिनी ॥ १२ ॥

समासादि—दैत्यानां स्त्रिय इति दैत्यस्त्रियस्तासां गण्डलेखास्तासां दैत्यस्त्रीगण्डलेखानाम् ( त० पु० ) । मदस्य राग इति मदरागस्तं विलुम्पन्तीति तैर्मदरागविलोपिभिः ( त० पु० ) । चेतना विद्यत एषां ते तैश्चेतनावद्भिः । जयस्य स्वन इति जयस्वनः ( त० पु० ), उदीरितो जयस्वनो यस्य स तमुदीरितजयस्वनम् ( ब० व्रो० ) ॥ १२ ॥

व्याकरणम्—विलोपिभिः = वि + लुप + इनिः । हेतिभिः = हि ( गतौ ) + 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति क्तिन्नन्तो निपातितः । उदीरित = उत् + ईर + क्तः + इट् ॥ १२ ॥

वाच्यपरिवर्तनम्—दत्यस्त्रीगण्डलेखानां, मदरागविलोपिभिः, चेतनावद्भिः, हेतिभिः, उदीरितजयस्वनः, 'सः—दिवौकोभिः—ददृशे' ॥ १२ ॥

तात्पर्यार्थः—देवाः असुरस्त्रीकपोलस्थलीनां मदरागहारिणीभिर्मूर्तिमतीभिर्जयशब्दमुद्घोषयन्तीभिः सुदर्शनाद्यस्त्रदेवताभिः सेव्यमानं तं विष्णुं ददृशुः ॥ १२ ॥

भाषार्थः—दैत्यों की स्त्रियों के कपोलस्थल के मदराग को दूर करने वाले सजीव अस्त्रों से कहे गये जय शब्द वाले ( उस विष्णु को देवताओंने देखा ) ॥ १२ ॥

किञ्च देवाः विनीतेन प्रबद्धाञ्जलिना गरुडेनोपासितं विष्णुं ददृशुरित्याह—

**मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।**
**उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥**

सञ्जीविनी—मुक्तेति । मुक्तो भगवत्संनिधानात्त्यक्तः शेषेणाहीश्वरेण सह विरोधः सहजमपि वैरं येन तेन कुलिशव्रणा वज्रव्रणा अमृताहरणकाल इन्द्रयुद्धे ये वज्रप्रहारास्त एव लक्ष्माणि यस्य स तेन, प्रबद्धोऽञ्जलिर्येन तेन प्राञ्जलिना, प्रबद्धाञ्जलिनेत्यर्थः । विनीतेनानुद्धतेन गरुत्मतोपस्थितमुपासितम् । पुरा किल मातलिप्रार्थितेन भगवता तद्दुहितुर्गुणकेश्याः पत्युः कस्यचित्सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणक्षुभितं पक्षिराजं त्वद्वोढाहं त्वत्तो बलाढ्य इति गर्वितं स्ववामतर्जनीभारेणैव भङ्क्त्वा भगवान्विनिनायेति महाभारतीयां कथां सूचयति विनीतेनेत्यनेन ॥१३॥

अन्वयः—मुक्तशेषविरोधेन, कुलिशव्रणलक्ष्मणा, विनीतेन, प्राञ्जलिना, गरुत्मता, उपस्थितं, 'तं—दिवौकसः—ददृशुः' ॥ १३ ॥

सुधा—मुक्तशेषविरोधेन = त्यक्तानन्तस्वाभाविकवैरेण, (१)कुलिशव्रणलक्ष्मणा = अमृताहरणकालिकवज्रप्रहारचिह्नधरेण, विनीतेन = नम्रेण, प्राञ्जलिना = सम्पुटितकरेन, गरुत्मता = गरुडेन, उपस्थितम् = उपसेवितं, 'तं—दिवौकसः—ददृशुः' ॥ १३ ॥

कोशः—'शेषोऽनन्तः' इति, 'वैरं विरोधो विद्वेषः' इति, 'ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः' इति, 'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयो खगेश्वरः' इति चामरः ॥ १३ ॥

समासादि—मुक्तः शेषेन सह विरोधो येन स तेन मुक्तशेषविरोधेन ( ब० व्री० ) । कुलिशस्य व्रणा इति कुलिशव्रणाः ( त० पु० ), ते एव लक्ष्माणि यस्य स तेन कुलिशव्रणलक्ष्मणा ( ब० व्री० ) । प्रबद्धोऽञ्जलिर्येन स तेन प्राञ्जलिना ( ब०व्री० ) । गरुतः ( पक्षाः ) सन्त्यस्येति गरुत्मान् तेन गरुत्मता ॥ १३ ॥

व्याकरणम्—उपस्थितम् = उप + ष्ठा + क्तः + इत्वम् । विनीत = वि + णीञ् + क्तः । गरुत्मता = गरुत् + मतुप् ॥ १३ ॥

वाच्यपरिवर्तनम्—मुक्तशेषविरोधेन, कुलिशव्रणलक्ष्मणा, विनीतेन, प्राञ्जलिना, गरुत्मता, उपस्थितः, 'सः—दिवौकोभिः—ददृशे' ॥ १३ ॥

तात्पर्यार्थः—देवाः अहीश्वरेण शेषेण सह स्वाभाविकमपि वैरं त्यक्तवता अमृताहरणसमये इन्द्रेण सह युद्धे वज्रप्रहाररूपचिह्नधारिणा नम्रेण प्रबद्धाञ्जलिना गरुडेनोपासितं तं विष्णुं ददृशुः ॥ १३ ॥

भाषार्थः—शेष नाग के साथ ( स्वाभाविक ) वैर को छोड़े हुये ( अमृत लाने के समय इंद्र के साथ युद्ध में ) वज्र के प्रहार रूप चिह्न वाले, नम्र ( और ) हाथ जोड़े गरुड़ से सेवित ( उस विष्णु को देवताओं ने देखा ) ॥ १३ ॥

---

(१) पौराणिकी कथा—पुरा किल गरुडः स्वमातुर्विनतायाः कद्रूकृतदास्यमुक्तये कद्र्वा अर्थममृतानयनाय स्वर्गं गतः । तत्र इन्द्रेण सह युद्धे इन्द्रकृतकुलिशप्रहारेण गरुडस्य व्रणाः संजाता इत्याद्यनुसंधेया ।

किञ्च देवाः सुखशयनपृच्छकान् भृग्वादीनृषीननुगृह्णन्तं तं ददृशुरित्याह—

**योगनिद्रान्तविशदैः पावनैरवलोकनैः ।**
**भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४ ॥**

सञ्जीविनी—योगेति । योगो मनसो विषयान्तरव्यावृत्तिः तद्रूपा या निद्रा तस्या अन्तेऽवसाने विशदैः प्रसन्नैः पावनैः शोधनैरवलोकनैः सुखशयनं पृच्छन्तीति सौखशायनिकास्तान्, "पृच्छतौ सुस्नातादिभ्यः" इत्युपसंख्यानाट्ठक्प्रत्ययः । भृग्वादीनृषीननुगृह्णन्तम् ॥ १४ ॥

अन्वयः—योगनिद्रान्तविशदैः, पावनैः, अवलोकनैः, सौखशायनिकान्, भृग्वादीन्, ऋषीन्, अनुगृह्णन्तं, 'तं—दिवौकसः—ददृशुः' ॥ १४ ॥

सुधा—योगनिद्रान्तविशदैः = चित्तवृत्तिनिरोधरूपनिद्राऽवसाने प्रसन्नैः, पावनैः = पवित्रैः, अवलोकनैः = दर्शनैः, सौखशायनिकान् = सुखशयनपृच्छकान्, भृग्वादीन् = भृगुप्रभृतीन्, ऋषीन् = सत्यवचसः, अनुगृह्णन्तम् = अनुकम्पयन्तं, 'तं—दिवौकसः—ददृशुः' ॥ १४ ॥

कोशः—'ऋषयः सत्यवचसः' इत्यमरः ॥ १४ ॥

समासादि—योगरूपा निद्रेति योगनिद्रा ( क० धा० ), तस्या अन्ते विशदास्तैः योगनिद्रान्तविशदैः ( त० पु० ) । पाव्यत एभिस्तैः पावनैः । भृगुरादिर्येषां ते तान् भृग्वादीन् ( ब० व्री० ) । सुखशयनं पृच्छन्तीति तान् सुखशायनिकान् । ऋषन्ति ( जानन्ति ) इति ऋषयस्तानृषीन् ॥ १४ ॥

व्याकरणम्—पावनैः = पूञ् ( पवने—ञित् ), करणे ल्युट् । अनुगृह्णन्तम् = अनु + ग्रह + शतृ । सौखशायनिकान् = सुखशयन + पृच्छत्यर्थे ठक् ॥ १४ ॥

वाच्यपरिवर्तनम्—योगनिद्रान्तविशदैः, पावनैः, अवलोकनैः, सौखशायनिकान्, भृग्वादीन्, ऋषीन्, अनुगृह्णन्, 'सः—दिवौकोभिः—ददृशे' ॥ १४ ॥

तात्पर्यार्थः—देवाश्चित्तवृत्तिनिरोधरूपनिद्राऽवसाने प्रसन्नैः शोधनैर्दर्शनैः सुखशयनपृच्छकान् भृग्वादीनृषीननुकम्पयन्तं तं विष्णुं ददृशुः ॥ १४ ॥

भाषाऽर्थः—योग ( चित्तवृत्ति के रोकने ) रूप निद्रा के अंत मे प्रसन्न ( और ) पवित्र अवलोकन से सुखशयन पूछने वाले भृगु आदि ऋषियों को अनुगृहीत करते हुये ( उस विष्णु को देवताओंने देखा ) ॥ १४ ॥

अथ इत आरभ्य द्वात्रिंशच्छ्लोकपर्यन्तं विष्णोः देवकृतस्तुतिमाह—

**प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।**
**अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥**

सञ्जीविनी—प्रणिपत्येति । अथ दर्शनानन्तरं सुराः सुरद्विषामसुराणां शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य स्तुत्यं स्तोत्रार्हम्, "एतिस्तुशास्वृदृजुषः क्यप्" इति क्यप्प्रत्ययः । वाक्च मनश्च वाङ्मनसे, "अचतुर" इत्यच्प्रत्ययान्तो निपातः । तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः, यदाह—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । तमेनं विष्णुं तुष्टुवुरस्तुवन् ॥ १५ ॥

अन्वयः—अथ, सुराः, सुरद्विषां, शमयित्रे, तस्मै, प्रणिपत्य, अवाङ्मनसगोचरं, स्तुत्यम्, एनं, तुष्टुवुः ॥ १५ ॥

सुधा—अथ = अनन्तरं, पूर्वोक्तविशेषणविशिष्टविष्णुदर्शनानन्तरमिति यावत् । सुराः = देवाः, सुरद्विषां = देवशत्रूणां, दैत्यानामित्यर्थः । शमयित्रे = प्रध्वंसकाय, तस्मै = पूर्वोक्ताय, विष्णव इति यावत् । प्रणिपत्य = प्रणामं कृत्वा, अवाङ्मनसगोचरं = वाणीमानसयोरविषयं, स्तुत्यं = स्तुतियोग्यम्, एनं = विष्णुं, तुष्टुवुः = अस्तुवन्, स्तुतिं चक्रुरित्यर्थः ॥ १५ ॥

कोशः—'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः' इति, 'असुरा दैत्यदैतेयदनुजेन्द्रारिदान-

वाः। शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः' इति चामरः ॥ १५ ॥

समासादि—शमयतीति शमयिता तस्मै शमयित्रे । सुरान् द्विषन्तीति सुरद्विषस्तेषां सुरद्विषाम् । स्तुतियोग्यं स्तुत्यम् । वाक् च मनश्चेति वाङ्मनसे ( द्व० ), तयोर्गोचरो न भवतीति तमवाङ्मनसगोचरम् ॥ १५ ॥

व्याकरणम्—प्रणिपत्य = प्र + नि + पत् + क्त्वा, ल्यबादेशः । शमयित्रे = शमु (उपशमे- उकारेत् ), तृच् + इट् । तुष्टुवुः = ष्टुञ् ( स्तुतौ--त्रित् ), लिट् । स्तुत्यं = स्तुति + क्यप् । अवाङ्मनस = अत्र 'अचतुरविचतुर' इत्यच् प्रत्ययान्तो निपातितः ॥ १५ ॥

वाच्यपरिवर्तनम्—अथ, सुरैः, सुरद्विषां, शमयित्रे, तस्मै, प्रणिपत्य, स्तुत्यः, अवाङ्मन- सगोचरः, एषः, तुष्टवे ॥ १५ ॥

तात्पर्यार्थः—अथ देवा असुराणां विनाशकाय तस्मै विष्णवे प्रणामं कृत्वा स्तोत्राहं वाङ्मनसयोरविषयमेनं विष्णुमस्तुवन् ॥ १५ ॥

भाषाऽर्थः—इसके बाद देवतालोग असुरों को विनाश करने वाले उस ( विष्णु ) को प्रणाम करके वाणी और मन के अविषय, स्तुति के योग्य उन ( विष्णु ) की स्तुति करने लगे ॥ १५ ॥

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥

सञ्जीविनी—नम इति । पूर्वमादौ विश्वसृजे विश्वस्रष्ट्रे, "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेः । तदनु समनन्तरं विश्वं बिभ्रते पुष्णते अथ विश्वस्य संहर्त्रे एवं त्रेधा सृष्टि- स्थितिसंहारकर्तृत्वेन स्थित आत्मा स्वरूपं यस्य तस्मै ब्रह्मविष्णुहरात्मने तुभ्यं नमः ॥१६॥

अन्वयः--पूर्वं, विश्वसृजे, तदनु, विश्वं, बिभ्रते, अथ, विश्वस्य, संहर्त्रे, 'एवं' त्रेधा, स्थि- तात्मने, तुभ्यं, नमः, 'अस्ति' ॥ १६ ॥

सुधा—पूर्वं = प्राक्, विश्वसृजे = भुवनस्रष्ट्रे, तदनु = तदनन्तरं, सृष्ट्यनन्तरमिति यावत् । विश्वं = जगत्, बिभ्रते = पालयते, अथ = अनन्तरं, पालनानन्तरमिति यावत् । विश्वस्य = लोकस्य, संहर्त्रे = संहारकाय, एवमिति शेषः । त्रेधास्थितात्मने = प्रकारत्रयेण विद्यमानदे- हाय, सृष्टिपालनविनाशकत्वरूपेण ब्रह्मविष्णुहरस्वरूपायेत्यर्थः । तुभ्यं = भवते, नमः = नम- स्कारः, अस्तीति शेषः ॥ १६ ॥

कोशः—'विश्वं कृत्स्ने च भुवने' इति विश्वः। 'पूर्वं तु पूर्वजे । प्रागग्रे श्रुतिभेदे च' इत्यनेकार्थसंग्रहः । 'आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु । प्रयत्ने चापि' इति विश्वः ॥१६॥

समासादि—विश्वं सृजतीति विश्वसृक् तस्मै विश्वसृजे । बिभर्तीति बिभ्रन् तस्मै बिभ्रते । संहरतीति संहर्ता तस्मै संहर्त्रे । त्रिप्रकारस्त्रेधा, त्रेधा स्थित आत्मा यस्य स तस्मै त्रेधास्थितात्मने ( ब० व्री० ) ॥ १६ ॥

व्याकरणम्—विश्वसृजे = विश्व + सृज + क्विप् । बिभ्रते = भृञ् + शतृ । संहर्त्रे = सम् + हृञ् + तृच् । त्रेधा = त्रि + 'सङ्ख्याया विधार्थे धा' इति धाप्रत्ययः ॥ १६ ॥

वाच्यपरिवर्तनम्—पूर्वं, विश्वसृजे, तदनु, विश्वं, बिभ्रते, अथ, विश्वस्य, संहर्त्रे, 'एवं' त्रेधास्थितात्मने, तुभ्यं, नमः, 'भूयते' ॥ १६ ॥

तात्पर्यार्थः—प्रथमं विश्वस्रष्ट्रे सृष्ट्यनन्तरं भुवनपालकाय ततो लोकस्य संहारकाय एवं त्रेधा सृष्टिस्थितिसंहारकत्वेन ब्रह्मविष्णुहरस्वरूपाय तुभ्यं विष्णवे नमोऽस्तु ॥ १६ ॥

भाषाऽर्थः—पहले विश्व की सृष्टि करने वाले तब पालन करने वाले इसके बाद संहार करने वाले ( इस तरह ) तीन प्रकार के ( ब्रह्मा, विष्णु, हर, के ) रूपधारी आप को नमस्कार है ॥ १६ ॥

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥

सञ्जीविनी—ननु कूटस्थस्य कथं त्रैरूप्यमित्याशङ्क्यौपाधिकमित्याह—रसान्तराणीति । एकरसं मधुरैकरसं दिवि भवं दिव्यं पयो वर्षोदकं देशे देश ऊषरादिदेशेऽन्यान् रसान् रसान्तराणि लवणादीनि यथाऽश्नुते प्राप्नोति एवमविक्रियो निर्विकारः, एकरूप इत्यर्थः । त्वं गुणेषु सत्त्वादिष्ववस्थाः स्रष्टृत्वादिरूपा अश्नुषे ॥ १७ ॥

अन्वयः—एकरसं, दिव्यं, पयः, देशे देशे, रसान्तराणि, यथा, अश्नुते, एवम् , अविक्रियः, त्वं, गुणेषु, अवस्थाः, 'अश्नुषे' ॥ १७ ॥

सुधा—एकरसं = मधुरैकरसं, दिव्यम् = आकाशसम्बन्धि, पयः = सलिलं, वर्षाजलमिमित्यर्थः । देशे देशे = ऊषरादिदेशे, सर्वदेश इत्यर्थः । रसान्तराणि = लवणादीनि, यथा = येन प्रकारेण, अश्नुते = प्राप्नोति, एवम् = इत्थम् , अविक्रियः = परिणामरहितः, एकरूप इति यावत् । त्वं, गुणेषु = सत्वरजस्तमःसु, अवस्थाः = स्रष्टृत्वादिरूपाणि, अश्नुष इति शेषः ॥ १७ ॥

कोशः—'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । पयः कीलालममृतं जीवनम्' इति, 'गुणाः सत्वं रजस्तमः' इति, 'परिणामो विकारो द्वे समे विकृतिविक्रिये' इति चामरः ॥ १७ ॥

समासादि—अन्यान् रसान् रसान्तराणि ( त० पु० ) । एकः रसो यस्मिन् तदेकरसम् ( ब० व्री० ) दिवि भवं दिव्यम् । न विक्रिया यस्य स अविक्रियः ( ब० व्री० ) ॥ १७ ॥

व्याकरणम्—दिव्यं = दिव् + यत् । अश्नुते = अश् + श्नुः + लट् । अवस्थाः = अव + ष्ठा ( गतिनिवृत्तौ ), व्यवस्थायामिति ज्ञापकात् 'आतश्चोपसर्गे' इत्यङ् + टाप् ॥ १७ ॥

वाच्यपरिवर्तनम्—एकरसेन, दिव्येन, पयसा, देशे देशे, रसान्तराणि, यथा, अश्यन्ते, एवम् , अविक्रियेण, त्वया, गुणेषु, अवस्थाः, 'अश्यन्ते' ॥ १७ ॥

तात्पर्यार्थः—यथा मधुरैकरसमाकाशसम्बन्धि वर्षोदकम् ऊषरादिदेशे लवणादीनि रसान्तराणि प्राप्नोति, तथा निर्विकारोऽपि त्वं सत्वादित्रिषु गुणेषु स्रष्टृत्वादिरूपाणि प्राप्नोषि ॥ १७ ॥

भाषाऽर्थः—एकरस आकाशसंबंधी जल देश देश में अन्य ( लवण आदि ) रस को जैसे प्राप्त करता है, इसी तरह विकार रहित ( अर्थात्—एक रूपवाले ) तुम ( सत्व आदि ) गुणों में अवस्था ( सृष्टि आदि करने वाले रूप ) को प्राप्त करते हो ॥ १७ ॥

अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८ ॥

सञ्जीविनी—अमेय इति । हे देव ! त्वममेयो लोकैरियत्तया न परिच्छेद्यः, मितलोकः परिच्छिन्नलोकः, अनर्थी निःस्पृहः, आवहतीत्यावहः, पचाद्यच् । प्रार्थनानामावहः कामदः, अजितोऽन्यैर्न जितः, जिष्णुर्जयशीलः, अत्यन्तमव्यक्तोऽतिसूक्ष्मरूपः व्यक्तस्य स्थूलरूपस्य कारणम् ॥ १८ ॥

अन्वयः—'हे विष्णो !' त्वम् , अमेयः, मितलोकः, अनर्थी, प्रार्थनाऽऽवहः, अजितः 'जिष्णुः, अत्यन्तम् , अव्यक्तः, व्यक्तकारणम् , 'असि' ॥ १८ ॥

सुधा—'हे विष्णो !' त्वम् , अमेयः = अपरिच्छेद्यः, मितलोकः = परिच्छिन्नविषयः, अनर्थी = प्रयोजनरहितः, स्पृहाशून्य इति यावत् । प्रार्थनाऽऽवहः = मनोरथदाता, अजितः = अपराजितः, जिष्णुः = जित्वरः, जयशील इति यावत् । अत्यन्तं = नितान्तम्, अव्यक्तः = अस्फुटः, अतिसूक्ष्मरूप इति यावत् । व्यक्तकारणं = स्फुटहेतुं, स्थूलकारणमित्यर्थः । असीति शेषः ॥१८॥

कोशः—'अथो जगती लोको विष्टपं भुवनं जगत्' इति, 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति, 'जेता जिष्णुश्च जित्वरः' इति चामरः। 'व्यक्तो मनीषिस्फुटयोः' इति हैमः॥१८॥

समासादि—मातुं योग्यो मेयो न मेय इत्यमेयः। मितो लोको येन स मितलोकः ( ब० व्री० )। न अर्थो विद्यतेऽस्येत्यनर्थी। आवहतीत्यावहः, प्रार्थनानाम् आवह इति प्रार्थनाऽऽवहः ( त० पु० )। न जित इत्यजितः। जयशीलो जिष्णुः। न व्यक्त इत्यव्यक्तः। व्यक्तस्य कारणमिति व्यक्तकारणम् ( त० पु० )॥ १८॥

व्याकरणम्—अजितः = न + जि + क्तः। जिष्णुः = जि ( जये ), 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुः + षत्वम्॥ १८॥

वाच्यपरिवर्तनम्—'हे विष्णो!' त्वया, अमेयेन, मितलोकेन, अनर्थिना, प्रार्थनाऽऽवहेन, अजितेन, जिष्णुना, अत्यन्तम्, अव्यक्तेन, व्यक्तकारणेन, 'भूयते'॥ १८॥

तात्पर्यार्थः—हे विष्णो! त्वं जनैरियत्तया न परिच्छेद्यः—परिच्छिन्नजगत्—निस्पृहः—कामदः—अन्यैर्न जितः—जयशीलः—अतिसूक्ष्मरूपः—स्थूलस्य कारणं चासि॥ १८॥

भाषाऽर्थः—( हे विष्णो! ) आप तुलना करने योग्य नहीं हो, संसार की तुलना करने वाले हो, स्पृहा रहित हो, प्रार्थना को पूर्ण करने वाले हो, ( किसी दूसरे से ) नहीं जीते गये हो, जयशील हो, अत्यंत सूक्ष्म रूप हो, ( और ) स्थूल रूप के कारण हो॥ ( अर्थात् आप स्वयं तुलने के योग्य नहीं भी संसार की तुलना किये हो, स्वयं निस्पृह भी दूसरे की स्पृहा को पूर्ण करने वाले हो, स्वयं अजित भी जयशील हो, आप अत्यंत सूक्ष्म भी स्थूलरूप के कारण हो )॥ १८॥

**हृदयस्थमनासन्नमकामं त्वां तपस्विनम्।**
**दयालुमनघस्पृष्टं पुराणमजरं विदुः॥ १९॥**

सञ्जीविनी—हृदयस्थमिति। हे देव! हृदयस्थं सर्वान्तर्यामितया नित्यसंनिहितं तथाऽप्यनासन्नमगम्यरूपत्वाद्विप्रकृष्टं च विदुः। सन्निकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः। तथाकामं न कामोऽभिलाषोऽस्य तं परिपूर्णत्वान्निःस्पृहत्वाच्च निष्कामम्। तथाऽपि तपस्विनं प्रशस्ततपोयुक्तं विदुः। यो निष्कामः स कथं तपः कुरुत इति विरोधः। परिहारस्तु ऋषिरूपेण दुस्तरं तपस्तप्यते। दयालुं परदुःखप्रहरणपरं तथाऽप्यनघस्पृष्टं नित्यानन्दस्वरूपत्वाददुःखिनं विदुः। 'अघं दुरितदुःखयोः' इति विश्वः। दयालुरदुःखी चेति विरोधः।"ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः। परभाग्योपजीवी च षडेते नित्यदुःखिताः।" इति महाभारते। पुराणमनादिमजरं निर्विकारत्वादक्षरं विदुः। चिरंतनं न जीर्यत इति विरोधालंकारः। उक्तं च—"आभासत्वे विरोधस्य विरोधालंकृतिर्मता" इति। विरोधेन चालौकिकमहिमत्वं व्यज्यते॥१९॥

अन्वयः—'हे विष्णो!' "योगिनः' त्वां, हृदयस्थम्, अनासन्नम्, अकामं, तपस्विनं, दयालुम्, अनघस्पृष्टं, पुराणम्, अजरं, विदुः॥ १९॥

सुधा—'हे विष्णो!' त्वां = भवन्तं, हृदयस्थं = अन्तःकरणस्थम्, सर्वान्तर्यामितया समीपमपीत्यर्थः। 'तथाऽपि' अनासन्नम् = अनिकटं, दुर्गमरूपत्वाद् दूरमित्यर्थः। अकामम् = परिपूर्णत्वान्निर्गतस्पृहत्वाच्च इच्छारहितमित्यर्थः। तपस्विनं = प्रशस्ततपोगुणयुक्तं, दयालुं = कारुणिकं, परदुःखनाशकरमित्यर्थः। 'तथाऽपि' अनघस्पृष्टं = दुःखस्पर्शवर्जितं, परमानन्दरूपत्वाद् दुःखिनमित्यर्थः। पुराणम् = अनादिं, पुराणपुरुषमित्यर्थः। अजरं = जरारहितम्, अविक्रियत्वादविनश्वरमित्यर्थः। विदुः = जानन्ति, योगिन इति शेषः॥ १९॥

कोशः—'समीपे निकटासन्नसन्निकृष्टसनीडवत्' इति, 'स्याद्दयालुः कारुणिकः' इति चामरः 'अघं दुःखे व्यसनैनसोः' इत्यनेकार्थसंग्रहः॥ १९॥

समासादि—हृदये तिष्ठतीति हृदयस्थस्तं, हृदयस्थम्। न आसन्नमित्यनासन्नम्। न कामोऽस्येत्यकामस्तमकामम्। तपो विद्यतेऽस्येति तपस्वी तं तपस्विनम्। दयाशीलो दया-

लुस्तं दयालुम्। अघेन स्पृष्टं न भवतीत्यनघस्पृष्टस्तमनघस्पृष्टम्। पुरा भवं पुराणम्। जरणं जरा, सा न विद्यतेऽस्येत्यजरस्तमजरम्॥ १९॥

व्याकरणम्—हृदयस्थं = हृदय = स्था + कः। दयालुः = दया + 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' इत्यालुच्। पुराणं = 'सायं चिरम्' इति ट्युः, ट्युल् वा + 'पुराणप्रोक्तेषु' इति निपातनात्तुडभावः। अजरं = न + जृष (वयोहानौ), भावेऽङ्॥ १९॥

वाच्यपरिवर्तनम्—'हे विष्णो!' 'योगिभिः' त्वं, हृदयस्थः, अनासन्नः, अकामः, तपस्वी दयालुः, अनघस्पृष्टः, पुराणः, अजरः, विद्यते॥ १९॥

तात्पर्यार्थः—हे विष्णो! योगिनो भवन्तं सर्वान्तर्यामितया हृदयस्थं तथाऽपि दुर्गमस्वरूपत्वात् विप्रकृष्टं विदुः, तथा परिपूर्णत्वाद्विगताभिलाषत्वाच्च निष्कामं प्रशस्ततपोयुक्तं विदुः, परदुःखविनाशकरं तथाऽपि परमानन्दस्वरूपत्वात् दुःखिनं विदुः, अनादिम् अविक्रियत्वादविनश्वरं च विदुः॥ १९॥

भाषाऽर्थः—(हे विष्णो! योगी लोग) तुमको हृदय में स्थित, अति दूर, अभिलाषाशून्य, तपस्वी, दयालु, दुःखसे रहित, अनादि, (और) जरा रहित जानते हैं॥ १९॥

**सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः।**

**सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक्॥ २०॥**

सञ्जीविनी—सर्वज्ञ इति। त्वं सर्वं जानातीति सर्वज्ञः, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। अविज्ञातः, न केनापि विज्ञात इत्यर्थः। त्वं सर्वस्य योनिः कारणं त्वमात्मन एव भवतीत्यात्मभूः स्वयंभूः, न ते किञ्चित्कारणमस्तीत्यर्थः। त्वं सर्वस्य प्रभुः त्वमनीशः त्वमेकः सर्वरूपभाक्, त्वमेक एव सर्वात्मना वर्तस इत्यर्थः॥ २०॥

अन्वयः—'हे देव!' त्वं, सर्वज्ञः, अविज्ञातः, त्वं, सर्वयोनिः, त्वम्, आत्मभूः, 'त्वं' सर्वप्रभुः, त्वम्, अनीशः, त्वम्, एकः, सर्वरूपभाक्, 'असि'॥ २०॥

सुधा—'हे देव!' त्वं, सर्वज्ञः = निखिलज्ञः, असीति शेषः। एवं सर्वत्रास्य शेषो बोध्यः। अविज्ञातः = नावगतः, केनापि न विज्ञात इत्यर्थः। त्वं, सर्वयोनिः = सर्वकारणं, त्वम्, आत्मभूः = स्वयम्भूः, 'त्वं' सर्वप्रभुः = सर्वस्वामी, त्वम्, अनीशः = अनीश्वरः, त्वम्, एकः = एकाकी, सर्वरूपभाक् = सर्वस्वरूपधारी, त्वमेक एव सर्वात्मना वर्तस इत्यर्थः॥ २०॥

कोशः—'योनिः, कारणे भगताम्रयोः' इत्यनेकार्थसंग्रहः। 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता' इत्यमरः॥ २०॥

समासादि—सर्वं जानातीति सर्वज्ञः। न विज्ञात इत्यविज्ञातः। सर्वस्य योनिरिति सर्वयोनिः (त० पु०)। आत्मन एव भवतीत्यात्मभूः। सर्वस्य प्रभुरिति सर्वप्रभुः (त० पु०)। न ईशो विद्यतेऽस्य इत्यनीशः। सर्वस्य रूपं भजतीति सर्वभाक् (त० पु०)॥ २०॥

व्याकरणम्—सर्वज्ञः = सर्व + ज्ञा (अवबोधने), कः। अविज्ञातः = न + वि + ज्ञा + क्तः॥ २०॥

वाच्यपरिवर्तनम्—'हे देव!' त्वया, सर्वज्ञेन, अविज्ञातेन, त्वया, सर्वयोनिना, त्वया, आत्मभुवा, 'त्वया' सर्वप्रभुणा, त्वया, अनीशेन, त्वया, एकेन, सर्वरूपभाजा, 'भूयते'॥ २०॥

तात्पर्यार्थः—हे देव! त्वं सर्वज्ञोऽसि, त्वं केनापि न विज्ञातोऽसि, त्वं सर्वस्योत्पत्तिकारणमसि, त्वं स्वयम्भूरसि, त्वं सर्वस्य स्वामी असि, त्वमनीशोऽसि, त्वमेक एव सर्वात्मना वर्तसे॥ २०॥

भाषाऽर्थः—(हे देव!) तुम सर्वज्ञ हो, तुम्हे (कोई) नहीं जानता, तुम सबके कारण हो, तुम स्वयं उत्पन्न हुये हो, तुम सबके स्वामी हो, (तुम्हारा) स्वामी (कोई) नहीं,

तुम एक ही सबके रूप को चाहने वाले ( हो ) ॥ २० ॥

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥

सञ्जीविनी—सप्तेति । हे देव ! त्वां सप्तभिः सामभी रथन्तरबृहद्रथन्तरवामदेव्यवैरूप्यपावमान्यवैराजचान्द्रमसैरुपगीतम्, "तद्धितार्थोत्तरपदसमाहारे च", इत्युत्तरपदसमासः। सप्तानामर्णवानां जलं सप्तार्णवजलम्, पूर्ववत्समासः। तत्र शेते यः सप्तार्णवजलेशयः तम्, "शयवासवासिष्वकालात्" इत्यलुक्। सप्तार्चिर्मुखं यस्य तम्, "अग्निमुखा वै देवाः" इति श्रुतेः। सप्तानां लोकानां भूर्भुवःस्वरादीनामेकसंश्रयम् एवंभूतमाचख्युः ॥ २१ ॥

अन्वयः--'हे देव !' 'योगिनः' त्वां, सप्तसामोपगीतं, सप्तार्णवजलेशयं, सप्तार्चिर्मुखं, सप्तलोकैकसंश्रयम्, आचख्युः ॥ २१ ॥

सुधा--'हे देव !' त्वां = भवन्त, (१)सप्तसामोपगीतं = रथन्तरादिसप्तसामोपस्तुतं, (२)सप्तार्णवजलेशयं = सप्तसमुद्रसलिलेशयं, (३)सप्तार्चिर्मुखम् = अग्निमुखं, (४)सप्तलोकैकसंश्रयं = भूर्भुवःस्वरादिसप्तलोकैकाश्रयम्, आचख्युः = कथयामासुः, योगिन इति शेषः ॥ २१ ॥

कोशः—'सप्तार्चिः क्रूरनेत्रेऽग्नौ साधीयानति शोभने। अतिबाढे' इत्यनेकार्थसंग्रहः ॥२१॥

समासादि--सप्त च तानि सामानीति सप्तसामानि ( क० धा० ), तैरुपगीतस्तं सप्तसामोपगीतम् ( त० पु० ) सप्त च तेऽर्णवा इति सप्तार्णवाः ( क० धा० ), तेषां जलं तस्मिन् शेत इति स तं सप्तार्णवजलेशयम् ( त० पु० )। सप्तार्चिषो यस्य स सप्तार्चिः, सप्तार्चिर्मुखं यस्य स तं सप्तार्चिर्मुखम् ( ब० व्री० )। सप्त च ते लोका इति सप्तलोकाः ( क० धा० ), तेषामेकसंश्रयस्तं सप्तलोकैकसंश्रयम् ( त० पु० ) ॥ २१ ॥

व्याकरणम्--जलेशयम् = अत्र 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक्। आचख्युः = आ + चक्षिङ् ( व्यक्तायां वाचि-इङित् ), लिट् ॥ २१ ॥

वाच्यपरिवर्तनम्--'हे देव !' 'योगिभिः' त्वं, सप्तसामोपगीतः, सप्तार्णवजलेशयः, सप्तार्चिर्मुखः, सप्तलोकैकसंश्रयः, आचख्यिषे ॥ २१ ॥

तात्पर्यार्थः--हे देव ! योगिनो भवन्तं रथन्तरादिसप्तसामादिभिरुपगीतं सप्तसमुद्राणां जलेशयम् अग्निमुखं भूर्भुवःस्वरादिसप्तलोकानामेकाश्रयं कथयामासुः ॥ २१ ॥

भाषाऽर्थः--( हे देव ! योगी लोग ) तुमको ( रथंतर आदि ) सात सामवेदों से गाया हुआ, सात समुद्रों के जल में शयन करने वाला, अग्निमुख वाला, सात लोकों का एक आश्रय कहते हैं ॥ २१ ॥

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥

सञ्जीविनी—चतुर्वर्गफलमिति । चतुर्णां धर्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः, 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः। तत्फलकं यज्ज्ञानम्। चत्वारि युगानि कृतत्रेतादीनि

---

(१) रथन्तर-बृहद्रथन्तर-वामदेव्य-वैरूप्य-पावमान्य-वैराज-चान्द्रमसाख्यानि सप्त सामानि ॥

(२) क्षारोद-इक्षूद-सुरोद-घृतोद-क्षीरोद-दध्युद-शुद्धोदाख्याः सप्त समुद्राः ॥

(३) काली-कराली-मनोजवा-सुलोहिता-सुधूम्रवर्णा-स्फुलिङ्गिनी-विश्वदासाख्याः अग्नेः सप्तार्चिषः ॥ अर्चिपदेन जिह्वा ।

वाचस्पतौ तु—

कराली धूमिनी श्वेता लोहिता नीललोहिता । सुवर्णा पद्मरागा च सप्त जिह्वा विभावसोः ॥ इत्यग्नेः सप्त जिह्वानामानि उक्तानि ॥

(४) भू-भुवः-स्वः-महः-जनः-तपः-सत्यमित्याख्याः सप्त लोकाः ॥

यासु ताश्चतुर्युगाः कालावस्थाः कालपरिमाणम्। चत्वारो वर्णाः प्रकृता उच्यन्ते यस्मिन्निति चतुर्वर्णमयः, चातुर्वर्ण्यप्रचुर इत्यर्थः। "तत्प्रकृतवचने मयट्" "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन तद्धितार्थे विषये तत्पुरुषः। स लोकः इत्येवंरूपं सर्वं चतुर्मुखाच्चतुर्मुखरूपिणस्त्वत्तः जातमिति शेषः। "इदं सर्वमसृजत। यदिदं किञ्च" इति श्रुतेः॥ २२॥

अन्वयः––'हे भगवन्!' चतुर्वर्गफलं, ज्ञानं, चतुर्युगाः, कालावस्थाः, चतुर्वर्णमयः, लोकः, 'एतत्' सर्वं, चतुर्मुखात्, त्वत्तः, 'प्रादुर्भूतम्'॥ २२॥

सुधा––'हे भगवन्!' चतुर्वर्गफलं = धर्मार्थकाममोक्षप्रयोजनकं, ज्ञानं = प्रतीतिः, चतुर्युगाः = कृतत्रेताद्वापरकलियुगाः, कालावस्थाः = समयपरिमाणं, चतुर्वर्णमयः = ब्राह्मणक्षत्रियवैश्यशूद्रप्रचुरः, लोकः = विश्वम्, एतदिति शेषः। सर्वं = निखिलं, चतुर्मुखात् = चतुराननात्, त्वत्तः = भवतः, प्रादुर्भूतमिति शेषः॥ २२॥

कोशः—'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः। 'लोको विश्वे जने' इत्यनेकार्थसंग्रहः॥ २२॥

समासादि—चतुर्णां वर्ग इति चतुर्वर्गः ( त० पु० ), स एव फलं यस्य तच्चतुर्वर्गफलम् ( ब० व्री० )। कालस्यावस्था इति कालावस्थाः (त० पु०)। चत्वारि युगानि यासु ताश्चतुर्युगाः ( ब० व्री० )। चत्वारो वर्णा प्रकृता उच्यन्ते यस्मिन्निति चतुर्वर्णमयः। चत्वारि मुखानि यस्य स तस्माच्चतुर्मुखात् ( ब० व्री० )॥ २२॥

व्याकरणम्––चतुर्वर्णमयः––अत्र 'तत्प्रकृतवचने मयट्' इति मयट्। त्वत्तः = त्वद् + 'पञ्चम्यास्तसिल्' इति तसिल्॥ २२॥

वाच्यपरिवर्तनम्––चतुर्वर्गफलेन, ज्ञानेन, चतुर्युगया, कालावस्थया, चतुर्वर्णमयेन, लोकेन, 'एतेन' सर्वेण, चतुर्मुखात्, त्वत्तः, 'प्रादुर्भूतम्'॥ २२॥

तात्पर्यार्थः––हे भगवन्! चतुर्णां धर्मार्थकाममोक्षाणां फलज्ञानं, कृतत्रेताद्वापरकलियुगानां समयपरिमाणं, ब्राह्मणक्षत्रियवैश्यशूद्रप्रचुरो लोकः एतत्सर्वं चतुर्मुखात् भवत उत्पन्नम्॥ २२॥

भाषाऽर्थः––( हे भगवन्! ) धर्म, अर्थ, काम, मोक्ष रूप चतुर्वर्ग के फलवाला ज्ञान, सत्य, त्रेता, द्वापर, कलियुग रूप चारो युगों के काल का परिमाण, ब्राह्मण, क्षत्रिय, वैश्य, शूद्र रूप चारो वर्णमय लोक ( यह ) सब चार मुख वाले आपसे उत्पन्न हुये हैं॥२२॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम्।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये॥ २३॥

सञ्जीविनी—अभ्यासेति। अभ्यासेन निगृहीतं विषयान्तरेभ्यो निवर्तितेन मनसा योगिनो हृदयाश्रयं हृत्पद्मस्थं ज्योतिर्मयं त्वां विमुक्तये मोक्षार्थं विचिन्वन्त्यन्विष्यन्ति ध्यायन्तीत्यर्थः॥ २३॥

अन्वयः––'हे देव!' योगिनः, अभ्यासनिगृहीतेन, मनसा, हृदयाश्रयं, ज्योतिर्मयं, त्वां, विमुक्तये, विचिन्वन्ति॥ २३॥

सुधा––'हे देव!' योगिनः = योगिजनाः, अभ्यासनिगृहीतेन = पुनःपुनःमननवशीकृतेन, अभ्यासेन विषयान्तरेभ्यः परावर्त्तितेनेति यावत्। मनसा = चित्तेन, हृदयाश्रयं = हृत्संश्रयं, हृदयकमलस्थमित्यर्थः। ज्योतिर्मयं = ज्योतिःस्वरूपं, त्वां = भवन्तं, विमुक्तये = मोक्षाय, विचिन्वन्ति = अन्विष्यन्ति॥ २३॥

कोशः—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः॥ २३॥

समासादि—अभ्यासेन निगृहीतमित्यभ्यासनिगृहीतं तेनाभ्यासनिगृहीतेन (त० पु०)। हृदये आश्रयो यस्य तं हृदयाश्रयम् ( ब० व्री० )। ज्योतिषः प्राचुर्यं ज्योतिर्मयम्॥ २३॥

व्याकरणम्—निगृहीतेन = नि + ग्रह + क्तः + सम्प्रसारणम् + इट् । विचिन्वन्ति = वि + चिञ् ( चयने—ञित् ), लट् ॥ २३ ॥

वाच्यपरिवर्तनम्—'हे देव !' योगिभिः, अभ्यासनिगृहीतेन, मनसा, हृदयाश्रयः, ज्योतिर्मयः, त्वं, विमुक्तये, विचीयसे ॥ २३ ॥

तात्पर्यार्थः—हे देव ! योगिजनाः अभ्यासेन विषयान्तरेभ्यो वशीकृतेन मनसा हृत्पद्मस्थं ज्योतिःस्वरूपं त्वां मोक्षाय अन्विष्यन्ति ॥ २३ ॥

भाषाऽर्थः—( हे देव ! ) योगी लोग अभ्यास से ( अपने ) अधीन किये गये मन से हृदय में स्थित ज्योतिःस्वरूप आप को मुक्ति के लिये ढूंढते हैं ॥ २३ ॥

**अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।**
**स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ २४ ॥**

सञ्जीविनी—अजस्येति । न जायत इत्यजः, "अन्येष्वपि दृश्यते" इति डप्रत्ययः । तस्याजस्य जन्मशून्यस्यापि जन्म गृह्णतः मत्स्यादिरूपेण जायमानस्य निरीहस्यापि चेष्टारहितस्य हतद्विषः शत्रुघातिनो जागरूकस्य सर्वसाक्षितया बुद्धस्यापि स्वपतो योगनिद्रामनुभवतः इत्थं विरुद्धचेष्टस्य तव याथार्थ्यं को वेद वेत्ति, "विदो लटो वा" इति णलादेशः ॥२४॥

अन्वयः—'हे भगवन् !' अजस्य, 'अपि' जन्म, गृह्णतः, निरीहस्य, 'अपि' हतद्विषः, जागरूकस्य, 'अपि' स्वपतः, तव, याथार्थ्यं, कः, वेद ॥ २४ ॥

सुधा—'हे भगवन् !' अजस्य = अजन्मनः, जन्मरहितस्येति यावत् । अपीति शेषः । जन्म = जननं, गृह्णतः = स्वीकुर्वतः, मत्स्यादिरूपेण जायमानस्येत्यर्थः । निरीहस्य = निश्चेष्टस्य, अभिलाषशून्यस्येत्यर्थः । अपीति शेषः । हतद्विषः = विनाशितशत्रोः, शत्रुघातिन इत्यर्थः । जागरूकस्य = जागरणशीलस्य, सर्वसाक्षितया प्रबुद्धस्येत्यर्थः । अपीति शेषः । स्वपतः = शयनं कुर्वतः, योगरूपां निद्रामनुभवत इति यावत् । तव = भवतः, याथार्थ्यं = याथातथ्यं, कः = जनः, वेद = वेत्ति, जानातीत्यर्थः ॥ २४ ॥

कोशः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः । द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः ॥ २४ ॥

समासादि—न जायत इत्यजस्तस्याजस्य । गृह्णातीति गृह्णन् तस्य गृह्णतः । निर्गतेहा यस्य स तस्य निरीहस्य (ब० व्री०) । हता द्विषो येन स हतद्विट् तस्य हतद्विषः (ब० व्री०) । स्वपितीति स्वपन् तस्य स्वपतः । जागरणशीलो जागरूकस्तस्य जागरूकस्य । यथार्थस्य भावो याथार्थ्यम् ॥ २४ ॥

व्याकरणम्—गृह्णतः = ग्रह + शतृ । स्वपतः = ञिष्वप् ( शये—ञीत् ), शतृ । जागरूकस्य = जागृ ( निद्राक्षये—ऋदित् ), 'जागरूकः' इत्यूकप्रत्ययः । याथार्थ्यं = यथार्थ + ष्यञ् । वेद = विद ( ज्ञाने ), 'विदो लटो वा' इति णलादेशः ॥ २४ ॥

वाच्यपरिवर्तनम्—'हे भगवन् !' अजस्य, 'अपि' जन्म, गृह्णतः, निरीहस्य, 'अपि' हतद्विषः, जागरूकस्य, 'अपि' स्वपतः, तव, याथार्थ्यं, केन, विद्यते ॥ २४ ॥

तात्पर्यार्थः—हे भगवन् ! जन्मरहितस्यापि मत्स्यादिरूपेणावतरतः चेष्टाशून्यस्यापि शत्रुघातिनः सकलप्राणिसाक्षितया नित्यप्रबुद्धस्यापि योगरूपां निद्रामनुभवतो भवतो याथार्थ्यं को वेत्ति ? न कोऽपीति ॥ २४ ॥

भाषाऽर्थः—( हे भगवन् ! ) जन्म से रहित ( भी ) जन्म लेने वाले, इच्छा से शून्य ( भी ) शत्रुओं को मारने वाले, जागरण शील ( भी ) सोने वाले हुये तुम को यथार्थ कौन जान सकता है ॥ २४ ॥

**शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।**

पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥

सञ्जीविनी—शब्दादीनिति । किञ्च कृष्णादिरूपेण शब्दादीन्विषयान्भोक्तुं नरनारायणादिरूपेण दुश्चरं तपश्चरितुं तथा दैत्यमर्दनेन प्रजाः पातुम् । औदासीन्येन ताटस्थ्येन वर्तितुं च पर्याप्तः समर्थोऽसि । भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वदन्यः कः समर्थ इत्यर्थः ॥ २५ ॥

अन्वयः—'हे भगवन् !' 'त्वम्' शब्दादीन्, विषयान्, भोक्तुं, दुश्चरं, तपः, चरितुं, प्रजाः, पातुम्, औदासीन्येन, वर्तितुं, पर्याप्तः, असि ॥ २५ ॥

सुधा—'हे भगवन् !' 'त्वम्' शब्दादीन् = शब्दगन्धरसस्पर्शाख्यान्, विषयान् = इन्द्रियार्थान्, भोक्तुम् = अनुभवितुं, दुश्चरं = दुस्सहं, तपः = व्रतादि, चरितुम् = अनुष्ठितुं, प्रजाः = जनान्, पातुं = रक्षितुम्, औदासीन्येन = ताटस्थ्येन, वर्त्तितुं = व्यवहर्तुं, स्थातुमिति यावत् । पर्याप्तः = समर्थः, असि = विद्यसे, त्वमिति शेषः ॥ २५ ॥

कोशः—'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी । गोचरा इन्द्रियार्थाश्च' इत्यमरः॥२५॥

समासादि—शब्द आदिर्येषां ते तान् शब्दादीन् ( ब० व्री० ) । दुःखेन चरतीति तद् दुश्चरम् । उदासीनस्य भाव औदासीन्यं तेनौदासीन्येन ॥ २५ ॥

व्याकरणम्—भोक्तुं = भुज + तुमुन् । दुश्चरं = दुस् + चर + टः । पर्याप्तः = परि + आप्लृ ( व्याप्तौ-लृदित् ), क्तः । पातुं = पा ( रक्षणे ), तुमुन् । औदासीन्येन = उदासीन + ष्यञ् । वर्त्तितुं = वृतु + तुमुन् + इट् ॥ २५ ॥

वाच्यपरिवर्तनम्—'हे भगवन् !' 'त्वया' शब्दादीन्, विषयान्, भोक्तुं, दुश्चरं, तपः, चरितुं, प्रजाः, पातुम्, औदासीन्येन, वर्तितुं, पर्याप्तेन, भूयते ॥ २५ ॥

तात्पर्यार्थः—हे भगवन् ! त्वं कृष्णादिरूपेण शब्दादीन् विषयान् भोक्तुं नरनारायणादिरूपेण कठिनं तपोऽनुष्ठितुम् असुरमर्दनेन जनान् रक्षितुं ताटस्थ्येन वर्तितुं च समर्थोऽसि । अर्थात् भोगतपसोः रक्षणौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वद्विना कः समर्थ इति ॥२५॥

भाषाऽर्थः—( हे भगवन् ! तुम ) शब्द आदि विषयों को भोगने के लिये, कठिन तपस्या को करने के लिये, प्रजाओं की रक्षा करने के लिये ( और ) उदासीनपनेसे वर्ताव करने के लिये समर्थ हो ॥ २५ ॥

बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥

सञ्जीविनी—बहुधेति । आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतवः पुरुषार्थसाधकाः पन्थान उपायाः जाह्नव्या इमे जाह्नवीया गाङ्गाः, "वृद्धाच्छः" इति छप्रत्ययः । ओघाः प्रवाहाः तेऽप्यागमैरागतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च, अर्णव इव त्वय्येव निपतन्ति प्रविशन्ति, येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थः । यथाहुराचार्याः-"किं बहुना कारवोऽपि विश्वकर्मेत्युपासते" इति ॥ २६ ॥

अन्वयः—आगमैः, बहुधा, भिन्नाः, अपि, सिद्धिहेतवः, पन्थानः, जाह्नवीयाः, ओघाः, अर्णवे, इव, त्वयि, निपतन्ति ॥ २६ ॥

सुधा—आगमैः = शास्त्रैः, सांख्यादिदर्शनशास्त्रैरिति यावत् । अन्यत्र—आगतिभिः, बहुधा = बहुविधाः, भिन्नाः = भेदं प्रापिताः, अपि, सिद्धिहेतवः = पुरुषार्थसाधकाः, पन्थानः = मार्गाः, उपाया इति यावत् । जाह्नवीयाः = भागीरथीयाः, ओघाः = प्रवाहाः, अर्णवे = सागरे, इव = यथा, त्वयि = भवति, निपतन्ति = प्रविशन्ति ॥ २६ ॥

कोश—'आगमं त्वागतौ शास्त्रे' इति, 'ओघः प्रवाहसंघातो द्रुतनृत्तपरम्परा' इति चानेकार्थसंग्रहः ॥ २६ ॥

समासादि—बहुप्रकारा बहुधाः। सिद्धेर्हेतव इति सिद्धिहेतवः ( त० पु० )। जाह्नव्या इमे जाह्नवीयाः ॥ २६ ॥

व्याकरणम्—निपतन्ति = नि + पत + लट् । जाह्नवीयाः = जाह्नवी + 'वृद्धाच्छः' इति छप्रत्ययः + तस्येयादेशः ॥ २६ ॥

वाच्यपरिवर्तनम्—आगमैः, बहुधा, भिन्नैः, अपि, सिद्धिहेतुभिः, पथिभिः, जाह्नवीयैः, ओघैः, अर्णवे, इव, त्वयि, निपत्यते ॥ २६ ॥

तात्पर्यार्थः—हे प्रभो ! त्रयी सांख्यादिदर्शनशास्त्रैः बहुधा भिन्ना अपि पुरुषार्थसाधका उपाया गाङ्गाः प्रवाहा समुद्रे इव त्वय्येव प्रविशन्ति । अर्थात् येन केनापि रूपेण भवन्त-मेवोपयान्तीति ॥ २६ ॥

भाषाऽर्थः—शास्त्रों के बहुत प्रकार से भिन्न भिन्न ( किये गये ) भी सिद्धि के मार्ग, जैसे गंगा संबन्धी प्रवाह समुद्र में प्रवेश करते हैं, वैसे तुममें प्रवेश करते हैं ॥ २६ ॥

त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये ॥ २७ ॥

सञ्जीविनी—त्वयीति। त्वय्यावेशितं निवेशितं चित्तं यैस्तेषां तुभ्यं समर्पितानि कर्माणि यैस्तेषाम्, "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि कौन्तेय! प्रतिजाने प्रियोऽसि मे ॥" इति भगवद्वचनात। वीतरागाणां विरक्तानामभूयः संनिवृत्तयेऽपुनरावृत्तये, मोक्षायेत्यर्थः। त्वमेव गतिः साधनम्। "तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्य-तेऽयनाय" इति श्रुतेरित्यर्थः ॥ २७ ॥

अन्वयः—त्वयि, आवेशितचित्तानां, त्वत्समर्पितकर्मणां, वीतरागाणाम्, अभूयः, सन्नि-वृत्तये, त्वं, गतिः, 'असि' ॥ २७ ॥

सुधा—त्वयि = भवति, आवेशितचित्तानां = निवेशितमनसां, दत्तचित्तानामिति यावत्। त्वत्समर्पितकर्मणां = भवत्समर्पणकृतक्रियाणां, वीतरागाणां = गतानुरागाणां, विरक्तानामि-त्यर्थः। अभूयः = अपुनः, सन्निवृत्तये = आवृत्तये, पुनः जन्म अपरिग्रहार्थमिति यावत्। मो-क्षायेत्यर्थः। त्वं, गतिः = साधनम्, असीति शेषः ॥ २७ ॥

कोशः—'कर्म कारक भेदे स्यात् क्रियायां च शुभाशुभे' इत्यनेकार्थसंग्रहः ॥ २७ ॥

समासादि—आवेशितं चित्तं यैस्ते तेषामावेशितचित्तानाम् (ब० व्री०)। तुभ्यं समर्पि-तानि कर्माणि यैस्ते तेषां त्वत्समर्पितकर्मणाम् ( ब० व्री० )। वीतो रागो येषां ते तेषां वीत-रागाणाम् ( ब० व्री० )। सम्यक् निवृत्तिरिति सन्निवृत्तिस्तस्यै सन्निवृत्तये ॥ २७ ॥

व्याकरणम्—आवेशित = आ + विश + क्तः। समर्पित = सम् + ऋ + णिच् + पुक् + क्तः। वीत = वी ( गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ), क्तः ॥ २७ ॥

वाच्यपरिवर्तनम्—त्वयि, आवेशितचित्तानां, त्वत्समर्पितकर्मणां, वीतरागाणाम्, अभू-यः, सन्निवृत्तये, त्वया, गत्या, 'भूयते' ॥ २७ ॥

तात्पर्यार्थः—हे देव ! त्वयि निवेशितमनसां तुभ्यं समर्पितकर्मणां विरक्तानां मोक्षाय त्वमेव साधनमसि ॥ २७ ॥

भाषाऽर्थः—तुममें चित्त को लगाने वाले तुम्हारे लिये कर्म को समर्पण करने वाले राग से शून्य ( जनों ) के फिर जन्म की निवृत्ति ( मोक्ष ) के लिये तुम गति ( हो ) ॥ २७ ॥

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥

सञ्जीविनी—प्रत्यक्ष इति। प्रत्यक्षः प्रत्यक्षप्रमाणगम्योऽपि तव मह्यादिः पृथिव्यादि-र्महिमैश्वर्यमपरिच्छेद्यः इयत्तया नावधार्यः आप्तवाग्वेदः, "यतो वा इमानि भूतानि जा-

यन्ते" इत्यादिश्रुतेः । अनुमानं क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यादिकं ताभ्यां साध्यं गम्यं त्वां प्रति का कथा । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यं तत्कारणमप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः ॥ २८ ॥

अन्वयः—तव, मह्यादिः, महिमा, प्रत्यक्षः, अपि, अपरिच्छेद्यः, 'अस्ति' आप्तवागनुमानाभ्यां, साध्यं, त्वां, प्रति, का, कथा, 'अस्ति' ॥ २८ ॥

सुधा—तव = भवतः, मह्यादिः = पृथिवीप्रभृतिः, महिमा = ऐश्वर्यं, प्रत्यक्षः = साक्षात्, अपि, प्रत्यक्षप्रमाणगम्योऽपीति यावत् । अपरिच्छेद्यः = अपरिमेयः, अस्तीति शेषः । इयत्तया नावेद्योऽस्तीत्यर्थः । आप्तवागनुमानाभ्यां = वेदानुमानप्रमाणाभ्यां, साध्यं = प्राप्यं, त्वां = भवन्तं, प्रति, का, कथा = वार्ता, अस्तीति शेषः ॥ २८ ॥

कोशः—'साक्षात् प्रत्यक्षतुल्ययोः' इति, 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही' इति चामरः ॥ २८ ॥

समासादि—परिच्छेत्तुं योग्यः परिच्छेद्यो न परिच्छेद्य इत्यपरिच्छेद्यः । मही आदिर्यस्य स मह्यादिः ( ब० व्री० ) । आप्तवाक् चानुमानं चेत्याप्तवागनुमाने ताभ्यामाप्तवागनुमानाभ्याम् ( द्व० ) ॥ २८ ॥

व्याकरणम्—महिमा = महत् + 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच् । साध्यं = साध + 'ऋहलोर्ण्यत्' इति ण्यत् ॥ २८ ॥

वाच्यपरिवर्तनम्—तव, मह्यादिना, महिम्ना, प्रत्यक्षेण, अपि, अपरिच्छेद्येन, 'भूयते' आप्तवागनुमानाभ्यां, साध्यं, त्वां, प्रति, कया, कथया, 'भूयते' ॥ २८ ॥

तात्पर्यार्थः—हे भगवन् ! तव पृथिव्याद्यैश्वर्यं प्रत्यक्षप्रमाणगम्यमपीयत्तया नावधार्यम्, वेदवागनुमानाभ्यां गम्यं त्वां प्रति का कथाऽस्ति ॥ २८ ॥

भाषाऽर्थः—तुम्हारी पृथिवी आदि महिमा प्रत्यक्ष होने पर भी नहीं जानने योग्य है, वेद और अनुमान से प्राप्त करने योग्य तुम्हारे प्रति क्या कथा है ॥ २८ ॥

**केवलं स्मरणेनैव पुनासि पुरुषं यतः ।**
**अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥**

सञ्जीविनी—केवलमिति । स्मरणेन केवलं कृत्स्नम्, 'केवलं कृत्स्नमेकश्च' इति शाश्वतः । पुरुषं स्मर्तारं जनं पुनासि यतः, यदित्यर्थः । अनेन स्मृतिकार्येणैव त्वयि त्वद्विषये याः शेषा । अवशिष्टा वृत्तयो दर्शनस्पर्शनादयो व्यापारास्ता निवेदितफला विज्ञापितकार्याः । तत्र स्मरणस्यैवैतत्फलं दर्शनादीनां तु कियदिति नावधारयाम इति भावः ॥ २९ ॥

अन्वयः—'त्वं' स्मरणेन, केवलं, पुरुषं, यतः, पुनासि, अनेन, एव, त्वयि, शेषाः, वृत्तयः, निवेदितफलाः, 'सन्ति' ॥ २९ ॥

सुधा—स्मरणेन = स्मृत्या, केवलं = कृत्स्नं, पुरुषं = नरं, स्मरणकर्तारं जनमिति यावत् । यतः = यत्, पुनासि = पवित्रयसि, त्वमिति शेषः । अनेन = अमुना, एव, स्मरणकार्येणेत्यर्थः । त्वयि = भवद्विषये, शेषाः = अवशिष्टाः, वृत्तयः = व्यापाराः, दर्शनस्पर्शनादिव्यापारा इति यावत् । निवेदितफलाः = अवबोधितसिद्धयः, विज्ञापितकार्या इति यावत् । सन्तीति शेषः ॥ २९ ॥

कोशः—'केवलं त्वेककृत्स्नयोः' इत्यनेकार्थसंग्रहः । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः' इत्यमरः ॥ २९ ॥

समासादि—निवेदितानि फलानि यासां ता निवेदितफलाः ( ब० व्री० ) ॥ २९ ॥

व्याकरणम्—पुनासि = पूञ् ( पवने—ञित् ), लट् । यतः—अत्र प्रथमार्थे तसिः । वृत्तयः = वृतु ( वर्तने—उकारेत् ), क्तिन् । निवेदित = नि + विद + क्तः + इट् ॥ २९ ॥

वाच्यपरिवर्तनम्—'त्वया' स्मरणेन, केवलः, पुरुषः, यतः, पूयते, अनेन, एव, त्वयि,

शेषाभिः, वृत्तिभिः, निवेदितफलाभिः, 'भूयते' ॥ २९ ॥

तात्पर्यार्थः—हे परमात्मन् ! त्वं स्मरणेन कृत्स्नं स्मर्तारं जनं यत् पुनासि, अनेन स्मरणकार्येणैव त्वद्विषयेऽवशिष्टाः दर्शनस्पर्शनादयो व्यापारा विज्ञापितकार्याः सन्ति ॥ २९ ॥

भाषाऽर्थः—( तुम ) स्मरण से सब ( स्मरण करने वाले ) पुरुष को जो पवित्र करते हो, इस ( स्मरण ) से ही तुम्हारे में शेष ( दर्शन स्पर्शन आदि ) व्यापार विज्ञापित फल वाले हैं ॥ २९ ॥

**उदधेरिव रत्नानि तेजांसीव विवस्वतः ।**
**स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३० ॥**

सञ्जीविनी—उदधेरिति । उदधेरुदकं धीयते इति उदधिस्तस्य रत्नानीव, विवस्वतस्तेजांसीव, दूराण्यवाङ्मनसगोचराणि ते चरितानि स्तुतिभ्यो व्यतिरिच्यन्ते । निःशेषं स्तोतुं न शक्यन्त इत्यर्थः ॥ ३० ॥

अन्वयः—उदधेः, रत्नानि, इव, विवस्वतः, तेजांसि, इव, दूराणि, ते चरितानि, स्तुतिभ्यः, व्यतिरिच्यन्ते ॥ ३० ॥

सुधा—उदधेः = सागरस्य, रत्नानि = मणयः, इव = यथा, विवस्वतः = सूर्यस्य, तेजांसि = किरणाः, इव, दूराणि = विप्रकृष्टानि, वाङ्मनसाविषयाणीति यावत् । ते = तव, चरितानि = चरित्राणि, स्तुतिभ्यः = स्तोत्रेभ्यः, वर्णनेभ्य इति यावत् । व्यतिरिच्यन्ते = अधिकानि विद्यन्ते ॥ ३० ॥

कोशः—'उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः' इति, 'रत्नं मणिर्द्वयोः' इति चामरः । 'विवस्वान् विबुधे सूर्ये तन्नगर्यां विवस्वती' इति मेदिनी । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । 'निष्ठा च शीलं चारित्रं चरित्रं चरितं तथा' इति रत्नकोशः ॥ ३० ॥

समासादि—उदकानि धीयतेऽत्रेत्युदधिस्तस्योदधेः । विविधं वस्ते ( आच्छादयति ) इति विवस्वत्तस्य विवस्वतः । अथवा—विवः ( रश्मिः ) अस्यास्तीति विवस्वत्तस्य विवस्वतः । स्तवनानि स्तुतयस्ताभ्यः स्तुतिभ्यः ॥ ३० ॥

व्याकरणम्—उदधेः = उदक + धाञ् ( आधारे—ङित् ), 'कर्मण्यधिकरणे च' इति किः, 'उदकस्योदः संज्ञायाम्' इत्युदकस्योदादेशः । विवस्वतः = वि + वस (आच्छादने), क्विप् + तुक् । अथवा—विव + मतुप् + 'तसौ मत्वर्थे' इति भत्वाद्रुत्वाभावः । स्तुतिभ्यः = ष्टुञ् ( स्तुतौ—ञित् ), क्तिन् । व्यतिरिच्यन्ते = वि + अति + रिच + लट् + कर्मकर्तरि यक् ॥३०॥

(१)वाच्यपरिवर्तनम्—उदधेः, रत्नैः, इव, विवस्वतः, तेजोभिः, इव, दूरैः, ते, चरितैः, स्तुतिभ्यः, व्यतिरिच्यते ॥ ३० ॥

तात्पर्यार्थः—हे भगवन् ! समुद्रस्य रत्नानीव, सूर्यस्य तेजांसीव, अवाङ्मनसगोचराणि ते चरित्राणि निःशेषं स्तोतुं न शक्यन्ते ॥ ३० ॥

भाषार्थः—समुद्र के रत्नों के समान, सूर्य के तेज के समान दूर ( याने वाणी और मन के अविषय ) तुम्हारे चरित्र, स्तुतियों से अधिक हैं ॥ ३० ॥

**अनवाप्तमवाप्तव्यं न ते किञ्चन विद्यते ।**
**लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१ ॥**

सञ्जीविनी—अनवाप्तमिति । अनवाप्तमप्राप्तम् अवाप्तव्यं प्राप्तव्यं ते तव किञ्चन किञ्चिदपि न विद्यते । नित्यपरिपूर्णत्वादिति भावः । तर्हि किंनिबन्धने जन्मकर्मणी ? तत्राह—लोकेति । एको लोकानुग्रह एव ते तव जन्मकर्मणोर्हेतुः । परमकारुणिकस्य ते परार्थैव प्रवृत्तिः न स्वार्थेत्यर्थः ॥ ३१ ॥

---

( १ ) इदं भावे बोध्यम् ।

अन्वयः—ते, अनवाप्तम्, अवाप्तव्यं, किञ्चन, 'अपि' न, विद्यते, एकः, लोकानुग्रहः, एव, ते, जन्मकर्मणोः, हेतुः, 'अस्ति' ॥ ३१ ॥

सुधा—ते = तव, अनवाप्तम् = अलब्धम्, अवाप्तव्यं = लब्धव्यं, किञ्चन = किञ्चित्, अपीति शेषः । न विद्यते = नास्ति, एकः = केवलः, लोकानुग्रहः = जनस्नेहः, एव, ते = तव, जन्मकर्मणोः = जननदैत्यमर्दनरूपकर्मणोः, हेतुः = कारणम्, अस्तीति शेषः ॥ ३१ ॥

कोशः—'लोकस्तु भुवने जने' इति, 'हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्' इति, 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इति चामरः ॥ ३१ ॥

समासादि—न अवाप्तमित्यनवाप्तम् । अवाप्तुं योग्यमवाप्तव्यम् । लोकेऽनुग्रह इति लोकानुग्रहः ( त० पु० ) । जन्म च कर्म चेति जन्मकर्माणी तयोर्जन्मकर्मणोः ( द्व० ) ॥३१॥

व्याकरणम्—अनवाप्तम् = न + अव + आप्लृ + क्तः । अवाप्तव्यम् = अव + आप्लृ + तव्यप्रत्ययः । विद्यते = विद् + लट् + श्यन् । अनुग्रहः = अनु + ग्रह ( उपादाने ), 'ग्रहवृदृनिश्चिगमश्च' इत्यप् ॥ ३१ ॥

वाच्यपरिवर्तनम्—ते, अनवाप्तेन, अवाप्तव्येन, किञ्चन, न, विद्यते, एकेन, लोकानुग्रहेण, एव, ते, जन्मकर्मणोः, हेतुना, 'भूयते' ॥ ३१ ॥

तात्पर्यार्थः—हे विष्णो ! तेऽप्राप्तमप्राप्तव्यं किञ्चिदपि वस्तु न विद्यते, किन्तु केवलं लोकानुग्रह एव भवतः जन्मकर्मणोः कारणमस्ति ॥ ३१ ॥

भाषाऽर्थः—तुम को नहीं प्राप्त हुये प्राप्त करने के योग्य कुछ ( भी वस्तु ) नहीं है, केवल जनों पर अनुग्रह ( करना ) ही तुम्हारे जन्म और कर्म का कारण ( है ) ॥ ३१ ॥

**महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।**
**श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥**

सञ्जीविनी—महिमानमिति । तव महिमानमुत्कीर्त्य वचः संह्रियत इति यत्, तद्वचःसंहरणं श्रमेण वाग्व्यापारश्रान्त्या अशक्त्या कात्स्न्र्येन वक्तुमशक्यत्वाद्वा, गुणानामियत्तया इदं परिमाणं यस्य इयान् तस्य भावः इयत्ता तया एतावन्मात्रतया न । तेषामानन्त्यादिति भावः ॥ ३२ ॥

अन्वयः—तव, महिमानम्, उत्कीर्त्य, वचः, यत्, संह्रियते, तत्, श्रमेण, अशक्त्या, वा, 'संह्रियते' गुणानाम्, इयत्तया, न, 'संह्रियते' ॥ ३२ ॥

सुधा—तव = भवतः, महिमानं = गुणं, माहात्म्यमिति यावत् । उत्कीर्त्य = कथयित्वा, वर्णनं कृत्वेत्यर्थः । वचः = वचनं, यत्, संह्रियते = विरम्यते, तत् = वचः, श्रमेण = श्रान्त्या, वाग्व्यापारप्रयासेनेत्यर्थः । अशक्त्या = असामर्थ्येन, वा = अथवा, संह्रियत इति शेषः । गुणानां = पूर्वोक्तगुणादीनाम्, इयत्तया = एतावन्मात्रतया, न, संह्रियत इति शेषः ॥ ३२ ॥

कोशः—'वचनं वचः' इति, 'कासुसामर्थ्ययोः शक्तिः' इति चामरः ॥ ३२ ॥

समासादि—महतो भावो महिमा तं महिमानम् । न शक्तिरित्यशक्तिस्तयाऽशक्त्या । इदमो भाव इयत्ता तया इयत्तया ॥ ३२ ॥

व्याकरणम्—महिमानं = महत् + 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच् । उत्कीर्त्य = उत् + कॄ + क्त्वा, ल्यबादेशः । संह्रियते = सम् + हृञ् + लट् + यक् ॥ ३२ ॥

वाच्यपरिवर्तनम्—तव, महिमानम्, उत्कीर्त्य, वचः । यत्, संहरति, तत्, श्रमेण, अशक्त्या, वा, 'संहरति' गुणानाम्, इयत्तया, न, 'संहरति' ॥ ३२ ॥

तात्पर्यार्थः—हे देव ! तव माहात्म्यमुत्कीर्य वचो यद् विरम्यते, तद् वाग्व्यापारश्रान्त्या अथवा कात्स्न्र्येन वक्तुमशक्ततया विरम्यते, किन्तु गुणानामेतावन्मात्रतया वचो न विरम्यते ॥ ३२ ॥

भाषाऽर्थः—तुम्हारी महिमा को बखान कर वचन जो रुक जाता है, वह परिश्रम अथवा

असामर्थ्य से ( रुकता है, तुम्हारे ) गुणों की इयत्ता से ( इतना ही है इससे ) नहीं रुकता है ॥ ३२ ॥

अथ देवाः पूर्वोक्तस्तुत्या विष्णुं प्रसन्नं चक्रुरित्याह—

**इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।**
**भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥**

सञ्जीविनी—इतीति । इति ते सुरास्तमधोभूतमक्षजमिन्द्रियजं ज्ञानं यस्मिंस्तमधोक्षजं विष्णुं प्रसादयामासुः प्रसन्नं चक्रुः । हि यस्मात्परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिर्भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः, 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । न स्तुतिर्न प्रशंसामात्रम्, महान्तो हि यथाकथञ्चिन्न सुलभा इति भावः । परमे स्थाने तिष्ठतीति परमेष्ठी, "परमे कित्" इत्युणादिसूत्रेण तिष्ठतेरिनिः, "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक्, "स्थास्थिन्स्थूणाम्" इति वक्तव्यात्षत्वम् ॥ ३३ ॥

अन्वयः—इति, ते, सुराः, तम्, अधोक्षजं, प्रसादयामासुः, हि, परमेष्ठिनः, सा, भूतार्थव्याहृतिः, 'आसीत' स्तुतिः, न, 'आसीत' ॥ ३३ ॥

सुधा—इति = इत्थं, ते = समागताः, सुराः = देवाः, तं = पूर्वोक्तम्, अधोक्षजं = वनमालिनं, विष्णुमिति यावत । प्रसादयामासुः = प्रसन्नं चक्रुः, हि = यतः, परमेष्ठिनः = परमात्मनः, सर्वोत्कृष्टस्य विष्णोरित्यर्थः । सा = पूर्वोक्ता, देवकृतेति यावत् । भूतार्थव्याहृतिः = सत्यार्थोक्तिः, आसीदिति शेषः । स्तुतिः = स्तोत्रं, प्रशंसामात्रमित्यर्थः । न, आसीदिति शेषः ॥ ३३ ॥

कोशः—'अमरानिर्जरादेवास्त्रिदशाविबुधासुराः' इति, 'वनमाली बलिध्वंसी कंसारातिरधोक्षजः' इति, 'भूतं सत्योपमानयोः । प्राप्तेऽतीतेपिशाचादौ पृथ्व्यादौ जन्तुयुक्तयोः' इत्यनेकार्थसंग्रहः । 'व्याहार उक्तिर्लपितम्' इत्यमरः ॥ ३३ ॥

समासादि—अधः कृतम् अक्षजम् ( ऐन्द्रियकं ज्ञानं ) येन स तमधोक्षजम् ( ब० व्री० )। भूतश्चासावर्थ इति भूतार्थः ( क० धा० ), तस्य व्याहृतिरिति भूतार्थव्याहृतिः ( त० पु० ) । परमे ( ब्रह्मपदे ) तिष्ठतीति परमेष्ठी तस्य परमेष्ठिनः ॥ ३३ ॥

व्याकरणम्—प्रसादयामासुः = प्रसाद् + णिच् + लिट् । व्याहृतिः = वि + आ + हृञ् + क्तिन् ॥ ३३ ॥

वाच्यपरिवर्तनम्—इति, तैः, सुरैः, सः, अधोक्षजः, प्रसादयामासे, हि, परमेष्ठिनः, तया, भूतार्थव्याहृत्या, 'अभूयत' स्तुत्या, न, 'अभूयत' ॥ ३३ ॥

तात्पर्यार्थः—इत्थं ते देवा विष्णुं प्रसादयामासुः, यतः सर्वोत्तमस्य तस्य विष्णोर्देवैः कृता सा सत्यार्थोक्तिरासीत्, स्तुतिर्नाऽऽसीत् ॥ ३३ ॥

भाषाऽर्थः—इस प्रकार उन देवताओं ने विष्णु को प्रसन्न किया, क्यों कि परमेश्वर की वह ( देवताओं से की गयी स्तुति ) सत्य अर्थ की उक्ति (थी) स्तुति नहीं (थी) ॥ ३३ ॥

अथ देवा विष्णवे राक्षसरूपार्णवाद् भयं कथितवन्त इत्याह—

**तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।**
**भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥**

सञ्जीविनी—तस्मै इति । सुरा देवाः कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्यस्य तस्मै, लक्षितप्रसादायेत्यर्थः । अन्यथा अनवसरविज्ञप्तिर्मुखराणामिव निष्फला स्यादिति भावः । तस्मै विष्णवेऽप्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्यादात् नैर्ऋतो राक्षसः स एवोदधिः तस्माद्भयमाख्युः कथितवन्तः ॥ ३४ ॥

अन्वयः—सुराः, कुशलसंप्रश्नव्यञ्जितप्रीतये, तस्मै, अप्रलयोद्वेलात्, नैर्ऋतोदधेः, भयम्, आचख्युः ॥ ३४ ॥

सुधा—सुराः = देवाः, कुशलसंप्रश्नव्यञ्जितप्रीतये = क्षेमप्रश्नप्रकाशितानुरागाय, तस्मै = पूर्वोक्ताय, विष्णव इत्यर्थः। अप्रलयोद्वेलात् = अकल्पान्तोन्मर्यादात्, नैर्ऋतोदधेः = रक्षःरूपसमुद्रात्, भयं = त्रासम्, आचख्युः = कथयामासुः॥ ३४॥

कोशः—'कुशलं क्षेमपुण्ययोः' इति हैमः। 'चतुर्दशदरत्रासो भीतिर्भीः साध्वसं भयम्' इति, 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इति चामरः। 'नैर्ऋतः कर्वरः क्रव्यात् कर्बुरो यातुरक्षसी' इति शब्दार्णवः॥ ३४॥

समासादि—कुशलस्य संप्रश्न इति कुशलसंप्रश्नः ( त० पु० ), तेन व्यञ्जिता प्रीतिर्यस्य स तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये ( ब० व्री० )। न प्रलय इत्यप्रलयः, उद्वेलतीत्युद्वेलः, अप्रलये उद्वेल इत्यप्रलयोद्वेलस्तस्मादप्रलयोद्वेलात् (त० पु०)। निर्ऋतेरपत्यं नैर्ऋतः स एवोदधिस्तस्मान्नैर्ऋतोदधेः ( क० धा० )॥ ३४॥

व्याकरणम्—उद्वेलात् = उत् + वेल्ह ( गतौ—ऋकारेत् ), पचाद्यच्। आचख्युः = आ + चक्षिङ् ( व्यक्तायां वाचि–इकारः ङकारश्चेत् ), लिट्। नैर्ऋत = निर्ऋत + अण्॥ ६४॥

वाच्यपरिवर्तनम्—सुरैः, कुशलसंप्रश्नव्यञ्जितप्रीतये, तस्मै, अप्रलयोद्वेलात्, नैर्ऋतोदधेः, भयम्, आचख्ये॥ ३४॥

तात्पर्यार्थः—देवाः कुशलप्रश्नसंप्रकटितानुरागाय तस्मै विष्णवे प्रलयाभावेऽपि मर्यादाभङ्गकर्तुर्राक्षसरूपार्णवाद् भयं कथयामासुः॥ ३४॥

भाषाऽर्थः—देवता लोग कुशल को पूछने से प्रेम प्रकट करने वाले उस ( भगवान् विष्णु ) से प्रलय के बिना ही सीमा को भंग करने वाले राक्षस रूपी समुद्र के भय को कहे॥ ३४॥

अथ भगवान् विष्णुरुच्चैः स्वरेणोवाचेत्याह—

**अथ वेलासमासन्नशैलरन्ध्रानुनादिना।**
**स्वरेणोवाच भगवान्परिभूतार्णवध्वनिः॥ ३५॥**

सञ्जीविनी—अथेति। अथ वेलायामब्धिकूले समासन्नानां संनिकृष्टानां शैलानां रन्ध्रेषु गह्वरेष्वनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिस्तिरस्कृतसमुद्रघोषो भगवानुवाच॥ ३५॥

अन्वयः—अथ, भगवान्, वेलासमासन्नशैलरन्ध्रानुनादिना, स्वरेण, परिभूतार्णवध्वनिः, 'सन्' उवाच॥ ३५॥

सुधा—अथ = अनन्तरं, कुशलप्रश्नाद्यनन्तरमिति यावत्। भगवान् = विष्णुः, वेलासमासन्नशैलरन्ध्रानुनादिना = समुद्रतटनिकटपर्वतगह्वरप्रतिध्वनिमता, स्वरेण = उदात्तानुदात्तादिस्वरेण, परिभूतार्णवध्वनिः = तिरस्कृतसागरघोषः, सन्निति शेषः। उवाच = उक्तवान्॥३५॥

कोशः—'वेला काले च सीमायामब्धेः कूलविकारयोः। अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने' इति मेदिनी॥ ३५॥

समासादि—समासन्नाश्च ते शैला इति समासन्नशैलाः ( क० धा० ), वेलायां समासन्नशैलास्तेषां रन्ध्राणीति वेलासमासन्नशैलरन्ध्राणि तेष्वनुनदतीति तेन वेलासमासन्नशैलरन्ध्रानुनादिना ( त० पु० )। अर्णवस्य ध्वनिरित्यर्णवध्वनिः ( त० पु० ), परिभूतोऽर्णवध्वनिर्येन स परिभूतार्णध्वनिः ( ब० व्री० )॥ ३५॥

व्याकरणम्—अनुनादिना = अनु + णद ( अव्यक्ते शब्दे ), णिनिः। उवाच = ब्रूञ् ( व्यक्तायां वाचि—ञित् ), लिट् + 'ब्रुवो वचिः' इति वच्यादेशः। परिभूत = परि + भू + क्तः॥ ३५॥

वाच्यपरिवर्तनम्—अथ, भगवता, वेलासमासन्नशैलरन्ध्रानुनादिना, स्वरेण, परिभूतार्णवध्वनिना, 'सता' ऊचे॥ ३५॥

तात्पर्यार्थः--अनन्तरं भगवान् विष्णुः समुद्रतटनिकटपर्वतगुहासु प्रतिध्वनिमता स्वरेण तिरस्कृतसमुद्रघोषः सन् उवाच ॥ ३५ ॥

भाषाऽर्थः--इसके बाद भगवान् ( विष्णु ) समुद्र तट के समीपवर्ती पर्वतों के कंदराओं में ध्वनि कराते हुये स्वर से समुद्र के शब्द को तिरस्कृत करते हुये बोले ॥ ३५ ॥

अथ विष्णोरुरःकण्ठादिषु सम्यगुच्चारिता सरस्वती कृतार्था बभूवेत्याह—

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥

सञ्जीविनी—पुराणस्येति । पुराणस्य चिरन्तनस्य कवेस्तस्य भगवतो वर्णस्थानेषूरःकण्ठादिषु समीरिता सम्यगुच्चारिता अत एव कृतः संपादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नो यस्याः सा भारती वाणी चरितार्था कृतार्था बभूवैव । एवकारस्त्वसम्भावनाविपरीतभावनाव्युदासार्थः ॥ ३६ ॥

अन्वयः--पुराणस्य, कवेः, तस्य, वर्णस्थानसमीरिता, कृतसंस्कारा, भारती, चरितार्था, एव, बभूव ॥ ३६ ॥

सुधा--पुराणस्य = पुरातनस्य, कवेः = धीरस्य, अनादिपुरुषस्येत्यर्थः । तस्य = पूर्वोक्तस्य, विष्णोरिति यावत् । वर्णस्थानसमीरिता = उरःकण्ठादिषु सम्यगुच्चारिता, कृतसंस्कारा = प्राप्तसाधुत्वस्पष्टतादिरूपसंस्कारा, भारती = सरस्वती, चरितार्था = कृतार्था, एव, बभूव = अभवत् ॥ ३६ ॥

कोशः--'ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती' इत्यमरः ॥ ३६ ॥

समासादि—वर्णस्य स्थानानीति वर्णस्थानानि तेषु सम्यगीरितेति वर्णस्थानसमीरिता ( त० पु० ) । कृतः संस्कारो यस्याः सा कृतसंस्कारा ( ब० व्री० ) । चरितोऽर्थो यस्याः सा चरितार्था ( ब० व्री० ) ॥ ३६ ॥

व्याकरणम्—समीरिता = सम् + ईर + क्तः + इट् + टाप् । बभूव = भू + लिट् ॥ ३६ ॥

वाच्यपरिवर्तनम्—पुराणस्य, कवेः, तस्य, वर्णस्थानसमीरितया, कृतसंस्कारया, भारत्या, चरितार्थतया, एव, बभूवे ॥ ३६ ॥

तात्पर्यार्थः—पुराणपुरुषस्य तस्य विष्णोरुरःकण्ठादिस्थानेषु सम्यगुच्चारिताऽत एव प्राप्तसंस्कारा सरस्वती कृतार्थैव बभूव ॥ ३६ ॥

भाषाऽर्थः—पुराणपुरुष उस ( विष्णु ) के वर्णों के स्थान ( कंठ आदि ) से अच्छी तरह उच्चारण की गयी ( और ) शुद्धता को पाई सरस्वती कृतार्थ हुई ॥ ३६ ॥

अथ विष्णुमुखान्निःसृता दन्तकान्तिसहिता वाणी शुशुभ इत्याह—

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७ ॥

सञ्जीविनी—बभाविति । विभोर्विष्णोर्वदनादुद्गता निःसृता सदशनज्योत्स्ना दन्तकान्तिसहिता, इदं च विशेषणं धावल्यातिशयार्थम् । अत एव सा भारती चरणादङ्घ्रेः निर्याता चासौ शेषा च निर्यातशेषा, निःसृतावशिष्टेत्यर्थः। "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इत्यनुवर्त्य "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवद्भावः । निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । निर्यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव । ऊर्ध्वप्रवर्तिन्यूर्ध्ववाहिनी गङ्गेव बभौ, इत्युत्प्रेक्षा ॥ ३७ ॥

अन्वयः—विभोः, वदनोद्गता, सदशनज्योत्स्ना, सा, चरणात्, निर्यातशेषा, ऊर्ध्वप्रवर्तिनी, गङ्गा, इव, बभौ ॥ ३७ ॥

सुधा—विभोः = व्यापकस्य, विष्णोरिति यावत् । वदनोद्गता = मुखनिर्गता, सदशनज्यो-

त्स्ना = दन्तज्योतिःसहिता, सा = पूर्वोक्ता, भारतीत्यर्थः । चरणात् = पादात्, निर्यातशे-षा = निर्गतावशिष्टा, ऊर्ध्वप्रवर्तिनी = उपरिवाहिनी, गङ्गा = जाह्नवी, इव = यथा, बभौ = भाति स्म ॥ ३७ ॥

कोशः—'रदना दशना दन्ता रदाः' इत्यमरः । 'ज्योत्स्ना स्याज्ज्योतिः संयुक्तनिशि चन्द्रातपेऽपि च' इति, 'विभुः प्रभौ । व्यापके शङ्करे नित्ये' इति चानेकार्थसंग्रहः । 'वक्त्रा-स्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः ॥ ३७ ॥

समासादि—दशनानां ज्योत्स्नेति दशनज्योत्स्ना तया सहितेति सदशनज्योत्स्ना ( त० पु० ) । वदनादुद्गतेति वदनोद्गता ( त० पु० ) । निर्याता चासौ शेषेति निर्यातशेषा ( क० धा० ) । ऊर्ध्वं प्रवर्तत इत्यूर्ध्वप्रवर्त्तिनी ॥ ३७ ॥

व्याकरणम्—बभौ = भा + लिट् । उद्गता = उत् + गम् + क्तः + टाप् । निर्यात = निर् + या ( प्रापणे ), क्तः । प्रवर्त्तिनी = प्र + वृतु + इनिः + ङीप् ॥ ३७ ॥

वाच्यपरिवर्तनम्—विभोः, वदनोद्गतया, सदशनज्योत्स्नया, तया, चरणात्, निर्यातशे-षया, ऊर्ध्वप्रवर्तिन्या, गङ्गया, इव, बभे ॥ ३७ ॥

तात्पर्यार्थः—विष्णोर्मुखान्निःसृता दन्तकान्तिसहिता सा सरस्वती चरणान्निःसृताव-शिष्टा ऊर्ध्ववाहिनी गङ्गा इव शुशुभे ॥ ३७ ॥

भाषाऽर्थः—विष्णु के मुख से निकली दांतों की द्युति के सहित वह ( वाणी ), चरण से निकल कर शेष हुई ऊर्ध्व वाहिनी गंगा की नाई शोभित हुई ॥ ३७ ॥

हे देवाः ! युष्माकं महिमपराक्रमौ रावणेनाक्रान्तावित्यहं जाने इत्याह—

जाने वो रक्षसाऽऽक्रान्तावनुभावपराक्रमौ ।

अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८ ॥

सञ्जीविनी—यदाह भगवांस्तदाह—जाने इति । हे देवाः ! वो युष्माकमनुभावपरा-क्रमौ महिमपुरुषकारौ रक्षसा रावणेन अङ्गिनां शरीरिणां प्रथममध्यमावुभौ गुणौ सत्त्व-रजसी तमसेव तमोगुणेनेव, 'राहौ ध्वान्ते गुणे तमः' इत्यमरः । आक्रान्तौ जाने । वाक्यार्थः कर्म ॥ ३८ ॥

अन्वयः—'अहं' रक्षसा, वः, अनुभावपराक्रमौ, अङ्गिनां, प्रथममध्यमौ, उभौ, गुणौ, त-मसा, इव, आक्रान्तौ, जाने ॥ ३८ ॥

सुधा—'हे देवाः !' रक्षसा = राक्षसेन, रावणेनेति यावत् । वः = युष्माकम्, अनुभावप-राक्रमौ = प्रभावपुरुषार्थौ, अङ्गिनां = शरीरिणां, प्रथममध्यमौ = आद्यमध्यभागस्थौ, उभौ = द्वौ, गुणौ = सत्वरजोनामकौ, तमसा = तमोगुणेन, इव, आक्रान्तौ = व्याप्तौ, अधःकृताविति यावत् । जाने = जानामि, अहमिति शेषः ॥ ३८ ॥

कोशः—'अनुभावः प्रभावे स्यान्निश्चये भावसूचने' इत्यनेकार्थसंग्रहः ॥ ३८ ॥

समासादि—अनुभावश्च पराक्रमश्चेत्यनुभावपराक्रमौ ( द्व० ) अङ्गान्येषां सन्तीत्यङ्गिन-स्तेषामङ्गिनाम् । प्रथमश्च मध्यमश्चेति प्रथममध्यमौ ( द्व० ) ॥ ३८ ॥

व्याकरणम्—जाने = ज्ञा (अवबोधने), लट्, श्नादेशः, उत्तमपुरुषैकवचने । आक्रान्तौ = आ + क्रमु + क्तः । अङ्गिनाम् + अङ्ग + इनिः । मध्यमौ + मध्य + 'मध्यान्मः' इति मः ॥ ३८ ॥

वाच्यपरिवर्तनम्—'मया' रक्षः, वः, अनुभावपराक्रमौ, अङ्गिनां, प्रथममध्यमौ, उभौ, गुणौ, तमः, इव, आक्रान्तवान्, ज्ञायते ॥ ३८ ॥

तात्पर्यार्थः—हे देवाः ! रावणेन युष्माकं प्रभावपराक्रमौ शरीरिणां प्रथममध्यमौ द्वौ सत्वरजोगुणौ तमोगुणेनेवाक्रान्तौ विद्येते इत्यहं जानामि ॥ ३८ ॥

भाषाऽर्थः—( मैं ) आप लोगों की महिमा और पराक्रम राक्षस ( रावण ) से, शरीर वालों ( जनों ) के प्रथम और मध्यम ये दोनों गुण ( याने सत्वगुण और रजोगुण ) तमोगुण

से दबे हुये के समान दबे हैं जानताहूं ॥ ३८ ॥

अथ रावणेन तप्यमानं भुवनत्रयं मया विदितमित्याह—

विदितं तप्यमानं च तेन मे भुवनत्रयम् ।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥

सञ्जीविनी—विदितमिति । किञ्च अकामेनानिच्छयोपनतेन प्रमादादागतेनैनसा पापेन साधोः सज्जनस्य हृदयमिव तेन रक्षसा तप्यमानं संतप्यमानम्, तपेर्भौवादिकात्कर्मणि शानच् । भुवनत्रयं च मे विदितम्, मया ज्ञायत इत्यर्थः । "मतिबुद्धिपूजार्थेभ्यश्च" इत्यनेन वर्तमाने क्तः, "क्तस्य च वर्तमाने" इति षष्ठी ॥ ३९ ॥

अन्वयः—अकामोपनतेन, एनसा, साधोः, हृदयम्, इव, तेन, तप्यमानं, भुवनत्रयं, च, मे, विदितम् ॥ ३९ ॥

सुधा—अकामोपनतेन = अनभिलाषप्राप्तेन, एनसा = पापेन, साधोः = सत्पुरुषस्य, हृदयं = मनः, इव = यथा, तेन = पूर्वोक्तेन, रावणेनेत्यर्थः । तप्यमानं = संपीड्यमानं, भुवनत्रयं = लोकत्रयं, च, मे = मम, मयेत्यर्थः, विदितम् = अवगतं, ज्ञायत इत्यर्थः ॥ ३९ ॥

कोशः—'अथ जगती लोको विष्टपं भुवनं जगत्' इत्यमरः । 'एनः पापापराधयोः' इति मेदिनी ॥ ३९ ॥

समासादि—तप्यते इति तप्यमानम् । त्रयोऽवयवा अस्येति त्रयं, भुवनानां त्रयमिति भुवनत्रयम् ( त० पु० ) । न कामोऽकामस्तेनोपनतस्तेन अकामोपनतेन (त० पु०) । साध्नोति परकार्यमिति साधुस्तस्य साधोः ॥ ३९ ॥

व्याकरणम्—विदितं = विद् + 'मतिबुद्धि' इति क्तः + इट् । तप्यमानं = तप ( संतापे ), यक् + शानच् । मे—अत्र कर्तरि पदे 'क्तस्य च वर्तमाने' इति षष्ठी ॥ ३९ ॥

वाच्यपरिवर्तनम्—अकामोपनतेन, एनसा, साधोः, हृदयम्, इव, तेनं, तप्यमानं, भुवनत्रयम्, अहम्, विदितवान् ॥ ३९ ॥

तात्पर्यार्थः—हे देवाः ! अपरं च प्रमादात् प्राप्तेन पापेन सज्जनस्य हृदयमिव तेन रावणेन संतप्यमानं लोकत्रयं मया ज्ञायते ॥ ३९ ॥

भाषाऽर्थः—और बिना इच्छा से प्राप्त किये पाप से सज्जनों के हृदय की नाईं उस ( रावण ) से तपाये हुये तीनों लोक को मैं जान गया हूँ ॥ ३९ ॥

किचावयोः कार्यस्यैक्यात कर्तव्यविषयेष्विन्द्रेण 'इदं कुरु' इति प्रार्थनीयो नास्मीत्याह—

कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥

सञ्जीविनी—कार्येष्विति । किञ्च एककार्यत्वात् एकं कार्यं ययोस्तौ तयोर्भावः एककार्यत्वं तस्मादावयोरेककार्यकत्वाद्धेतोः कार्येषु कर्तव्यार्थेषु विषयेषु वज्रिणेन्द्रेणाभ्यर्थ्य इदं कुर्विति प्रार्थनीयो नास्मि । तथा हि वातः स्वयमेवाग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति, न तु वह्निप्रार्थनया इत्येवकारार्थः । प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः न तु परप्रार्थनया, स्वार्थश्चायं ममापीत्यर्थः ॥ ४० ॥

अन्वयः—एककार्यत्वात्, कार्येषु, 'अहं' वज्रिणा, अभ्यर्थ्यः, न, च, अस्मि, हि, वातः, स्वयम्, एव, अग्नेः, सारथ्यं, प्रतिपद्यते ॥ ४० ॥

सुधा—एककार्यत्वात् = आवयोः कार्यैक्यात्, कार्येषु = कर्तव्यविषयेषु, वज्रिणा = कुलिशमता, इन्द्रेणेति यावत् । अभ्यर्थ्यः = प्रार्थ्यः, न, च, अस्मि = न विद्ये, अहमिति शेषः । हि = यतः, वातः = पवनः, स्वयम् = आत्मना, एव, अग्नेः = वह्नेः, सारथ्यं = साहाय्यं, प्रतिपद्यते = प्राप्नोति, करोतीत्यर्थः । न त्वग्निप्रार्थनयेत्यर्थः ॥ ४० ॥

कोशः--'ह्लादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः' इति, 'नभस्वद्वातपवनपवमान-प्रभञ्जनाः' इति चामरः ॥ ४० ।'

समासादि--एकं कार्यं ययोस्तौ एककार्यौ तयोर्भाव एककार्यत्वं तस्मादेककार्यत्वात् ( ब० व्री० ) । अभ्यर्थयितुं योग्य अभ्यर्थ्यः । वज्रमस्यास्तीति वज्री तेन वज्रिणा । सारथेर्भावः सारथ्यम् ॥ ४० ॥

व्याकरणम्--कार्यं = कृ + 'ऋहलोर्ण्यत्' इति ण्यत् । अभ्यर्थ्यः = अभि + अर्थ ( उपयाच्ञायाम् ), यत् । वज्रिणा = वज्र + इनिः । सारथ्यं = सारथि + ष्यञ् । प्रतिपद्यते = प्रति + पद् ( गतौ ), लट् + श्यन् ॥ ४० ॥

वाच्यपरिवर्तनम्--एककार्यत्वात्, वज्रिणा, कार्येषु, 'मया' अभ्यर्थ्येन, न, च, भूयते, हि, वातेन, स्वयम् , एव, अग्नेः, सारथ्यं, प्रतिपद्यते ॥ ४० ॥

तात्पर्यार्थः--हे देवाः ! आवयोरेककार्य्यकरत्वात् कर्तव्यार्थेषु विषयेषु इन्द्रेण 'इदं कुरु' इति प्रार्थनीयोऽहं नास्मि, तथा हि वायुः स्वयमेवाग्नेः साहाय्यं करोति, न तु तत्प्रार्थनयेति ॥ ४० ॥

भाषाऽर्थः--और ( हमदोनों का ) एक कार्य होने से कार्यों में ( मैं ) इन्द्र से प्रार्थना के योग्य नहीं हूं, क्यों कि वायु अपने ही अग्नि की सहायता करती है ॥ ४० ॥

अथ रावणेन मच्चक्रार्थं दशमो मस्तको खड्गधारया न कर्तित इत्याह--

> स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।
> स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥

सञ्जीविनी—पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकन्धरेण यद्दशमं शिरोऽवशेषितं तन्मच्चक्रार्थमित्याह--स्वेति । स्वासिधारया स्वखड्गधारया परिहृतः, अच्छिन्न इत्यर्थः । दशमो मूर्धा मे मम चक्रस्य कामं पर्याप्तो लभ्यांशः प्राप्तव्यभाग इव तेन रक्षसा स्थापितः । तत्सर्वथा तमहं हनिष्यामीत्यर्थः ॥ ४१ ॥

अन्वयः--तेन, रक्षसा, स्वासिधारापरिहृतः, दशमः, मूर्द्धा, मे, चक्रस्य, कामं, लभ्यांशः, इव, स्थापितः ॥ ४१ ॥

सुधा--तेन = पूर्वोक्तेन, रक्षसा = राक्षसेन, रावणेनेति यावत् । स्वासिधारापरिहृतः = निजखड्गमुखाच्छिन्नः, दशमः = दशसंख्यापूरकः, मूर्द्धा = मस्तकः, मे = मम, चक्रस्य = चक्राख्यायुधस्य, कामं = यथेच्छम् , लभ्यांशः = प्राप्तव्यभागः, इव, स्थापितः = अवशेषितः ॥ ४१ ॥

कोशः--'खड्गादीनाञ्च निशितमुखे धारा प्रकीर्तिता' इति विश्वः । 'उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्' इति, 'अंशभागौ तु वण्टके' इति चामरः ॥ ४१ ॥

समासादि--स्वस्यासिरिति स्वासिस्तस्य धारा तया परिहृत इति स्वासिधारापरिहृतः ( त० पु० ) । लभ्यश्चासावंश इति लभ्यांशः ( क० धा० ) ॥ ४१ ॥

व्याकरणम्--परिहृतः = परि + हृञ् + क्तः । स्थापितः = ष्ठा + णिच् + पुक् + क्तः । दशमः = दशन् + 'तस्य पूरणे डट्' इति डट् + मडागमः ॥ ४१ ॥

वाच्यपरिवर्तनम्--तत् , रक्षः, स्वासिधारापरिहृतं, दशमं, मूर्द्धानं, मे, चक्रस्य, कामं, लभ्यांशम् , इव, स्थापितवत् ॥ ४१ ॥

तात्पर्यार्थः--यथा कश्चित् कस्मैचित् प्राप्तव्यभागं स्थापयति, तथा तेन रावणेन स्वखड्गधारयाऽच्छिन्नो दशमो मस्तको मच्चक्रार्थं स्थापितः । तस्मात्तच्छिरः सर्वथाहं

---

पौराणिकी कथा-पुरा किल रावणः शिवं प्रसादयितुं नव शिरांसि अग्नौ हुतवान । दशमशिरसः आरम्भे भगवान् शङ्करः प्रसन्नो बभूव । स दृष्ट्वाच्छिन्नत् स्वाभिलाषितं वव्र इत्यायनुसंधेया ।

छेत्स्यामीति ॥ ४१ ॥

भाषाऽर्थः—उस राक्षस ( रावण ) ने अपने खड्ग से नहीं काटे गये दशवें मस्तक को मेरे चक्र के लिये यथेच्छ प्राप्त करने योग्य भाग के समान रख छोड़ा है ॥ ४१ ॥

अथ 'मया' तस्य दुरात्मनो रावणस्यात्युत्कर्षो ब्रह्मणो वरदानात्सह्यते स्मेत्याह—

**स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।**

**अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥**

सञ्जीविनी—तर्हि किं प्रागुपेक्षितम्? अत आह—स्रष्टुरिति । किन्तु स्रष्टुर्ब्रह्मणो वरातिसर्गाद्वरदानाद्धेतोः मया तस्य दुरात्मनो रिपो रावणस्यात्यारूढमत्यारोहणम्, अतिवृद्धिरित्यर्थः । नपुंसके भावे क्तः । भोगिनः सर्पस्यात्यारूढं चन्दनेनेव सोढम् । चन्दनद्रुमस्यापि तथा सहनं स्रष्टुर्नियतेरिति द्रष्टव्यम् ॥ ४२ ॥

अन्वयः—तु, मया, स्रष्टुः, वरातिसर्गात्, तस्य, दुरात्मनः, रिपोः, अत्यारूढं, चन्दनेन, भोगिनः, 'अत्यारूढम्' इव, सोढम् ॥ ४२ ॥

सुधा—तु = किन्तु, मया = लोकानुग्रहकारिणा, विष्णुनेत्यर्थः । स्रष्टुः = विश्वसृजः, ब्रह्मण इति यावत् । वरातिसर्गात् = वरदानात्, तस्य = पूर्वोक्तस्य, दुरात्मनः = दुष्टस्वभावस्य, रिपोः = शत्रोः, रावणस्येत्यर्थः । अत्यारूढम् = अत्यारोहणम्, अत्युत्कर्ष इति यावत् । चन्दनेन = मलयजेन, भोगिनः = सर्पस्य, अत्यारूढमिति शेषः । इव, सोढं = सह्यते स्म ॥४२॥

कोशः—'स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः' इत्यमरः । 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च' इति धरणिः । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः ॥ ४२ ॥

समासादि—अतिसर्जनमतिसर्गः, वरस्यातिसर्ग इति वरातिसर्गस्तस्मात् वरातिसर्गात् ( त० पु० ) । दुष्टः आत्मा यस्य स तस्य दुरात्मनः ( ब० व्रीं० ) । भोगः ( फणः ) अस्य विद्यत इति भोगी तस्य भोगिनः ॥ ४२ ॥

व्याकरणम्—स्रष्टुः = सृज + तृच् । अत्यारूढम् = अति + रुह + क्तः । सोढं = षह + क्तः + 'हो ढः' इति हस्य ढत्वम्, 'झषस्तथोर्धोऽधः' इति निष्ठातकारस्य धकारः, 'ढो ढे लोपः' इति पूर्वढस्य लोपः । 'सहिवहोरोदवर्णस्य' इत्योकारः । भोगिनः = भोग + इनिः ॥ ४२ ॥

वाच्यपरिवर्तनम्—तु, अहं, स्रष्टुः, वरातिसर्गात्, तस्य, दुरात्मनः, रिपोः, अत्यारूढं, चन्दनः, भोगिनः, 'अत्यारूढम्' इव, सोढवान् ॥ ४२ ॥

तात्पर्यार्थः—यथा चन्दनेन सर्पस्यारोहणं सह्यते, तथैव, मया ब्रह्मणो वरदानाद्धेतोः दुरात्मनः शत्रोः रावणस्यारोहणं सह्यते स्म ॥ ४२ ॥

भाषाऽर्थः—किन्तु मैंने ब्रह्मा के वरदान से उस दुष्टात्मा शत्रु ( रावण ) की ज्यादती को, जैसे चन्दन वृक्ष सर्प के चढ़ने को सहन करता है, वैसे सहन किया ॥ ४२ ॥

अथ स रावणो ब्रह्माणं दैवसृष्टेरवध्यत्वं ययाच इत्याह—

**धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।**

**दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३ ॥**

सञ्जीविनी—संप्रति वरस्वरूपमाह-धातारमिति । स राक्षसस्तपसा प्रीतं सन्तुष्टं धातारं ब्रह्माणं मर्त्येषु विषये आस्थापराङ्मुख आदरविमुखः सन्, मर्त्याननादृत्येत्यर्थः । दैवादष्टविधात्सर्गाद्दैवसृष्टेरवध्यत्वं ययाचे हि ॥ ४३ ॥

अन्वयः—हि, सः, राक्षसः, तपसा, प्रीतं, धातारं, मर्त्येषु, आस्थापराङ्मुखः, 'सन्' दैवात्, सर्गात्, अवध्यत्वं, ययाचे ॥ ४३ ॥

सुधा—हि = यतः, सः = पूर्वोक्तः, राक्षसः = रावणः, तपसा = तपस्यया, प्रीतं = प्रसन्नं,

धातारं = ब्रह्माणं, मर्त्येषु = मनुष्येषु, आस्थापराङ्मुखः = आदरानभिमुखः, मनुष्याननादृत्येत्यर्थः । मनुष्याननपेक्ष्येत्यर्थो वा । सन्निति शेषः । दैवात् = (१) अष्टविधदैवात्, सर्गात् = सृष्टेः, दैवसृष्टेरित्यर्थः । अवध्यत्वम् = अहिंस्यत्वम्, अमरत्वमित्यर्थः । ययाचे = अयाचत ॥४३॥

कोशः--'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः' इत्यमरः । 'आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति' इति मेदिनी ॥ ४३ ॥

समासादि--हन्तुं योग्यो वध्यः, न वध्य इत्यवध्यस्तस्य भावोऽवध्यत्वम् । पराञ्चत्यनभिमुखो भवतीति पराङ्मुखः, आस्थया पराङ्मुख इत्यास्थापराङ्मुखः (त०पु०) ॥ ४३ ॥

व्याकरणम्--प्रीतं = प्रीञ् + क्तः । ययाचे = याचृ ( याचने--ऋदित् ), लिट् । अवध्यत्वं = न + हन् + यत् + 'हनश्च वधः' इति वधादेशेऽवध्यस्तस्मात् 'तस्य भावस्त्वतलौ' इति त्वप्रत्ययः ॥ ४३ ॥

वाच्यपरिवर्तनम्--हि, तेन, राक्षसेन, तपसा, प्रीतः, धाता, मर्त्येषु, आस्थापराङ्मुखेन, 'सता' दैवात्, सर्गात्, अवध्यत्वं, ययाचे ॥ ४३ ॥

तात्पर्यार्थः--स रावणः तपसा सन्तुष्टं ब्रह्माणं जनेषु विषये आदरविमुखः सन् अष्टविधदैवसृष्टेरवध्यत्वं ययाचे ॥ ४३ ॥

भाषाऽर्थः--उस राक्षस ( रावण ) ने तपस्यासे संतुष्ट हुये ब्रह्मा से मनुष्यों के आदर से रहित होते हुये देव संबन्धी ( आठ प्रकार की ) सृष्टि से ( अपने को ) अवध्यपने की याचना कर लिया है ॥ ४३ ॥

अथाहं दाशरथिर्भूत्वा तच्छिरोत्पलराशिं रणभूमेः पूजायोग्यं करिष्यामीत्याह--

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

सञ्जीविनी--तर्हि का गतिः ? इत्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह-स इति । सोऽहं दशरथस्यापत्यं पुमान्दाशरथिः, "अत इञ्" इति इञ्प्रत्ययः । रामो भूत्वा तीक्ष्णैः शरैस्तस्य रावणस्य शिरांस्येव कमलानि तेषामुच्चयं राशिं रणभूमेर्बलिक्षमं पूजार्हं करिष्यामि । पुष्पविशदा हि पूजेति भावः ॥ ४४ ॥

अन्वयः--सः, अहं, दाशरथिः, भूत्वा, तच्छिरःकमलोच्चयं, तीक्ष्णैः, शरैः, रणभूमेः, बलिक्षमं, करिष्यामि ॥ ४४ ॥

सुधा--सः = पूर्वोक्तः, अहं = विष्णुः, दाशरथिः = दशरथात्मजः, रामचन्द्र इति यावत् । भूत्वा = प्रभूय, तच्छिरःकमलोच्चयं = रावणोत्तमाङ्गरूपपद्मराशिं, तीक्ष्णैः = निशितैः, शरैः = बाणैः, रणभूमेः = समरभूमेः, बलिक्षमं = पूजायोग्यं, करिष्यामि = विधास्यामि ॥ ४४ ॥

कोशः--'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । 'शरस्तु तेजने बाणे दध्यग्रे ना शरं जले' इति विश्वमेदिन्यौ । 'उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः ॥४४॥

समासादि--दशरथस्यापत्यं पुमान् दाशरथिः । रणस्य भूमिरिति रणभूमिस्तस्या रणभूमेः ( त० पु० ) । बलेः क्षम इति बलिक्षमस्तं बलिक्षमम् ( त० पु० ) । तस्य शिरांसीति तच्छिरांसि ( त० पु० ), तान्येव कमलानीति तच्छिरःकमलानि (क० धा०), तेषामुच्चयस्तं तच्छिरःकमलोच्चयम् ( त० पु० ) ॥ ४४ ॥

( १ ) अष्टविधो देवसर्गः श्रीमद्भागवते दशमस्कन्धे उक्तः, तथाहि--
"देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ।
गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥
भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ।" इति ।

व्याकरणम्--दाशरथिः = दशरथ + 'अत इञ्' इति इञ् । करिष्यामि = कृ + लृट् + मिप् + स्यः + इट् ॥ ४४ ॥

वाच्यपरिवर्तनम्--तेन, मया, दाशरथिना, भूत्वा, तच्छिरःकमलोच्चयः, तीक्ष्णैः, शरैः, रणभूमेः, बलिक्षमः, करिष्यते ॥ ४४ ॥

तात्पर्यार्थः—सोऽहं विष्णुर्दशरथाऽऽत्मजो भूत्वा रावणस्य मस्तकरूपपद्मराशिं तीक्ष्णैः शरैः समरभूमेः पूजायोग्यं करिष्यामि ॥ ४४ ॥

भाषाऽर्थः--वह मैं दशरथ का पुत्र होकर उस (रावण) के शिर रूपी कमलों की राशि को तीखे बाणों से रणभूमि की पूजा के योग्य करूंगा ॥ ४४ ॥

अथ यूयं याज्ञिकैरुपहृतं हविर्भागं पुनः शीघ्रमेव ग्रहीष्यध्व इत्याह—

**अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।**
**मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥**

सञ्जीविनी--अचिरादिति । हे देवाः ! यज्वभिर्याज्ञिकैर्विधिवत्कल्पितमुपहृतं भागं हविर्भागं मायाविभिर्मायावद्भिः, "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । निशाचरै रक्षोभिरनालीढमनास्वादितं यथा तथाऽचिरात्पुनरादास्यध्वे ग्रहीष्यध्वे ॥ ४५ ॥

अन्वयः--'यूयम्' यज्वभिः, विधिवत्, कल्पितं, भागं, मायाविभिः, निशाचरैः, अनालीढम्, अचिरात्, पुनः, आदास्यध्वे ॥ ४५ ॥

सुधा--'हे देवाः !' यज्वभिः = ऋत्विग्भिः, विधिवत् = यथाशास्त्रं, कल्पितं = प्रदत्तं, भागम् = अंशं, मायाविभिः = मायावद्भिः, निशाचरैः = राक्षसैः, अनालीढम् = अनास्वादितम्, अचिरात् = शीघ्रं, पुनः = भूयः, आदास्यध्वे = प्राप्स्यथ, यूयमिति शेषः ॥४५॥

कोशः—'अंशभागौ तु वण्टके' इत्यमरः ॥ ४५ ॥

समासादि—मायाऽस्त्येषां ते मायाविनस्तैर्मायाविभिः । निशायां चरन्तीति ते निशाचरास्तैर्निशाचरैः ॥ ४५ ॥

व्याकरणम्—यज्वभिः = यज (देवपूजासङ्गत्यादौ), 'सुयजोर्ङ्वनिप्' इति ङ्वनिप् । कल्पितं = कृपू (सामर्थ्ये—ऊकारेत्), क्तः + इट् + 'कृपो रो लः' इति लत्वम् । अनालीढं = न + आ + लिह (आस्वादने), क्तः + 'होढः' इति हस्य ढत्वं, 'झषस्तथोर्धोऽधः' इति तस्य धत्वम्, ष्टुत्वम्, 'ढो ढे लोपः' इति पूर्वढकारस्य लोपः । 'ढ्रलोपे' इति दीर्घः । आदास्यध्वे = आ + डुदाञ् (दाने--डुञित्), लृट् ॥ ४५ ॥

वाच्यपरिवर्तनम्—'युष्माभिः' यज्वभिः, विधिवत्, कल्पितः, भागः, मायाविभिः, निशाचरैः, अनालीढः, अचिरात्, पुनः, आदास्यते ॥ ४५ ॥

तात्पर्यार्थः—हे देवाः ! यूयं यजमानैर्विधिपूर्वकमुपकल्पितं हविर्भागं मायावद्भी राक्षसैरनास्वादितं शीघ्रमेव पुनर्ग्रहीष्यध्वे ॥ ४५ ॥

भाषाऽर्थः—(हे देवताओं ! तुम सब) यज्ञ करने वालों से विधिपूर्वक दिये गये भाग को मायावी निशाचरों से स्वाद नहीं लिये गये शीघ्रही फिर प्राप्त करोगे ॥ ४५ ॥

अथ भवन्तो व्योम्नि रावणविमानदर्शनभयं त्यजन्त्वित्याह—

**वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।**
**पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥**

सञ्जीविनी--वैमानिका इति । मरुतां देवानां यद्वा वायूनां पथि व्योम्नि वैमानिका विमानैश्चरन्तः, "चरति" इति ठक्प्रत्ययः । मेघावरणतत्परा रावणभयान्मेघेष्वन्तर्धानतत्पराः पुण्यकृतः सुकृतिनः पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन यः संक्षोभो भयचकितं तं त्यजन्तु । 'संक्षोभो भयचकितम्' इति शब्दार्णवः ॥ ४६ ॥

अन्वयः—मरुतां, पथि, वैमानिकाः, मेघावरणतत्पराः, पुण्यकृतः, 'भवन्तः' पुष्पकालोकसङ्क्षोभं, त्यजन्तु ॥ ४६ ॥

सुधा—मरुतां = देवानां, पथि = मार्गे, आकाश इत्यर्थः । वैमानिकाः = व्योमयानिकाः, विमानविहरणशीला इति यावत् । मेघावरणतत्पराः = अभ्रतिरोधानासक्ताः, पुण्यकृतः = पुण्यशीलाः, सुकृतिन इत्यर्थः । पुष्पकालोकसङ्क्षोभं = पुष्पकाख्यरावणविमानावलोकनभयं, त्यजन्तु = दूरीकुर्वन्तु, भवन्त इति शेषः ॥ ४६ ॥

कोशः—'व्योमयानं विमानोऽस्त्री' इत्यमरः । 'मरुद्देवे समीरे ना ग्रन्थिपर्णे नपुंसकम्' इति मेदिनी । 'अभ्रं मेघो वारिवाहस्तनयित्नुर्बलाहकः' इत्यमरः ॥ ४६ ॥

समासादि—विमानैश्चरन्तीति वैमानिकाः । पुण्यं कुर्वन्तीति पुण्यकृतः । पुष्पकस्यालोक इति पुष्पकालोकस्तेन सङ्क्षोभस्तं पुष्पकालोकसङ्क्षोभम् ( त० पु० ) । आवरणाय तत्परा इत्यावरणतत्पराः, मेघेषु आवरणतत्परा इति मेघावरणतत्पराः ( त० पु० ) ॥ ४६ ॥

व्याकरणम्—वैमानिकाः = विमान + 'चरति' इति + ठक् + इकादेशः । त्यजन्तु = त्यज + लोट् ॥ ४६ ॥

वाच्यपरिवर्तनम्—मरुतां, पथि, वैमानिकैः, मेघावरणतत्परैः, पुण्यकृद्भिः, 'भवद्भिः' पुष्पकालोकसङ्क्षोभः, त्यज्यताम् ॥ ४६ ॥

तात्पर्यार्थः—देवानां मार्गे विमानविहरणशीलाः मेघेषु अन्तर्धानासक्ताः सुकृतिनो भवन्तो रावणस्य पुष्पकाख्यविमानदर्शनजन्यभयं त्यजन्तु ॥ ४६ ॥

भाषाऽर्थः—देवताओं के मार्ग ( आकाश ) में विमान से घूमने वाले, मेघों में छिपने के लिये तत्पर पुण्यवान् ( आप देवता लोग ) पुष्पकविमान को देखने के कारण उत्पन्न हुये भय को छोड़ दें ॥ ४६ ॥

अथ यूयं रावणप्रगृहीतस्वर्गीयाङ्गनानां वेणीबन्धान् मोक्ष्यध्व इत्याह—

**मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।**
**शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥**

सञ्जीविनी—मोक्ष्यध्व इति । हे देवाः ! यूयं शापेन नलकूबरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कचग्रहाः केशाकर्षास्तैरदूषितानुपहतान्स्वर्गबन्दीनां हृतस्वर्गाङ्गनानां वेणीबन्धान्मोक्ष्यध्वे । पुरा किल नलकूबरेणात्मानमभिसरन्त्या रम्भाया बलात्कारेण सम्भोगात्क्रुद्धेन दुरात्मा रावणः शप्तः स्त्रीणां बलाद्ग्रहणे मूर्द्धा ते शतधा भविष्यतीति भारतीया कथानुसंधेया ॥ ४७ ॥

अन्वयः—'यूयम्' शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः, अदूषितान्, स्वर्गबन्दीनां, वेणीबन्धान्, मोक्ष्यध्वे ॥ ४७ ॥

सुधा—शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः = (१)नलकूबरशापेन प्रतिबद्धरावणबलात्करणकेशाकर्षैः, अदूषितान् = अनुपहतान्, अवशिष्टानित्यर्थः । स्वर्गबन्दीनां = प्रगृहीतस्वर्गीयाङ्गनानां, वेणीबन्धान् = सर्पाकाररचितकेशबन्धान्, मोक्ष्यध्वे = मोचनं करिष्यध्वे, यूयमिति शेषः ॥ ४७ ॥

कोशः—'वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे' इति, 'पौलस्त्यो रावणे श्रीदे' इति चानेकार्थसंग्रहः ॥ ४७ ॥

---

( १ ) महाभारतीया कथा—पुरा किल नलकूबरसन्निकटमागच्छन्त्या रम्भानामिकया देवाङ्गनया सह बलात्कारेण रावणेन सम्भोगः कृतः । क्रुद्धः स नलकूबरस्तं शापितवान्—'स्त्रीणां बलात्कारेण कचग्रहणे त्वं मरिष्यसि' इति । अतस्तेन स्वर्गादानीय या देवाङ्गना बन्दीकृताः, तासां केशा बन्धनविशिष्टा आसन्निस्यायनुसन्धेया ।।

समासादि—स्वर्गस्य बन्द्य इति स्वर्गबन्द्यस्तासां स्वर्गबन्दीनाम् (त०पु०)। वेण्य एव-बन्धास्तान् वेणीबन्धान् (क०धा०)। न दूषिता इत्यदूषितास्तानदूषितान्। कचानां ग्रहा इति कचग्रहाः, पुलस्त्यस्यापत्यं पुमान् पौलस्त्यस्तस्य बलात्कारेण ये कचग्रहा इति पौलस्त्य-बलात्कारकचग्रहाः (त०पु०), शापेन यन्त्रिताश्च ते पौलस्त्यबलात्कारकचग्रहा इति शापय-न्त्रितपौलस्त्यबलात्कारकचग्रहास्तैः शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः (क०धा०) ॥४७॥

व्याकरणम्—मोक्ष्यध्वे = मुच्लृ ( मोचने-लृदित ), लृट्। यन्त्रित = यत्रि ( सङ्कोचे—इकारेत् ), क्तः + इट् + नुम् ॥ ४७ ॥

वाच्यपरिवर्तनम्—'युष्माभिः' शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः, अदूषिताः, स्व-र्गबन्दीनां, वेणीबन्धाः, मोक्ष्यन्ते ॥ ४७ ॥

तात्पर्यार्थः—हे देवाः ! यूयं नलकूबरशापेन प्रतिबद्धरावणबलात्कारकेशाकर्षैरनुपहतान् हृतस्वर्गाङ्गनानां वेणीबन्धान् मोक्ष्यध्वे ॥ ४७ ॥

भाषाऽर्थः—( हे देवताओं ! तुम लोग ) शाप के कारण बंधे हुये रावण के बल पूर्वक केशों के खीचने से अदूषित, हवालात में रक्खी गयीं स्वर्ग की अप्सराओं के वेणी बन्धन को खोलोगे ॥ ४७ ॥

अथ भगवान् विष्णुर्देवरूपसस्यमभिषिच्यान्तर्दध इत्याह—

**रावणावग्रहक्लान्तमिति वागमृतेन सः ।**
**अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥**

सञ्जीविनी—रावणेति। स कृष्णो विष्णुः स एव मेघो नीलमेघश्च विश्रवसोऽपत्यं पुमा-निति विग्रहे रावणः। विश्रवःशब्दाच्छिवादित्वादणि विश्रवसः, "विश्रवणरवणौ" इत्य-न्तर्गणसूत्रेण विश्रवःशब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम्। स एवावग्रहो वर्षप्रतिबन्धः तेन क्लान्तं म्लानं मरुतो देवा एव सस्यं तत्, इत्येवंरूपेण वागमृतेन वाक्सलि-लेन, 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेऽमृतम्' इति विश्वः। अभिवृष्याभिषिच्य तिरो-दधेऽन्तर्दधे ॥ ४८ ॥

अन्वयः—सः, कृष्णमेघः, रावणावग्रहक्लान्तं, मरुत्सस्यम्, इति, वागमृतेन, अभिवृष्य, तिरोदधे ॥ ४८ ॥

सुधा—सः = पूर्वोक्तः, कृष्णमेघः = विष्णुरूपबलाहकः, रावणावग्रहक्लान्तं = दशाननरूपा-नावृष्ट्या म्लानं, मरुत्सस्यं = देवरूपधान्यादिकम्, इति = एवं, वागमृतेन = वचनरूपजलेन अभिवृष्य = अभिषिच्य, तिरोदधे = अन्तर्दधे ॥ ४८ ॥

कोशः—'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्। पयः कीलालममृतम्' इत्य-मरः। 'कृष्णः काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ। कृष्णा तु नील्यां द्रौपद्यां पिप्प-लीद्राक्षयोरपि। कृष्णं तु मरीचे लोहे' इति हैमः ॥ ४८ ॥

समासादि—विश्रवसोऽपत्यं पुमान् रावणः, स एवावग्रह इति रावणावग्रहः (क० धा०), तेन क्लान्तमिति रावणावग्रहक्लान्तम् ( त० पु० )। वागेवामृतं तेन वागमृतेन ( क० धा० )। मरुदेव सस्यमिति मरुत्सस्यम् ( क० धा० )। कृष्ण एव मेघ इति कृष्ण-मेघः ( क० धा० ) ॥ ४८ ॥

व्याकरणम्—रावण = विश्रवस् + शिवादित्वाद्यण् + 'विश्रवणरवणौ' इति शिवाद्यन्तर्गण-सूत्रेण रवणादेशः। अभिवृष्य = अभि + वृषु ( सेचने—उकारेत् ), क्त्वा, ल्यबादेशः ॥ ४८ ॥

वाच्यपरिवर्तनम्—तेन, कृष्णमेघेन, रावणावग्रहक्लान्तं, मरुत्सस्यम्, इति, वागमृतेन, अभिवृष्य, तिरोदधे ॥ ४८ ॥

तात्पर्यार्थः—विष्णुरूपमेघो रावणरूपानावृष्ट्या म्लानं देवरूपसस्यमित्थं वचनरूपजले-नाभिषिच्यान्तर्दधे ॥ ४८ ॥

भाषाऽर्थः—वह विष्णुरूपी मेघ रावणरूपी अवर्षण से मलिन हुये देवतारूपी सस्य को इस प्रकार वचन रूप जलसे सींचकर अन्तर्धान हो गये ॥ ४८ ॥

अथ देवा विष्णुसहायताऽर्थं सुग्रीवादिरूपेण जाता इत्याशयेनाह—

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥

सञ्जीविनी—पुरुहूतेति। पुरुहूतप्रभृतय इन्द्राद्याः सुराः सुरकार्ये रावणवधरूप उद्यतं विष्णुमंशैर्मात्राभिः द्रुमाः पुष्पैः स्वांशैर्वायुमिव अनुययुः। सुग्रीवादिरूपेण वानरयोनिषु जाता इत्यभिप्रायः ॥ ४९ ॥

अन्वयः—पुरुहूतप्रभृतयः, सुराः, अंशैः, सुरकार्योद्यतं, विष्णुं, द्रुमाः, पुष्पैः, वायुम्, इव, अनुययुः ॥ ४९ ॥

सुधा—पुरुहूतप्रभृतयः = इन्द्राद्याः, सुराः = देवाः, अंशैः = मात्राभिः, सुरकार्योद्यतं = रावणवधरूपदेवकार्यासक्तं, विष्णुं = नारायणं, द्रुमाः = वृक्षाः, पुष्पैः = कुसुमैः, वायुं = पवनम्, इव = यथा, अनुययुः = अनुजग्मुः ॥ ४९ ॥

कोशः—'अमरानिर्जरादेवास्त्रिदशा विबुधा सुराः' इति, 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः' इति चामरः ॥ ४९ ॥

समासादि—पुरु ( प्रचुरं ) हूतम् ( आह्वानं ) यज्ञेष्वस्येति पुरुहूतः, स प्रभृतिर्येषां ते पुरुहूतप्रभृतयः ( ब० व्री० )। सुराणां कार्यमिति सुरकार्यं तस्मिन्नुद्यतस्तं सुरकार्योद्यतम् ( त० पु० ) ॥ ४९ ॥

व्याकरणम्—उद्यतम् = उत् + यम् + क्तः। अनुययुः = अनु + या + लिट् ॥ ४९ ॥

वाच्यपरिवर्तनम्—पुरुहूतप्रभृतिभिः, सुरैः, अंशैः, विष्णुः, द्रुमैः, पुष्पैः, वायुः, इव, अनुयये ॥ ४९ ॥

तात्पर्यार्थः—यथा वृक्षाः स्वांशैः पुष्पैर्वायुमनुगच्छन्ति, तथैव इन्द्राद्या देवा मात्राभी रावणवधरूपदेवकार्यं उद्यतं विष्णुमनुजग्मुः ॥ ४९ ॥

भाषाऽर्थः—इंद्र आदि देवता लोग ( अपने ) अंश से देवकार्य में लगे हुये विष्णु के पीछे, जैसे वृक्ष ( अपने अंश ) पुष्पों से वायु के पीछे जाते हैं, वैसे गये ॥ ४९ ॥।

अथाग्नेः सकाशात् कश्चित् पुरुषः प्रादुर्बभूवेत्याह—

अथ तस्य विशाम्पत्युरन्ते काम्यस्य कर्मणः।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥

सञ्जीविनी—अथेति। अथ तस्य विशांपत्युर्दशरथस्य सम्बन्धिनः काम्यस्य कामयितुमर्हस्यार्थात्पुत्रार्थं वाञ्छितस्य कर्मणः पुत्रकामेष्टेरन्तेऽवसानेऽग्नेः पावकात्पुरुषः कश्चिद्दिव्यः पुमानृत्विजां विस्मयेन सह प्रबभूव प्रादुर्बभूव। तदाविर्भावात्तेषामपि विस्मयोऽभूदित्यर्थः ॥५०॥

अन्वयः—अथ, तस्य, विशां, पत्युः, काम्यस्य, कर्मणः, अन्ते, अग्नेः, पुरुषः, ऋत्विजां, विस्मयेन, सह, प्रबभूव ॥ ५० ॥

सुधा—अथ = अनन्तरं, तस्य = पूर्वोक्तस्य, विशां = नृणां, पत्युः = स्वामिनः, दशरथस्येत्यर्थः। काम्यस्य = अभिलाषयुक्तस्य, कर्मणः = अनुष्ठानस्य, पुत्रकामेष्टेरित्यर्थः। अन्ते = अवसाने, अग्नेः = वह्नेः, पुरुषः = नरः, अग्नेः सकाशात्कश्चिद्दिव्यजन इत्यर्थः। ऋत्विजां = याजकानां, विस्मयेन = आश्चर्येण, सह = साकं, प्रबभूव = प्रगटो बभूव ॥ ५० ॥

कोशः—'विट् प्रवेशे नृवैश्ययोः' इत्यनेकार्थसंग्रहः। 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता' इति, 'विस्मयोऽद्भुतमाश्चर्यं चित्रमपि' इति, 'ऋत्विजो याजकाश्च ते' इति चामरः ॥ ५० ॥

समासादि—कामो विद्यते यत्र तत् काम्यं तस्य काम्यस्य ॥ ५० ॥

व्याकरणम्—काम्यस्य = काम + 'अन्यत्रापि दृश्यन्ते' इति वार्तिकेन यप्। प्रबभूव = प्र + भू + लिट् ॥ ५० ॥

वाच्यपरिवर्तनम्—अथ, तस्य, विशां, पत्युः, काम्यस्य, कर्मणः, अन्ते, अग्नेः, पुरुषेण, ऋत्विजां, विस्मयेन, सह, प्रबभूवे ॥ ५० ॥

तात्पर्यार्थः—अथ नरपतेस्तस्य दशरथस्य पुत्रकामेष्टेरन्ते अग्नेः सकाशात् कश्चिद्दिव्य-पुरुषो याज्ञिकानामाश्चर्येण सह प्रादुर्बभूव ॥ ५० ॥

भाषाऽर्थः—इसके बाद मनुष्यों के स्वामी उस ( दशरथ ) के काम्य कर्म ( पुत्रेष्टि यज्ञ ) के अंत में अग्नि से एक ( दिव्य ) पुरुष ऋत्विजों के आश्चर्य के साथ निकला ॥५०॥

अथ स पुरुषो बाहुभ्यां पयश्चरुं वहन् प्रबभूवेत्याह—

**हैमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।**
**अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥**

सञ्जीविनी—तमेव पुरुषं विशिनष्टि—हैमेति । आद्यस्य पुंसो विष्णोरनुप्रवेशादधिष्ठाना-द्धेतोस्तेन दिव्यपुरुषेणापि दुर्वहं चतुर्दशभुवनोदरस्य भगवतो हरेरतिगरीयस्त्वाद्वोढुमशक्यं हैमपात्रगतं पयसि पक्वं चरुं पयश्चरुं पायसान्नं दोर्भ्यामादधानो वहन्, 'अनल्पाग्निभि-रूष्मपक्व ओदनश्चरुः' इति याज्ञिकाः ॥ ५१ ॥

अन्वयः—'पुरुषः' आद्यस्य, पुंसः, अनुप्रवेशात्, तेन, अपि, दुर्वहं, हैमपात्रगतं, पयश्चरुं, दोर्भ्याम्, आदधानः, 'प्रबभूव' ॥ ५१ ॥

सुधा—आद्यस्य = पुराणस्य, पुंसः = पुरुषस्य, विष्णोरित्यर्थः । अनुप्रवेशात् = अधि-ष्ठानात्, तेन = पूर्वोक्तेन, दिव्यपुरुषेणेत्यर्थः । अपि, दुर्वहं = दुर्धरं, कष्टेन वहनयोग्यमिति यावत् । हैमपात्रगतं = सुवर्णभाजनस्थं, पयश्चरुं = दुग्धपक्वहव्यान्नं, दोर्भ्यां = बाहुभ्याम्, आदधानः = धार्यमाणः, 'पुरुषः—प्रबभूव' इति शेषः ॥ ५१ ॥

कोशः—'स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम्' इत्यमरः । 'पात्रं तु कूलयोर्मध्ये पर्णे नृपति मन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्त्तरि' इति हैमः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । 'अथ चरुः पुमान् हव्यान्नभाण्डयोः' इति मेदिनी ॥ ५१ ॥

समासादि—हेम्नः पात्रमिति हेमपात्रं तद्गतस्तं हेमपात्रगतम् ( त० पु० ) । पयसि-पक्वश्चरुरिति पयश्चरुस्तं पयश्चरुम् । आदौ भव आद्यस्तस्याद्यस्य । दुःखेन वहतीति दुर्व-हस्तं दुर्वहम् ॥ ५१ ॥

व्याकरणम्—आदधानः = आ + धा + शानच् । आद्यस्य = आदि + दिगादित्वाद्यत् । दुर्वहं = दुर् + वह + पचाद्यच् ॥ ५१ ॥

वाच्यपरिवर्तनम्—'पुरुषेण' आद्यस्य, पुंसः, अनुप्रवेशात्, तेन, अपि, दुर्वहं, हैमपात्रगतं, पयश्चरुं, दोर्भ्याम्, आदधानेन, 'प्रबभूवे' ॥ ५१ ॥

तात्पर्यार्थः—स दिव्यपुरुषः चतुर्दशभुवनोदरस्यादिपुरुषस्य भगवतो विष्णोरधिष्ठाने-नातिगरीयस्त्वात्तेन दिव्यपुरुषेणापि वोढुमशक्यं सुवर्णपात्रगतं पायसान्नं बाहुभ्यां वहन् प्रादुर्बभूव ॥ ५१ ॥

भाषाऽर्थः—( वह दिव्यपुरुष ) आदि पुरुष ( विष्णु ) के प्रवेश करने के कारण उस ( दिव्यपुरुष ) से भी दुःख से धारण करने योग्य सोने के पात्र में पूर्ण हुये खीर को हाथों से धारण किये हुये निकला ॥ ५१ ॥

अथ दशरथस्तेन दिव्यपुरुषेण प्रापितं पायसान्नं गृहीतवानित्याह—

**प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।**

**वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥**

सञ्जीविनी—प्राजापत्येति । नृपो दशरथः प्राजापत्येन प्रजापतिसम्बन्धिना पुरुषेणोपनीतं न तु वसिष्ठेन, "प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप !" इति रामायणात् । तदन्नं पायसाऽन्नम्, अद्यत इत्यन्नम् । उदन्वतोदधिनाविष्कृतं प्रकाशितं पयसां सारममृतं वृषा वासव इव, 'वासवो वृत्रहा वृषा' इत्यमरः । प्रत्यग्रहीत्स्वीचकार ॥ ५२ ॥

अन्वयः—नृपः, प्राजापत्योपनीतं, तत्, अन्नम्, उदन्वता, आविष्कृतं, पयसां, सारं, वृषा, इव, प्रत्यग्रहीत् ॥ ५२ ॥

सुधा—नृपः = राजा, दशरथ इति यावत् । प्राजापत्योपनीतं = प्रजापतिसम्बन्धिपुरुषेण प्रापितं, तत् = पूर्वोक्तम्, अन्नं = पायसान्नम्, उदन्वता = सागरेण, आविष्कृतं = प्रकटितं, पयसां = जलानां, सारं = स्थिरांशम्, अमृतमित्यर्थः । वृषा = इन्द्रः, इव = यथा, प्रत्यग्रहीत् = गृहीतवान् ॥ ५२ ॥

कोशः—'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । पयः कीलालममृतम्' इति, 'सारो बले स्थिरांशे च' इति, 'उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः' इति चामरः ॥५२॥

समासादि—प्रजापतिः देवताऽस्येति प्राजापत्यं तेनोपनीतमिति प्राजापत्योपनीतम् ( त० पु० ) ॥ ५२ ॥

व्याकरणम्—प्राजापत्य = प्रजापति + 'साऽस्य देवता' इत्यण् । प्रत्यग्रहीत् = प्रति + अ + ग्रह + लुङ् । आविष्कृतम् = आविस् + कृ + क्तः ॥ ५२ ॥

वाच्यपरिवर्तनम्—नृपेण, प्राजापत्योपनीतं, तत्, अन्नम्, उदन्वता, आविष्कृतः, पयसां, सारः, वृष्णा, इव, प्रत्यग्राहि ॥ ५२ ॥

तात्पर्यार्थः—यथेन्द्रः समुद्रेण प्रकटितं पयसां सारममृतं स्वीकृतवान्, तथा राजा दशरथः प्रजापतिसम्बन्धिना पुरुषेण प्रदत्तं तत्पायसान्नं स्वीकृतवान् ॥ ५२ ॥

भाषाऽर्थः—राजा ( दशरथ ) ने प्रजापति संबन्धी पुरुष से दिये गये उस ( पायस ) अन्न को, समुद्र से प्रगट हुये जल के सार ( अमृत ) को इन्द्र की भांति ग्रहण किया ॥५२॥

अथ यस्माद् विष्णुरपि दशरथे उत्पत्तिं कामितवानिति हेतोरन्यदुर्लभास्तस्य गुणा व्याख्याता इत्याह—

**अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।**
**प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३ ॥**

सञ्जीविनी—अनेनेति । तस्य राज्ञो दशरथस्यान्यदुर्लभा असाधारणा गुणा अनेन कथिता व्याख्याताः यद्यस्मात्त्रयो लोकास्त्रैलोक्यम्, चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य प्रभवः कारणं विष्णुरपि तस्मिन् राज्ञि प्रसूतिमुत्पत्तिं चकमे कामितवान् । त्रिभुवनकारणस्यापि कारणमिति परमावधिर्गुणसमाश्रय इत्यर्थः ॥ ५३ ॥

अन्वयः—तस्य, राज्ञः, अन्यदुर्लभाः गुणाः, अनेन, कथिताः, यत्, त्रैलोक्यप्रभवः, अपि, तस्मिन्, प्रसूतिं, चकमे ॥ ५३ ॥

सुधा—तस्य = पूर्वोक्तस्य, राज्ञः = नृपस्य, दशरथस्येति यावत् । अन्यदुर्लभाः = परदुष्प्राप्याः, गुणाः = महिमानः, अनेन = अमुना कारणेन, कथिताः = उदीरिताः, यत् = यस्मात्, त्रैलोक्यप्रभवः = त्रिभुवनकारणं, विष्णुरित्यर्थः । अपि, तस्मिन् = दशरथे, प्रसूतिम् = उद्भवम्, उत्पत्तिमिति यावत् । चकमे = कामयाञ्चक्रे ॥ ५३ ॥

कोशः—'अथ जगती लोको विष्टपं भुवनं जगत्' इत्यमरः ॥ ५३ ॥

समासादि—अन्यैर्दुर्लभा इत्यन्यदुर्लभाः ( त० पु० ) । प्रसवनं प्रसूतिस्तां प्रसूतिम् । त्रयो लोकास्त्रैलोक्यम्, प्रभवत्यस्मादिति प्रभवः, त्रैलोक्यस्य प्रभव इति त्रैलोक्यप्रभवः ( त० पु० ) ॥ ५३ ॥

व्याकरणम्—कथिता = कथ ( वाक्यप्रबन्धने ) क्तः । प्रसूतिं = प्र + षूञ् ( प्राणिगर्भविमोचने—ञित् ), क्तिन् । चकमे = कम् + लिट् । त्रैलोक्य = त्रिलोक + चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् ॥ ५३ ॥

वाच्यपरिवर्तनम्—तस्य, राज्ञः, अन्यदुर्लभान्, गुणान्, अनेन, कथितवान्, यत, त्रैलोक्यप्रभवेण, अपि, तस्मिन्, प्रसूतिः, चकमे ॥ ५३ ॥

तात्पर्यार्थः—यस्मात् त्रिभुवनकारणं विष्णुरपि तस्मिन् दशरथे उत्पत्तिं कामितवान् इति कारणेन तस्य राज्ञोऽन्यदुर्लभा गुणा उदीरिताः ॥ ५३ ॥

भाषार्थः—उस राजा ( दशरथ ) के दूसरे से दुर्लभ गुण इस ( कारण ) से कहे गये, जो तीनों लोक के कारण ( विष्णु ) ने भी उस ( दशरथ ) में उत्पत्ति की कामना की ॥५३॥

अथ दशरथश्चरुनामकं वैष्णवं तेजः कौसल्याकैकेय्योर्विभज्य ददावित्याह—

**स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।**
**द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥**

सञ्जीविनी—स इति । स नृपः चरुसंज्ञाऽस्य संजाता चरुसंज्ञितं वैष्णवं तेजः पत्न्योः कौसल्याकैकेय्योः द्यौश्च पृथिवी च द्यावापृथिव्यौ, "दिवसश्च पृथिव्याम्" इति चकाराद्दिव्शब्दस्य द्यावादेशः । तयोर्द्यावापृथिव्योः अह्नः पतिरहर्पतिः सूर्यः, "अहरादीनां पत्यादिषु वा रेफः" इत्युपसंख्यानाद्वैकल्पिको रेफस्य रेफादेशो विसर्गापवादः प्रत्यग्रं नूतनमातपं बालातपमिव विभेजे । विभज्य ददावित्यर्थः ॥ ५४ ॥

अन्वयः—सः, चरुसंज्ञितं, वैष्णवं, तेजः, पत्न्योः, अहर्पतिः, प्रत्यग्रम्, आतपं, द्यावापृथिव्योः, इव, विभेजे ॥ ५४ ॥

सुधा—सः = पूर्वोक्तः, राजा दशरथ इति यावत् । चरुसंज्ञितं = चरुनामकं, वैष्णवं = विष्णुसम्बन्धि, तेजः = धाम, पत्न्योः = भार्ययोः, कौसल्याकैकय्योरित्यर्थः । अहर्पतिः = दिनपतिः, सूर्य्य इति यावत् । प्रत्यग्रं = नूतनम्, आतपं = घर्मम्, प्रातःकालिकातपमित्यर्थः । द्यावापृथिव्योः = रोदस्योः, आकाशमह्योरित्यर्थः । इव = यथा, विभेजे = विभक्तवान्, विभज्य दत्तवानित्यर्थः ॥ ५४ ॥

कोशः—'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जायाऽथ पुंभूम्नि दाराः' इति, 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इति चामरः ॥ ५४ ॥

समासादि—विष्णोरिदं वैष्णवम् । चरुसंज्ञा सञ्जाताऽस्येति तच्चरुसंज्ञितम् । द्यौश्च पृथिवी च द्यावापृथिव्यौ तयोर्द्यावापृथिव्योः (द्व०) । अह्नः पतिरित्यहर्पतिः (त०पु०) ॥५४॥

व्याकरणम्—वैष्णवं = विष्णु + अण् । विभेजे = भज + लिट् । संज्ञितं = संज्ञा + 'तदस्य सञ्जातं तारकादिभ्य इतच्' इति इतच् । द्यावापृथिव्योः—अत्र 'दिवसश्च पृथिव्याम्' इति चकारात् दिव्शब्दस्य द्यावादेशः । अहर्पतिः—अत्र 'अहरादीनां पत्यादिषु वा रेफः' इति रेफादेशः ॥ ५४ ॥

वाच्यपरिवर्तनम्—तेन, चरुसंज्ञितं, वैष्णवं, तेजः, पत्न्योः, अहर्पतिना, प्रत्यग्रः, आतपः, द्यावापृथिव्योः, इव, विभेजे ॥ ५४ ॥

तात्पर्यार्थः—यथा सूर्यो बालातपं द्यावापृथिव्योर्विभजते, तथैव स राजा दशरथश्चरुनामकं विष्णुसम्बन्धि तेजः कौसल्याकैकय्योर्विभेजे ॥ ५४ ॥

भाषाऽर्थः—उस ( दशरथ ) ने चरुनामवाले विष्णुसंबन्धि तेज को दो पत्नियों ( कौसल्या और कैकयी ) में वैसे विभाग कर दिया, जैसे सूर्य प्रातःकाल के घाम को आकाश और पृथिवी में विभाग कर देते हैं ॥ ५४ ॥

अथ दशरथस्तत्तेजः सुमित्रायै विभज्य कथं न ददावित्याशङ्क्याह--

**अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।**
**अतः सम्भावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥**

सञ्जीविनी—पत्नीत्रये सति द्वयोरेव विभागे कारणमाह—अर्चितेति । तस्य राज्ञः कौ पृथिव्यां सलति गच्छतीति कोसलः, 'सल गतौ' पचाद्यच् । कुशब्दस्य पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या, "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ् ,"यङश्चाप्" इति चाप् । अत एव सूत्रे निर्देशात्कोसलशब्दो दन्त्यसकारमध्यमः । अर्चिता ज्येष्ठा मान्या केकयवंशजा कैकेयी प्रियेष्टा । अतो हेतोरीश्वरो भर्ता नृपः सुमित्रां ताभ्यां कौसल्याकैकेयीभ्यां सम्भावितां भागदानेन मानितामैच्छदिच्छति स्म । एवं च सामान्यं तिसृणां च भागप्रापणमिति राज्युचितज्ञता कौशलं च लभ्यते ॥ ५५ ॥

अन्वयः—तस्य, कौसल्या, अर्चिता, 'आसीत्' केकयवंशजा, प्रिया, 'आसीत्' अतः, ईश्वरः, सुमित्रां, ताभ्यां, सम्भाविताम् , ऐच्छत् ॥ ५५ ॥

सुधा—तस्य = दशरथस्य, कौसल्या = कौसल्याख्या पत्नी, अर्चिता = मान्या, ज्येष्ठेत्यर्थः । आसीदिति शेषः । केकयवंशजा = केकयकुलोत्पन्ना, कैकेयीत्यर्थः । प्रिया = वल्लभा, आसीदिति शेषः । अतः = अस्मात्कारणात् , ईश्वरः = पतिः, दशरथ इति यावत् । सुमित्रां = सुमित्रानाम्नीं राज्ञीं, ताभ्यां = पूर्वोक्ताभ्यां, कौसल्याकैकेयीभ्यामिति यावत् । सम्भावितां = चरुभागदानेन सम्मानिताम् , ऐच्छत् = अवाञ्छत् ॥ ५५ ॥

कोशः—'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः संतानः' इति, 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता' इति चामरः ॥ ५५ ॥

समासादि—कौ पृथिव्यां सलति गच्छतीति कोसलः, तस्य राज्ञोऽपत्यं स्त्री कौसल्या । केकयस्य वंश इति केकयवंशस्तस्माज्जाता केकयवंशजा ( त० पु० ) । ईष्टे इतीश्वरः ॥५५॥

व्याकरणम्—अर्चिता = अर्च ( पूजायाम् ), क्तः + इट् + टाप् । कौसल्या = कु + सल ( गतौ ), पचाद्यचि कोसलः, तस्मात् 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ्, 'यङश्चाप्' इति चाप् । सम्भावितां = सम् + भू + णिच् + क्तः + टाप् । ऐच्छत् = आ + इषु ( इच्छायाम्—उकारेत ), लङ् । ईश्वरः = ईश (ऐश्वर्ये), 'स्थेशभासपिसकसो वरच्' इति वरच् ॥५५॥

वाच्यपरिवर्तनम्—तस्य, कौसल्यया, अर्चितया, 'अभूयत' केकयवंशजया, प्रियया, 'अभूयत' अतः, ईश्वरेण, सुमित्रा, ताभ्यां, सम्भाविता, ऐष्यत ॥ ५५ ॥

तात्पर्यार्थः—तस्य दशरथस्य पत्नी कौसल्या ज्येष्ठा, कैकेयी च प्रिया आसीत्, अस्मात्कारणात् स्वामी दशरथः सुमित्रां कौसल्याकैकेयीभ्यां भागदानेन सम्मानितामवाञ्छत् ॥ ५५ ॥

भाषाऽर्थः—उस ( दशरथ ) की कौसल्या ज्येष्ठ ( रानी ) ( और ) केकय वंश में पैदा हुई ( कैकयी ) प्रिया ( थी ) इसी कारण से पति दशरथ ने सुमित्रा को उन दोनों ( कौसल्या और कैकेयी ) से संमानित करने की इच्छा की ॥ ५५ ॥

अथ दशरथस्याभिप्रायज्ञे कौसल्याकैकेय्यौ निजचरोरर्धार्धभागं सुमित्रायै ददतुरित्याह--

**ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।**
**चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६ ॥**

सञ्जीविनी—त इति । बहुज्ञस्य सर्वज्ञस्य, उचितज्ञस्येत्यर्थः । पत्युर्महीक्षितः क्षितीश्वरस्य, विशेषणत्रयेण राज्ञोऽनुसरणीयतामाह । चित्तज्ञे अभिप्रायज्ञे ते उभे पत्न्यौ कौसल्याकैकेय्यौ चरोर्यावर्धभागौ समभागौ तयोर्यावर्धौ तौ च तौ भागौ चेत्यर्धभागावेकदेशौ ताभ्यामर्धार्धभागाभ्याम् , 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । तां सुमित्रामयोजयतां युक्तां चक्रतुः ।

अयं च विभागो न रामायणसंवादी तत्र चरोरर्धं कौसल्यायै अवशिष्टार्धं कैकेय्यै शिष्टं पुनः सुमित्रायै इत्यभिधानात्। किंतु पुराणान्तरसंवादो द्रष्टव्यः। उक्तं च नारसिंहे—"ते पिण्डप्राशने काले सुमित्रायै महीपतेः। पिण्डाभ्यामल्पमल्पं तु स्वभगिन्यै प्रयच्छतः॥" इति। एवमन्यत्रापि विरोधे पुराणान्तरात्समाधातव्यम् ॥ ५६ ॥

अन्वयः--बहुज्ञस्य, महीक्षितः, चित्तज्ञे, ते, उभे, पत्न्यौ, चरोः, अर्धार्धभागाभ्यां, ताम्, अयोजयताम् ॥ ५६ ॥

सुधा - बहुज्ञस्य = सर्वज्ञस्य, महीक्षितः = भूपतेः,पत्युः = स्वामिनः, दशरथस्येति यावत्। चित्तज्ञे = मानसज्ञे, भावबोधिन्याविल्यर्थः। ते = पूर्वोक्ते, उभे = द्वे, पत्न्यौ = सहधर्मिण्यौ, कौसल्याकैकेय्याविति यावत्। चरोः = पायसान्नस्य, अर्धार्धभागाभ्यां = चतुर्थांशाभ्यां,तां = सुमित्राम् , अयोजयतां = योजयामासतुः ॥ ५६ ॥

कोशः—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति, 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता' इति, 'अंशभागौ तु वण्टके' इति चामरः ॥ ५६ ॥

समासादि—बहु जानातीति बहुज्ञस्तस्य बहुज्ञस्य। चित्तं जानीत इति ते चित्तज्ञे। महीं क्षियतीति महीक्षित्तस्य महीक्षितः। अर्धस्यार्धं इत्यर्धार्धः ( त० पु० ), अर्धार्धौ च तौ भागावित्यर्धार्धभागौ ताभ्यामर्धार्धभागाभ्याम् ( क० धा० ) ॥ ५६ ॥

व्याकरणम्—बहुज्ञस्य = बहु + ज्ञा + 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। महीक्षितः = मही + क्षि + क्विप् + तुक्। अयोजयताम् = अ + युज + णिच् + लङ् ॥ ५६ ॥

वाच्यपरिवर्तनम्—बहुज्ञस्य, महीक्षितः, पत्युः, चित्तज्ञाभ्यां, ताभ्याम् , पत्नीभ्यां, चरोः, अर्धार्धभागाभ्यां, सा, अयोज्यत ॥ ५६ ॥

तात्पर्यार्थः--उचितज्ञस्य भूपतेः स्वामिनो दशरथस्याभिप्रायबोधिन्यौ कौसल्याकैकेय्यौ पायसान्नस्य चतुर्थभागं सुमित्रायै ददतः ॥ ५६ ॥

भाषाऽर्थः--सब कुछ जानने वाले (अपने) पति राजा (दशरथ) के चित्त को समझने वाली वे दोनों पत्नियों (कौसल्या और कैकयी ) ने खीर के आधे के आधे भाग ( चतुर्थांश ) से उस सुमित्रा को युक्त किया। ( याने उसे अपनी अपनी खीर में से चौथे भाग को दिया ) ॥ ५६ ॥

अथ सुमित्रा द्वयोः सपत्न्योः प्रेमवती आसीदिति नेर्ष्यासम्भावनेत्याशयेनाह--

**सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपि।**
**भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ॥ ५७ ॥**

सञ्जीविनी—नचैवं सत्यपीर्ष्या स्यादित्याह-सेति। सा सुमित्रोभयोरपि समान एकः पतिर्ययोस्तयोः सपत्न्योः, "नित्यं सपत्न्यादिषु" इति ङीप् नकारादेशश्च। भ्रमरी भृङ्गाङ्गना वारणस्य गजस्य मदनिस्यन्दरेखयोरिव गण्डद्वयगतयोरिति भावः। प्रणयवती प्रेमवत्यासीत्। सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमाने वारणस्येति ॥ ५७ ॥

अन्वयः—हि, सा, उभयोः, अपि, सपत्न्योः, भ्रमरी, वारणस्य, मदनिस्यन्दरेखयोः, इव, प्रणयवती, आसीत् ॥ ५७ ॥

सुधा--हि = यतः, सा = पूर्वोक्ता, सुमित्रेति यावत्। उभयोः = द्वयोः, अपि, सपत्न्योः = एकपत्न्योः, भ्रमरी = द्विरेफस्त्रीः, वारणस्य = गजस्य, मदनिस्यन्दरेखयोः = कपोलद्वयगतदानस्रावराज्योः, इव = यथा, प्रणयवती = अनुरागिणी, प्रेमवतीति यावत्। आसीत् = विद्यते स्म, ॥ ५७ ॥

कोशः—'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति, 'मतङ्गजो गजो नागः कुञ्जरो वारणः करिः' इति चामरः। 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति मेदिनी ॥ ५७ ॥

समासादि--प्रणयो विद्यतेऽस्या इति प्रणयवती । समानः पतिर्ययोस्तौ सपत्न्यौ तयोः सपत्न्योः ( ब० व्री० ) । भ्रमरस्य स्त्री भ्रमरी ॥ ५७ ॥

व्याकरणम्--सपत्न्योः = समान + पति + 'नित्यं सपत्न्यादिषु' इति ङीप् ; वारणस्य = वृञ् ( आवरणे-जित ), ल्युः ॥ ५७ ॥

वाच्यपरिवर्तनम्--हि, तया, उभयोः, अपि, सपत्न्योः, भ्रमर्या, वारणस्य, मदनिस्यन्दरेखयोः, इव, प्रणयवत्या, अभूयत ॥ ५७ ॥

तात्पर्यार्थः--सा सुमित्रा द्वयोरपि सपत्न्योः कौसल्याकैकेय्योर्भृङ्गस्त्री गजस्य दानस्रावरेखयोरिवानुरागिणी आसीत् ॥ ५७ ॥

भाषाऽर्थः--वह ( सुमित्रा ) दोनों सपत्नियों में हाथी के मदनिष्यन्द की रेखाओं में भ्रमरी की नाईं अनुरागवाली थी ॥ ५७ ॥

अथ ता दशरथपत्न्यो गर्भं धारयामासुरित्याह--

ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥

सञ्जीविनी—ताभिरिति । ताभिः कौसल्यादिभिः प्रजानां भूत्या अभ्युदयाय देवस्य विष्णोरंशः संभवः कारणं यस्य स गर्भः सूर्यस्येमाः सौर्यस्ताभिः सौरीभिः, "सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः" इत्युपधायकारस्य लोपः । अमृता इत्याख्या यासां ताभिः जलवहनसाम्यान्नाडीभिरिव नाडीभिर्वृष्टिविसर्जनाभिर्दीधितिभिरपां विकारोऽम्मयो जलमयो गर्भ इव दध्रे धृतः । जातावेकवचनम् । गर्भा दधिर इत्यर्थः । अत्र यादवः—"तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रयं हिमोत्सर्गे तावद्गर्भस्य सर्जने ॥ आनन्दाश्च हि मेध्याश्च नूतनाः पूतना इति । चतुःशतं वृष्टिवाहास्ताः सर्वा अमृताः स्त्रियः ॥" इति ॥ ५८ ॥

अन्वयः--ताभिः, प्रजाभूत्यै, देवांशसम्भवः, गर्भः, सौरीभिः, अमृताख्याभिः, नाडीभिः, अम्मयः, इव, दध्रे ॥ ५८ ॥

सुधा—ताभिः = पूर्वोक्ताभिः, कौसल्यादिभिरिति यावत् । प्रजाभूत्यै = प्रजाऽभ्युदयार्थं, जनोपकारार्थमिति यावत् । देवांशसम्भवः = विष्ण्वंशहेतुः, गर्भ = भ्रूणः, सौराभिः = सूर्यसम्बन्धिनीभिः, अमृताख्याभिः = अमृतानामिकाभिः, नाडीभिः = वृष्टित्यागिनाभिर्दीधितिभिः, अम्मयः = जलमयो गर्भः, इव = यथा, दध्रे = अधार्यत ॥ ५८ ॥

कोशः--'गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके' इति विश्वमेदिन्यौ । 'प्रजा स्यात्सन्ततौ जने' इति, 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इति चामरः ॥ ५८ ॥

समासादि--प्रजानां भूतिरिति प्रजाभूतिस्तस्यै प्रजाभूत्यै ( त० पु० ) । देवस्यांश इति देवांशः ( त० पु० ), देवांशः सम्भवो यस्य स देवांशसम्भवः ( ब० व्री० ) । सूर्यस्य इमा सौर्यस्ताभिः सौरीभिः । अमृता इत्याख्या यासां ता अमृताख्यास्ताभिरमृताख्याभिः ( ब० व्री० ) । अपां विकारोऽम्मयः ॥ ५८ ॥

व्याकरणम्—दध्रे = धृञ् ( धारणे-ञित ), कर्मणि लिट् । सौरीभिः = सूर्य + अण् + ङीप् + 'सूर्यतिष्य' इत्यादिना उपधायकारस्य लोपः ॥ ५८ ॥

वाच्यपरिवर्तनम्—ताः, प्रजाभूत्यै, देवांशसम्भवं, गर्भम , अमृताख्याः, सौर्यः, नाड्यः, अम्मयम् , इव, दध्रुः ॥ ५८ ॥

तात्पर्यार्थः—यथा सूर्यसम्बन्धिनीभिरमृतानामिकाभिर्वृष्टिविसर्जनीभिर्दीधितिभिर्जलमयो गर्भो ध्रियते, तथैव ताभिः कौसल्यादिभिः प्रजानामभ्युदयार्थं विष्णोरंशसम्भवो गर्भो धृतः ॥ ५८ ॥

भाषाऽर्थः—उन ( कौसल्या आदि ) स्त्रियों ने प्रजाओं के अभ्युदयार्थ विष्णु के

अंश के कारण वाले गर्भ को, जैसे अमृता नाम वाली सूर्यसम्बन्धी किरण जलमय गर्भ को धारण करती हैं, वैसे धारण किया ॥ ५८ ॥

अथ युगपद्गर्भिण्यस्ताः पत्न्यः कथमिव भान्ति स्मेत्याह—

**सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।**
**अन्तर्गतफलारम्भाः सस्यानामिव सम्पदः ॥ ५९ ॥**

सञ्जीविनी—सममिति । समं युगपदापन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ता आपन्नसत्त्वा गर्भिण्यः, 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । अत एवापाण्डुरत्विष ईषत्पाण्डुरवर्णास्ता राजपत्न्यः अन्तर्गता गुप्ताः फलारम्भाः फलप्रादुर्भावा यासां ताः सस्यानां सम्पद इव रेजुर्बभुः ॥ ५९ ॥

अन्वयः—समम्, आपन्नसत्वाः, आपाण्डुरत्विषः, ताः, अन्तर्गतफलारम्भाः, सस्यानां, सम्पदः, इव, रेजुः ॥ ५९ ॥

सुधा—समम् = युगपत्, एककालेनेत्यर्थः । आपन्नसत्वाः = प्राप्तजन्त्वः, गर्भिण्य इति यावत् । आपाण्डुरत्विषः = ईषत्पाण्डुवर्णद्युतयः, ताः = पूर्वोक्ताः, कौसल्यादिस्त्रिय इति यावत् । अन्तर्गतफलारम्भाः = अन्तर्लीनफलप्रभवरूपाङ्कुराः, सस्यानां = वृक्षादीनां, सम्पदः = शाखाः, इव = यथा, रेजुः = शुशुभिरे ॥ ५९ ॥

कोशः—'आपन्नसत्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इति, 'स्युः प्रभारुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः' इति चामरः ॥ ५९ ॥

समासादि—आपन्नाः सत्वा याभिस्ताः आपन्नसत्वाः ( ब० व्री० ) । ईषत्पाण्डुरास्त्विषो यासां ता आपाण्डुरत्विषः ( ब० व्री० ) । अन्तर्गताः फलारम्भा यासां ताः अन्तर्गतफलारम्भाः ( ब०व्री० ) ॥ ५९ ॥

व्याकरणम्—आपन्न = आ + पद् + क्तः । रेजुः = राजृ ( दीप्तौ-ऋकारेत् ), लिट् ॥ ५९ ॥

वाच्यपरिवर्तनम्—समम्, आपन्नसत्वाभिः, आपाण्डुरत्विड्भिः, ताभिः, अन्तर्गतफलारम्भाभिः, सस्यानां, सम्पद्भिः, इव, रेजे ॥ ५९ ॥

तात्पर्यार्थः—युगपद्गर्भिण्यः ईषत्पाण्डुरवर्णद्युतयस्ताः कौसल्यादिराजपत्न्योऽन्तर्गुप्तफलप्रभवाः सस्यानां शाखा इव शुशुभिरे ॥ ५९ ॥

भाषाऽर्थः—एक समय में गर्भ को धारण करने वाली ( और ) थोड़े पीले वर्ण की नाई शोभावाली वे ( कौसल्या आदि स्त्रियां ), छिपे हुये फलों के अंकुर वाली सस्य आदि की शाखा की भांति शोभायमान हुई ॥ ५९ ॥

अथ कौसल्यादयो राजपत्न्यः स्वप्नं ददृशुरित्याह—

**गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।**
**जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ॥ ६० ॥**

सञ्जीविनी—सम्प्रति तासां स्वप्नदर्शनान्याह-गुप्तमिति । सर्वास्ताः स्वप्नेषु जलजः शङ्खः जलजासिगदाशार्ङ्गचक्रैर्लाञ्छिता मूर्तयो येषां तैर्वामनैर्ह्रस्वैः पुरुषैर्गुप्तं रक्षितमात्मानं स्वरूपम्, जातावेकवचनम् । ददृशुः दृष्टवन्तः ॥ ६० ॥

अन्वयः—सर्वाः, स्वप्नेषु, जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः, वामनैः, गुप्तम्, आत्मानं, ददृशुः ॥ ६० ॥

सुधा—सर्वाः = सकलाः, राजपत्न्य इति यावत् । स्वप्नेषु = निद्रासु, जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्त्तिभिः = शङ्खखड्गकौमोदकीधनुश्चक्रचिह्नितप्रतिमाभिः, वामनैः = ह्रस्वरूपैः, गुप्तं = पालितं, रक्षितमिति यावत् । आत्मानं = निजदेहं, ददृशुः = अपश्यन् ॥ ६० ॥

कोशः—'आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु । प्रयत्ने च' इति त्रिसप्रकाशः । 'स्या-

निद्राशयनं स्वापः स्वप्नः संवेश इत्यपि' इति, 'अथ वामने । न्यग्नीचखर्वह्रस्वाः स्युः' इति, 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इति, 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इति चामरः ॥ ६० ॥

समासादि—वामयन्तीति वामनास्तैर्वामनैः । जलजश्च असिश्च गदा च शार्ङ्गञ्च चक्रञ्चेति जलजासिगदाशार्ङ्गचक्राणि ( द्व० ), तैर्लाञ्छिता मूर्तयो येषां तैः जलजासिगदाशार्ङ्गचक्रला-ञ्छितमूर्तिभिः ( ब० व्री० ) ॥ ६० ॥

व्याकरणम्—गुप्तं = गुपू ( रक्षणे-ऊकारेत् ), क्तः । ददृशुः = दृशिर् ( प्रेक्षणे-इरित् ), लिट् । वामनैः = टुवम ( उद्गिरणे-ट्वित् ), नन्द्यादित्वाल्ल्युः, अथवा ल्युट् । मूर्त्तिभिः = मूर्च्छा ( मोहसमुच्छ्राययोः ), क्तिच् + 'राल्लोपः' इति छस्य लोपः ॥ ६० ॥

वाच्यपरिवर्तनम्—सर्वाभिः, स्वप्नेषु, जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्त्तिभिः, वामनैः, गुप्तः, आत्मा, ददृशे ॥ ६० ॥

तात्पर्यार्थः—सकलास्ताः कौसल्यादयो राजपत्न्यः स्वप्नेषु शङ्खखड्गकौमोदकीगदाध-नुश्चक्रचिह्नितमूर्त्तिभिर्ह्रस्वैः पुरुषैः रक्षितं स्वरूपं ददृशुः ॥ ६० ॥

भाषार्थः—( कौसल्या आदि ) सभी स्त्रियों ने स्वप्न में शंख, खड्ग, गदा, धनुष, चक्र से चिह्नित मूर्त्ति वाले छोटे कद के पुरुषों से अपने को रक्षित देखी ॥ ६० ॥

किञ्चाकाशे गरुडेन ऊढास्ताः स्वप्नेषु आत्मानं ददृशुरित्याह—

**हेमपक्षप्रभाजालं गगने च वितन्वता ।**
**उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१ ॥**

सञ्जीविनी—हेमेति । किंचेति चार्थः । हेम्नः सुवर्णस्य पक्षाणां प्रभाजालं कान्तिपुञ्जं वितन्वता विस्तारयता वेगेनाकृष्टाः पयोमुचो मेघा येन तेन सुपर्णेन गरुत्मता गरुडेन गगने ता उह्यन्ते स्म ऊढाः ॥ ६१ ॥

अन्वयः—हेमपक्षप्रभाजालं, वितन्वता, वेगाकृष्टपयोमुचा, सुपर्णेन, गगने, 'ताः' उह्यन्ते स्म ॥ ६१ ॥

सुधा—हेमपक्षप्रभाजालं = सुवर्णतनूरुहकान्तिसमूहं, वितन्वता = प्रसारयता, वेगाकृष्टप-योमुचा = सत्वराकृष्टमेघेन, सुपर्णेन = गरुडेन, गगने = आकाशे, 'ताः = कौसल्यादयः' उह्यन्ते स्म = औह्यन्त ॥ ६१ ॥

कोशः—स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इति, 'गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्' इति, 'जालं समूह आनाये गवाक्षक्षारकावपि' इति, 'गरुत्मान्गरुडस्तार्क्ष्यो वैनते-यः खगेश्वरः । नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः' इति चामरः ॥ ६१ ॥

समासादि—प्रभाया जालमिति प्रभाजालं, हेम्नः पक्षा इति हेमपक्षास्तेषां प्रभाजा-लमिति हेमपक्षप्रभाजालम् ( त० पु० ) । वितनोतीति वितन्वन् तेन वितन्वता । पयांसि मुञ्चन्तीति पयोमुचः, वेगेनाकृष्टाः पयोमुचो येन तेन वेगाकृष्टपयोमुचा ( ब० व्री० ) ॥ ६१ ॥

व्याकरणम्—वितन्वता = वि + तनु ( विस्तारे-उकारेत् ), शतृ । उह्यन्ते स्म = वह ( प्रापणे ), कर्मणि लट् ॥ ६१ ॥

वाच्यपरिवर्तनम्—हेमपक्षप्रभाजालं, वितन्वन्, वेगाकृष्टपयोमुक्, सुपर्णः, गगने, 'ताः' वहति स्म ॥ ६१ ॥

तात्पर्यार्थः—किञ्च सुवर्णपक्षकान्तिपुञ्जं प्रसारयता वेगाकर्षितमेघेन गरुडेन आकाशे ऊढास्ताः कौसल्यादयः स्वप्नेषु आत्मानं ददृशुः ॥ ६१ ॥

भाषार्थः—और सुवर्ण के पंखों की कांति समूह को विस्तृत करने वाले, वेग से मेघों को खींचने वाले गरुड़ से आकाश में ढोई गईं (वे सब स्वप्न में अपने को देखीं) ॥६१॥

किञ्च लक्ष्म्या उपासितास्ताः स्वप्नेषु आत्मानं ददृशुरित्याह--

**बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।**
**पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥**

सञ्जीविनी--बिभ्रत्येति । किंच स्तनयोरन्तरे मध्ये विलम्बिमानं न्यस्यत इति न्यासः कौस्तुभ एव न्यासस्तं पत्या कौतुकान्न्यस्तं,कौस्तुभमित्यर्थः । बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्यास्तया लक्ष्म्या पर्युपास्यन्तोपासिताः ॥ ६२ ॥

अन्वयः--स्तनान्तरविलम्बिनं, कौस्तुभन्यासं, बिभ्रत्या, पद्मव्यजनहस्तया, लक्ष्म्या, च, 'ताः' पर्युपास्यन्त ॥ ६२ ॥

सुधा--स्तनान्तरविलम्बिनं = कुचमध्यलम्बमानं, हृदये लम्बिनमित्यर्थः । कौस्तुभन्यासं = स्वामिना कौतुकाद्विन्यस्तं कौस्तुभमणिं, बिभ्रत्या = धारयन्त्या, पद्मव्यजनहस्तया = कमलव्यजनकरया, लक्ष्म्या = हरिप्रियया, च, 'ताः = कौसल्यादयः' पर्युपास्यन्त = उपसेविताः॥६२॥

कोशः—'कौस्तुभो मणिः' इति, 'स्तनौ कुचौ' इति चामरः । 'हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च । ऋक्षे केशात्परो व्राते' इति मेदिनी ॥ ६२ ॥

समासादि—न्यस्यत इति न्यासः, कौस्तुभ एव न्यास इति कौस्तुभन्यासस्तं कौस्तुभन्यासम् ( क० धा० ) । स्तनयोरन्तरमिति स्तनान्तरं, तस्मिन् विशेषेण लम्बत इति स्तनान्तरविलम्बी तं स्तनान्तरविलम्बिनम् ( त० पु० ) । पद्ममेव व्यजनं हस्ते यस्याः सा तया पद्मव्यजनहस्तया ( ब० व्री० ) ॥ ६२ ॥

व्याकरणम्—बिभ्रत्या = डुभृञ् ( धारणपोषणयोः—डुञित् ), शतृ + ङीप् । न्यासं = नि + असु ( क्षेपणे—उकारेत् ), कर्मणि घञ् । पर्युपास्यन्त = परि + उप + आस ( उपवेशने ), कर्मणि लङ् ॥ ६२ ॥

वाच्यपरिवर्तनम्--स्तनान्तरविलम्बिनं, कौस्तुभन्यासं, बिभ्रती, पद्मव्यजनहस्ता, लक्ष्मीः, च, 'ताः' पर्युपास्त ॥ ६२ ॥

तात्पर्यार्थः--किञ्च स्तनमध्ये लम्बमानं पत्या कौतुकाद्विन्यस्तं कौस्तुभमणिं धारयन्त्या कमलरूपव्यजनकरया लक्ष्म्या उपासितास्ताः कौसल्यादयः स्वप्नेषु आत्मानं ददृशुः ॥ ६२ ॥

भाषाऽर्थः--और स्तनोंके मध्यमें लटके हुये ( पतिसे ) न्यस्त कौस्तुभ मणिको धारण करती हुई हाथमें कमलरूप पंखे वाली लक्ष्मीसे सेवित हुई (वे सब स्वप्नमें अपनेको देखीं) ६२

किञ्च कश्यपादिभिः सप्तर्षिभिरुपष्टुतास्ताः स्वप्नेषु आत्मानं ददृशुरित्याह--

**कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।**
**ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥**

सञ्जीविनी--कृतेति । किंच दिवि भवायां दिव्यायां त्रिस्रोतस्याकाशगङ्गायां कृताभिषेकैः कृतावगाहैः परं ब्रह्म वेदरहस्यं गृणद्भिः पठद्भिः सप्तभिर्ब्रह्मर्षिभिः कश्यपप्रभृतिभिरुपतस्थिरे उपासाञ्चक्रिरे ॥ ६३ ॥

अन्वयः—दिव्यायां, त्रिस्रोतसि, कृताभिषेकैः, परं, ब्रह्म, गृणद्भिः, सप्तभिः, ब्रह्मर्षिभिः, 'ताः' उपतस्थिरे ॥ ६३ ॥

सुधा—दिव्यायाम् = आकाशसम्बन्धिन्यां, त्रिस्रोतसि = गङ्गायां, कृताभिषेकैः = कृतस्नानैः, परं = परमं, ब्रह्म = वेदं, वेदतत्त्वमिति यावत् । गृणद्भिः = पठद्भिः, सप्तभिः = सप्तसंख्याकैः, ब्रह्मर्षिभिः = (१) कश्यपादिभिः ऋषिभिः, 'ताः = कौसल्यादयः' उपतस्थिरे = तुष्टुविरे ॥ ६३ ॥

---

( १ ) कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ॥

कोशः--'गङ्गाविष्णुपदी जह्नुतनया सुरनिम्नगा । भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि' इत्यमरः । 'ब्रह्म तत्वतपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥ ६३ ॥

समासादि—कृतोऽभिषेको यैस्ते कृताभिषेकास्तैः कृताभिषेकैः ( ब० व्री० )। दिवि भवा दिव्या तस्यां दिव्याम् । त्रीणि स्रोतांसि यस्याः सा त्रिस्रोतास्तस्यां त्रिस्रोतसि ( ब० व्री० ) ॥ ६३ ॥

व्याकरणम्—दिव्यायां = दिव् + यत + टाप् । गृणद्भिः = गॄ ( शब्दे ), श्ना + शतृ । उपतस्थिरे = उप + स्था + लिट्, 'उपाद् देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्' इति वार्तिकेन देवतात्वारोपादात्मनेपदम् ॥ ६३ ॥

वाच्यपरिवर्तनम्—दिव्यायां, त्रिस्रोतसि, कृताभिषेकाः, परं, ब्रह्म, गृणन्तः, सप्त, ब्रह्मर्षयः, 'ताः' उपतस्थिरे ॥ ६३ ॥

तात्पर्यार्थः—किञ्चाकाशगङ्गायां कृतावगाहनैर्वेदरहस्यं पठद्भिः कश्यपादिभिर्ब्रह्मर्षिभिरुपस्थितास्ताः कौसल्यादयो राजपत्न्यः स्वप्नेषु आत्मानं ददृशुः ॥ ६३ ॥

भाषाऽर्थः—और आकाश गंगा में स्नान करने वाले वेद को पढते हुये सात ( कश्यप आदि ) ब्रह्मर्षियों से उपासित हुई ( वे राजपत्नियां स्वप्न में अपने को देखीं ) ॥ ६३ ॥

अथ दशरथः पत्नीभ्यस्तादृशान् स्वप्नान् श्रुत्वा विष्णोः पितृत्वेन हेतुना आत्मानं सर्वोत्कृष्टं मेन इत्याह—

**ताभ्यस्तथाविधान् स्वप्नाञ्छ्रुत्वा प्रीतो हि पार्थिवः ।**
**मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४ ॥**

सञ्जीविनी--ताभ्य इति । पार्थिवो दशरथस्ताभ्यः पत्नीभ्यः, "आख्यातोपयोगे" इत्यपादानत्वात्पञ्चमी । तथाविधानुक्तप्रकारान्स्वप्नाञ्छ्रुत्वा प्रीतः सन् आत्मानं जगद्गुरोर्विष्णोरपि गुरुत्वेन पितृत्वेन हेतुना परार्ध्यं सर्वोत्कृष्टं मेने हि ॥ ६४ ॥

अन्वयः—पार्थिवः, ताभ्यः, तथाविधान्, स्वप्नान्, श्रुत्वा, प्रीतः, 'सन्' जगद्गुरोः, गुरुत्वेन, आत्मानं, परार्ध्यं, मेने, हि ॥ ६४ ॥

सुधा—पार्थिवः = राजा दशरथः, ताभ्यः = पूर्वोक्ताभ्यः, कौसल्याप्रभृतिभ्य इति यावत् । तथाविधान् = कथितप्रकारान्, स्वप्नान् = स्वापान्, श्रुत्वा = आकर्ण्य, प्रीतः = संतुष्टः, सन्निति शेषः । जगद्गुरोः—भुवनपतेः, विष्णोरिति यावत् । गुरुत्वेन = जनकत्वेन, आत्मानं = स्वं, परार्ध्यं = सर्वश्रेष्ठं, मेने = मन्यते स्म, हि ॥ ६४ ॥

कोशः—'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान् निषेकादि करे पित्रादौ सुरमन्त्रिणि' इति मेदिनी । 'अथ जगती लोको विष्टपं भुवनं जगत्' इत्यमरः ॥ ६४ ॥

समासादि—तथाविधः प्रकारो येषां तान् तथाविधान् ( ब० व्री० )। पृथिव्या अयं पार्थिवः । गुरोर्भावो गुरुत्वं तेन गुरुत्वेन । जगतो गुरुरिति जगद्गुरुस्तस्य जगद्गुरोः ( त० पु० ) ॥ ६४ ॥

व्याकरणम्—स्वप्नान् = ञिष्वप् ( शये—शीङ् ), 'स्वपो नन्' इति नन्प्रत्ययः । श्रुत्वा = श्रु ( श्रवणे ), क्त्वा । पार्थिवेन = पृथिवी + अण् । मेने = मनु + लिट् ॥ ६४ ॥

वाच्यपरिवर्तनम्—पार्थिवेन, ताभ्यः, तथाविधान्, स्वप्नान्, श्रुत्वा, प्रीतेन, 'सता' जगद्गुरोः, गुरुत्वेन, आत्मा, परार्ध्यः, मेने, हि ॥ ६४ ॥

तात्पर्यार्थः—राजा दशरथस्ताभ्यः कौसल्याप्रभृतिभ्यः पत्नीभ्यः उक्तप्रकारान् स्वप्नान् श्रुत्वा संतुष्टः सन् आत्मानं जगद्गुरोर्विष्णोरपि पितृत्वेन हेतुना सर्वोत्कृष्टं मन्यते स्म ॥ ६४ ॥

भाषाऽर्थः—राजा ( दशरथ ) ने उन ( कौसल्या आदि पत्नियों ) से वैसे स्वप्न को सुन कर प्रसन्न होते हुये जगत् के स्वामी ( विष्णु ) के पिता होने के कारण अपने को श्रेष्ठ माना ॥ ६४ ॥

अथैकरूपो विष्णुस्तासां गर्भेषु अनेकधा आत्मानं विभज्य निवासमकरोदित्याह—

**विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।**
**उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥**

सञ्जीविनी—विभक्तेति । एक एकरूपो विभुर्विष्णुस्तासां राजपत्नीनां कुक्षिषु गर्भेषु प्रसन्नानां निर्मलानामपां कुक्षिषु प्रतिमाचन्द्रः प्रतिबिम्ब इव अनेकधा विभक्तात्मा सन् उवास ॥ ६५ ॥

अन्वयः—एकः, विभुः, तासां, कुक्षिषु, प्रसन्नानाम्, अपां, 'कुक्षिषु' प्रतिमाचन्द्रः, इव, अनेकधा, विभक्तात्मा, 'सन्' उवास ॥ ६५ ॥

सुधा—एकः = केवलः, एकरूप इति यावत् । विभुः = व्यापकः, विष्णुरित्यर्थः । तासां = कौसल्यादीनां, कुक्षिषु = तुन्देषु, गर्भेष्वित्यर्थः । प्रसन्नानाम् = अनाविलानां, विमलानामिति यावत् । अपां = जलानां, कुक्षिष्विति शेषः । प्रतिमाचन्द्रः = प्रतिबिम्बेन्दुः, इव = यथा, अनेकधा = अनेकप्रकारेण, विभक्तात्मा = संक्रामितस्वरूपः, सन्निति शेषः । उवास = उषितवान् ॥ ६५ ॥

कोशः—'विभुः प्रभौ । व्यापके शङ्करे नित्ये' इत्यनेकार्थसंग्रहः । पिचण्डकुक्षी जठरोदरतुन्दम्' इति, 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुद्बान्धवः' इति, 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इति चामरः ॥ ६५ ॥

समासादि—विभक्त आत्मा यस्य स विभक्तात्मा ( ब० व्री० ) । प्रतिमा एव चन्द्र इति प्रतिमाचन्द्रः ( क० धा० ) ॥ ६५ ॥

व्याकरणम्—विभक्त = वि + भज + क्तः । उवास = वस ( निवासे ), लिट् । प्रसन्नानां = प्र + षद्लृ ( विशरणादौ—लृदित् ), 'गत्यर्थाकर्मक' इत्यादिनाक्तः ॥ ६५ ॥

वाच्यपरिवर्तनम्—एकेन, विभुना, तासां, कुक्षिषु, प्रसन्नानाम्, अपां, 'कुक्षिषु' प्रतिमाचन्द्रेण, इव, अनेकधा, विभक्तात्मना, 'सता' ऊषे ॥ ६५ ॥

तात्पर्यार्थः—एको व्यापको विष्णुस्तासां कौसल्यादीनां गर्भेषु निर्मलानां जलानां कुक्षिषु प्रतिबिम्बेन्दुरिव अनेकधा संक्रामितस्वरूपः सन् निवासमकरोत् ॥ ६५ ॥

भाषाऽर्थः—एक विष्णुने उन ( कौसल्या आदि रानियों ) के गर्भ में स्वच्छ जलों के भीतर चन्द्रप्रतिबिम्ब की नाईं अनेक प्रकारसे अपने को विभक्त होकर निवास किया ॥६५॥

अथ कौसल्या दशमे मासि तमोगुणनाशकं सुतं प्रासवतीत्याह—

**अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।**
**पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥**

सञ्जीविनी—अथेति । अथ राज्ञो दशरथस्य सती पतिव्रता अग्र्या चासौ महिषी चाग्र्यमहिषी कौसल्या प्रसूतिसमये प्रसूतिकाले औषधिर्नक्तं रात्रिसमये तमः अपहन्तीति तमोपहम्, "अपे क्लेशतमसोः" इति डप्रत्ययः । ज्योतिरिव तमोपहं तमोनाशकरं पुत्रं लेभे प्राप ॥ ६६ ॥

अन्वयः—अथ, राज्ञः, सती, अग्र्यमहिषी, प्रसूतिसमये, ओषधिः, नक्तं, तमोऽपहं, ज्योतिः, इव, 'तमोऽपहं' पुत्रं, लेभे ॥ ६६ ॥

सुधा—अथ = अनन्तरं, राज्ञः = दशरथस्य, सती = साध्वी, अग्र्यमहिषी = ज्येष्ठराज्ञी, कौसल्येत्यर्थः । प्रसूतिसमये = प्रसवकाले, दशमे मासीत्यर्थः । ओषधिः = तृणज्योतिराख्या

लता, नक्तं = रजन्यां, रात्राविति यावत् । तमोऽपहम् = अन्धकारनाशकरं, ज्योतिः = दीप्तिं, प्रकाशमिति यावत् । इव = यथा, तमोऽपहमिति शेषः । अत्र तमोगुणनाशकमित्यर्थो बोध्यः । पुत्रं = सुतं, लेभे = लब्धवती ॥ ६६ ॥

कोशः—'कृताभिषेका महिषी' इति, 'राज्ञि राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः' इति, 'प्रसूतिः प्रसवे' इति, 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति चामरः । 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे' इति मेदिनी । 'अथ दोषा च नक्तं च रजनाविति' इत्यमरः । 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी ॥ ६६ ॥

समासादि—अग्रे भवा अग्र्या, अग्र्या चासौ महिषीत्यग्र्यमहिषी ( क० धा० ) । प्रसूतेः समय इति प्रसूतिसमयस्तस्मिन् प्रसूतिसमये ( त० पु० ) । तमोऽपहन्तीति तत्तमोऽपहम् ॥ ६६ ॥

व्याकरणम्—अग्र्य = अग्र + यत् । तमोऽपहं = तमस् + अप + हन् + 'अपे क्लेशतमसोः' इति डः । लेभे = लभ + लिट् ॥ ६६ ॥

वाच्यपरिवर्तनम्—अथ, राज्ञः, सत्या, अग्र्यमहिष्या, प्रसूतिसमये, ओषध्या, नक्तं, तमोऽपहं, ज्योतिः, इव, 'तमोऽपहः' पुत्रः, लेभे ॥ ६६ ॥

तात्पर्यार्थः—अनन्तरं राज्ञो दशरथस्य ज्येष्ठपत्नी कौसल्या दशमे मासि तृणज्योतिराख्या लता रात्रौ अन्धकारविनाशकं ज्योतिरिव तमोगुणविनाशकं पुत्रं प्रासवती ॥ ६६ ॥

भाषाऽर्थः—इस के बाद राजा ( दशरथ ) की बड़ी स्त्री ( कौसल्या ) ने प्रसव के समय, जैसे औषधी अंधकार को दूर करने वाली ज्योति को उत्पन्न करती है, वैसे ( तमोगुण को नाश करने वाले पुत्र को उत्पन्न किया ॥ ६६ ॥

अथ दशरथस्तस्य पुत्रस्य राम इति नामधेयं कृतवानित्याह—

**राम इत्यभिरामेण वपुषा तस्य चोदितः ।**
**नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥**

सञ्जीविनी—राम इति । अभिरमतेऽत्रेत्यभिरामं मनोहरम्, अधिकरणार्थे घञ्प्रत्ययः । तेन वपुषा चोदितः प्रेरितो गुरुः पिता दशरथस्तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं राम इति नामधेयं चक्रे । अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥ ६७ ॥

अन्वयः—अभिरामेण, वपुषा, चोदितः, गुरुः, तस्य, जगत्प्रथममङ्गलं, रामः, इति नामधेयं, चक्रे ॥ ६७ ॥

सुधा—अभिरामेण = मनोहरेण, वपुषा = शरीरेण, चोदितः = प्रेरितः, प्रसन्नमना इति यावत् । गुरुः = पिता, दशरथ इत्यर्थः । तस्य = सुतस्य, जगत्प्रथममङ्गलं = लोकाद्यकल्याणभूतं, (१)रामः, इति = इत्थं, नामधेयम् = अभिधानं, चक्रे = अकरोत्, राम इति नामकरणं कृतवानित्यर्थः ॥ ६७ ॥

कोशः—'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति, 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इति, 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इति चामरः ॥ ६७ ॥

समासादि—अभिरमतेऽस्मिन्नित्यभिरामं तेनाभिरामेण । नम्यतेऽभिधीयतेऽर्थोऽनेनेति नामधेयम् । प्रथमं च तन्मङ्गलमिति प्रथममङ्गलम् ( क० धा० ), जगतां प्रथममङ्गलमिति जगत्प्रथममङ्गलम् ( त० पु० ॥ ६७ ॥

व्याकरणम्—अभिरामेण = अभि + रमु + घञ् । चोदितः = चुद + क्तः + इट् । चक्रे = कृ + लिट् ॥ ६७ ॥

( १ ) रमन्ते योगिनो यस्मिन्विद्यया ज्ञानविप्लवे ।
तं गुरुः प्राह रामेति रमणाद् राम इत्यपि ॥ इति ॥

वाच्यपरिवर्तनम्—अभिरामेण, वपुषा, चोदितेन, गुरुणा, तस्य, जगत्प्रथममङ्गलं, रामः, इति, नामधेयं, चक्रे ॥ ६७ ॥

तात्पर्यार्थः—मनोहरेण शरीरेण प्रसन्नमनाः पिता दशरथस्तस्य पुत्रस्य लोकानां प्रथम-मङ्गलभूतं राम इति नामकरणमकरोत् ॥ ६७ ॥

भाषाऽर्थः—सुन्दर शरीर से प्रेरित गुरु (दशरथ) ने उस (पुत्र) का संसार के प्रथम मंगल रूप राम ऐसा नाम रक्खा ॥ ६७ ॥

अथ तेन रामेण सूतिकागृहगता दीपा हतकान्तयो बभूवुरित्याह—

**रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।**

**रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८ ॥**

सञ्जीविनी—रघुवंशेति । रघुवंशस्य प्रदीपेन प्रकाशकेन अप्रतिमतेजसा तेन रामेण रक्षा-गृहगताः सूतिकागृहगता दीपाः प्रत्यादिष्टाः प्रतिबद्धा इवाभवन् । महादीपसमीपे नाल्पाः स्फुरन्तीति भावः ॥ ६८ ॥

अन्वयः—रघुवंशप्रदीपेन, अप्रतिमतेजसा, तेन, रक्षागृहगताः, दीपाः, प्रत्यादिष्टाः, इव, अभवन् ॥ ६८ ॥

सुधा—रघुवंशप्रदीपेन = रघुकुलप्रकाशकेन, अप्रतिमतेजसा = अतुलतेजस्विना, तेन = पूर्वोक्तेन, रामेणेति यावत् । रक्षागृहगताः = सूतिकासद्मस्थिताः, दीपाः = प्रदीपाः, प्रत्या-दिष्टाः = प्रतिबद्धाः, क्षीणकान्तय इत्यर्थः । इव, अभवन् = बभूवुः ॥ ६८ ॥

कोशः—'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्वयायः सन्तानः' इति, 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' इति चामरः ॥ ६८ ॥

समासादि—रघोर्वंश इति रघुवंशस्तस्य प्रदीपस्तेन रघुवंशप्रदीपेन ( त० पु० ) । अप्रतिमं तेजो यस्य स तेन अप्रतिमतेजसा ( ब० व्री० ) । रक्षाया गृहमिति रक्षागृहं तत्र गता इति रक्षागृहगताः ( त० पु० ) ॥ ६८ ॥

व्याकरणम्—प्रत्यादिष्टाः = प्रति + आ + दिश (अतिसर्जने), क्तः + 'व्रश्चभ्रस्ज' इत्या-दिना षत्वम् । अभवन् = अ + भू + लङ् ॥ ६८ ॥

वाच्यपरिवर्तनम्—रघुवंशप्रदीपेन, अप्रतिमतेजसा, तेन, रक्षागृहगतैः, दीपैः, प्रत्यादिष्टैः, इव, अभूयत ॥ ६८ ॥

तात्पर्यार्थः—रघुकुलप्रकाशकेन महातेजस्विना तेन रामेण सूतिकागृहगता दीपाः क्षीण-कान्तयो बभूवुः ॥ ६८ ॥

भाषाऽर्थः—रघुवंश के प्रकाशक बड़े तेजस्वी उस ( राम ) से सूतिकागृह के दीपक कम प्रकाश वाले हुये ॥ ६८ ॥

अथ कौसल्या शय्यागतेन रामेण सह कथमिव शुशुभ इत्याह—

**शय्यागतेन रामेण माता शातोदरी बभौ ।**

**सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥**

सञ्जीविनी—शय्यागतेनेति । शातोदरी गर्भमोचनात्कृशोदरी माता शय्यागतेन रामेण सैकते पुलिने योऽम्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव बभौ ॥ ६९ ॥

अन्वयः—शातोदरी, माता, शय्यागतेन, रामेण, सैकताम्भोजबलिना, शरत्कृशा, जाह्नवी, इव, बभौ ॥ ६९ ॥

सुधा—शातोदरी = गर्भत्यागात्कृशकुक्षिः, माता = जननी, कौसल्येति यावत् । शय्या-गतेन = शयनीयस्थितेन, रामेण = रामचन्द्रेण, सैकताम्भोजबलिना = पुलिनपद्मोपहारेण, शर-त्कृशा = शरत्तन्वी, जाह्नवी = गङ्गा, इव = यथा, बभौ = शुशुभे ॥ ६९ ॥

कोशः—'शय्यायां शयनीयवत् । शयनम्' इत्यमरः । 'माता गौर्यादिजननी गोब्रह्माण्यादिभूमिषु' इति विश्वमेदिन्यौ । 'पिचण्डकुक्षी जठरोदरतुन्दम्' इति, 'बलिः पूजोपहारयोः' इति चामरः ॥ ६९ ॥

समासादि—शय्यायां गत इति शय्यागतस्तेन शय्यागतेन ( त० पु० ) । शातम् उदरं यस्याः सा शातोदरी ( ब० व्री० ) । सिकताः सन्त्यस्मिन्निति सैकतम्, तस्मिन्नम्भोजानां बलिस्तेन सैकताम्भोजबलिना ( त० पु० ) । जह्नोरियं जाह्नवी । शरदि कृशेति शरत्कृशा ( त० पु० ) ॥ ६९ ॥

व्याकरणम्—शय्या = शीङ् ( स्वप्ने-ङित् ), 'संज्ञायां समज' इति क्यप् । शात = शो ( तनूकरणे ), क्तः । बभौ = भा + लिट् । सैकत = सिकता + 'सिकताशर्कराभ्यां च' इति मत्वर्थेऽण् ॥ ६९ ॥

वाच्यपरिवर्तनम्—शातोदर्य्या, मात्रा, शय्यागतेन, रामेण, सैकताम्भोजबलिना, शरत्कृशया, जाह्नव्या, इव, बभे ॥ ६९ ॥

तात्पर्यार्थः—यथा जलादचिरनिर्गततटे पद्मोपहारेण शरदि कृशा गङ्गा शोभते, तथैव गर्भत्यागात्कृशोदरी माता कौसल्या शय्यागतेन रामचन्द्रेण शुशुभे ॥ ६९ ॥

भाषाऽर्थः—दुबले पेट वाली माता ( कौसल्या ) पलंग पर स्थित रामचन्द्र के साथ वैसे शोभित हुई, जैसे तटके कमलों की पूजासे शरत्कालमें कृश हुई गङ्गा शोभित होती है ॥६९॥

अथ कैकेय्याः भरतो जात इत्याह—

> कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान्।
> जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥

सञ्जीविनी—कैकेय्या इति । केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी, "तस्यापत्यम्" इत्यणि कृते "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशः । तस्या भरतो नाम शीलवांस्तनयो जज्ञे जातः । यस्तनयः प्रश्रयो विनयः श्रियमिव जनयित्रीं मातरमलंचक्रे ॥ ७० ॥

अन्वयः—कैकेय्याः, भरतः, नाम, शीलवान्, तनयः, जज्ञे, यः, प्रश्रयः, श्रियम्, इव, जनयित्रीम्, अलञ्चक्रे ॥ ७० ॥

सुधा—कैकेय्याः = तन्नामिकाया दशरथपत्न्याः, भरत = भरताख्यः, नाम = प्रसिद्धः, शीलवान् = सद्वृत्तवान्, विनयसम्पन्न इति यावत् । तनयः = पुत्रः, जज्ञे = उत्पन्नः, यः = भरतः, प्रश्रयः = प्रणयः, विनय इत्यर्थः । श्रियं = लक्ष्मीम्, इव = यथा, जनयित्रीं = मातरं, कैकेयीमिति यावत् । अलञ्चक्रे = अलङ्कृतवान् ॥ ७० ॥

कोशः—'आत्मजस्तनयः सूनुः सुतः पुत्रः' इति, 'शीलं स्वभावे सद्वृत्ते' इति, जनयित्री प्रसूर्माता जननी' इति, 'प्रश्रयप्रणयौ समौ' इति चामरः ॥ ७० ॥

समासादि—केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी तस्याः कैकेय्याः । शीलमस्ति अस्येति शीलवान् । जनयतीति जनयित्री तां जनयित्रीम् ॥ ७० ॥

व्याकरणम्—कैकेय्याः = केकय + 'तस्यापत्यम्' इत्यणि, 'केकयमित्रयुप्रलयानां यादेरियः' इतीयादेशः । जज्ञे = जनी + लिट् । जनयित्रीम् = जन + णिच् + तृच् + 'ऋन्नेभ्यो ङीप्' इति ङीप् ॥ ७० ॥

वाच्यपरिवर्तनम्—कैकेय्याः, भरतेन, नाम, शीलवता, तनयेन, जज्ञे, येन, प्रश्रयेण, श्रीः, इव, जनयित्री, अलञ्चक्रे ॥ ७० ॥

तात्पर्यार्थः—कैकेय्याः भरताख्यः शीलवान् प्रसिद्धः पुत्र उत्पन्नः, यथा विनयो लक्ष्मीमलङ्करोति, तथा स मातरं कैकेयीमलञ्चक्रे ॥ ७० ॥

भाषाऽर्थः—कैकयी से भरत नाम वाला प्रसिद्ध शीलवान पुत्र उत्पन्न हुआ, जिस

( भरत ) ने माता ( कैकयी ) को, जैसे विनय लक्ष्मी को शोभित करता है, वैसे शोभित किया ॥ ७० ॥

अथ सुमित्रा लक्ष्मणशत्रुघ्नौ द्वौ पुत्रावजीजनदित्याह—

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१ ॥

सञ्जीविनी—सुताविति । सुमित्रा लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ सम्यगाराधिता स्वभ्यस्ता विद्या प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयाविव सुषुवे ॥ ७१ ॥

अन्वयः—सुमित्रा, लक्ष्मणशत्रुघ्नौ, यमौ, सुतौ, सम्यगाराधिता, विद्या, प्रबोधविनयौ, इव, सुषुवे ॥ ७१ ॥

सुधा—सुमित्रा = सुमित्राख्या दशरथपत्नी, लक्ष्मणशत्रुघ्नौ = लक्ष्मणशत्रुघ्ननामकौ, यमौ = यमजौ, सुतौ = पुत्रौ, सम्यगाराधिता = समीचीनाभ्यस्ता, विद्या = आन्विक्षिक्यादिविद्या, प्रबोधविनयौ = तत्वज्ञानेन्द्रियजयौ, इव = यथा, सुषुवे = जनयामास ॥ ७१ ॥

कोशः—'यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ । शरीरसाधनापेक्षनित्यकर्मणि संयमे' इति मेदिनी ॥ ७१ ॥

समासादि—लक्ष्मणश्च शत्रुघ्नश्चेति लक्ष्मणशत्रुघ्नौ ( द्व० ) । सम्यक् ( यथा तथा ) आराधितेति सम्यगाराधिता । प्रबोधश्च विनयश्चेति प्रबोधविनयौ ( द्व० ) ॥ ७१ ॥

व्याकरणम्—सुषुवे = षूङ् ( प्राणिगर्भविमोचने-ङित ), लिट् । आराधिता = आ + राध ( संसिद्धौ ), क्तः + इट् + टाप् ॥ ७१ ॥

वाच्यपरिवर्तनम्—सुमित्रया, लक्ष्मणशत्रुघ्नौ, यमौ, सुतौ, सम्यगाराधितया, विद्यया, प्रबोधविनयौ, इव, सुषुवाते ॥ ७१ ॥

तात्पर्यार्थः—सुमित्रा लक्ष्मणशत्रुघ्ननामकौ युग्मजातौ पुत्रौ स्वभ्यस्ता आन्विक्षिक्यादिविद्या तत्वज्ञानेन्द्रियजयाविव जनयामास ॥ ७१ ॥

भाषाऽर्थः—सुमित्रा ने लक्ष्मण और शत्रुघ्न (नाम वाले) दो यमल पुत्रों को, जैसे अच्छी तरह अभ्यास की गई विद्या प्रबोध और विनय को उत्पन्न करती है, वैसे उत्पन्न किया ॥७१॥

अथैतेषां जन्मना सर्वं जगद् दुर्भिक्षादिदोषरहितमभूदित्युत्प्रेक्षया आह—

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

सञ्जीविनी—निर्दोषमिति । सर्वं जगद् भूलोको निर्दोषं दुर्भिक्षादिदोषरहितम् आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणं चाभवत् । अत्रोत्प्रेक्ष्यते—गां भुवं गतमवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गोऽप्यन्वगादिव । स्वर्गो हि गुणवान्निर्दोषश्चेत्यागमः । स्वर्गतुल्यमभूदित्यर्थः ॥ ७२ ॥

अन्वयः—सर्वं, जगत्, निर्दोषम्, आविष्कृतगुणं, 'च' अभवत्, स्वर्गः, हि, गां, गतं, पुरुषोत्तमम्, अन्वगात्, इव ॥ ७२ ॥

सुधा—सर्वं = निखिलं, जगत् = भुवनं, निर्दोषं = दुर्भिक्षादिदोषशून्यम्, आविष्कृतगुणं = प्रकटितनैरोग्यादिगुणं, चेति शेषः । अभवत् = अभूत्, स्वर्गः = सुरलोकः, हि, गां = पृथ्वीं, भूलोकमित्यर्थः । गतम् = आगतम्, अवतीर्णमिति यावत् । पुरुषोत्तमं = विष्णुम्, अन्वगात् = अन्वगच्छत्, इव ॥ ७२ ॥

कोशः—'अथ समं सर्वम् । विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् । समग्रं सकलं पूर्णमखण्डं स्यादनूनके' इति, 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः । सुरलोको द्यो दिवौ द्वे' इति चामरः । 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' इति मेदिनी ॥ ७२ ॥

समासादि—निर्गता दोषा यस्मिन् तन्निर्दोषम् ( ब० व्री० ) । आविष्कृता गुणा यस्मिन् तत् आविष्कृतगुणम् (ब० व्री०) । पुरुषेषूत्तमः पुरुषोत्तमः । अथवा पुरुषेभ्य उत्तम इति पुरुषोत्तमः ( त० पु० ) ॥ ७२ ॥

व्याकरणम्—आविष्कृत = आविस् + कृ + क्तः । अन्वगात् = अनु + अ + इण् ( गतौ-णित् ), लुङ् + 'इणो गा लुङि' इति गादेशः ॥ ७२ ॥

वाच्यपरिवर्तनम्—सर्वेण, जगता, निर्दोषेण, आविष्कृतगुणेन, 'च' अभूयत, स्वर्गेण, हि, गां, गतः, पुरुषोत्तमः, अन्वगायि, इव ॥ ७२ ॥

तात्पर्यार्थः—विष्णोरंशभूतानां रामलक्ष्मणभरतशत्रुघ्नानां जन्मना निखिलं भुवनं दुर्भिक्षादिदोषरहितं प्रकटीकृतारोग्यादिगुणं चाभूत्, स्वर्गो हि भुवमवतीर्णं विष्णुमन्वगच्छदिव ॥ ७२ ॥

भाषाऽर्थः—सब जगत् ( दुर्भिक्ष आदि ) दोषों से रहित ( और आरोग्य आदि ) गुणों से प्रकाशित हुआ, मानो स्वर्ग पृथ्वीपर आये हुये विष्णु के पीछे आया ॥ ७२ ॥

अथ दिशो धूलिरहितैः पवनच्छलेन उच्छ्वसिता इव प्रतिभान्तीत्याह—

**तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ।**
**विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥**

सञ्जीविनी—तस्येति । चतुर्मूर्तेः रामादिरूपेण चतूरूपस्य सतस्तस्य हरेरुदये सति पौलस्त्याद्रावणाच्चकिता भीता ईश्वरा नाथा इन्द्रादयो यासां ता दिशश्चतस्रो विरजस्कैरपधूलिभिर्नभस्वद्भिर्वायुभिः मिषेण उच्छ्वसिता इव, इत्युत्प्रेक्षा । श्वसेः कर्तरि क्तः । स्वनाथशरणलाभसंतुष्टानां दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थः । चतुर्दिगीशरक्षणं मूर्तिचतुष्टयप्रयोजनमिति भावः ॥ ७३ ॥

अन्वयः—चतुर्मूर्तेः, तस्य, उदये, 'सति' पौलस्त्यचकितेश्वराः, दिशः, विरजस्कैः, नभस्वद्भिः, उच्छ्वसिताः, इव ॥ ७३ ॥

सुधा—चतुर्मूर्तेः = रामादिरूपेण चतुःस्वरूपस्य, तस्य = विष्णोः, उदये = प्रादुर्भावे, अवतारे इति यावत् । सतीति शेषः । पौलस्त्यचकितेश्वराः = रावणत्रसितेन्द्रादिनाथाः, दिशः = आशाः, विरजस्कैः = धूलिरहितैः, नभस्वद्भिः = पवनैः, उच्छ्वसिताः = निश्वसिताः, इव, उच्छ्वासं गृहीता इवेति यावत् । निर्मला उच्छ्वासवायव इव वायवो ववुरित्यर्थः ॥ ७३ ॥

कोशः—'पौलस्त्यो रावणो श्रीदे' इत्यनेकार्थसंग्रहः । 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इति, 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इति, 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इति चामरः ॥ ७३ ॥

समासादि—चतस्रः मूर्तयो यस्य स तस्य चतुर्मूर्त्तेः ( ब० व्री० ) । पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यः, तस्मात् चकिता ईश्वरा यासां ताः पौलस्त्यचकितेश्वराः (ब० व्री०) । नभो विद्यते एषां ते नभस्वन्तस्तैर्नभस्वद्भिः ॥ ७३ ॥

व्याकरणम्—पौलस्त्य = पुलस्त्य + अण् । विरजस्कैः = वि + रजस् + कप् । उच्छ्वसिताः = उत् + श्वस ( प्राणने ), कर्तरि क्तः + इट् ॥ ७३ ॥

वाच्यपरिवर्तनम्—चतुर्मूर्तेः, तस्य, उदये, 'सति' पौलस्त्यचकितेश्वराभिः, विरजस्कैः, नभस्वद्भिः, उच्छ्वसितम्, इव ॥ ७३ ॥

तात्पर्यार्थः—रामचन्द्रादिरूपेण चतुःस्वरूपस्य विष्णोरवतारे सति रावणात् त्रसितेन्द्रादिनाथा दिशो धूलिरहितैर्वायुभिर्व्याजेनोच्छ्वसिता इव प्रतिभान्ति ॥ ७३ ॥

भाषाऽर्थः—चार मूर्ति वाले उस विष्णु के उदय ( होने ) में रावण से भयभीत हुये ( इन्द्र आदि ) स्वामियों वाली दिशाओंने मानो धूलि रहित वायु ( के व्याज ) से ( निर्मल ) स्वांस लिया ॥ ७३ ॥

अथाग्निसूर्यौ निरस्तदुःखाविव अभवतामित्याह—

**कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः ।**
**रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥**

सञ्जीविनी—कृशानुरिति। रक्षसा रावणेन विप्रकृतावपकृतौ, पीडिताविति(वि)त्यर्थः। कृशानुरग्निः प्रभाकरः सूर्यश्च यथासंख्यमपधूमत्वात्प्रसन्नत्वाच्चापविद्धशुचौ निरस्तदुःखाविवास्तामभवताम् ॥ ७४ ॥

अन्वयः—रक्षोविप्रकृतौ, अपधूमत्वात्, कृशानुः, प्रसन्नत्वात्, प्रभाकरः, 'च' अपविद्धशुचौ, इव, आस्ताम् ॥ ७४ ॥

सुधा—रक्षोविप्रकृतौ = राक्षसतिरस्कृतौ, रावणपीडिताविव्यर्थः। अपधूमत्वात् = निर्धूमत्वात्, कृशानुः = पावकः, अग्निरिति यावत्। प्रसन्नत्वात् = संतुष्टत्वात्, निर्मलत्वादित्यर्थः। प्रभाकरः = सूर्यः, चेति शेषः। अपविद्धशुचौ = त्याजितशोकौ, इव, आस्ताम् = अभूताम् ॥ ७४ ॥

कोशः—'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः' इति, 'सुरसूर्यार्यमादित्यद्वादशात्मदिवाकराः। भास्कराहस्करब्रध्नप्रभाकरविभाकराः।' इति, 'मन्युशोकौ तु शुक् स्त्रियाम्' इति चामरः ॥ ७४ ॥

समासादि—अपगतो धूमो यस्य स अपधूमस्तस्य भाव अपधूमत्वं तस्मात् अपधूमत्वात् (ब० व्री०)। प्रसन्नस्य भावः प्रसन्नत्वं तस्मात् प्रसन्नत्वात्। प्रभां करोतीति प्रभाकरः। रक्षसा विप्रकृतिरिति रक्षोविप्रकृतिस्तस्यां रक्षोविप्रकृतौ (त० पु०)। अपविद्धा शुक् ययोस्तौ अपविद्धशुचौ (ब० व्री०) ॥ ७४ ॥

व्याकरणम्—प्रभाकरः = प्रभा + कृ + 'दिवाविभा' इत्यादिना टः। आस्ताम् = आ + अस + लङ्। अपविद्ध = अप + व्यध + क्तः + सम्प्रसारणम् ॥ ७४ ॥

वाच्यपरिवर्तनम्—रक्षोविप्रकृताभ्याम्, अपधूमत्वात्, कृशानुना, प्रसन्नत्वात्, प्रभाकरेण, 'च' अपविद्धशुग्भ्याम्, इव, अभूयत ॥ ७४ ॥

तात्पर्यार्थः—रावणेन पीडित अपधूमत्वात् अग्निः, नैर्मल्यात् सूर्यश्च निरस्तदुःखाविव अभवताम् ॥ ७४ ॥

भाषाऽर्थः—राक्षस ( रावण ) से पीडित हुये धूमरहित होने से अग्नि, ( और ) निर्मलपने से सूर्य, मानो शोक को त्यागने वाले हुये ॥ ७४ ॥

अथ रामजन्मसमये रावणस्य मुकुटगतमणिपतनचिह्नं दुर्निमित्तमभूदित्याशयेनाह—

**दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।**
**मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५ ॥**

सञ्जीविनी—दशाननेति। तत्क्षणं तस्मिन्क्षणे रामोत्पत्तिसमये राक्षसश्रियोऽश्रुबिन्दवो दशाननकिरीटेभ्यो मणीनां व्याजेन मिषेण पृथिव्यां पर्यस्ताः पतिताः। रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूदित्यर्थः ॥ ७५ ॥

अन्वयः—तत्क्षणं, राक्षसश्रियः, अश्रुबिन्दवः, दशाननकिरीटेभ्यः, मणिव्याजेन, पृथिव्यां, पर्यस्ताः ॥ ७५ ॥

सुधा—तत्क्षणे = तस्मिन्क्षणे, रामजन्मसमय इत्यर्थः। राक्षसश्रियः = निशिचरलक्ष्म्याः, अश्रुबिन्दवः = नेत्राम्बुकणाः, दशाननकिरीटेभ्यः = रावणमुकुटेभ्यः, मणिव्याजेन = मणिच्छद्मना, पृथिव्यां = भूमौ, पर्यस्ताः = अपतन्, रामजन्मनि तद्वध्यस्य दशाननस्य मुकुटगतमणिपतनं दुर्निमित्तमभूदित्यर्थः ॥ ७५ ॥

कोशः—'अथ मुकुटं किरीटं पुंनपुंसकम्' इति, 'व्याजदम्भोपधयश्छद्मकैतवे' इति, 'अस्रु नेत्राम्बु रोदनं चास्रमश्रु च' इति चामरः ॥ ७५ ॥

समासादि—दश आननानि यस्य स दशाननः ( ब० व्री० ), तस्य किरीटानि तेभ्यः दशाननकिरीटेभ्यः ( त० पु० ) । राक्षसस्य श्रीरिति राक्षसश्रीस्तस्य राक्षसश्रियः ( त० पु० ) । मणीनां व्याज इति मणिव्याजस्तेन मणिव्याजेन ( त० पु० ) । अश्रूणां बिन्दव इत्यश्रुबिन्दवः ( त० पु० ) ॥ ७५ ॥

व्याकरणम्—पर्यस्ताः = परि + अस + कर्तरि क्तः ॥ ७५ ॥

वाच्यपरिर्तनम्—तत्क्षणं, राक्षसश्रियः, अश्रुबिन्दुभिः, दशाननकिरीटेभ्यः, मणिव्याजेन, पृथिव्यां, पर्यस्तम् ॥ ७५ ॥

तात्पर्यार्थः—रामोत्पत्तिकाले राक्षसलक्ष्म्याः अश्रुकणाः रावणमुकुटेभ्यो मणीनां मिषेण भूमौ पतिताः । रामजन्मनि सति तद्वध्यस्य रावणस्य मुकुटगतमणीनां पतनं दुर्निमित्तमभूदिति ॥ ७५ ॥

भाषाऽर्थः—उस काल में राक्षस की लक्ष्मी के आंसुओं की बूंदे रावणके मुकुटों से मणियों के व्याज से पृथ्वी पर गिरीं ॥ ७५ ॥

अथ दशरथादप्यधिकं सन्तुष्टा देवाः प्रथमम् आकाशे दुन्दुभिं वादयामासुरित्याशयेनाह—

**पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः ।**
**आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥**

सञ्जीविनी—पुत्रजन्मेति । पुत्रिणो जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानां, वादनीयानामित्यर्थः । तूर्याणां वाद्यानामारम्भमुपक्रमं प्रथमं दिवि देवदुन्दुभयश्चक्रुः । साक्षात्पितुर्दशरथादपि देवा अधिकं प्रहृष्टा इत्यर्थः ॥ ७६ ॥

अन्वयः—पुत्रिणः, तस्य, पुत्रजन्मप्रवेश्यानां, तूर्याणाम्, आरम्भं, प्रथमं, दिवि, देवदुन्दुभयः, चक्रुः ॥ ७६ ॥

सुधा—पुत्रिणः = सुतवतः, तस्य = दशरथस्य, पुत्रजन्मप्रवेश्यानां = सुतोत्पत्तिप्रवेशनीयानां, पुत्रजन्मोत्सवे वादनीयानामित्यर्थः । तूर्याणां = वाद्यविशेषाणाम्, आरम्भं = प्रक्रमं, प्रथमं = पूर्वं, दिवि = आकाशे, देवदुन्दुभयः = सुरभेर्य्यः, चक्रुः = अकुर्वन्, देवाः दशरथादपि अधिकं संतुष्टा दुन्दुभिं वादयामासुरित्यर्थः ॥ ७६ ॥

कोशः—'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इति, 'प्रक्रमः स्यादुपक्रमः । स्यादभ्यादानमुद्घात आरम्भः' इति, 'भेरिः स्त्री दुन्दुभिः पुमान्' इति चामरः ॥ ७६ ॥

समासादि—पुत्राणां जन्मेति पुत्रजन्म तस्मिन् प्रवेश्यास्तेषां पुत्रजन्मप्रवेश्यानाम् (त० पु० ) । पुत्रा विद्यन्तेऽस्येति पुत्री तस्य पुत्रिणः । आरम्भणम् आरम्भस्तमारम्भम् । देवानां दुन्दुभय इति देवदुन्दुभयः ॥ ७६ ॥

व्याकरणम्—पुत्रिणः = पुत्र + इनिः । आरम्भम् = आ + रभ ( राभस्ये ), भावे घञ् + 'रभेरशब्लिटोः' इति नुम् । चक्रुः = कृ + लिट् ॥ ७६ ॥

वाच्यपरिवर्तनम्—पुत्रिणः, तस्य, पुत्रजन्मप्रवेश्यानां, तूर्य्याणाम्, आरम्भं, प्रथमं, दिवि, देवदुन्दुभिभिः, चक्रे ॥ ७६ ॥

तात्पर्य्यार्थः—जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि वादनीयानां तूर्य्यादिवाद्यविशेषाणामुपक्रमं प्रथममाकाशे देवानां दुन्दुभयोऽकुर्वन् ॥ ७६ ॥

भाषाऽर्थः—पुत्रवान् उस ( दशरथ ) के पुत्र जन्म में बजने योग्य तुरही ( आदि ) बाजों का प्रारंभ पहले आकाश में देवताओं की दुन्दुभियोंने किया ॥ ७६ ॥

अथ दशरथस्य गृहे पुत्रजन्मनि कल्पवृक्षपुष्पाणां मङ्गलोपचारभूता वृष्टिरभूदित्याह—

**सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ।**
**सन्मङ्गलोपचाराणां सैवादिरचनाऽभवत् ॥ ७७ ॥**

सञ्जीविनी—सन्तानेति । अस्य राज्ञो भवने सन्तानकानां कल्पवृक्षकुसुमानां विकारः सन्तानकमयी वृष्टिश्च पेतुषी पपात । "क्वसुश्च" इति क्वसुप्रत्ययः, "उगितश्च" इति ङीप् । सा वृष्टिरेव सन्तः पुत्रजन्मन्यावश्यका ये मङ्गलोपचारास्तेषामादिरचना प्रथमक्रियाऽभवत् ॥७७॥

अन्वयः—अस्य, भवने, सन्तानकमयी, वृष्टिः, च, पेतुषी, सा, एव, सन्मङ्गलोपचाराणाम्, आदिरचना, अभवत् ॥ ७७ ॥

सुधा—अस्य = दशरथस्य, भवने = गृहे, सन्तानकमयी = कल्पवृक्षपुष्पमयी, वृष्टिः = वर्षं, च, पेतुषी = अपतत्, सा = वृष्टिः, एव, सन्मङ्गलोपचाराणां = श्रेष्ठमङ्गलाचाराणाम्, आदिरचना = प्रथमनिर्माणः, अभवत् = बभूव ॥ ७७ ॥

कोशः—'संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः । 'सन्तानः सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे' इति मेदिनी च । 'वृष्टिर्वर्षम्' इति, 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम् । निशान्तवस्त्यसदनं भवनागारमन्दिरम्' इति चामरः ॥ ७७ ॥

समासादि—सन्ताना एव सन्तानकास्तेषां विकारः सन्तानकमयी। वर्षण वृष्टिः । मङ्गलान्येवोपचारा इति मङ्गलोपचाराः, सन्तश्च ते मङ्गलोपचारा इति सन्मङ्गलोपचाराः ( क० धा० ) । आदिश्चासौ रचनेति आदिरचना ( क० धा० ) ॥ ७७ ॥

व्याकरणम्—सन्तानकमयी = सन्तान + स्वार्थे कः + मयट् । वृष्टिः = वृषु ( सेचने—उकारेत् ), क्तिन् । पेतुषी = पत्लृ ( पतने—लृकारेत् ), क्वसुः + ङीप् । उपचार = उप + चर + घञ् ॥ ७७ ॥

वाच्यपरिवर्तनम्—अस्य, भवने, सन्तानकमय्या, वृष्ट्या, च, पेतुष्या, 'अभावि' तया, एव, सन्मङ्गलोपचाराणाम्, आदिरचनया, अभूयत ॥ ७७ ॥

तात्पर्यार्थः—अस्य दशरथस्य गेहे कल्पवृक्षपुष्पाणां वृष्टिः पपात, सा पुष्पवृष्टिरेव पुत्रजन्मनि आवश्यकानां श्रेष्ठमङ्गलोपचाराणां प्रथमक्रियाऽभूत् ॥ ७७ ॥

भाषाऽर्थः—इस ( दशरथ ) के घर में कल्पवृक्ष के पुष्पों की वृष्टि हुई, वह ( वृष्टि ) ही श्रेष्ठ मङ्गलों के उपचार वाली पहली रचना हुई ॥ ७७ ॥

अथोपमातॄणां स्तन्यपायिनः कुमाराः पितुरानन्देन सह ववृधिरे इत्याह—

**कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ।**
**आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥**

सञ्जीविनी—कुमारा इति । कृताः संस्कारा जातकर्मादयो येषां ते धात्रीणामुपमातॄणां स्तन्यानि पयांसि पिबन्तीति तथोक्ताः ते कुमारा अग्रे जातेनाग्रजेन ज्येष्ठेनेव स्थितेन पितुरानन्देन समं ववृधिरे । कुमारवृद्ध्या पिता महान्तमानन्दमवापेत्यर्थः । कुमारजन्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य ॥ ७८ ॥

अन्वयः—कृतसंस्काराः, धात्रीस्तन्यपायिनः, ते, कुमाराः, अग्रजेन, इव, पितुः, आनन्देन, समं, ववृधिरे ॥ ७८ ॥

सुधा—कृतसंस्काराः = सम्पादितजातकर्मादिसंस्काराः, धात्रीस्तन्यपायिनः = उपमातृदुग्धपानशीलाः, ते = पूर्वोक्ताः, कुमाराः = शिशवः, रामादय इति यावत । अग्रजेन = प्रथमजातेन, ज्येष्ठेनेत्यर्थः । इव, पितुः = जनकस्य, दशरथस्येति यावत् । आनन्देन = सुखेन, समं = साकं, ववृधिरे = वर्द्धयामासुः ॥ ७८ ॥

कोशः—'कुमारोऽश्वानुचारके । युवराजे शिशौ स्कन्दे शुके वरुणपादपे' इति, 'धात्री भूम्युपमातरि । आमलक्यां जनन्यां च' इति चानेकार्थसंग्रहः । 'साकं सत्रा समं सह' इति, 'स्यादानन्दथुरानन्दशर्मसातसुखानि च' इति चामरः ॥ ७८ ॥

समासादि—कुमारयन्तीति कुमाराः । कृताः संस्कारा येषां ते कृतसंस्काराः (ब० व्री०)।

धात्रीणां स्तन्यानि पिबन्तीति धात्रीस्तन्यपायिनः ( त० पु० ) । अग्रे जात अग्रजः ॥ ७८ ॥

व्याकरणम्—संस्काराः = सम् + कृ + अण् । स्तन्य = स्तन + यत् । पायिनः = पा + णिनिः + युक् । ववृधिरे = वृधु + लिट् ॥ ७८ ॥

वाच्यपरिवर्तनम्—कृतसंस्कारैः, धात्रीस्तन्यपायिभिः, तैः, कुमारैः, अग्रजेन, इव, पितुः, आनन्देन, समं, ववृधे, ॥ ७८ ॥

तात्पर्यार्थः—कृतजातकर्मादिसंस्कारा उपमातॄणां दुग्धपायिनस्ते कुमाराः ज्येष्ठेनेव स्थितेन पितुर्दशरथस्य आनन्देन सह वृद्धिं प्रापुः ॥ ७८ ॥

भाषाऽर्थः—( जातकर्म आदि ) संस्कार किये गये धाय का दुग्ध पीने वाले वे कुमार ज्येष्ठ भाई के समान ( स्थित ) पिता ( दशरथ ) के आनंद के साथ बढने लगे ॥ ७८ ॥

अथ कुमाराणां नम्रता कथमिव ववृध इत्याह—

**स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा ।**
**मुमूर्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥**

सञ्जीविनी—स्वाभाविकमिति । तेषां कुमाराणां सम्बन्धि स्वाभाविकं सहजं विनीतत्वं विनयकर्मणा शिक्षया हविर्भुजामग्नीनां सहजं तेजो हविषाऽऽज्यादिकेनेव मुमूर्छ ववृधे । निसर्गसंस्काराभ्यां विनीता इत्यर्थः ॥ ७९ ॥

अन्वयः—तेषां, स्वाभाविकं, विनीतत्वं, विनयकर्मणा, हविर्भुजां, सहजं, तेजः, हविषा, इव, मुमूर्छ ॥ ८९ ॥

सुधा—तेषां = कुमाराणां, स्वाभाविकं = प्राकृतिकं, सहजमिति यावत् । विनीतत्वं = विनयग्राहिता, विनयकर्मणा = विनयशिक्षया, हविर्भुजाम् = आज्यभुजाम्, अग्नीनामित्यर्थः । सहजम् = अकृत्रिमं, तेजः = धाम, दीप्तिरिति यावत्, हविषा = घृतादिकेन, इव = यथा, मुमूर्छ = ववृधे ॥ ७९ ॥

कोशः—'विनीतस्तु निभृते निर्जितेन्द्रिये । वाणिजे साधुवाह्याश्वे विनयग्राहिते हिते' इत्यनेकार्थसंग्रहः । 'तेजो धाम्नि पराक्रमे' इति विश्वः । 'तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः' इति मेदिनी च । 'घृतमाज्यं हविः सर्पिः' इत्यमरः ॥ ७९ ॥

समासादि—स्वभावे भवं स्वाभाविकम् । विनीतस्य भावो विनीतत्वम् । विनयस्य कर्मेति विनयकर्म तेन विनयकर्मणा (त०पु०) । हविर्भुञ्जन्तीति हविर्भुजस्तेषां हविर्भुजाम् ॥ ७९ ॥

व्याकरणम्—स्वाभाविकम् = स्वभाव + ठक्, इकादेशः । विनीतत्वम् = वि + णीञ् ( प्रापणे-ञित् ), क्तः + त्वप्रत्ययः । मुमूर्छ = मूर्छ + लिट् ॥ ७९ ॥

वाच्यपरिवर्तनम्—तेषां, स्वाभाविकेन, विनीतत्वेन, विनयकर्मणा, हविर्भुजां, सहजेन, तेजसा, हविषा, इव, मुमूर्छे ॥ ७९ ॥

तात्पर्यार्थः—यथा अग्नीनां स्वाभाविकं तेजः आज्यादिहविषा वर्धते, तथैव तेषां रामादीनां कुमाराणां स्वाभाविकं विनीतत्वं विनयशिक्षया ववृधे ॥ ७९ ॥

भाषाऽर्थः—उन ( राम आदि कुमारों) का स्वाभाविक विनीतभाव विनय की शिक्षा से, जैसे अग्नि का स्वाभाविक तेज ( घृत आदि) हवि से बढता है, वैसे बढा ॥ ७९ ॥

अथ रामादयो रघुकुलं कथमिव प्रकाशयामासुरित्याह—

**परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।**
**अलमुद्द्योतयामासुर्देवारण्यमिवर्तवः ॥ ८० ॥**

सञ्जीविनी—परस्परेति । परस्परमविरुद्धा अविद्विष्टाः, सौभ्रात्रगुणवन्त इत्यर्थः । ते कुमारास्तत्प्रसिद्धमनघं निष्पापं रघोः कुलम् ऋतवो वसन्तादयो देवारण्यं नन्दनमिव, सहजविरोधानामप्यृतूनां सहावस्थानसम्भावनार्थं देवविशेषणम् । अलमत्यन्तमुद्द्योतयामासुः प्रका-

शयामासुः । सौभ्रात्रवन्तः कुलभूषणायन्त इति भावः ॥ ८० ॥

अन्वयः--परस्पराविरुद्धाः, ते, तत्, अनघं, रघोः, कुलम्, ऋतवः, देवारण्यम्, इव, अलम्, उद्द्योतयामासुः ॥ ८० ॥

सुधा--परस्पराविरुद्धाः = अन्योन्याविद्विष्टाः, ते = कुमाराः, तत् = प्रख्यातम्, अनघं = पापरहितं, रघोः = तन्नामकराज्ञः, कुलं = वंशः, ऋतवः = वसन्तादिऋतवः, देवारण्यं = इन्द्रवनं, नन्दनवनमित्यर्थः । इव = यथा, अलम् = अधिकम्, उद्द्योतयामासुः = अप्रकाशयन् ॥ ८० ॥

कोशः--'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्विषकल्मषम् । कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम्' इत्यमरः ॥ ८० ॥

समासादि--न विरुद्धा इत्यविरुद्धाः, परस्परम् अविरुद्धा इति परस्पराविरुद्धाः ( क० धा० ) । देवस्यारण्यमिति देवारण्यम् ( त० पु० ) ॥ ८० ॥

व्याकरणम्--अविरुद्धाः = न + वि + रुधिर् ( आवरणे-इरित् ), क्तः । उद्द्योतयामासुः = उत् + द्युत ( दीप्तौ ), णिच् + लिट् ॥ ८० ॥

वाच्यपरिवर्तनम्—परस्पराविरुद्धैः, तैः, तत्, अनघं, रघोः, कुलम्, ऋतुभिः, देवारण्यम्, इव, अलम्, उद्द्योतयामासे ॥ ८० ॥

तात्पर्यार्थः—परस्परं विरोधरहितास्ते कुमारास्तत्प्रसिद्धं निष्पापं रघोः कुलं वसन्तादिऋतवो नन्दनवनमिवात्यन्तं प्रकाशयामासुः ॥ ८० ॥

भाषाऽर्थः—परस्पर विरोध रहित उन ( कुमारों ) ने उस पाप रहित रघु के कुल को, जैसे ( वसन्त आदि ) ऋतुएँ इन्द्र के वन ( नन्दन ) को प्रकाशित करती हैं, वैसे प्रकाशित किया ॥ ८० ॥

अथ रामलक्ष्मणयोः भरतशत्रुघ्नयोश्च परस्परं प्रीतिर्बभूवेत्याह—

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥

सञ्जीविनी—समान इति । शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः, "नद्यृतश्च" इति कप् न भवति, "वन्दिते भ्रातुः" इति निषेधात् । तेषां भावः सौभ्रात्रं, युवादित्वादण् । तस्मिन् समाने चतुर्णां तुल्येऽपि यथोभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः, तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ बभूवतुः, "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इत्यभिव्यक्तार्थे निपातः । क्वचित्कस्यचित्स्नेहो नातिरिच्यत इति भावः ॥ ८१ ॥

अन्वयः—सौभ्रात्रे, समाने, अपि, हि, यथा, उभौ, रामलक्ष्मणौ, प्रीत्या, द्वन्द्वं, बभूवतुः, तथा, भरतशत्रुघ्नौ, 'प्रीत्या-द्वन्द्वं-बभूवतुः' ॥ ८१ ॥

सुधा—सौभ्रात्रे = सौदर्यं, समाने = तुल्ये, अपि, हि, यथा = येन प्रकारेण, उभौ = द्वौ, रामलक्ष्मणौ = रामलक्ष्मणनामानौ दशरथपुत्रौ, प्रीत्या = प्रेम्णा, द्वन्द्वं = युग्मं, द्वौ द्वौ साहचर्येण अभिव्यक्तावित्यर्थः । बभूवतुः = अभवताम्, तथा = तेन प्रकारेण, भरतशत्रुघ्नौ = भरतशत्रुघ्ननामानौ दशरथपुत्रौ, 'प्रीत्या—द्वन्द्वं—बभूवतुः' इति शेषः । रामलक्ष्मणयोः भरतशत्रुघ्नयोर्द्वन्द्वीभवनं पायसांशानुसारेण बोध्यम् । कौसल्याकैकेयीभ्यां दत्तचरुभागयोर्लक्ष्मणशत्रुघ्नकारणत्वात् क्रमशः रामभरताभ्यां लक्ष्मणशत्रुघ्नयोः प्रीतिरासीत् । उक्तं च अध्यात्मरामायणे—"द्वन्द्वीभूय चरन्तौ तौ पायसांशानुसारतः ।" इति ॥ ८१ ॥

कोशः—'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् । साधारणः समानश्च' इत्यमरः । 'प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्' इति मेदिनी । 'द्वन्द्वमाहवे । रहस्ये मिथुने युग्मे' इत्यनेकार्थसंग्रहः ॥ ८१ ॥

समासादि—शोभना भ्रातरो तेषां ते सुभ्रातरः, तेषां भावः सौभ्रात्रं तस्मिन् सौभ्रात्रे ( ब० व्री० ) । रामश्च लक्ष्मणश्चेति रामलक्ष्मणौ ( द्व० ) । भरतश्च शत्रुघ्नश्चेति भरतशत्रुघ्नौ ( द्व० ) ॥ ८१ ॥

व्याकरणम्—सौभ्रात्रे = सुभ्रातृ + युवादित्वादण्, अत्र पूर्वं शोभना भ्रातरो येषामिति विग्रहे 'वन्दिते भ्रातुः' इति निषेधात् 'नद्यृतश्च' इति न कप् । प्रीत्या = प्रीञ् (तर्पणे कान्तौ च-ञित्), क्तिन् । द्वन्द्वमिति 'द्वन्द्वं रहस्यमर्यादा' इत्यादिना अभिव्यक्तार्थे निपातितः ॥ ८१ ॥

वाच्यपरिवर्तनम्—सौभ्रात्रे, समाने, अपि, हि, यथा, उभाभ्यां, रामलक्ष्मणाभ्यां, प्रीत्या, द्वन्द्वेन, बभूवे, तथा, भरतशत्रुघ्नाभ्यां, 'प्रीत्या—द्वन्द्वेन—बभूवे' ॥ ८१ ॥

तात्पर्यार्थः—चतुर्णां सौभ्रात्रे तुल्येऽपि यथोभौ रामलक्ष्मणौ प्रेम्णा द्वन्द्वं बभूवतुः, तथा भरतशत्रुघ्नावपि द्वन्द्वं बभूवतुः ॥ ८१ ॥

भाषाऽर्थः—अच्छे भ्रातृपन समान रहने पर भी जैसे राम और लक्ष्मण प्रीति से द्वंद्व हुये, वैसे भरत और शत्रुघ्न भी ( प्रीति से द्वंद्व हुये ) ॥ ८१ ॥

अथ तेषां मध्ये द्वयोर्द्वयोरैकमत्यं कथमिव न बिभिद इत्याह—

**तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।**
**यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥**

सञ्जीविनी--तेषामिति । तेषां चतुर्णां मध्ये द्वयोर्द्वयोः रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः । यथा वायुविभावस्वोर्वातवह्न्योरिव चन्द्रसमुद्रयोरिव च ऐक्यमैकमत्यं कदाचन न बिभिदे, एककार्यत्वं समानसुखदुःखत्वं च क्रमादुपमाद्वयाल्लभ्यते । सहजः सहकारी हि वह्नेर्वायुः, चन्द्रवृद्धौ हि वर्धते सिन्धुस्तत्क्षये च क्षीयत इति ॥ ८२ ॥

अन्वयः—तेषां, 'मध्ये' द्वयोः, द्वयोः, चन्द्रसमुद्रयोः, यथा, वायुविभावस्वोः, यथा, ऐक्यं, कदाचन, न, बिभिदे ॥ ८२ ॥

सुधा—तेषां = चतुर्णां भ्रातॄणां, मध्ये इति शेषः । द्वयोः = द्वन्द्वयोः, रामलक्ष्मणयोरिति यावत् । द्वयोः = द्वन्द्वयोः, भरतशत्रुघ्नयोरिति यावत् । वायुविभावस्वोः = पवनहुताशनयोः, यथा = इव, चन्द्रसमुद्रयोः = इन्दुसिन्ध्वोः, यथा = इव, ऐक्यम् = ऐकमत्यं, सौहार्दमिति यावत् । कदाचन = कदाऽपि, न बिभिदे = न पृथक् बभूव ॥ ८२ ॥

कोशः—'विभावसुस्तु भास्करे । हुताशने हारभेदे चन्द्रे' इत्यनेकार्थसंग्रहः । 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः' इति, 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः' इति चामरः ॥ ८२ ॥

समासादि—एकस्य भाव ऐक्यम् । विभा ( प्रभा ) वसु ( धनं ) यस्य स विभावसुः ( ब० व्री० ), वायुश्च विभावसुश्चेति वायुविभावसू तयोर्वायुविभावस्वोः ( द्व० ) । चन्द्रश्च समुद्रश्चेति चन्द्रसमुद्रौ तयोश्चन्द्रसमुद्रयोः ( द्व० ) ॥ ८२ ॥

व्याकरणम्—ऐक्यम् = एक + ष्यञ् । बिभिदे = भिद् + कर्मकर्तरि लिट् ॥ ८२ ॥

वाच्यपरिवर्तनम्—तेषां, 'मध्ये' द्वयोः, द्वयोः, वायुविभावस्वोः, यथा, चन्द्रसमुद्रयोः, यथा, ऐक्येन, कदाचन, न, बिभिदे ॥ ८२ ॥

तात्पर्यार्थः—तेषां चतुर्णां भातॄणां मध्ये रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्च ऐकमत्यं चन्द्रसमुद्रयोरिव पवनवह्न्योरिव कदाचन न बिभिदे ॥ ८२ ॥

भाषाऽर्थः—उन ( कुमारों ) के ( मध्य में ) दो दो ( याने राम लक्ष्मण और भरत शत्रुघ्न) की प्रीति वायु अग्नि और चन्द्रमा समुद्र के समान कभी नहीं भिन्न हुई ॥ ८२ ॥

अथ ते कुमाराः प्रभावेण विनयेन च प्रजानां मनः कथमिव जह्रुरित्याह—

**ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।**

मनो जहुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥

सञ्जीविनी—त इति । प्रजानाथास्ते कुमारास्तेजसा प्रभावेण प्रश्रयेण विनयेन च निदाघान्ते ग्रीष्मान्ते श्यामान्यभ्राणि मेघा येषां ते श्यामाभ्राः, नातिशीतोष्णा इत्यर्थः । दिवसा इव प्रजानां लोकानां मनश्चित्तं जहुः हरन्ति स्म ॥ ८३ ॥

अन्वयः—प्रजानाथाः, ते, तेजसा, प्रश्रयेण, च, निदाघान्ते, श्यामाभ्राः, दिवसाः, इव, प्रजानां, मनः, जहुः ॥ ८३ ॥

सुधा—प्रजानाथाः = जनस्वामिनः, ते = पूर्वोक्ताः, रामादयः कुमारा इति यावत् । तेजसा = प्रभावेण, प्रश्रयेण = प्रणयेन, विनयेनेति यावत् । च, निदाघान्ते = ग्रीष्मावसाने, श्यामाभ्राः = श्याममेघाः, दिवसाः = वासराः, इव = यथा, प्रजानां = जनानां, मनः = चित्तं, जह्रुः = अहरन् ॥ ८३ ॥

कोशः—'प्रजा स्यात्सन्ततौ जने' इति, 'प्रश्रयप्रणयौ समौ' इति, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इति चामरः । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति मेदिनी । 'अभ्रं मेघो वारिवाहस्तनयित्नुर्बलाहकः' इति, 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इति चामरः ॥ ८३ ॥

समासादि—प्रकर्षेण जायन्त इति प्रजास्तासां प्रजानाम् । प्रजानां नाथा इति प्रजानाथाः ( त० पु० ) । निदाघस्य अन्त इति निदाघान्तस्तस्मिन् निदाघान्ते ( त० पु० ) । श्यामानि अभ्राणि येषां ते श्यामाभ्राः ( ब० व्री० ) ॥ ८३ ॥

व्याकरणम्—प्रजानाम् = प्र + जनी ( प्रादुर्भावे ), डः । प्रश्रयेण = प्र + श्रिञ् ( सेवायाम्—ञित ), 'एरच्' इत्यच् । जहुः = हृञ + लिट् ॥ ८३ ॥

वाच्यपरिवर्तनम्—प्रजानाथैः, तैः, तेजसा, प्रश्रयेण, च, निदाघान्ते, श्यामाभ्रैः, दिवसैः, इव, प्रजानां, मनः, जह्रे ॥ ८३ ॥

तात्पर्यार्थः—प्रजास्वामिनस्ते कुमाराः प्रभावेण विनयेन च ग्रीष्मान्ते कृष्णमेघा दिवसा इव जनानां मनोऽहरन् ॥ ८३ ॥

भाषाऽर्थः—प्रजाओं के नाथ उन ( कुमारों ) ने प्रभाव और विनय से ग्रीष्म के अन्त में श्याम मेघों वाले दिन की नाई प्रजाओं के मन को हर लिया ॥ ८३ ॥

अथ राज्ञो दशरथस्य चतुर्धा विभक्तः सन्तानः कथमिव शुशुभ इत्याह—

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४ ॥

सञ्जीविनी—स इति । स चतुर्धा, "संख्याया विधार्थे धा" इत्यनेन धाप्रत्ययः । व्यस्तो विभक्तः पृथिवीपतेर्दशरथस्य प्रसवः संतानः चतुर्धाऽङ्गवान्मूर्तिमान्धर्मार्थकाममोक्षाणामवतार इव बभौ ॥ ८४ ॥

अन्वयः—चतुर्धा, व्यस्तः, सः, पृथिवीपतेः, प्रसवः, 'चतुर्धा' अङ्गवान्, धर्मार्थकाममोक्षाणाम्, अवतारः, इव, बभौ ॥ ८४ ॥

सुधा—चतुर्धा = चतुःप्रकारेण, व्यस्तः = विभक्तः, सः = पूर्वोक्तः, पृथिवीपतेः = राज्ञो दशरथस्य, प्रसवः = सन्तानः, अपत्यमिति यावत् । 'चतुर्धा' अङ्गवान् = शरीरवान्, मूर्तिमानिति यावत् । धर्मार्थकाममोक्षाणां = चतुर्वर्गाणाम्, अवतारः = अवतरणम्, इव = यथा, बभौ = शुशुभे ॥ ८४ ॥

कोशः—'प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च' इति, 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' इति च मेदिनी ॥ ८४ ॥

समासादि—चतुः प्रकारः चतुर्धा । प्रसूयत इति प्रसवः । पातीति पतिः, पृथिव्याः पतिरिति पृथिवीपतिस्तस्य पृथिवीपतेः ( त० पु० ) । धर्मश्च अर्थश्च कामश्च मोक्षश्चेति धर्मार्थकाममोक्षास्तेषां धर्मार्थकाममोक्षाणाम् ( द्व० ) । अवतरणमवतारः । अङ्गं विद्यतेऽस्येति अङ्गवान् ॥ ८४ ॥

व्याकरणम्—चतुर्धा = चतुर् + 'संख्याया विधार्थे धा' इति धाप्रत्ययः । प्रसवः = प्र + षूङ् ( प्राणिगर्भविमोचने—ङित् ), पचाद्यच् । अवतारः = अव + तॄ ( प्लवनतरणयोः ), 'अवे तॄस्त्रोर्घञ्' इति घञ् । अङ्गवान् = अङ्ग + मतुप् + वत्वम् ॥ ८४ ॥

वाच्यपरिवर्तनम्—चतुर्धा, व्यस्तेन, तेन, पृथिवीपतेः, प्रसवेन, 'चतुर्धा' अङ्गवता, धर्मार्थकाममोक्षाणाम्, अवतारेण, इव, बभे ॥ ८४ ॥

तात्पर्यार्थः—चतुर्धा विभक्तः स राज्ञो दशरथस्य सन्तानः चतुर्धा विभक्तो मूर्तिमान् धर्मार्थकाममोक्षाणामवतार इव शुशुभे ॥ ८४ ॥

भाषाऽर्थः—चार प्रकार से विभक्त वह राजा ( दशरथ ) की संतान ( चार प्रकार से विभक्त ) धर्म, अर्थ, काम, और मोक्ष के अवतार के समान शोभित हुई ॥ ८४ ॥

अथ ते कुमाराः विनयादिभिर्दशरथमानन्दयामासुरित्याह—

**गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।**
**तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥**

सञ्जीविनी—गुणैरिति । गुरुवत्सलाः पितृभक्तास्ते कुमारा गुणैर्विनयादिभिर्गुरुं पितरं चतुर्णामन्तानां दिगन्तानामीशं चतुरन्तेशम्, "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेनोत्तरपदसमासः । तं दशरथमेव महार्णवाश्चत्वारो आराधयामासुरानन्दयामासुः ॥ ८५ ॥

अन्वयः—गुरुवत्सलाः, ते, गुणैः, गुरुं, महार्णवाः, चतुरन्तेशं, तम्, एव, रत्नैः, इव, आराधयामासुः ॥ ८५ ॥

सुधा—गुरुवत्सलाः = जनकप्रियाः, ते = पूर्वोक्ताः, कुमारा इति यावत् । गुणैः = विनयादिगुणैः, गुरुं = पितरं दशरथं, महार्णवाः = महासागराः, चतुरन्तेशं = चतुर्दिगन्तस्वामिनं, तं = दशरथम्, एव, रत्नैः = श्रेष्ठमणिभिः, इव = यथा, आराधयामासुः = प्रसादयामासुः ॥८५॥

कोशः—'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके । अलघौ दुजरे चापि' इति, 'ईशः स्वामिनि रुद्रे च' इति चानेकार्थसंग्रहः । 'उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः' इत्यमरः ॥ ८५ ॥

समासादि—गुरोर्वत्सला इति गुरुवत्सलाः ( त० पु० ) । चत्वार अन्ता इति चतुरन्ताः ( क० धा० ), चतुरन्तानामीशस्तं चतुरन्तेशम् ( त० पु० ) । महान्तश्च तेऽर्णवा इति महार्णवाः ( क० धा० ) ॥ ८५ ॥

व्याकरणम्—आराधयामासुः = आ + राध + णिच् + लिट् ॥ ८५ ॥

वाच्यपरिवर्तनम्—गुरुवत्सलैः, तैः, गुणैः, गुरुः, महार्णवैः, चतुरन्तेशः, सः, एव, रत्नैः, इव, आराधयामासे ॥ ८५ ॥

तात्पर्यार्थः—यथा महासागराश्चतुर्दिगधिपतिं तं दशरथमेव रत्नैः प्रसादयामासुः, तथा पितृभक्तास्ते कुमाराः विनयादिगुणैः पितरं दशरथं प्रसादयामासुः ॥ ८५ ॥

भाषाऽर्थः—पिता के भक्त उन ( कुमारों ) ने ( विनय आदि ) गुणों से पिता ( दशरथ ) को वैसे प्रसन्न किया, जैसे महासमुद्रों ने चारो दिशाओं के स्वामी उसी (दशरथ) को रत्नों से प्रसन्न किया था ॥ ८५ ॥

अथ राजाधिराजो दशरथो वैष्णवांशसम्भूतैश्चतुर्भिः पुत्रैः कथमिव शुशुभ इत्याह—

**सुरगज इव दन्तैर्भग्नदैत्यासिधारैर्नय इव पणबन्धव्यक्तयोगैरुपायैः ।**
**हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६ ॥**

सञ्जीविनी—सुरगज इति । भग्ना दैत्यानामसिधारा यैस्तैश्चतुर्भिर्दन्तैः सुरगज ऐरावत इव, पणबन्धेन फलसिद्ध्या व्यक्तयोगैरनुमितप्रयोगैरुपायैश्चतुर्भिः सामादिभिर्नयो नीतिरिव, युगवद्दीर्घैश्चतुर्भिर्दोर्भिर्भुजैर्हरिर्विष्णुरिव, 'यानाद्यङ्गे युगः पुंसि' इत्यमरः । तदीयैर्हरिसम्बन्धिभिरंशभूतैश्चतुर्भिस्तैः पुत्रैरवनिपतीनां पती राजराजो दशरथश्चकाशे विदिद्युते ॥ ८६ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रामावतारो नाम दशमः सर्गः ॥ १० ॥

अन्वयः—भग्नदैत्यासिधारैः, चतुर्भिः, दन्तैः, सुरगजः, इव, पणबन्धव्यक्तयोगैः, 'चतुर्भिः' उपायैः, नयः, इव, युगदीर्घैः, 'चतुर्भिः' दोर्भिः, हरिः, इव, तदीयैः, अंशैः, 'चतुर्भिः' तैः, अवनिपतीनां, पतिः, चकाशे ॥ ८६ ॥

सुधा—भग्नदैत्यासिधारैः = नष्टासुरखड्गमुखैः, चतुर्भिः = चतुःसंख्याकैः, दन्तैः = दशनैः, सुरगजः = इन्द्रकुञ्जरः, ऐरावत इत्यर्थः । इव = यथा, पणबन्धव्यक्तयोगैः = फलसिद्ध्यनुमितप्रयोगैः, 'चतुर्भिः' उपायैः = (१)सामदानभेददण्डाख्यैः, नयः = नीतिः, इव, युगदीर्घैः = युगवदायतैः, 'चतुर्भिः' दोर्भिः = बाहुभिः, हरिः = विष्णुः, इव, तदीयैः = विष्णुसम्बन्धिभिः, अंशैः = तेजःसम्भूतैः, 'चतुर्भिः' तैः = पूर्वोक्तैः = कुमारैरिति यावत् । अवनिपतीनां = महीपतीनां, पतिः = स्वामी, राजाधिराजो दशरथ इत्यर्थः । चकाशे = शुशुभे ॥ ८६ ॥

कोशः—'सुरा चषकमद्ययोः । पुंलिङ्गस्त्रिदिवेशे स्यात्' इति, 'दन्ताऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम्' इति च मेदिनी । 'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः' इत्यमरः । 'असिः खड्गे नदीभिदि' इत्यनेकार्थसंग्रहः । 'खड्गादीनां निशितमुखे धारा प्रकीर्तिता' इति विश्वः । 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' इति, 'दीर्घमायतम्' इति, 'भुजबाहू प्रवेष्टो दोः' इति चामरः ॥ ८६ ॥

समासादि—सुरस्य गज इति सुरगजः ( त० पु० ) । दैत्यानाम् असय इति दैत्यासयस्तेषां धारा इति दैत्यासिधाराः ( त० पु० ), भग्ना दैत्यासिधारा यैस्ते तैः भग्नदैत्यासिधारैः ( ब० व्री० ) । पणबन्धेन व्यक्ता योगा यैस्ते तैः पणबन्धव्यक्तयोगैः ( ब० व्री० ) । युगवद्दीर्घा इति युगदीर्घास्तैर्युगदीर्घैः ( क० धा० ) । तस्य इमे तदीयास्तैस्तदीयैः । अव्यत इत्यवनिः, तस्याः पतय इत्यवनिपतयस्तेषाम् अवनिपतीनाम् ( त० पु० ॥ ८६ ॥

व्याकरणम्—भग्न = भञ्जो (आमर्दने-ओदित्), क्तः + 'ओदितश्च' इति तकारस्य नत्वम् । व्यक्त = वि + अञ्जू + क्तः + नलोपः । तदीयैः = तद् + 'त्यदादीनि च' इति वृद्धिसंज्ञायाम्, 'वृद्धाच्छः' इति छप्रत्ययः + छस्य ईयादेशः । चकाशे = काशृ ( दीप्तौ-ऋकारेत् ), लिट्, तादेशः + द्वित्वादिकम् + 'लिटस्तझयोरेशिरच्' इति तस्यैशादेशः ॥ ८६ ॥

वाच्यपरिवर्तनम्—भग्नदैत्यासिधारैः, चतुर्भिः, दन्तैः, सुरगजेन, इव, पणबन्धव्यक्तयोगैः, 'चतुर्भिः' उपायैः, नयेन, इव, युगदीर्घैः, 'चतुर्भिः' दोर्भिः, हरिणा, इव, तदीयैः, अंशैः, 'चतुर्भिः' तैः, अवनिपतीनां, पत्या, चकाशे ॥ ८६ ॥

---

( १ ) प्रियवचनादिना क्रोधोपशमनं साम । स्वधनस्य परेभ्यः प्रतिपादनं दानम् । शत्रोरमात्यादीनाम् उपायेन परतो विश्लिष्य आत्मसात्करणं भेदः । दण्डदानं दण्डः ॥

तात्पर्यार्थः—भग्नासुरखड्गधारैश्चतुर्भिर्दन्तैः ऐरावत इव, फलसिद्ध्या अनुमितप्रयोगैश्चतुर्भिः सामादिभिरुपायैर्नीतिरिव, युगवत् आयतैश्चतुर्भिर्भुजैर्विष्णुरिव, विष्णुसम्बन्धिभिरंशसम्भूतैश्चतुर्भिस्तैः पुत्रैः राजराजो दशरथः शुशुभे ॥ ८६ ॥

भाषाऽर्थः—दैत्योंके खड्गकी धारको भग्न करने वाले चारो दातोंसे ऐरावतके समान, फलकी सिद्धिसे प्रयोगका अनुमान किये गये ( चारो साम आदि ) उपायांसे नीतिके समान, जूआकी नाई लम्बे ( चारो ) भुजाओंसे विष्णुके समान, विष्णु सम्बन्धी अंश से ( चारो ) उन ( पुत्रों ) से राजाओंका पति ( दशरथ ) शोभित हुआ ॥ ८६ ॥

इति श्रीमहाकविकालिदासविरचिते रघुवंशमहाकाव्ये पण्डितश्रीकपिलदेव-
मिश्रसूनुना मिश्रोपनामकश्रीसुदामाशर्म्मणा विरचितया सुधा-
ऽऽख्यया व्याख्यया समुल्लसितो रामावतारो नाम
दशमः सर्गः समाप्तः ॥ १० ॥

---

शेषाशेषसदुक्तियुक्तिकुशलो यः साहितीसारविद्
मीमांसानयसांख्यसाररसिको वेदान्तशान्तान्तरः ।
श्रौताचारपरम्पराप्रतिफलत्तेजोविशेषोज्ज्वलन्
भट्टाचार्यपदाङ्कितो विजयते हाराणचन्द्रः सुधीः ॥ १ ॥
तत्पादाम्बुजनिर्गलन्मधुसुधाधारारसास्वादनात्
सान्द्रानन्दसमुद्रमग्नमनसा प्रेम्णा सुदाम्ना कृता ।
काव्येऽस्मिन् रघुवंशनाम्नि विदिते श्रीकालिदासोदिते
व्युत्पित्सोः सुखबोधनाय भवताट्टीका सुधा निर्मला ॥ २ ॥
क्वासौ कवीश्वरवरस्य कृतिः प्रशस्ता क्वाहं च मन्दमतिरत्र करोमि धार्ष्ट्यम् ।
ज्ञातेऽपि बालजनबोधकृते कृतेयं टीका गुरोश्चरणयुग्मरजःप्रसादात् ॥ ३ ॥
मुन्यष्टनन्दकुमिते नृपविक्रमाब्दे माघे वसन्तऋतुसङ्गतपञ्चमाह्ने ।
श्रीविश्वनाथकृपया पुरि काशिकायां टीका समाप्तिमगमद्रुचिरा सुधेयम् ॥ ४ ॥
दनुजवनदवाग्निर्जानकीचित्तचन्द्रो दशरथकुलदीपो भक्तभक्त्यैकरक्तः ।
अमरवरमुनीन्द्रैर्नित्यमाराधिताङ्घ्रिः सपदि दिशतु भद्रं मत्कृतौ रामचन्द्रः ॥ ५ ॥

---

# परिशिष्टानि ।

(१) 'असौ महाकालनिकेतनस्य' इति षष्ठसर्गस्य चतुस्त्रिंशच्छ्लोके महाकालो नाम उज्जयिनीस्थो महादेवः । स द्वादशज्योतिर्लिङ्गान्तर्गतः, तथा च शिवपुराणे—

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोङ्कारममलेश्वरे ॥
पर्यल्यां वैजनाथं च डाकिन्यां भीमशङ्करम् ।
सेतुबन्धे च रामेशं नागेशं दारुकावने ॥
वाराणस्यां च विश्वेशं त्र्यम्बकं गौतमीतटे ।
हिमालये तु केदारं घुस्मेशन्तु शिवालये ॥ इति ।

(२) "अङ्गविस्फुरणं पुंसां दक्षिणे कार्यसिद्धिकृत् । नारीणां सव्यभागे च स्फुरणं सत्फलप्रदम् ॥" इति ज्योतिःशास्त्रोक्तफलस्मृत्या अजस्य 'न वा' इति संदेहोऽपगत इति 'वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद' इति षष्ठसर्गस्य अष्टषष्टिश्लोके बोध्यम् ।

(३) इक्ष्वाकोरुत्पत्तिबोधनार्थं षष्ठसर्गस्य एकसप्ततिश्लोके टिप्पणी प्रदत्ता । श्रीमद्भागवते नवमस्कन्धे षष्ठाध्यायेतु तस्योत्पत्तिविषये 'क्षुवतस्तुमनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।' इत्युक्तमिति तत्कल्पभेदेन बोध्यम् ।

(४) 'शापोऽप्यदृष्टतनयाननपद्मशोभे' इति नवमसर्गस्थाशीतिश्लोकस्य सञ्जीविन्यां वृद्धकुमारीवरन्यायस्याकारः—'वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणीत—पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्रे भुञ्जीरन्निति । न च तावदस्याः पतिर्भवति, कुतः पुत्राः ?, कुतो वा गावः ?, कुतो धान्यम् ? तत्रानया एकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतं भवतीति ।' इति नमुनेसूत्रमहाभाष्ये ।

# परीक्षार्थिनामवगमार्थं प्रश्नानां संग्रहः ।

## षष्ठः सर्गः ।

परार्ध्यवर्णास्तरणोपपन्नमासेदिवान् रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ १ ॥
अथ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।
सञ्चारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ २ ॥
आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किञ्चित्समावर्जितनेत्रशोभः ।
तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥ ३ ॥
विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसन्निवेशैर्विपाटयामास युवा नखाग्रैः ॥ ४ ॥
क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान् मन्दारशून्यानलकांश्चकार ॥ ५ ॥

इमे श्लोकाः कोशसमासविग्रहपदसाधुत्वप्रदर्शनपुरःसरं सम्यग् व्याख्येयाः ।
( क ) द्वितीयश्लोकस्य तात्पर्यार्थो वक्तव्यः ।
( ख ) चतुर्थपञ्चमश्लोकयोः राज्ञामिन्दुमत्याश्च भावं स्फुटीकुरुत ।
( ग ) आद्यश्लोकस्य अन्वयमुखेन हिन्दीभाषा प्रदर्श्यताम् ।

जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ १ ॥
असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ २ ॥
सङ्ग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥ ३ ॥
ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ ४ ॥
ऐरावतास्फालनविश्लथं यः सङ्घट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ५ ॥

एते श्लोकाः कोशसमासप्रदर्शनपुरस्सरं साधु व्याख्यायन्ताम् ।
( क ) आद्यश्लोके 'सुराङ्गनाप्रार्थितयौवनश्रीः' एतत्पदस्य को भावः ? ।
( ख ) द्वितीयपद्ये वाच्यान्तरं लेख्यम् ।
( ग ) तृतीयपद्यस्य सरलहिन्दीभाषाऽर्थः प्रकाश्यताम् ।
( घ ) षष्ठपद्ये इन्द्रस्य 'गोत्रभित' इति नामधेयं कथमुपपद्यते इति प्रमाणीक्रियताम् ।

कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयाऽनुविद्धानुदीरयामास सलीलमक्षान् ॥ १ ॥
निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि ! तयोस्तृतीया ॥ २ ॥
यमात्मनः सद्मनि संनिकृष्टो मन्द्रध्वनित्याजितयामतूर्यः ।
प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥ ३ ॥

इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ४ ॥
शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ५ ॥

इमे श्लोका दण्डान्वयमुखेन व्याख्यायामपेक्षितविषयप्रदर्शनपूर्वकं सम्यग् व्याख्येयाः ।

( क ) प्रथमश्लोके इन्दुमत्याः, पाशमुत्क्षेप्तुर्नृपस्य चाशयमुक्त्वा उदीरयामासेति साधु साधनीयम् ।

( ख ) द्वितीये पद्ये वाच्यपरिवर्तनं लेख्यम् ।

( ग ) तृतीयश्लोकस्य किं तात्पर्यम् ? सुप्तमिति कथं सिध्यति ?

( घ ) इक्ष्वाकुवंश्यानां राज्ञां कथं काकुत्स्थसंज्ञाऽभूदिति स्फुटमुपवर्ण्यताम् ।

---

## सप्तमः सर्गः ।

तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम् ।
वरः स वध्वा सह राजमार्गं प्राप ध्वजच्छायनिवारितोष्णम् ॥ १ ॥
ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥ २ ॥
महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम् ।
भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः ॥ ३ ॥
तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ ४ ॥
कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥ ५ ॥

एते श्लोकाः कोशसमासव्याकरणविग्रहादिप्रदर्शनपुरःसरं सम्यग् व्याख्येयाः ।

( क ) आद्यश्लोकस्य सरलहिन्दीभाषाऽर्थो लेख्यः ।

( ख ) द्वितीयपद्ये 'कामरूपेश्वरदत्तहस्तः' इत्यस्य समासमुक्त्वा 'चतुष्कम्' इत्यस्य कीदृशो विग्रहः ? ।

( ग ) चतुर्थश्लोके को मधुपर्कपदार्थः ।

( घ ) चतुर्थस्य सरलार्थमुक्त्वा यन्त्रणापदस्यसाधुत्वमुपपादनीम् ।

( ङ ) पञ्चमपद्यस्य अन्वयं प्रदर्श्य कबन्धमित्यस्य हिन्दीभाषा वक्तव्या ।

१ स दक्षिणं तूणमुखेन वामं व्यापारयन् हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान् सुषुवे रिपुघ्नान् ॥ ( क )

२ सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्वभागः किंचित्प्रकाशेन विवस्वतेव ॥ ( ख )

३ ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ ( ग )

४ सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम् ।
यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥ ( घ )

५ प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभून्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥ (ङ)

एते श्लोकाः कोशसमासविग्रहादिनिरूपणपूर्वकं साधु व्याख्यायन्ताम् ।

कचिह्नितश्लोके 'व्यापारयन्' इति पदस्य प्रकृतिप्रत्ययौ निर्देष्टव्यौ ।

खचिह्निते च 'दिनपूर्वभागः' इति पदस्य कः समासः ?

गचिह्नितश्लोकस्य वाच्यान्तरं प्रदर्श्य तस्थाविति कस्य लकारस्य रूपं कथञ्च तस्य सिद्धिरिति साधूपपादनीयम् ।

घाङ्कितस्य तात्पर्यार्थो लेख्यः ।

ङचिह्निते शान्तिमार्गेति पदस्य ? कोऽर्थः ? ।

---

## अष्टमः सर्गः ।

१ अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥

२ स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥

३ पणबन्धमुखान्गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद् गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥

४ दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥

५ ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान् बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥

६ प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥

उपरितनेषु पद्येषु स्वेच्छया केऽपि पञ्चश्लोकाः व्याख्यायन्ताम् ।

( क ) प्रथमप्रश्ने महीपतेरित्यत्र केन षष्ठीति तत्सूत्रमुक्त्वा अत्र श्लोके कर्तृपदं प्रदर्शनीयम् ।

( ख ) द्वितीयप्रश्ने च 'अन्त्यमाश्रमम्' इत्यस्य का व्याख्या समीचीना ? वानप्रस्थाश्रमतया व्याख्याते कोः ? विरोध इति स्फुटमुपपादनीयः ।

( ग ) तृतीयप्रश्ने पणबन्धपदस्य कोऽर्थः ? इति सप्रमाणं स्फुटीकृत्य के गुणाः ? कानि च तेषां नामानीति वक्तव्यानि ।

( घ ) चतुर्थप्रश्ने गुरुपदे कः कोशः ।

( ङ ) पञ्चमप्रश्ने ऋषिदेवपितॄणां कथमानृण्यं भवतीति सप्रमाणं स्फुटीकुरुत ।

( च ) षष्ठप्रश्ने समवस्थामित्यस्य साधनप्रकारो निरूपणीयः ।

कुसुमान्यपि गात्रसङ्गमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त ! साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥ १ ॥

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥ २ ॥

इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥ ३ ॥

कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ ४ ॥

समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथाऽपि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ५ ॥

मदिराक्षि ! मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे ।
अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ ६ ॥

( क ) प्रथमश्लोकस्यान्वयं विलिख्य तत्र अपिशब्दस्य किं स्वारस्यम् ? इति ब्रूत ।

( ख ) द्वितीयश्लोके रेखाङ्कितानां पदानां व्युत्पत्तिं प्रदर्श्य सारार्थो विलिख्यताम् ।

( ग ) तृतीयचतुर्थश्लोकौ सम्यग् व्याख्याय तृतीयश्लोके त्वामित्यत्र द्वितीयाविधायकसूत्रमुत्पाद्य चतुर्थश्लोके कृतदोहदपदस्य किं स्वारस्यमिति विशदीक्रियताम् ।

( घ ) पञ्चमश्लोके प्रतिपच्छब्देन कवेः किं तात्पर्यमिति व्युत्पाद्य व्यवसायपदस्य व्युत्पत्तिः प्रदर्शनीया ।

( ङ ) षष्ठश्लोकं कोशादिप्रदर्शनपुरस्सरं साधु व्याख्याय वसिष्ठशिष्योक्तानि वाक्यानि स्वरचितसरलसंस्कृतेन वक्तव्यानि ।

स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ १ ॥
क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ २ ॥
तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ ३ ॥
अपशोकमनाः कुटुम्बिनामनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ ४ ॥
स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ ५ ॥
सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ६ ॥
तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोर्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयाऽसौ लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ७ ॥

एषु चतुःश्लोकाः, व्याख्येयाः, सप्तमो न त्याज्यः ।

( क ) तृतीयस्य केवलं हिन्दीभाषा कार्या ।

( ख ) चतुर्थश्लोके 'अनुगृह्णीष्व' 'निवापदत्तिभिः' 'प्रचक्षते' एतेषां पदानां व्युत्पत्तिं प्रदर्श्य तत्र दहतिक्रियायाः, कः कर्त्तेत्युच्यताम् ।

( ग ) पञ्चमश्लोके किं छन्दः ? किं च तल्लक्षणम् ? ।

( घ ) षष्ठश्लोकस्य अन्वयः प्रकाशनीयः ।

( ङ ) सप्तमश्लोके छन्दसो नाम निर्दिश्य तल्लक्षणं च वाच्यम् ।

---

## नवमः सर्गः ।

दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम् ।
तमधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम् ॥ १ ॥
शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरंदरः ।
स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः ॥ २ ॥
निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम् ॥ ३ ॥

स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ ४ ॥
व्रणगुरुप्रमदाऽधरदुःसहं जघननिर्विषयीकृतमेखलम् ।
न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान् हिमम् ॥ ५ ॥
श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ६ ॥

एषु स्वेच्छया केऽपि पञ्चश्लोकाः दण्डान्वयमुखेन स्फुटं व्याख्येयाः ।

( क ) चतुर्थश्लोके महारथस्य किं लक्षणम् ? इत्युक्त्वा अगापयदिति कस्य लकारस्य रूपम् ? कथं च तस्य साधनप्रकारः ? ।

( ख ) पञ्चमपद्यस्य हिन्दीभाषैव अपेक्षिता ।

( ग ) षष्ठपद्ये वाच्यपरिवर्तनमुपपाद्य लतानां नर्तकीसाम्यत्वं प्रदर्शनीयम् ।

१ ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥
२ उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयाऽनितया रजनीवधूः ॥
३ अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥
४ हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥
५ अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥

एते श्लोकाः कोशसमासविग्रहभावप्रदर्शनपुरस्सरं सम्यग् व्याख्येयाः ।

( क ) द्वितीयप्रश्ने खण्डितायाः किं लक्षणम् ? ।

( ख ) चतुर्थप्रश्ने 'हुतहुताशनदीप्ति' इति पदेन कस्य पुष्पस्य बोधो भवतीत्युक्त्वा प्रथमप्रश्ने 'मधुम्' इत्यत्र कथं पुंलिङ्गत्वमिति सप्रमाणं स्फुटीकुर्वन्तु ।

( ग ) पञ्चमप्रश्ने स्थलीमित्यत्र केन ङीप् तत्सूत्रंसम्पूर्णं लेख्यम् ।

१ ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥
२ अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥
३ त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरतीव निवेदिते स्मरमते रमते स्म वधूजनः ॥
४ मृगवनोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।
गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥
५ तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।
ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोसलम् ॥

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥

एषु केऽपि चतुःश्लोकाः साधु व्याख्येयाः ।

( क ) द्वितीयप्रश्ने जलतामित्यस्य व्युत्पत्तिं प्रदर्श्य कोकिलानां परभृतात्वे का कथा ? इति कथ्यताम् ।

( ख ) चतुर्थप्रश्नस्य भावः प्रदर्शनीयः ।
( ग ) पञ्चमप्रश्नस्य वाच्यान्तरमुक्त्वा निपानपदस्यार्थो लेख्यः ।
( घ ) षष्ठप्रश्नस्य सरलहिन्दीभाषया अर्थो वक्तव्यः ।

व्याघ्रानभीरभिमुखोत्पतितान्गुहाभ्यः फुल्लासनाग्रविटपानिव वायुरुग्णान् ।
शिक्षाविशेषलघुहस्ततया निमेषात्तूर्णीचकार शरपूरितवक्त्ररन्ध्रान् ॥ १ ॥

निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दे मृगेषु ॥ २ ॥

स ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयांबभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ३ ॥

उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन् विहगविकूजितबन्दिमङ्गलानि ॥ ४ ॥

दिष्टान्तमाप्स्यति भवानपि पुत्रशोकादन्त्ये वयस्यहमिवेति तमुक्तमन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं प्रोवाच कोसलपतिः प्रथमापराद्धः ॥ ५ ॥

शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ॥ ६ ॥

एषु स्वेच्छया केऽपि त्रयः श्लोकाः व्याख्येयाः । तत्र षष्ठो न त्याज्यः ।

( क ) द्वितीयश्लोके निर्घातपदस्यार्थो लेख्यः, अत्र किं छन्दः ?, तल्लक्षणं च किम् ? इति वक्तव्यम् ।
( ख ) तृतीयश्लोकस्य वाच्यान्तरं विलिख्य अतिवाहयाम्बभूवेति साधनीयम् ।
( ग ) चतुर्थश्लोकस्य कस्मिन् प्रस्तावे कवेरुक्तिरिति विलिख्य तात्पर्यार्थः प्रदर्शनीयः ।
( घ ) पञ्चमस्य अन्वयं विलिख्य प्रथमापराद्ध इत्यत्र का व्युत्पत्तिः ?
( ङ ) षष्ठश्लोकस्य को भावः ? इति सम्यग् विलेखनीम् ।

---

## दशमः सर्गः ।

भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ॥ १ ॥
मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ २ ॥
सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ ३ ॥
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये ॥ ४ ॥
इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ५ ॥
धातारं तपसा प्रीतं ययाचे स हि राक्षसः।
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ६ ॥
वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ७ ॥

एषु स्वेच्छया केऽपि पञ्चश्लोकाः स्फुटं व्याख्येयाः ।

( क ) तृतीयश्लोके कानि समस्सामानि ?, के समार्णवाः ? इति वक्तव्यम् ।

( ख ) पञ्चमश्लोके प्रसादयामासुरित्यस्य का व्युत्पत्तिः ? । भूतार्थव्याहृतिरित्यस्य कोऽर्थः ? ।

( ग ) षष्ठश्लोके केऽष्टविधदेवसर्गाः इति समाधाय सप्तमस्य तात्पर्यार्थो वक्तव्यः ।

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ॥
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ १ ॥
रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ २ ॥
हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ३ ॥
स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ४ ॥
विभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ५ ॥
पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः ।
आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ६ ॥
सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाऽभवत् ॥ ७ ॥
समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८ ॥

सुरगज इव दन्तैर्भग्नदैत्यासिधारैर्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ९ ॥

उपरितनेषु स्वेच्छया केऽपि षष्ठश्लोकाः कोशसमासविग्रहभावप्रदर्शनपुरःसरं सम्यग् व्याख्येयाः, तत्र नवमो न त्याज्यः ।

( क ) प्रथमश्लोके वेणीबन्धानित्यस्य स्वारस्यं प्रकाशयन् द्वितीयश्लोके अभिवृष्येति पदं साधनीयम् ।

( ख ) तृतीयचतुर्थश्लोकयोर्हिन्दीभाषया अर्थो लेख्यः ।

( ग ) पञ्चमश्लोकस्य वाच्यपरिवर्तनं कार्यम् ।

( घ ) षष्ठश्लोकस्य अन्वयं विलिख्य तत्र किं कर्तृपदम् ? इति वक्तव्यम् ।

---

सर्वविधपुस्तकप्राप्तिस्थानम्
जयकृष्णदास हरिदास गुप्तः
चौखम्बा संस्कृत सीरिज आफिस,
विद्याविलासप्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।